वामनजयादित्यविरचिता

# काशिका

न्यास-पदमञ्जरी-भावबोधिनी-सहिता

पञ्चमो भागः

[४.२—५.१]

सम्पादकौ
डा. जयशङ्कर लाल त्रिपाठी
डा. सुधाकर मालवीयः

तारा प्रिण्टिंग वर्क्स

वामनजयादित्यविरचिता

# काशिका

## न्यास-पदमञ्जरी-भावबोधिनी-सहिता

पञ्चमो भागः

[४.२—५.१]

सम्पादकौ
डा. जयशङ्कर लाल त्रिपाठी
डा. सुधाकर मालवीयः

तारा बुक एजेन्सी

*Prācyabhāratīgranthamālā—25*

# KĀŚIKĀ

**(A COMMENTARY ON PĀṆINI'S GRAMMAR)**

of

VĀMANA & JAYĀDITYA

with

NYĀSA or KĀŚIKĀ-VIVARAṆAPAÑJIKĀ

of

JINENDRABUDDHI

and

PADAMAÑJARĪ

of

HARADATTA MIŚRA

with

BHĀVABODHINĪ

Hindi Exposition by Dr. JAYA SHANKAR LAL TRIPATHI

*Critically Edited by :*

**Dr. Jaya Shankar Lal Tripathi**
Vyākaraṇācārya (Goldmedalist), M. A., Ph, D., D. Litt.,

**Dr. Sudhakar Malaviya**
Sahityācārya, M. A., Ph. D.,

Department of Sanskrit, Faculty of Arts, Banaras Hindu University

*Foreword by*

**Prof. Bishwanath Bhattacharya**

*Mayūrabhañja Professor & Head, Department of Sanskrit, Banaras Hindu University*

Volume V

[Adhyāyas 4.2—5.1]

TARA BOOK AGENCY
VARANASI
1988

प्राच्यभारतीग्रन्थमाला—२५

श्रीमद्वामन-जयादित्यविरचिता

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# का शि का

श्रीमज्जिनेन्द्रबुद्धिविरचितया 'न्यास'परपर्यायकाशिकाविवरणपञ्जिकाख्यया

विद्वद्वरश्रीहरदत्तमिश्रविरचित-'पदमञ्जरी'-समाख्यया च व्याख्यया सहिता

डॉ० जयशङ्करलालत्रिपाठिविरचितया 'भावबोधिनी' हिन्दीव्याख्यया च विभूषिता


संपादकौ

डॉ० जयशङ्कर लाल त्रिपाठी

व्याकरणाचार्यः ( लब्धस्वर्णपदकः ), एम० ए०, पी-एच्० डी०, डी० लिट्०

संस्कृतविभागः, कला-संकायः, काशी हिन्दू विश्वविद्यालयः

डॉ० सुधाकर मालवीयः

साहित्याचार्यः, एम० ए०, पी-एच्० डी०

संस्कृत-विभागः, कला संकायः, काशी हिन्दू विश्वविद्यालयः

प्रस्तावकः

डॉ० विश्वनाथ भट्टाचार्यः

मयूरभञ्ज प्रोफेसर, विभागाध्यक्षः, संस्कृत-विभागः, कला-संकायः

काशी हिन्दू विश्वविद्यालयः


पञ्चमो भागः

( ४.२—५.१ अध्यायात्मकः )


तारा बुक एजेन्सी

वाराणसी

१९८८

१९८८ तमः खिष्टाब्दः ]

[ २०४५ तमो वैक्रमाब्दः

## PUBLISHER'S NOTE

We have the pleasure in presenting the Fifth Volume of Kāśika with Nyāsa and Padamañjarī along with the new Hindi exposition Bhāvabodhini by Dr. Jaya Shankar Lal Tripathi.

The learned editors of the present edition—Dr. Jaya Shankar Lal Tripathi, Reader and Dr. Sudhakar Malaviya in the Sanskrit Department, Banaras Hindu University have taken great pains and care in editing the text and Hindi exposition. They have provided, in addition to Hindi exposition, critical notes and references which, we are sure, will render this edition more useful and valuable than all the earlier editions.

The whole wrok shall be completed in ten volumes as follows :

| *Volume* | *Adhyāya/Pāda* | *to Adhyāya/Pāda* |
|---|---|---|
| I | 1 | 1/2 |
| II | 1/3 | 2/2 |
| III | 2/3 | 3/2 |
| IV | 3/3 | 4/1 |
| V | 4/2 | 5/1 |
| VI | 5/2 | 6/1 |
| VII | 6/2 | 6 |
| VIII | 7 | |
| IX | 8 | |
| X | | Indices |

we hope that the present edition shall be appreciated and warmly welcomed by students and scholars alike.

'चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥'

(ऋ० १.१६४.४६)

'चत्वारि वाक्परिमिता पदानि ।' चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः । मनस ईषिणो मनीषिणः । 'गुहा त्रीणि निहिता नेङ्गयन्ति ।' गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते । न निमिषन्तीत्यर्थः ॥ 'तुरीयं वाचो मनुष्या वदन्ति ।' तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः ॥

—महाभाष्ये पस्पशाह्निकम्

कथं मनीषिण एव विदन्तीत्याह—गुहेति । अज्ञानमेव गुहा तस्यामित्यर्थः । 'सुपां सुलुक्०' इति सप्तम्या लुक् । व्याकरणप्रदीपेन तु तानि प्रकाशन्ते ।

—इति प्रदीपे कैय्यटः ।

# FOREWORD

Introducing the *Fifth Volume* of *Kāśikāvṛtti* provides me with a great pleasure and a sense of academic achievement. Dr. Jaya Shankar Lal Tripathi a senior colleague and Reader and Dr. Sudhakar Malaviya the Senior Research Assistant in the Department of Sanskrit have undertaken the publication of the renowned *Vṛtti* on Paninian Aṣṭādhyāyī by Vāmana and Jayāditya along with the two well known Commentaries—*Nyāsa* (Kāśikāvivaraṇa pañjikā) by Jinendrabuddhi and *Padamañjarī* by Haradatta Miśra. I congratulate them for undertaking such an ambitious project which, when completed, will meet a long-felt need of providing a thoroughly dependable edition of the basic texts of *Aṣṭādhyāyī* and *Kāśīka* along with two most important commentaries.

In addition to the meticulous care taken by the editors in printing the text as flawlessly as possible, they have provided useful critical notes and references wherever necessary and extensive indices to render the edition almost indispensible for the students following the *Sūtra-Vṛtti-Bhāṣya* mode of grammatical study in particular and researchers in general. Dr. Tripathi has also added a Hindi rendering of *Vṛtti* which happens to be a pioneering effort. Translation of *Śāstras*, especially of one like the *Vyākaraṇa* where extreme precision is truly the soul of style, is a difficult and different job. I am happy to note that Dr. Tripathi with his firm grounding in the *Śāstra* has given an exposition which apart from being faithful to the text, has done full justice to the purport as well.

Publication of the Kāśikā as planned is a stupendous work and the learned editors happen to be ideally qualified to fulfill the same, while congratulating both of them, I only hope and pray that they succeed in bringing out all the ten volumes as early as possible. I am sure that the entire Sanskritic world will welcome the grand scholarly venture.

*Banaras Hindu University*
*November 9, 1988*

BISWANATH BHATTACHARYA
*Professor and Head*
*Department of Sanskrit*

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥

—भर्तृहरिः

# सम्पादकीयम्

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥**

—भर्तृहरिः

विश्वस्य प्राचीनतमास्वखिलासु भाषासु संस्कृतं सर्वा अपि अतिशेते – इत्यत्र न कस्यापि वैमत्यम् । विषयोऽयं आश्चर्यकरो यत्सत्स्वपि बहुविधेषु राजनीतिकपरिवर्तनेषु धार्मिकान्दोलनेषु च यदि काचिद् भाषास्ति तादृशी याऽस्मिन् विशालेऽपि भारते आ-सेतु हिमाचलं मूलभाषापदवीमारूढा भाषणादिव्यवहार-पदमधिष्ठिता सञ्जागर्तितराम्, तर्हि सा केवलमियं **'सुरभारती'** एव इति विमर्शका आकलयन्ति ।[1] वस्तुतोऽस्य वैशिष्ट्यस्य हेतुषु अस्या व्याकरणं प्रामुख्यं भजते, येनाद्यापीयं भाषाऽक्षुण्णरूपेण विराजमाना सर्वान् भारतीयान् वैदेशिकान् अपि च सम्मोहयति ।

वेदानां सम्यग्ज्ञानाय तेषां षडङ्गानां ज्ञानम् आवश्यकमेव । अतएव व्याकरण-विषये प्राचीनकालादेव विज्ञायते यत्—"छन्दः **पादौ तु वेदस्य मुखं व्याकरणं स्मृतम् ।**" षट्स्वङ्गेषु व्याकरणं पदपदार्थज्ञानस्य तदायत्तत्वात् प्रधानम् ।

**महर्षिः पाणिनिः** ( ख्रि० पू० ५०० वर्षकालिकः )

तत्र सत्सु बहुषु व्याकरणेषु महेश्वरप्रसादादधिगतवैशिष्ट्यं पाणिनीयं व्याकरणं लौकिकवैदिकोभयशब्दानां नियामकम् । महर्षिः पाणिनिः स्वकीययाऽद्भुत-प्रतिभयासकलशब्दशास्त्र-समुद्रं समुन्मथ्याष्टस्वध्यायेषु नवनीतमिवापेक्षितं सर्वं व्याकरणं सूत्ररूपेण प्रोक्तवान् । तत्राष्टाध्याय्यां सप्तनवत्यधिकनवशतोत्तरत्रिसहस्राणि ( ३९९७ ) सूत्राणि वर्त्तन्ते । तस्यां व्याकरणशास्त्रसम्बद्धाः सर्वेऽपि विषयाः सूत्रशैल्यां प्रतिपादिताः ।

**वार्त्तिककारः कात्यायनः** ( ख्रि० पू० ३०० वर्षकालिकः )

पाणिनि-परवर्तिषु वैयाकरणेषु वार्त्तिककारः कात्यायनो विशेषतोऽत्र उल्लेखनीयः । पाणिनीयसूत्रे उक्तानुक्तदुरुक्तार्थान् विवेचयता समीक्षणत्वेन वार्त्तिकानि कात्यायनेन विरचितानि । तान्यपि सूत्राणीव प्रमाणानीति सर्वे स्वीकुर्वन्ति । किन्तु वार्त्तिकानां स्वरूपादिकमद्यापि न व्यवस्थितमिति खेदावहम् ।

**भाष्यकारः पतञ्जलि** ( ख्रि० पू० १५० वर्षकालिकः )

सूत्राणि वार्त्तिकानि चैतदुभयमपि संक्षिप्तरूपेण व्याकरणसिद्धान्तान् प्रत्यपादयत्, येनाभिप्रायबोधने काठिन्यमन्वभूयत । अतो महर्षिणा पतञ्जलिनाऽनुपमे स्वकीये महाभाष्ये सरलया भावगभीरया च शैल्या विशदरूपेण विषयाणां प्रतिपादनमकारि । एवं **पाणिनि-कात्यायन-पतञ्जलयो** 'त्रिमुनि' इत्याख्यया वैयाकरणैः स्तूयन्ते ।

---

१. "Even at the present moment, after a Century of English rule and English teaching, I believe that Sanskrit is more widely understood in India than Latin was in Europe at the time of Dante". इति विद्वद्धुरीणो भट्टमोक्षमूलरः, 'India : what can it treach us'.

**व्याख्यानस्य द्वैविध्यम्**

कालान्तरे पुनः शास्त्रसौकर्याय बालावबोधनाय च प्रयोगप्रक्रियाक्रमं संलक्ष्य नैकेषां प्रक्रियाग्रन्थानां रचना सञ्जाता। अस्मिन् शब्दशास्त्रे ये ग्रन्थाः पाणिनिविरचित-सूत्रक्रमेण वर्त्तन्ते, तेऽष्टाध्यायीक्रमावलम्बिनः, ये च प्रयोगानुसारेण विद्यन्ते, ते प्रक्रियाक्रमावलम्बिनः कथ्यन्ते। तत्र वामनजयादित्याभ्यां कृता **'काशिकावृत्तिः'** अष्टाध्यायीक्रमस्य उपलब्धवृत्तिषु प्रथमा वृत्तिः।

**काशिका**

अष्टाध्यायीक्रममवलम्ब्य संपादितेषु सर्वेषु ग्रन्थेषु पाणिनेः संक्षिप्ता शैली, अपरत्र च महाभाष्यकारस्य अतिविस्तृता बहुपरिश्रमसाध्या च शैली, अत्र मध्यममार्गेण व्याकरणशास्त्रस्य सर्वेषां विषयाणां परिज्ञानाय कैश्चिद् वृत्तिकारैः प्रयासो व्यधायि। तत्र वामन-जयादित्याभ्यां ( ख्रि० ६५० ) महाभाष्यसमाश्रिता सरलरीत्या सोदाहरण-सूत्र-व्याख्यानप्रतिपादन-परापेक्षितभावप्रकाशिका 'काशिका' नाम्नी वृत्तिर्विरचिता।

सा चेदानीमियं वृत्तिः पाणिनीयाष्टाध्याय्या उपलब्धवृत्तिषु प्राचीनतमा। अस्यां प्रतिसूत्रमनुवृत्त्युदाहरणप्रत्युदाहरणानि शङ्कासमाधानपुरःसराणि समुपलभ्यन्ते। काशिकाकाराभ्यां पाणिनिशास्त्रोपरि परम्पराप्राप्तस्य विषयजातस्य प्रयत्नेन रक्षणं कृतम्, यतो गणपाठोपसंख्यानेष्ट्यादीनां परिष्कृतरूपेण सह वृत्ति-भाष्य-नामधातु-पारायणादिषु विप्रकीर्णस्य तन्त्रस्य [=व्याकरणशास्त्रस्य] सारसङ्ग्रहोऽत्र जिज्ञासुभिः सारल्येनोपलभ्यते।

**काशिकायाः व्याख्याः**

१. न्यासः ( =काशिकाविवरणपञ्जिका )
२. पदमञ्जरी
३. भावबोधिनी ( हिन्दी-व्याख्या )

**( १ ) न्यासः ( काशिकाविवरणपञ्जिका )**

काशिकावृत्तेः टीका **काशिकाविवरणपञ्जिका**ऽपरपर्याया **'न्यास'** इत्याख्यया प्रसिद्धा आचार्यजिनेन्द्रबुद्धिपादविरचिता ( ७०० ई० )। इयं सरलापि गम्भीराऽपेक्षितपदार्थबोधनसमर्थेति बोध्यम्।

**( २ ) पदमञ्जरी**

काशिकावृत्तेः अपरा प्रौढा टीका **'पदमञ्जरी'** श्रीविद्वद्वर-हरदत्तेन ( ११०० ई० ) प्रणीता। अत्र काशिकायाः प्रतिसूत्रं प्रति-पदं व्याख्यानं दृश्यते। अस्याः गांभीर्यं महत्त्वं च विदुषां सुस्पष्टम्।

**( ३ ) भावबोधिनी**

अत्र न्यास-पदमञ्जरी-समाश्रिता सकलकाशिकावृत्तेः विशदा डा० जयशङ्करलालत्रिपाठिविरचिता **'भावबोधिनी'** नामधेयाऽभिनवापूर्वा हिन्दी-व्याख्या विराजते। अस्यां सूत्राणां विस्तृतं व्याख्यानं प्रदर्श्य प्रक्रियाज्ञानसौकर्याय प्रकृति-प्रत्ययादिनिर्देशपुरस्सरं व्युत्पादनम्, अथ च 'विमर्श' इत्येतदन्तर्गतं गम्भीरविषयविवेचनं जिज्ञासु-शङ्का-समाधानाय समायोजितम्।

**प्रस्तुतं संस्करणम्**

अथेदानीं सप्रश्रयं सामोदं च विद्वज्जनसमक्षं प्रस्तूयते—आचार्यजिनेन्द्रबुद्धिविरचितया **न्यासा**—परपर्याय **'काशिकाविवरणपञ्जिकाख्यया'** श्रीविद्वद्वरहरदत्तमिश्रविरचितया **पदमञ्जरी**-समाख्यया व्याख्यया च सहितायाः, अथ च डा० जयशङ्करलालत्रिपाठिविरचितया **'भावबोधिनी'** त्याख्ययाऽभिनवया हिन्दीव्याख्यया च विभूषितायाः 'काशिका' नामवृत्तेः चतुर्थाध्यायस्य द्वितीयपादतः पञ्चमाध्यायस्य प्रथमपादपर्यन्तः **पञ्चमो भागः।**

**संस्करणस्यास्य वैशिष्ट्यानि**

१. सम्पूर्णकाशिकायाः हिन्द्यां विशदं व्याख्यानम् ।

२. काशिकावृत्तावुपलब्धानामुद्धरणानामाकरग्रन्थेभ्यः संशोधनं विधाय मूलस्थाननिर्देशपुरस्सरं संयोजनम् ।

३. वृत्तावुदाहरणत्वेनोद्धृतानां वैदिकपाठानां स्वराङ्कनसहिता प्रस्तुतिः ।

४. न्यासस्य पदमञ्जर्याश्च विविधपाठानां समीक्षणपूर्वकं सम्पादनम् ।

५. टीकाद्वये उपलब्धानामुद्धरणानां बाहुल्येन मूलनिर्देशः ।

तत्र तावत् तत्तत्पाठसंशोधनार्थं यानि पुस्तकानि प्रयुक्तानि दृष्टानि वास्माभिः तानि प्रथमभागस्य सम्पादकीये निर्दिष्टानि । व्यतिरिक्तमेतद्—एतेषु पुस्तकेषु यत्र क्वापि उद्धृतांशेषु त्रुटयोऽवलोकिताः तत्तदाकर-ग्रन्थेभ्यो मूलपाठं संशोध्य ताः बाहुल्येनापकृता अस्माभिः ।

**सम्पादन-शैली**

प्रतिसूत्रमत्र उट्टङ्किता प्रथमसङ्ख्या अष्टाध्यायीसूत्रस्यानुपूर्वि-क्रमावलम्बिनी । सूत्रस्य पश्चाद् गृहीता संख्या तत्सूत्रस्य अष्टाध्यायीक्रमागत-पादस्यान्तर्गतसूत्रस्य संख्यां बोधयति । तदुपरि कोष्ठके गृहीता संख्या निर्णयसागरमुद्रणालयतः प्रकाशित—'सिद्धान्तकौमुदी'स्थसूत्रस्य संख्यां द्योतयति । मन्ये, एतत् शोधच्छात्राणां विद्वद्वराणां वा किमपि उपकाराय सम्पद्येत । रीतिरियं विद्वद्वरेण्येन डा० आर्येन्द्रशर्ममहोदयेनापि समादृता, सैवाऽनुसृताऽस्माभिरपि ।

सुविदितं हि इदमस्य ग्रन्थस्याध्येतॄणां यदस्मिञ्छास्त्रे निबद्धानि गम्भीरवाक्यान्यतिक्लिष्टानि, तथापि श्रीमद्गुरुचरणेभ्योऽखिल-विद्यापारंगतेभ्यः सम्पूर्णानन्द-संस्कृत-विश्व-विद्यालयस्य व्याकरणविभागा-ध्यक्षचरेभ्यः पण्डितप्रकाण्डेभ्यः श्रीमद्भ्यो मुरलीधरमिश्रमहोदयेभ्यः श्रीमद्भ्यो भूपेन्द्रपति-त्रिपाठिमहोदयेभ्यः, श्रीमद्भ्यो भूपनारायण-झा-महोदयेभ्यः, श्रीमद्भ्यो रामप्रसादठिपाठिमहोदयेभ्यः, श्रीमद्भ्यः कालिकाप्रसाद-शुक्लमहोदयेभ्यः, श्रीमद्भ्यो देवदत्तशर्मोपाध्यायमहोदयेभ्यश्च यदुपलब्धं तदेवास्य संस्करणस्योपजीव्यम् ।

अन्ते च काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाः प्राच्य-प्रतीच्योभयविधविद्यापारङ्गताः सूक्ष्म-समीक्षकाः श्रद्धेयाः मनीषिणः डॉ० विश्वनाथभट्टाचार्यमहोदयाः अस्य ग्रन्थस्य प्रास्ताविकं विलिख्यास्मान् भृशमनुगृहीतवन्त इति तेषां कृतज्ञतां प्रकटयामः ।

काशीस्थ-तारायन्त्रालयाधिपतीनां दुर्लभ-प्राचीन-संस्कृत-ग्रन्थरत्नानां प्रकाशने रतानां श्रीमद्रमा-शङ्करपण्ड्या-महोदयानामाभारोऽस्माभिः हृदयेन स्वीक्रियते यैः सौष्ठवसम्पन्नं सत्वरञ्चैतत् संस्करणं विद्वत्समक्षमुपस्थापितम् ।

**'शोभना खलु पाणिनेः सूत्रस्य कृतिः ।'**

—महाभाष्य २.३.६६ ।

विद्वद्वशंवदौ

**जयशङ्करलालत्रिपाठी**

**सुधाकर मालवीयः**

संस्कृतविभागः, कलासंकायः,

का० हि० वि० वि० **ज्योतिः पर्व** २०४५ ( ९-११-८८ )

शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते ।
वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः ।।

—पाणिनीयशिक्षा–५६

# भूमिका

**अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः॥**

भारतीय मनीषियों ने शब्दशास्त्र का सूक्ष्मचिन्तन प्राचीन काल से ही आरम्भ कर दिया था। उनके गम्भीर अनुशीलन के फलस्वरूप प्रातिशाख्य ग्रन्थों एवं पाणिनीय जैसे विभिन्न व्याकरणों का प्रणयन हुआ। शब्दानुशासन का विस्तृत एवं विशाल रूप सुदीर्घ वैदिक युग से ही प्राप्त होता है। गो-पथ ब्राह्मण[1] में पाणिनीय व्याकरण में प्रयुक्त अनेक परिभाषिक शब्दों का विवेचन उपलब्ध होता है। यास्क के निरुक्त में अनेक वैयाकरणों के मत उद्धृत हैं।[2] वालमीकीय रामायण[3] और महाभारत[4] से स्पष्ट है कि संस्कृतभाषा का व्याकरण अत्यन्त प्राचीन है। अन्ततः पातञ्जल महाभाष्य के उद्धरण से इस व्याकरणशास्त्र पर अत्यन्त प्राचीनत्व की मुहर लगा दी गई है :—

**'पुराकल्पे एतदासीत्--संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते।'**[5]

**पाणिनिपूर्ववर्ती वैयाकरण**

सम्प्रति यद्यपि पाणिनीय अष्टाध्यायी ही सर्वाङ्गपूर्ण और सर्वविद्वज्जनों द्वारा समादृत है। परन्तु पाणिनि की इस अद्भुत कृति में पूर्ववर्त्ती आचार्यों के योगदान को अस्वीकार नहीं किया जा सकता। उनके मतों का सम्यक् रूप से अनुशीलन करने के बाद ही पाणिनि ने सूत्रों की रचना की।

**अष्टाध्यायी में उल्लिखित आचार्य**

अष्टाध्यायी के अध्ययन से यह ज्ञात होता है कि पाणिनि के भी पहले—१. काश्यप (पा० सू० १.२.२५), २. सेनक ( पा० सू० ५. ४. ११२ ), ३. आपिशलि ( पा० सू० ६. १. १२ ), ४. स्फोटायन (पा० सू० ६.१.१२३), ५. चाक्रवर्मण ( पा० सू० ५. १. ३० ), ६. भारद्वाज ( पा० सू० ७. २. ६३ ), ७. गार्ग्य (पा० सू० ८. ३. २०), ८. शाकल्य ( पा० सू० ८. ३. १९ ), ९. शाकटायन ( पा० सू० ८.४.५० ), १०. गालव ( पा० सू० ८.४.६७)— ये दस आचार्य हो चुके थे।

**अष्टाध्यायी में अनुल्लिखित आचार्य**

अष्टाध्यायी में कुछ आचार्यों का उल्लेख सर्वनाम शब्दों के द्वारा भी किया गया है जैसे—उदीचाम् ( पा० सू० ४. १. ५३ ), एकेषाम् ( पा० सू० ४. १. १७ ), आचार्याणाम् ( पा० सू० ८. ३. १२४ ), प्राचाम् ( पा० सू० ८. ३. ५ )।

पाणिनि द्वारा अनुल्लिखित भी अनेक वैयाकरण पाणिनि से पूर्व विद्यमान थे जिनका निर्देश अन्यान्य ग्रन्थों में उपलब्ध होता है। ये आचार्य हैं—१. इन्द्र, २. भागुरि, ३. पौष्करसादि, ४. चारायण, ५. काशकृत्स्न, ६. वैयाघ्रपद, ७. माध्यन्दिनि, ८. रौढि, ९. शौनक, १०. गौतम तथा ११. व्याडि।

---

१. ओङ्कारं पृच्छामः ····को धातुः ? किं प्रातिपदिकम् ? कति पदः ? कः संयोगः ? किं स्थाननादानुप्रादानानु' करणम्····? ( गो० ब्रा० पू० १.२४ )।

२. नि० १३.२।

३. वा० रा० कि० का० ३.२९।

४. महाभा० उद्योग पर्व० ४.३.६१।

५. महाभा० ( पस्पशा० )।

**पाणिनि का काल ( ५०० ई० पू० )**

पाणिनि के समय के निर्धारण में विद्वानों में मतभेद है। किन्तु इनका समय ई० पू० ५ वीं शती अनेक विद्वान् स्वीकार करते हैं। उपरितम सीमा के रूप में सत्यव्रत सामश्रमी आदि कुछ विद्वान् इनका समय २४०० ई० पू० और राजवाडे एवं वैद्य ९००–८०० ई० पू०, वेलवल्कर ७००–६०० ई० पू०, भण्डारकर ७०० ई० पू०, बलदेव उपाध्याय ५०० ई० पू०, मैकडानकल ५०० ई० पू०, मैक्समूलर ३५० ई० पू० और निम्नतम सीमा के रूप में कीथ आदि विद्वान् इन्हें ३०० ई० पू० का स्वीकार करते हैं। युधिष्ठिर मीमांसक इनका समय वि० पू० २९०० वर्ष मानते हैं। डा० वासुदेव शरण अग्रवाल इनकी तिथि ई० पू० पञ्चम शतक का मध्य निर्धारित करते हैं।

**पाणिनि की अष्टाध्यायी**

इतिहासकारों के अनुसार पाणिनि ने 'जाम्बवतीविजय' ( =पातालविजय ) की भी रचना की थी। किन्तु इनकी कीर्ति-पताका अष्टाध्यायी के कारण ही है। इसका स्वरूप नाम से ही स्पष्ट है—आठ अध्याय। इनमें प्रत्येक अध्याय चार-चार पादों में विभक्त है। इस प्रकार बत्तीस पादों में चार हजार सूत्र ( काशिका के अनुसार ३९९२ ) हैं। यद्यपि आपिशलि का व्याकरण भी आठ अध्यायों में था। किन्तु 'अष्टाध्यायी' शब्द पाणिनि-व्याकरण के लिए ही योगरूढ हो गया।

**अष्टाध्यायी का द्विविध अध्ययन**

कालान्तर में शास्त्रसौकर्य के लिए और बालावबोध में इसे सरल बनाने के लिए शब्दप्रयोग एवं शब्द-साधुत्व की प्रक्रिया को देखकर अनेक प्रक्रियाग्रन्थों ( शब्दसाधुत्व की प्रक्रिया वाले ग्रन्थों ) की रचना हुई।

**(क) अष्टाध्यायी-क्रम**

इस शब्दशास्त्र में जो ग्रन्थ पाणिनिविरचित सूत्रक्रम के अनुसार हैं वे 'अष्टाध्यायीक्रम' वाले कहे जाते हैं। इनमें सूत्र अष्टाध्यायी के ही अनुसार व्याख्यात हैं। इस क्रम के अनुसार अपने रूप एवं स्थान किसी से भी परिवर्तित करके सूत्र का अध्ययन करना इष्टसाधक नहीं बन सकता। इस क्रम से सूत्रार्थ के अध्ययन पर विशेष ध्यान दिया जाता है।

**(ख) प्रक्रिया-क्रम**

परन्तु कालान्तर में लक्ष्य ( =प्रयोग ) को प्रधानता दी जाने लगी और १: वीं शती में अष्टाध्यायी की दूसरी धारा भी बन गई। इससे पूर्व तक सूत्रार्थ के ज्ञान की प्रधानता थी। किन्तु अब लक्ष्यसिद्धिमात्र प्रधान होने लगी। इस क्रम के अन्तर्गत शब्दसाधुत्व की प्रक्रिया के क्रमानुसार सूत्रों का उपस्थापन किया जाने लगा।

इस प्रक्रिया-क्रम के अन्तर्गत धर्मकीर्ति ( ११ वीं शती ) का 'रूपावतार', विमल सरस्वती ( १४ वीं शती ) की 'रूपमाला', रामचन्द्राचार्य ( १४ वीं शती ) की 'प्रक्रियाकौमुदी' आदि विशिष्ट रचनाएँ हुई। इनकी अनेक टीकाएँ भी लिखी गई। इस क्रम का सबसे महत्त्वपूर्ण ग्रन्थ भट्टोजिदीक्षित ( १५६० ई० ) की 'वैया-करणसिद्धान्त-कौमुदी' है। 'प्रक्रियाकौमुदी' में मात्र लौकिक शब्दों पर विचार किया गया है। किन्तु 'सिद्धान्त-कौमुदी' में वैदिक एवं लौकिक उभयविध शब्दों की प्रक्रिया बताई गई है।

**अष्टाध्यायी-क्रम का वैशिष्ट्य**

पाणिनि ने अष्टाध्यायी में सूत्रों के उपन्यास में एक विशेष क्रम का ध्यान रक्खा है। इसकी संक्षिप्तता ही इसकी प्रमुख विशेषता है। पाणिनि ने व्याकरण के प्रत्येक नियम को सूत्र रूप में अति संक्षिप्त करके प्रस्तुत

किया है। भाषा की ऐसी समाहार शक्ति स्यात् ही कहीं अन्यत्र देखने को मिले। उन्होंने सूत्रों का प्रणयन करके उन्हें स्थान-विशेष पर रक्खा है। यदि इसका उल्लंघन करके अध्ययन किया जाता है तो निश्चित ही पाणिनि के उद्देश्य ( संक्षेप में व्याकरण का ज्ञान ) की सिद्धि नहीं हो सकती। पाणिनि ने इन सूत्रों में पूर्ववर्ती पद या पदसमूह को अग्रिम सूत्रों से सम्बद्ध करने के लिए 'अनुवृत्ति' पद्धति को प्रस्तुत किया। इसलिए आगे के सूत्रों में केवल अतिरिक्त अंश ही लिखने की आवश्यकता पड़ी। कहीं-कहीं अधिकार-सूत्र मानकर अपेक्षित सभी सूत्रों में उसका सम्बन्ध कर लिया गया है। प्रक्रिया के अनुसार पूर्ववर्ती सूत्र की अपेक्षा परवर्ती सूत्र की बलवत्ता मानी जाती है—'विप्रतिषेधे परं कार्यम्' ( पा० सू० १.४.२ ) इसका ज्ञान अष्टाध्यायी-क्रम के अध्ययन से ही सम्भव है। 'पूर्वत्रासिद्धम्' ( पा० सू० ८.२.१ ) में संकेतित पूर्व के प्रति पर की असिद्धि का ज्ञान हमें अष्टाध्यायी-क्रम में सरलतया हो जाता है। प्रक्रिया क्रम में शब्दरूप-सिद्धि की प्रधानता है। अतः प्रक्रियांश का अच्छा ज्ञान सम्भव हो जाने पर भी सूत्रार्थ-सम्बन्धी अपेक्षित सम्यग् ज्ञान अपूर्ण ही रहता है।

अष्टाध्यायी-क्रम की वैज्ञानिकता की उपेक्षा करके कुछ उपयोगी शब्दों का शीघ्र ज्ञान कराना ही प्रमुख उद्देश्य मानकर सिद्धान्तकौमुदी आदि प्रक्रिया-ग्रन्थों की लोकप्रियता बढ़ी। इससे व्याकरणशास्त्र के अध्ययन की सही दिशा ( कम्प्यूटर–संक्षिप्त पद्धति ) छूट गई। वैदिक शब्दों के विषय में सर्वथा अज्ञान ही रहने लगा। अष्टाध्यायी में एक साथ ही दोनों प्रकार के शब्दों का अध्ययन करने से उनका अन्तर सरलतया समझ में आ जाता है। इस प्रकार अष्टाध्यायी-क्रमाश्रित ग्रन्थों ( महाभाष्य तथा काशिका आदि ) के अध्ययन में श्रम करना थोड़े समय में अधिक ज्ञान की प्राप्ति करना है।

**वार्त्तिककार कात्यायन ( ३०० ई० पू० )**

आचार्य कात्यायन वार्त्तिककार के रूप में जाने जाते हैं। इनका समय पाणिनि के बाद ई० पू० तृतीय शती माना जाता है। पाणिनि की अष्टाध्यायी के बाद भाषा में प्रविष्ट हुए नवीन रूपों का औचित्य सिद्ध करने के लिए कात्यायन ने पाणिनि के सूत्रों पर वार्त्तिकों ( पूरक-सूत्रों ) की रचना की। ये वार्त्तिक पाणिनि की अष्टाध्यायी का मण्डन ही करते हैं क्योंकि ये अष्टाध्यायी के पूरक हैं। अतः कात्यायन पाणिनि-सम्प्रदाय के द्वितीय आचार्य माने जाते हैं।

**महाभाष्यकार पतञ्जलि ( १५० ई० पू० )**

सूत्रों तथा वार्त्तिकों का अत्यन्त सारगर्भित और संक्षिप्त रूप होने से उन पर समय-समय पर विभिन्न आचार्यों ने व्याख्या-ग्रन्थों का प्रणयन किया। इनमें पतञ्जलि ( १५० ई० पू० ) का महाभाष्य सर्वोत्कृष्ट रचना है। पतञ्जलि ने कुछ ऐसी पारिभाषिक युक्तियों का प्रयोग किया है जिनके आधार पर इन्होंने पाणिनि के मूल सूत्रों के क्षेत्र में प्रभावशाली ढंग से विस्तार कर दिया है। किन्तु इस कार्य के लिए इन्होंने कात्यायान की भाँति किसी संवर्धन के समावेश का साहस अत्यल्प ही किया है। महाभाष्य सभी सूत्रों पर उपलब्ध नहीं है। इस भाष्य का गद्य अपने लालित्य, संक्षिप्तता एवं प्रसाद गुण के लिए प्रसिद्ध है।

इस प्रकार इन तीन महर्षियों ने मिलकर पाणिनीय व्याकरण को पूर्णता प्रदान की। इसीलिए इन्हें बाद में इस व्याकरण-सम्प्रदाय में **'त्रिमुनि'** की संज्ञा से अभिहित किया गया।

**भर्तृहरि-कृत वाक्यपदीय**

पाणिनीय व्याकरण के दार्शनिक क्रम के अन्तर्गत शब्दार्थ-सम्बन्ध की व्याख्या की जाती है। स्फोटवाद पर पहुँच कर यही गम्भीर चिन्तन दर्शन का रूप ले लेता है। इसका व्यवस्थित रूप से गम्भीर विवेचन भर्तृहरि के 'वाक्यपदीय' में हुआ है।

**पाणिनि-भिन्न व्याकरण शास्त्र के सम्प्रदाय**

पाणिनि सम्प्रदाय के अतिरिक्त अन्य भी अनेक व्याकरण के सम्प्रदायों का आविर्भाव कालान्तर में हुआ जिनके नाम हैं—१. चान्द्र-सम्प्रदाय, २. जिनेन्द्र-सम्प्रदाय, ३. शाकटायन-सम्प्रदाय, ४. हेमचन्द्र-सम्प्रदाय, ५. कातन्त्र-सम्प्रदाय, ६. सारस्वत-सम्प्रदाय, ७. मुग्धबोध-सम्प्रदाय, ८ जौमर सम्प्रदाय, ९. सौपद्म-सम्प्रदाय, १०. मतवादी-सम्प्रदाय के अन्तर्गत हरिनामामृत और चैतन्यामृत ( व्याकरण )।

**अष्टाध्यायी के व्याख्यान**

पाणिनि की अष्टाध्यायी पर अनेक आचार्यों ने वृत्ति-ग्रन्थों की रचना की थी, जिनके नाम हैं—१. पाणिनि, २. श्वोभूति, ३. व्याडि, ४. कुणि, ५. माथुर, ६. वररुचि, ७. देवनन्दी, ८. दुर्विनीत, ९ चुल्लि-भट्टि, १०. निलूर, ११. चूर्णिकार या चूर्णि। किन्तु इनकी वृत्तियाँ अप्राप्त हैं।

जो एकमात्र वृत्ति प्राप्त है उसका नाम है —'काशिकावृत्ति' जयादित्य और वामन द्वारा रचित।

पाणिनीयाष्टाध्यायी के सूत्र-क्रमानुसार लिखी गई अन्य भी वृत्तियाँ हैं। इनमें कुछ मुद्रित हैं, कुछ अमुद्रित और कुछ का तो मात्र उल्लेख ही प्राप्त होता है। ये भागवृत्ति, भाषावृत्ति और दुर्घटवृत्ति आदि हैं।

## काशिकावृत्ति

**जयादित्य एवं वामन ( ६५० ई० ) और उनका काल**

जयादित्य ने **'काशिका'** नाम से प्रसिद्ध वृत्ति की रचना की। उपलब्ध वृत्तियों में यह वृत्ति ही सर्वाधिक महत्त्वपूर्ण और अत्यन्त प्राचीन है। इसके प्रणेता दो विद्वान् **जयादित्य** एवं **वामन** हैं। इनमें से प्रथम पाँच अध्याय जयादित्य द्वारा विरचित हैं और शेष तीन वामन द्वारा रचित हैं —ऐसी प्रसिद्धि है।

इत्सिंग की भारत यात्रा विवरण में जयादित्य को 'काशिका का रचयिता लिखा गया है। अतः इनका समय ६५० ई० माना जाता है। वामन का काल सातवीं शती का उत्तरार्द्ध है।

**काशिका नाम का कारण**

१. यह वृत्ति काशी में रची गयी थी, अतः इसका नाम 'काशिका' पड़ा। २. किन्तु सृष्टिधर के मत में सूत्रों के अर्थों को प्रकाशित करने के कारण इसका नाम 'काशिका' पड़ा है। ३. काशिका का अन्य नाम 'एकवृत्ति' भी है। काशिका में पाणिनीय क्रमानुसार लौकिक एवं वैदिक सूत्रों की यथास्थान व्याख्या होने से 'भागवृत्ति' के प्रतिपक्ष में काशिका के लिए 'एकवृत्ति' शब्द का व्यवहार होता है।

**काशिका का वैशिष्ट्य**

काशिका में प्रत्येक पाणिनि-सूत्र की व्याख्या की गयी है। इसमें महाभाष्य के मत से भिन्न आचार्यों के मत भी व्यक्त किये गये हैं। इस वृत्ति की मुख्य विशेषता इसमें वार्तिकों के पूर्ण स्वरूप का होना है। काशिका का मुख्य उद्देश्य पाणिनि की प्राचीन प्रक्रिया को समझाना है। अतः आवश्यकतानुसार अनेक वार्तिकों को पाणिनि की इच्छा का अभिव्यञ्जक मानकर 'इष्टियों' के रूप में पढ़ दिया गया है और कहीं-कहीं उन वार्त्तिकों के मूल रूप में हेर-फेर भी कर दिया गया हैं। वार्त्तिकों की अभिव्यक्ति संक्षेप में होने से कहीं वार्त्तिक छूट गये हैं और कुछ वार्त्तिक तो महाभाष्य आदि में प्राप्त भी नहीं होते। इस भाग में आये हुए जो वार्त्तिक महाभाष्य में प्राप्त नहीं होते हैं, वे इस प्रकार है—१. प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्नि-कलिभ्यां ढग्वक्तव्यः ( पृ० २५ ), २. गुणादिभ्यो ग्रामज्वक्तव्यः ( पृ० २८ ), ३. वातादूलः ( ३२ ), ४. कमलादिभ्यः खण्डच् प्रत्ययो भवति ( पृ० ४१ ), ५. नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः ( पृ० ४१ ), ६. पूर्वादिभ्यः काण्डः प्रत्ययो भवति

( पृ० ४१ ), ७. इकन् बहुलं पदोत्तरपदात् ( पृ० ५२ ), ८. देवस्य चेन्नि वक्तव्यम् ( पृ० १११ ), ९. वेणुकादिभ्यश्छण् वक्तव्यः ' पृ० १११ ), १०. आदेश्चेति वक्तव्यम् ( पृ० १२२ ), ११. अवोऽधसोर्लोपश्च ( पृ० १२२ ), १२. हरिद्रुरेषां प्रथमा·······उक्तं कठकलापिनो ( पृ० १९२–१९३ ), १३. रथसीताहलेभ्यो० ( पृ० २०२ ), १४. पादः पच्च ( पृ० २४२ ), १५. शुनः सम्प्रसारणं वा दीर्घत्वं च० ( पृ० ३१९ ), १६. कुलिजग्रहणमपीष्यते ( पृ० ३७० ), १६. शनुशतोर्डिनिश्छन्दसि ( पृ० ३७३ ), १८. विंशतेश्चेति वक्तव्यम् ( पृ० ३७४ )।

काशिका की शैली यह है कि ये पहले सूत्र के 'अनुवृत्त अंश' का संकेत करके उस सूत्र का सामान्य अर्थ देते हैं, फिर उसके उदाहरणों एवं प्रत्युदाहरणों द्वारा सूत्रघटक पदों का फल बताते हैं। वे संज्ञा सूत्रादि के लक्ष्यों का भी निर्देश कर अन्ततः अपेक्षित गणपाठ भी सूत्र की वृत्ति के साथ-साथ प्रस्तुत करते हैं।

**काशिका के व्याख्यान**

काशिका की अनेक व्याख्यायें भी लिखीं गयीं हैं, किन्तु उनमें से कई का नामोल्लेख ही प्राप्त होता है। ये हैं·--१. इन्दुमित्रकृत 'अनुन्यास', २. 'महान्यास', ३. विद्यासागर मुनीन्द्रकृत 'प्रक्रियामञ्जरी' ( अमुद्रित ), ४. राजदेव मिश्र कृत 'वृत्तिप्रदीप' ( अप्रकाशित ), ५. वृत्तिरत्नाकर ( अप्रकाशित ); ६. चिकित्सासार, ७. सनातन।

काशिका की उपलब्ध महत्त्वपूर्ण टीकाओं में **न्यास और पदमञ्जरी** सर्वाधिक प्रसिद्ध हैं।

**१. जिनेन्द्रबुद्धि-कृत न्यास** ( ७२५–७५० ई० )

काशिका के उपलब्ध व्याख्यानों में **'न्यास'** अथवा इसी का अन्य नाम **'काशिकाविवरणपञ्जिका'** प्राचीनतम है। इसके कर्ता बोधिसत्त्वदेशीय आचार्य जिनेन्द्रबुद्धि हैं। इनके लिए प्रयुक्त 'बोधिसत्त्वदेशीय' विशेषण से प्रकट है कि ये बौद्ध सम्प्रदाय के प्रसिद्ध विद्वान् थे।

'न्यास' काशिका का बड़ा ही प्रौढ़, प्रयोगबहुल तथा पाण्डित्यपूर्ण व्याख्यान है। इसमें न्यासकार ने मूल के तथ्यों का विवरण बहुत अच्छे ढंग से दिया है। इनके अनुसार 'काशिका' जैसे अन्य व्याख्यानों का सार लेकर लिखी गयी है, वैसे ही 'न्यास' भी अन्य व्याख्या ग्रन्थों का उत्कृष्ट सार है।

**२. हरदत्त मिश्र कृत पदमञ्जरी** ( ११ वीं शताब्दी )

काशिका पर द्वितीय विद्वत्तापूर्ण टीका 'पदमञ्जरी' विद्वद्वर हरदत्त मिश्र द्वारा विरचित है। इस टीका का नाम 'पदमञ्जरी' इसलिए है, क्योंकि यह काशिका के प्रायः प्रत्येक पद की व्याख्या करते हुए लिखी गयी है। काशिका के पाठभेदों पर विचार करना और अन्य नवीन उदाहरण भी प्रस्तुत करना इस टीका का अपना वैशिष्ट्य है। न्यास की अपेक्षा पदमञ्जरी सामान्य विद्यार्थी के लिए कम उपयोगी है, क्योंकि इसमें पाण्डित्य-प्रदर्शन की प्रवृत्ति है। हरदत्त महाभाष्य के तलस्पर्शी विद्वान् थे। अतः इन्होंने काशिकाकार की कटु आलोचना भी की। इनके इस दर्प के कारण नव्यवैयाकरण भट्टोजि दीक्षित एवं नागेश भट्ट आदि ने इनकी अत्यधिक समालोचना की।

**३. भावबोधिनी हिन्दी-व्याख्या**

पाणिनि के केवल सूत्रों पर यद्यपि अनेक प्रकार की हिन्दी व्याख्याएँ प्रकाशित हैं, किन्तु अद्यावधि 'काशिकावृत्ति' पर हिन्दी व्याख्या नहीं थी। इसी कमी को दूर करने का 'भावबोधिनी' में प्रयास किया गया है।

इस व्याख्या का उद्देश्य सरल एवं सुबोध शैली में व्याकरणशास्त्रीय विषयों का स्पष्टीकरण है। यहाँ पाण्डित्यप्रदर्शन न होकर यथासम्भव सुगमतया विषयविवेचन पर विशेष ध्यान दिया गया है। इसमें अनुवाद के अतिरिक्त अपेक्षित अभिप्राय प्रकट करने के लिए कोष्ठक के माध्यम से अतिरिक्त पदों और वाक्यों का प्रयोग किया गया है। 'विमर्श' के अन्तर्गत गम्भीर विषयों का स्पष्टीकरण किया गया है।

**प्रस्तुत संस्करण**

काशिका के प्रस्तुत पञ्चम भाग में अष्टाध्यायी के चतुर्थ अध्याय के द्वितीय, तृतीय एवं चतुर्थ पादों तथा पञ्चम अध्याय के प्रथम पाद का मूल न्यास, पदमञ्जरी और भावबोधिनी के साथ समाविष्ट हैं। इसमें ५९३ सूत्रों की व्याख्या की गयी हैं। प्रस्तुत संस्करण में तीन प्रकार से संख्याओं का निर्देश है--

१. सूत्र से पहले ( अर्थात् १४२९ ) अष्टाध्यायी के सम्पूर्ण सूत्रों की संख्या व्यक्त करती है।

२. सूत्र के बाद आने वाली संख्या ( १ ) उस सूत्र का अष्टाध्यायी क्रम में आने वाले पाद के अन्तर्गत सूत्र की संख्या का द्योतन करती है।

३. कोष्ठक में दी गई अन्तिम संख्या अर्थात् १२०२ निर्णयसागर से प्रकाशित 'सिद्धान्त-कौमुदी' के सूत्र-क्रम की परिचायक है।

यह सब जो कुछ हो सका है, वह गुरुओं का ही कृपा-प्रसाद है, उनके श्रद्धेय चरणों में बैठकर जो कुछ व्याकरण का ज्ञान हमें प्राप्त हो सका उसे आज विद्वद्वर्ग के सामने प्रस्तुत करने में हमें अपार हर्ष हो रहा है। श्रद्धेया प्रोफेसर डा० पद्मा मिश्र से हमें काशिका पर कार्य करने की महती प्रेरणा प्राप्त हुई। वैदिक उद्धरणों के सम्बन्ध में बहुत सी नवीन बातों का ज्ञान उन्हीं से मिला। काशिका के इस संस्करण का प्राक्कथन श्रद्धेय प्रो० डॉ० विश्वनाथ भट्टाचार्य, अध्यक्ष, संस्कृत विभाग, कला संकाय, काशी हिन्दूविश्वविद्यालय ने लिखकर हम लोगों पर महान् अनुग्रह किया है, तदर्थ हम हृदय से कृतज्ञता व्यक्त करते हैं। हमारा यह कार्य जो सफल हो सका, उसमें सबसे अधिक श्रेय इस ग्रन्थ के प्रकाशक महोदय को ही है। स्नेहभाजन श्री रविशङ्कर पण्ड्याजी के कार्य के पीछे संलग्न हो जाने का प्रयास स्तुत्य है। इस भाग को लेकर काशिका के पाँच भाग प्रकाशित हो चुके हैं। जिसके प्रूफ के संशोधन में श्री कृपासिन्धु शर्मा ( वरिष्ठ शोध सहायक, काशिराज ट्रस्ट, रामनगर ) ने बड़ी ही सहायता की है। हम उनके कार्य के प्रति आभारी हैं। अन्ततः हम तारा प्रेस के संचालक और संस्कृत के दुर्लभ ग्रन्थों के प्रकाशक श्री रमाशङ्कर जी पण्ड्या का अत्यन्त आभार प्रकट करते हैं।

ज्योति पर्व ९-११-१९८८, वि० सं० २०४५

संस्कृत विभाग, कला संकाय
काशी हिन्दू विश्वविद्यालय

विदुषां वशंवदौ--
**जयशङ्कर लाल त्रिपाठी**
**सुधाकर मालवीय**

# काशिकायाः पञ्चमभागस्थ-विषयाः

## चतुर्थाध्यायस्य चतुर्थः पादः

| विषयः | सूत्राङ्कः |
|---|---|
| ष्ठल् | ९, ७४ |
| ष्ठन् | १०, १६–१७, ५३–५४ |
| ष्ठन्ठञौ | ११ |
| ठन्छौ | १४ |
| मप् | २० |
| कक्कनौ | २१ |
| इनिः | २३ |
| ठको लुक् | २४ |
| ष्ठन्ठचौ | ३१ |
| ण्यः | ४४–४५, १०१ |
| अञ् | ४९ |
| ईकक् | ५९ |
| णः | ६२, ८५, १०० |
| ठच् | ६४ |
| टिठन् | ६७ |
| ष्ठल् | ७४ |
| यत् | ७५–७७, ८२–८४, ८६–८९, ९१–९८ १०७–१०८, ११०, ११६, १२८, १३४, १३९–१४० |
| खः | ७८–७९ |
| ञ्यः | ९० |
| खञ् | ९९ |
| ढञ् | १०४ |
| यः | १०५.१०९.१३७–१३८ |
| ढः | १०६ |
| डचण् | १११ |
| डचड्डचौ | ११३ |
| यन् | ११४ |
| घन् | ११५ |
| यत् घच् घन् छः | ११७ |
| धः | ११८, १३५–१३६, १४१ |
| मतुप् | १२७ |
| ञ यत् | १२९ |
| यत् ख | १३०, १३२ |
| यल् | १३१ |
| इन् य ख | १३३ |
| तातिल् | १४२–१४४ |

## पञ्चमाध्यायस्य प्रथमः पादः

| विषयः | सूत्राङ्कः |
|---|---|
| छोऽधिकारः | १–३६ |
| यत् | २, ३, ६, ७, ३४, ३९, ६६, ६७, १००, १०७, १२५ |
| यच्छौ | ४, ५, ४० |
| थ्यन् | ८ |
| खः | ९, ३२, ८५ |
| णढञौ | १० |
| खञ् | ११ |
| यथाविहितप्रत्ययः | १२ |
| ढञ् | १३, १७ |
| ञ्यः | १४ |
| अञ् | १५, ६१, १२९ |
| यथाविहितप्रत्ययः | १६ |
| ठञधिकारः | १८–११४ |
| ठगघिकारः | १९–६२ |
| ठक् | २० |
| ठन्यतौ | २१ |
| कन् | २२, २३ |
| ड्वुन् | २४ |
| टिठन् | २५ |
| अञ्ठञौ | २६ |
| अण् | २७, ७, १०५, ११०, १३०, १३१ |
| आर्हीयस्य लुक् | २८ |
| आर्हीयस्य लुग्विकल्पः | २९–३१ |
| ईकन् | ३३ |
| यत्, ठञ् लुक् | ३५ |
| अण्, यत्, ठञ् लुक् | ३६ |
| क्रीतार्थे यथाविहितप्रत्ययः | ३७ |
| निमित्तार्थे यथाविहितप्रत्ययः | ३८ |
| अणञौ | ४१, ४२, ४३ |
| ठञ् | ४४, ७२–७४, ७७, ७९, ९३–९५, ९९, १०१, १०४, १०८, १०९ |
| यथाविहितप्रत्ययः | ४५ |
| ष्ठन् | ४६ |
| यथाविहितप्रत्ययः | ४७ |

—:o:—

# संकेत सूची

| | | |
|---|---|---|
| अथर्व० | = | अथर्ववेदः |
| आप० श्रौ० | = | आपस्तम्बश्रौतसूत्रम् |
| ऐ० ब्रा० | = | ऐतरेय-ब्राह्मणम् |
| ऋ० | = | ऋग्वेदः |
| आश्व० श्रौ० | = | आश्वलायन-श्रौतसूत्रम् |
| का० ( काठ० ) सं० | = | काठकसंहिता ( सामवेदीया ) |
| ग० सू० | = | गणसूत्रम् |
| का० वा० | = | कात्यायनवार्तिकम् |
| कौ० गृ० | = | कौषीतकिगृह्यसूत्रम् |
| तै० ब्रा० | = | तैत्तिरीय-ब्राह्मणम् |
| तै० सं० | = | तैत्तिरीय-संहिता |
| द० ( दश० ) उ० | = | दशपादि-उणादि |
| धा० पा० | = | धातुपाठः |
| नि० | = | निरुक्तम् |
| पै० सं० | = | पैप्पलादसंहिता ( अथर्ववेदीया ) |
| फि० सू० | = | फिट्सूत्रम् |
| म० भा० | = | महाभाष्यम् |
| मै० सं० | = | मैत्रायणीसंहिता ( कौथुमीया ) |
| वा० ( वाज ) सं० | = | वाजसनेयिसंहिता |
| श० ( शत० ) ब्रा० | = | शतपथब्राह्मणम् |

—:०:—

इष्ट्युपसङ्ख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं 'काशिका' नाम ॥

॥ श्रीगणेशाय नमः ॥

पाणिनीयाष्टाध्यायीसूत्रवृत्तिः

# काशिका

## न्यास–पदमञ्जरी–भावबोधिनीसहिता

## अथ चतुर्थाध्याये द्वितीयः पादः

### १४२६. तेन रक्तं रागात् ॥ १ ॥ (१२०२)

**शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः। रज्यतेऽनेनेति रागः। तेनेति तृतीयासमर्थाद्रागविशेषवाचिनः शब्दात् 'रक्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। कषायेण रक्तं वस्त्रं काषायम्। माञ्जिष्ठम्। कौसुम्भम्।**

**रागादिति किम्? देवदत्तेन रक्तं वस्त्रम्।**

**न्यासः**

**तेन रक्तं रागात् ॥** रञ्जिरयमस्त्येवानुरागे—देवे रक्तः, स्त्रियां रक्त इति; अस्ति च वर्णविशेषे—रक्तो गौरिति, लोहित इत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने—रक्तः पट इति, शुक्लमपनीय रक्तादिकं वर्णान्तरमापादित इत्यर्थः। इह तृतीयेऽर्थे वर्त्तमानो गृह्यते, यदाह—**शुक्लस्येत्यादि।** रागशब्दोऽयमस्त्येव भावसाधनः, अस्ति च करणसाधनः; तत्रेह द्वितीयो गृह्यते, यदाह—**रज्यतेऽनेनेति राग इति।** रागग्रहणेन चार्थस्य ग्रहणम्, न स्वरूपस्य। तेन रागविशेषवाचिनः प्रातिपदिकात् प्रत्ययो विज्ञायते, न तु रागशब्दादेवेत्यत आह—

**पदमञ्जरी**

**तेन रक्तं रागात् ॥** रञ्जिरयमस्त्येवाभिष्वङ्गे—भोजने रक्त इति; अस्ति वर्णविशेषे—रक्ता गौः, लोहितेत्यर्थः; अस्ति शुक्लस्य वर्णान्तरापादने—रक्तः पट इति। तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह—**शुक्लस्येत्यादि।** एतच्चाभिधानस्वाभाव्याल्लभ्यते। **रज्यतेऽनेन राग इति।** 'घञि च भावकरणयोः' इति नलोपः। भावसाधनस्तु रागशब्दो न भवति, न हि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति। **रागविशेषवाचिन इति।** स्वरूपग्रहणं तु न भवति; उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात्।

**भावबोधिनी**

विश्वेश्वरं सकलविघ्नहरं तथाम्बां बुद्धिप्रदान् गुरुवरांश्च शनिञ्च नत्वा।
व्याख्याद्वयेन परिभूषितकाशिकायाः व्याख्यां तनोम्यनुपमां जयशङ्करोऽहम् ॥

श्वेत को दूसरे वर्ण में करना यहाँ रंगने [√ रञ्ज धातु] का अर्थ है। रंगा जाता है जिसके द्वारा वह—राग है। [रञ्ज् + घञ् = अ, न् = ञ् का लोप, उपधावृद्धि और कुत्व = ज् का ग् करने पर—राग] तेन [= उसके द्वारा—] इस तृतीया समर्थ राग [रंग] विशेष के वाचक शब्द से 'रंगा गया' इस अर्थ में यथाविहित प्रत्यय होता है। उदा०—कषायेण रक्तं वस्त्रम्—काषायम्। [कसैले रंग से रंगा गया वस्त्र आदि। कषाय + अण् = अ, आदि-वृद्धि, भसंज्ञा अलोप]। माञ्जिष्ठम् [मंजीठी रंग से रंगा हुआ वस्त्र। मञ्जिष्ठ अण्, शेष पूर्ववत्]। कौसुम्भम् [कुसुंभी रंग से रंगा हुआ। कुसुम्भ + अण्]।

रंगवाची से—इसका क्या फल है? देवदत्त द्वारा रंगा गया वस्त्र। [यहाँ नहीं होता है क्योंकि देवदत्त राग = रंगवाची नहीं है।]

**कथं काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति ? उपमानाद्भविष्यति—काषायाविव काषायौ, हारिद्राविव हारिद्रौ । 'द्वैपवैयाघ्रादञ्'** (४.२.१२) **इति यावत्तृतीयासमर्थविभक्तिरनुवर्त्तते ॥**

**१४३०. लाक्षारोचनाशकलकर्दमाट्ठक्[1] ॥ २ ॥ (१२०३)**

**लाक्षादिभ्यो रागवचनेभ्यस्तृतीयासमर्थेभ्यः 'रक्तम्' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अणोऽपवादः । लाक्षया रक्तं वस्त्रं लाक्षिकम् । रौचनिकम् । शाकलिकम् । कार्दमिकम् ।**

*** शकलकर्दमाभ्यामणपीष्यते *** (म० भा० ४.२.२ वा० १) **। शाकलम् । कार्दमम् । * नील्या अन्**

**न्यासः**

**रागविशेषवाचिनः प्रातिपदिकादिति ।** अथ स्वरूपग्रहणं कस्मान्न भवति ? अर्थपरत्वान्निर्देशस्य । यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते, न यत्रार्थपरो निर्देश इति प्राक् प्रतिपादितमेव । अर्थपरत्वञ्च निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशात् गम्यते । यदि तर्हि शुक्लस्य वर्णान्तरापादनं रञ्जेरिहार्थः, काषायौ गर्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादाविति न सिध्येत्, न ह्यत्र शुक्लस्य वर्णान्तरापादनमित्यभिप्रायेणाह—**कथमिति । उपमानादित्यादि** परिहारः । यथा 'गौर्वाहीकः' इत्युपमानाद् गोशब्दोऽर्थान्तरे वाहीके वर्त्तते, तथेहापि काषायादिशब्दो गर्दभकर्णादाविति भावः ॥ १ ॥

**लाक्षारोचनाशकलकर्दमाट्ठक् ॥ शकलकर्दमाभ्यामणपीष्यत इति ।** स च 'वान्यस्मिन् सपिण्डे'

**पदमञ्जरी**

**रागादिति किमिति ।** अनभिधानादेव कर्तृवाचिनो न भविष्यति, 'दैवदत्तं वस्त्रम्' इति ह्युक्ते स्वस्वामिभावस्यैव सम्प्रत्ययादिति प्रश्नः । लक्षणैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युक्तम् ।

**कथमिति ।** न ह्यत्र वर्णान्तरमाहितमिति प्रश्नः । **उपमानादिति ।** रूपसादृश्यनिमित्तात् ॥ १ ॥

**लाक्षारोचनाट्ठक् ॥** शकलकर्दमयोर्वार्त्तिके दर्शनात्सूत्रे प्रक्षेपः ।

**नील्या इति ।** ओषधिविशेषो नीली, अण्बाधनार्थवचनम् । नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति ।

**भावबोधिनी**

'गधा के काषाय [कसैले] कान' 'मुर्गा के हारिद्र [पीले] पैर—ये प्रयोग कैसे होते हैं ? [क्योंकि इन्हें तो रंगा नहीं जाता है, स्वाभाविक रंग है ।] उपमान से हो जायगा—काषाय के समान—काषाय [कसैले रंग रंगे वस्त्र आदि समान कसैले कान इसी प्रकार] हरिद्रा से रंग वस्त्र आदि के समान—हारिद्र [पीले रंग वाले पैर] । 'द्वैप वैयाघ्रादञ्' इस सूत्र तक तृतीया समर्थ विभक्ति की अनुवृत्ति होती है ।

**विमर्श**—'अकर्तरि च कारके संज्ञायाम्' ३।३।१९ इस सूत्र से कर्तृ भिन्न कारक अर्थ में घञ् प्रत्यय होता है । यहाँ रज्यतेऽनेन—इस करण अर्थ में घञ् होता है तभी 'घञि च भावकरणयोः' से न् = ञ् का लोप करने पर 'अत उपधायाः' से उपधा के अकार की वृद्धि करने पर 'राग' बनता है । इस प्रकार जिससे रंगा जाता है, उसे 'राग' समझना चाहिए । रक्त—शब्द के अनेक अर्थ हैं । यहाँ श्वेत का दूसरा रूप करना—रक्त पदार्थ है । इस प्रकार जब किसी रंग से श्वेत पदार्थ को दूसरे रंग में परिवर्त्तित कर दिया जाता है, तब जिस रंग से रंगा जाता है, उसके वाचक प्रातिपदिक से यथाविहित प्रत्यय होते हैं ॥ १ ॥

लाक्षा, रोचना, शकल, कर्दम—इन रंगवाची तृतीयान्त समर्थ प्रतिपादिकों से 'रंगा गया' इस अर्थ में ठक् प्रत्यय होता हैं । यह अण् का अपवाद है । उदा०—लाक्षया रक्तं वस्त्रम्—लाक्षिकम् [लाख से रंगा हुआ वस्त्र] रौचनिकम् [रोचनया रक्तम्—। गो के मस्तक से निकले हुए पीले रंग से रंगा हुआ वस्त्र] । शाकलिकम् [शकलेन रक्तम्] कार्दमिकम् [कर्दमेन रक्तम्—कीचड़ से रंगा हुआ वस्त्र आदि ।] ठक् प्रत्यय में आदिवृद्धि और ठ का इक होता है । जैसा कि शाकलिकम् आदि में है ।]

१. 'लाक्षारोचनाट्ठक्' इति पदमञ्जरीसम्मतः सूत्रपाठः ।

**वक्तव्यः** ★ (वा० २) । **नील्या रक्तं नीलं वस्त्रम् ।** ★ **पीतात् कन् वक्तव्यः** ★ (वा० ३) । **पीतेन रक्तं पीतकम् ।**
★ **हरिद्रामहारजनाभ्यामञ्वक्तव्यः** ★ (वा० ४) । **हारिद्रम् । माहारजनम् ॥**

## १४३१. नक्षत्रेण युक्तः कालः ॥ ३ ॥ (१२०४)

**तृतीया समर्थविभक्तिरनुवर्तते । तेनेति तृतीयासमर्थाद् नक्षत्रविशेषवाचिनः शब्दाद् 'युक्तः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । योऽसौ युक्तः, कालश्चेत्स भवति ।**

**न्यास**

इत्यतो मण्डूकप्लुतिन्यायेन वाग्रहणानुवृत्तेर्लभ्यते । न चैवं सत्यतिप्रसङ्गो भवति; व्यवस्थितविभाषाविज्ञानात् ॥ २ ॥

**नक्षत्रेण युक्तः कालः ॥** इह कालं क्रियात्मानं केचिदिच्छन्ति, अपरे द्रव्यात्मानमाकाशादिकल्पम् । दर्शनद्वयमपि चैतदिहाश्रयितुमयुक्तम् । पूर्वस्मिन् दर्शने समाश्रीयमाणे सूर्यादिद्रव्यान्तरस्थाया वा क्रियाया नक्षत्रेण योगः स्यात् ? आत्मस्थाया वा ? पूर्वस्यास्तावन्न सम्भवति, अर्थान्तरासमवायात्; अन्यथा ह्याकाशादयोऽपि क्रियावन्तः स्युः । न ह्यर्थान्तरसमवायिन्या अपि क्रियाया द्रव्यान्तरेण योगः स्यात् । आत्मस्थायास्तु क्रियाया विद्यते नक्षत्रेण योगः, किन्तु युक्तग्रहणं विशेषणं नोपपद्यते; व्यवच्छेद्याभावात् । न हि पुष्यादिस्थायाः कालस्य पुष्यादिभिः कदाचिद् योगो युज्यते यद्व्यवच्छेदार्थं युक्तग्रहणं क्रियते । एवं तावत् 'क्रिया कालः' इत्येतद् दर्शनमत्राश्रयितुमयुक्तम् । द्वितीयमप्ययुक्तमेव; यस्मात् कालविशेषावधारणहेतुरिह योगोऽभिप्रेतः । तथा हि कालविशेषावधारणार्थमेव पौषीत्यादि लोके प्रयुज्यते । स चैवंविधो योगस्तयोरेव भव-

**पदमञ्जरी**

**पीतादिति ।** रागविशेषवाची पीतशब्दः । इदमपि वचनमण्बाधनार्थमेव । स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्द गुणवचनो वस्त्रे लभ्यते ॥ २ ॥

**नक्षत्रेण युक्तः कालः ॥** इह परामर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम्—

आदित्य-ग्रह-नक्षत्र-परिस्पन्दमथापरे ।
भिन्नमावृतिभेदेन कालं कालविदो विदुः ॥ इति ।

वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तं च—

व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥ इति ।

**भावबोधिनी**

★ नीली से अन् कहना चाहिए । [औषधि विशेष अर्थ में नीली शब्द प्रयुक्त होता है । उस औषधि से रंगा हुआ वस्त्र] नील्या रक्तं वस्त्रम्—नीलम् । [नीली + अन्, भसंज्ञा, ईलोप]

★ पीत शब्द से कन् कहना चाहिए ।★ पीत से रंगा हुआ—पीतकम् ।

★ हरिद्रा और महारजन—इन शब्दों से अञ् प्रत्यय कहना चाहिए ।★ हरिद्रया रक्तम् हारिद्रम् [हरिद्रा + अञ्, आदिवृद्धि, भसंज्ञा, आ का लोप] महारजनेन रक्तम्—माहाराजनम् [महारजन + अञ्, आदिवृद्धि]।

**विमर्श**—पाणिनि ने 'लाक्षारोचनाट्ठक्' ४।२।२ इतना ही सूत्र बनाया है ।★ 'ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम्' ★ यह वार्तिक है । परन्तु अनेक सूत्रों के समान यहाँ भी वार्तिक को मिलाकर प्रस्तुत सूत्र बनाकर काशिकाकार ने अपनी अनवधानता प्रकट की है । इसीलिए प्रदीपकार कैयट ने लिखा है 'शकलकर्दमयोः सूत्रे पाठोऽनार्ष ।' पदमञ्जरीकार ने भी उसका उल्लेख किया है । दूसरा प्रमाद यह किया है कि प्रस्तुत सूत्र भाष्य में 'शकलकर्दमाभ्याभणयीष्यते' इस वार्तिक का उल्लेख ही नहीं है, फिर भी यहाँ लिखा हैं । अतः इसका मूल अन्वेषणीय है ॥ २ ॥

तृतीया समर्थ विभक्ति की अनुवृत्ति होती है । नक्षत्रविशेष के वाचक 'तेन' इस तृतीया समर्थ प्रतिपादिक शब्द से 'उससे युक्त'—इस अर्थ में यथाविहित प्रत्यय होते हैं । जो युक्त है वह यदि काल हो तभी यह विधान है ।

**कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते ? पुष्यादिसमीपस्थे चन्द्रमसि वर्तमानाः पुष्यादिशब्दाः प्रत्ययमुत्पादयन्ति । पुष्येण युक्तः कालः पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः । पौषी रात्रिः । पौषमहः । माघी रात्रिः । माघमहः ।** (म० भा०)

**नक्षत्रेणेति किम् ? चन्द्रमसा युक्ता रात्रिः । काल इति किम् ? पुष्येण युक्तश्चन्द्रमाः ॥**

**न्यासः**

तीति ययोः सन्निकर्षविप्रकर्षौ स्तः, यथा पुष्यचन्द्रमसोः । तयोर्हि कदाचित् सन्निकर्षो भवति, कदाचिद्विप्रकर्षः । न च नक्षत्रकालयोः कदाचित् सन्निकर्षविप्रकर्षौ स्तः, तयोर्नित्यत्वादित्येतच्चेतसि कृत्वाह—**कथं पुनरित्यादि ।** न कथञ्चिदित्यभिप्रायः । नक्षत्रनिकटवर्त्तिनि चन्द्रमसि वर्त्तमानः सूत्रे नक्षत्रशब्द उपात्त इत्येतत् सूत्रयन्नाह—**पुष्यादिसमीपस्थ इत्यादि ।** यथैव हि सामीप्याद् 'गङ्गायां घोषः' इति गङ्गासमीपस्थे देशे गङ्गाशब्दो वर्त्तते, तथेहापि पुष्यादयो नक्षत्रविशेषवाचिनः शब्दाः पुष्यादिसमीपस्थे चन्द्रमसि वर्त्तन्ते । तेन तत्रैव ते वर्त्तमानाः प्रत्ययमुत्पादयन्ति । तेन पुष्यादिसमीपस्थचन्द्रमसा कालस्य विशेषावधारणहेतुर्योग उपपद्यते । तदवस्थस्य चन्द्रमसः कदाचित्कत्वात् । पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः; तदवस्थे चन्द्रमसि पुष्यशब्दस्य वृत्तेः । **पौषीति ।** 'सूर्यतिष्यागस्त्यामत्स्यानां य उपधायाः' इत्यत्र 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' इति वचनाद् यलोपः ॥ ३ ॥

**पदमञ्जरी**

द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति, किं कारणम् ? अप्राप्तिपूर्विका प्राप्तिः = योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति । द्रव्यपक्षे तावद् द्वयोरपि नक्षत्रकालयोर्नित्यत्वात्कालस्य च सर्वगतत्वान्न कदाचिदयोगः । क्रियापक्षेऽपि नक्षत्रगतायाः क्रियायाः कालाख्यायाः समवायलक्षणो योगोऽव्यभिचारादविशेषणम् । सूर्यादिगतायास्त्वसम्भवादविशेषणम् । यदि तु यथाकथञ्चिद्योगः, तदा व्यभिचारीभावः । न हि सोऽस्त्यहोरात्रो यः पुष्येण न युक्तः । तस्मात् 'नक्षत्रेण युक्तः कालः' इत्यनुपपन्नो निर्देशः ।

कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादेर्युक्तान्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमाः पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र । तत्र युक्तवद्भावे दोषः, मघायुक्तशब्दात् प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिद्ध्यतः, युक्तस्यैव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति—**कथं पुनरिति ।** न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता; ज्योतिर्मात्रवचनत्वान्नक्षत्रशब्दस्य । ये तु पुष्यादीनामावस्थिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुः, तेषामयं प्रश्नोऽनुपपन्नः । **पुष्यादिसमीपस्थ इति ।** मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः । तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते, यथा—मञ्चादयः, मञ्चान् स्त्रियः पश्येति । तेन युक्तवद्भावविषयेऽपि दोषाभावः । **पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थ इति ।** यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात्; पुष्यसमीपेन तु कदाचित्कः, पुष्यसमीपतायाः कादाचित्कत्वात् । **पौषीति ।** 'सूर्यतिष्य' इत्यादिना यलोपः ॥ ३ ॥

**भावबोधिनी**

पुष्य आदि विशेष नक्षत्र से काल का योग कैसे हो सकता है । पुष्य आदि नक्षत्रों के समीप में स्थित चन्द्रमा अर्थ में वर्तमान = प्रयुक्त पुष्य आदि शब्द प्रत्यय को उत्पन्न कराते हैं । पुष्य से युक्त—यह अर्थ है । उदा०—पौषी रात्रिः [पुष्यनक्षत्र के योग वाली रात्रि] । माघी रात्रिः [मघा नक्षत्र के योगवाली रात] । माघम् अहः [मघा नक्षत्र से युक्त दिन] ।

नक्षत्र से युक्त—यह किस लिये है ? चन्द्रमा से युक्त रात्रि । [चन्द्र नक्षत्र नहीं है अतः इससे अण् आदि नहीं होते हैं ।] काल—यह किस लिए है ? पुष्य से युक्त चन्द्रमा । [चन्द्रमा काल नहीं है । अतः प्रत्यय नहीं होता है ।

## १४३२. लुबविशेषे ॥ ४ ॥ (१२०५)

**पूर्वेण विहितस्य प्रत्ययस्य लुब् भवति अविशेषे। न चेन्नक्षत्रयुक्तस्य कालस्य रात्र्यादिविशेषोऽभिधीयते। यावान् कालो नक्षत्रेण युज्यतेऽहोरात्रस्तस्याविशेषे लुब् भवति** (म० मा०)**। अद्य पुष्यः। अद्य कृत्तिकाः। अविशेष इति किम्? पौषी रात्रिः। पौषमहः॥**

**न्यासः**

**लुबविशेषे॥** यद्यविशेषे लुब् भवति, इहापि प्राप्नोति—पौषी रात्रिः, पौषमहरिति, अत्राप्यविशेषो गम्यत एव। तथा हि पौषी रात्रिरित्युक्ते, अद्य श्वो वेति विशेषो न गम्यत इत्यत आह | **न चेत् नक्षत्रयुक्तस्येत्यादि।** एवं मन्यते—'नक्षत्रेण युक्तः कालः' इत्यनुवर्तते, तेन तद्विशेष एव न भवतीति। **रात्र्यादिविशेष इति।** आदिशब्देनाहः, मुहूर्तः, लवः—इत्येते विशेषा गृह्यन्ते। **यावानित्यादि।** अनन्तरोक्तमेवार्थं विस्पष्टीकरोति। कियाँश्च कालो नक्षत्रेण युज्यते? अहोरात्रः। तदेवं यावान् कालो नक्षत्रेण युज्यते तस्याविशेषे गम्यमाने लुपा भवितव्यम्। तेन च पौषी रात्रिः, पौषमहरित्यत्र यावान् कालो नक्षत्रेण युक्तस्तस्याविशेषो न गम्यते, अपि तु तदेकदेशस्य रात्रेः, अह्नो वेति नायं लुपो विषयः। यद्येवम्, प्रत्ययस्यापि कथमेकदेशो विषयः? समुदायद्वारेण तदन्तःपातिनो गृह्यन्ते। एकदेशानामपि योगात् पूर्वेण प्रत्ययोत्पत्तिः सिद्धा भवति। पुनरिहावयवस्यैकदेशो लुपो विषय इति। इह तर्हि प्राप्नोति—पौषोऽहोरात इति, अद्य यावान् कालो नक्षत्रेण युक्तः, तस्याविशेषो गम्यते, तथा ह्यहोरात्र इत्युक्ते न ज्ञायते—किमतीतः, अथानागतः, अथ वर्तमान इति? नैष दोषः;

**पदमञ्जरी**

**लुबविशेषे॥** यद्यविशेषे लुब् भवति, इहापि प्राप्नोति—पौषी रात्रिः, पौषमहरिति, अत्राप्यद्य ह्यो वेति विशेषो न गम्यते। **अथ रात्रिहरिति।** विशेषावसायात्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्याद्—अद्य पुष्यो ह्यः कृत्तिका इति, अद्यत्वादिविशेषावसायात्; 'पुष्ये पायसमश्नीयात्' इत्यादावेव तु स्याद् यत्र न मनागपि विशेषावसायः? अत आह—**न चेदित्यादि।** रात्र्यादिरित्यादिशब्देन मुहूर्त्तादेः परिग्रहः। **विशेषोऽभिधीयते इति।** प्रत्ययान्तेन। एतदेव स्पष्टयति—**यावानिति।** कियाँश्च कालो नक्षत्रेण युज्यते? इत्याह—**अहोरात्र इति।** षष्टिनाडिकात्मक इत्यर्थः। तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्त्तते। तदेतदेवं यावान्कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः। एतच्च प्रत्ययान्तेऽनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते। प्रसज्यप्रतिषेधश्चायम्, तेन पौषोऽहोरात्र इत्यत्र समुदायेनापि प्रतीयमानोऽवयवद्वयात्मकः प्रतीयत इति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी, मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति? ज्ञापकात्सिद्धम्, यदयम् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः' इति निर्दिशति, तज्ज्ञापयति—

**भावबोधिनी**

**विमर्श**—काल और नक्षत्र ये दोनों नित्य पदार्थ है। अतः इनके सन्निकर्ष और विप्रकर्ष का प्रश्न नहीं है। तब—नक्षत्र से युक्त काल—यह कैसे होता है? चन्द्रमा जब पुष्य आदि नक्षत्रों का समीपवर्ती होता है उस समय लक्षणा वृत्ति से पुष्य शब्द उक्त अर्थ का प्रतिपादन करता है। इस प्रकार पुष्यादि के समीपवर्त्ती चन्द्रमा का काल के साथ योग होता है। इसी योग को मानकर प्रत्यय किये जाते हैं। जैसे—मंच हँसते हैं—इसका लाक्षणिक अर्थ—मंच पर स्थित पुरुष हंसते हैं—यह होता है। उसी प्रकार यह विवक्षित अर्थ सिद्ध हो जाता है॥ ३॥

पूर्वसूत्र से विहित प्रत्यय का लुप् होता है यदि अविशेष अर्थात् सामान्यरूप से नक्षत्रयोग प्रतीत हो रहा हो। यदि नक्षत्र से युक्त काल का रात्रि आदि विशेष का कथन न किया जा रहा हो। दिन रात जितना समय नक्षत्र से युक्त होता है, उसके अविशेष में लुप् हो जाता है। उदा०—अद्य पुष्यः। [आज का काल पुष्य नक्षत्र से युक्त है। परन्तु यह विशेष अर्थात् दिन या रात आदि किसी विशेष अंश को नहीं कहा गया है अतः पूर्वसूत्र से विहित प्रत्यय का लुप् = लोप हो जाता

## १४३३. संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥ (१२०६)

**अविशेषे लुब्विहितः पूर्वेण, विशेषार्थोऽयमारम्भः। श्रवणशब्दादश्वत्थशब्दाच्चोत्पन्नस्य प्रत्ययस्य लुब् भवति संज्ञायां विषये। श्रवणा रात्रिः। अश्वत्थो मुहूर्त्तः।**

**लुपि युक्तवद्भावः कस्मान्न भवति? निपातनाद् 'विभाषा फाल्गुनीश्रवणाकार्त्तिकी चैत्रीभ्यः'** (४.२.२३) **इति।**

**संज्ञायामिति किम्? श्रावणी, आश्वत्थी रात्रिः॥**

**न्यासः**

अविशेष इति प्रसज्यप्रतिषेधोऽयम्। तेन नक्षत्रयुक्तस्य कालस्य यत्र विशेषो रात्र्यादिस्तत्र न लुब् भवतीति ज्ञायते, न तु यत्राविशेषः तत्र तु लुब् भवतीति ॥ ४ ॥

**संज्ञायां श्रवणाश्वत्थाभ्याम्॥ लुपि युक्तवद्भावः कस्मान्न भवतीति।** यदि स्यात्, श्रवणशब्दस्य पुंल्लिङ्गता स्यात्। **निपातनादित्यादिना** परिहारः गतार्थः ॥ ५ ॥

**पदमञ्जरी**

पौर्णमास्यां लुब्न भवतीति। श्रवणाशब्दात्तु भवति—'श्रवणाकार्त्तिकी' इति निर्देशादेव। कथं तर्हि श्रावण्यां पौर्णमास्यामिति? अबाधकान्यपि निपातनानि भवन्ति ॥ ४ ॥

**संज्ञायां श्रवणाश्वत्थाभ्याम्॥ विशेषार्थोऽयमारम्भ इति।** न तु संज्ञायां नियमार्थः; विधिसम्भवे नियमायोगात्, 'श्रवणाकार्त्तिकी' इत्यसंज्ञायामपि लुपो दर्शनाच्च।

**लुपि युक्तवद्भावः कस्मान्न भवतीति।** श्रवणा रात्रिरित्यत्र। **निपातनादिति।** ङीप्स्वत्र प्रत्ययलक्षणेन न भवति; 'अण् योऽकारः' इति विज्ञानात् ॥ ५ ॥

**भावबोधिनी**

हैं। लुप् शब्द से लोप है अतः 'न लुमताङ्गस्य' से प्रत्यय लक्षण का निषेध हो जाने के कारण आदिवृद्धि नहीं होती है।] अद्य कृत्तिकाः [आज कृत्तिका नक्षत्र से युक्त काल है। प्रक्रिया पूर्ववत्]।

अविशेष में—इसका क्या फल है? पौषी रात्रिः। पौषम् अहः [पुष्य नक्षत्र से युक्त रात। यहाँ विशेष काल कहा जा रहा है। अतः लुप् नहीं होता है। पुष्य + अण् = अ, आदि वृद्धि, भसंज्ञा, अलोप, य् लोप पौष + ङीप्, पौषी रात्रिः ॥ ४ ॥

अविशेष = सामान्यरूप से नक्षत्रयोग में पूर्ववर्त्ती सूत्र द्वारा लुप् का विधान किया गया; विशेष के लिए यह सूत्र बनाया गया है। संज्ञाविषय में श्रवण शब्द और अश्वत्थ शब्दों से [तेन युक्तः कालः—इस अर्थ में] विहित प्रत्ययों का लुप् = लोप होता है। उदा०—श्रवणा रात्रिः [श्रवण नक्षत्र विशेष से युक्त रात]। अश्वत्थः मूहूर्तः [अश्वत्थ = अश्विनी नक्षत्र विशेष से युक्त मुहूर्त्त = दो घड़ी का समय। सामान्य सूत्र से विहित अण् प्रत्यय का लोप होता है। ज्योतिष शास्त्र के अनुसार ये दो विशेष काल की संज्ञायें हैं।]

[प्रत्यय का] लुप् होने पर युक्तवत्भाव क्यों नहीं होता है [जिसके फलस्वरूप पुल्लिङ्ग हो जाता]? 'विभाषा फाल्गुनी श्रवणा कार्तिकी' [में श्रवणा इस] निपातन के कारण युक्तवद्भाव नहीं होता है। [इसलिए ङीप् भी नहीं होता है।]

संज्ञा अर्थ में—इसका क्या फल है? श्रावणी, आश्वत्थी रात्रिः। [यह सामान्य कथन है किसी की संज्ञा नहीं है अतऽ लुप् नहीं होने से आदिवृद्धि और ङीप् आदि होते हैं।] ॥ ५ ॥

**१४३४. द्वन्द्वाच्छः ॥ ६ ॥ (१२०७)**

**नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः प्रत्ययो भवति, विशेषे चाविशेषे च। राधानुराधीया रात्रिः। तिष्यपुनर्वसवीयमहः। अविशेषे—अद्य राधानुराधीयम्। अद्य तिष्यपुनर्वसवीयम्। लुपं परत्वाद् बाधते ॥**

**१४३५. दृष्टं साम ॥ ७ ॥ (१२०८)**

**तेनेति तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। यद् दृष्टं साम चेत्तद्भवति। क्रुञ्चेन दृष्टं क्रौञ्चं साम** (तै० सं० २.५.११.१) **वाशिष्ठम्। वैश्वामित्रम्** (ऐ० ब्रा० ६.२०, पृ० ९८९) **॥**

**न्यास**

**द्वन्द्वाच्छः ॥** नक्षत्रग्रहणं यत्प्रकृतं तदिहार्थात् षष्ठ्यन्तं विपरिणम्यते। तेन नक्षत्राणां यो द्वन्द्वस्तस्मात् प्रत्ययो विज्ञायत इत्याह—**नक्षत्रद्वन्द्वादिति। विशेषे चाविशेषे चेति।** अविशेषग्रहणस्य निवृत्तत्वात्। **अद्य राधानुराधीयमिति।** ननु चाविशेषे लुपा भवितव्यम्, तत् कथं प्रत्ययस्य श्रवणमित्याह—**लुपं परत्वाद् बाधत इति** ॥ ६ ॥

**दृष्टं साम** ॥ ७ ॥

**पदमञ्जरी**

**द्वन्द्वाच्छः ॥** नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिणम्यते, तच्च द्वन्द्वस्य विशेषणमित्याह—**नक्षत्रद्वन्द्वादिति। राधानुराधीया रात्रिरिति।** एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः। **अद्य राधानुराधीयमिति।** अद्येत्यस्यालिङ्गत्वेऽपि तद्विशेषणस्य नपुंसकत्वम्, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते। **छ इति।** ननु युगपत्प्राप्तयोर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुप्संज्ञा, तस्य कथं प्रत्ययेन सह प्रसङ्गः? तस्मादयमत्रार्थः—'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' (व्या० परि० १०) इति, एवमयं लुबण एव भवति, नास्य छस्य। तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते च्छ इति बाधकत्वम्। **परत्वादिति।** यतोऽयं परस्तेन लुबस्य न भवति, तेन तद्विषयेऽप्यसौ श्रूयत इति ॥ ६ ॥

**दृष्टं साम ॥** यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तेन दृष्टमित्युच्यते ॥ ७ ॥

**भावबोधिनी**

तृतीया समर्थ नक्षत्र द्वन्द्व से विशेष और अविशेष दोनों में 'युक्त काल अर्थ में' छ प्रत्यय होता है। उदा०—राधानुराधीया रात्रिः। [राधा च अनुराधाश्च तद्युक्ता रात्रिः। राधा = विशाखा नक्षत्र और अनुराधा नक्षत्र से युक्त रात। राधानुराधा + छ = ईय, भसंज्ञा, आलोप] तिष्यपुनर्वसनीयम् अहः। [तिष्य और पुनर्वसु नक्षत्रों से युक्त दिन। तिष्यपुनर्वसु + छ = ईय, उकार का गुण ओ, अव् आदेश—निष्यपुनर्वसवीयम्। ये रात और दिनरूपी कालविशेष के लिये हैं] अविशेष में—अद्य राधानुराधीयम् [आज का काल राधा = विशाखा और अनुराधा नक्षत्रों से युक्त है।] अद्य तिष्यपुनर्वसवीयम्। [आज का काल तिष्य = पुष्य और पुनर्वसु नक्षत्रों से युक्त है।] परवर्त्ती होने के कारण यह छ प्रत्यय लुप् = लोप का बाध करता है ॥६॥

तृतीयासमर्थ से 'दृष्टं साम' [= देखा गया सामवेद]—इस अर्थ में यथाविहित प्रत्यय होता है; जो देखा गया है वह यदि साम हो तो। उदा०—क्रुञ्च के द्वारा देखा गया साम—इस अर्थ में क्रौञ्चम् [क्रुञ्च + अण् = अ, आदिवृद्धि]। वासिष्ठम् [वसिष्ठ द्वारा देखा गया सामवेद]। वैश्वामित्रम् [विश्वामित्र द्वारा देखा गया सामवेद। विश्वामित्र + अण्, आदिवृद्धि]।

**विमर्श**—भाष्य के अनुसार यह वार्त्तिक है। शब्देन्दुशेखर में नागेश ने भी इसे वार्त्तिक ही स्वीकार किया है। परन्तु काशिकाकार और सिद्धान्तकौमुदीकार ने इसे सूत्र रूप में प्रस्तुत किया है ॥७॥

## १४३६. कलेर्ढक् ॥ ८ ॥ (१२०६)

**कालिशब्दात्तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे ढक् प्रत्ययो भवति। अणोऽपवादः। कलिना दृष्टं साम कालेयम्। * सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः * ॥** (म० भा० ४.२.७ वा० २) **अग्निना दृष्टमाग्नेयम्। एवमग्नौ भवम्, अग्नेरागतम्, अग्नेः स्वम्—इति सर्वत्र ढगेव भवति। आग्नेयम्, तथा कालेयमपि प्रतिपत्तव्यम्।**

*** दृष्टे सामनि अण्वा डिद्भवतीति वक्तव्यम् *** (श्लोक वा० )। **उशनसा दृष्टं साम औशनसम्, औशनम्।**

***जाते चार्थे योऽन्येन बाधितः पुनरण्विधीयते स वा डिद्भवतीति वक्तव्यम्*** (श्लोक वा०)। **'प्राग्दीव्वतोऽण्' प्राप्तः कालठञा बाधितः 'सन्धिवेलाद्यृतुनक्षत्रेभ्यः' इति पुनर्विधीयते, स वा डिद्भवतीति वक्तव्यम्। शतभिषजि जातः शातभिषः, शातभिषजः।**

*** तीयादीकक् स्वार्थे वा वक्तव्यः *** (श्लोक वा०)। **द्वैतीयीकम्, तार्तीयीकम्। द्वितीयकम्, तृतीयकम्।**

*** न विद्यायाः *** (श्लोक वा०)। **द्वितीया, तृतीया विद्या।**

**न्यासः**

**कलेर्ढक् ॥ तीयादिति।** 'द्वेस्तीयः' इति तीयः। 'त्रेः संप्रसारणञ्च' इति तीयं वक्ष्यति, तदन्तात् स्वार्थ ईकग्वक्तव्यः।

**न विद्याया इति।** विद्याया अभिधाने तीयादीकग्न,भवति।

**पदमञ्जरी**

**कलेर्ढक् ॥ सर्वत्रेति।** न केवलमग्नेः 'सास्य देवता' इत्यस्मिन्नेवार्थे ढक्, नापि केवलं दृष्टं सामेत्यत्रै-वार्थे कलेर्ढग्; अपि तु सर्वेष्वेव प्राग्दीव्यतीयेष्वित्यर्थः।

संग्रहश्लोके **जाते च द्विरण् डिद्वा विधीयते** इति पाठः। जातेऽर्थे योऽण विधीयते स वा डिद्भवतीत्यर्थः।

**न विद्याया इति।** विद्यावाचिन ईकग् न भवतीत्यर्थः।

**भावबोधिनी**

तृतीयासमर्थ कलि शब्द से 'उसके द्वारा देखा गया'—इस अर्थ में ठक् प्रत्यय होता है। यह अण् का अपवाद है। उदा—कलिना दृष्टम्—कालेयम् [कलि के द्वारा देखा गया साम।* सभी प्राग्दीव्यतीय अर्थों में अग्नि और कलि शब्दों से ढक् प्रत्यय होता है। उदा०—अग्नि द्वारा देखा गया साम—आग्नेयम् [अग्नि + ढक्, आदिवृद्धि, ढ् का एय्, भसंज्ञा, इलोप—आग्नेयम्] इसी प्रकार अग्नि में होने वाला, अग्नि से आया हुआ, अग्नि का सम्बन्धी—इन सभी अर्थों में ढक् प्रत्यय ही होता है—आग्नेयम्। इसी प्रकार सभी अर्थों में कालेयम्—यह भी समझना चाहिये।* देखा गया साम—इस अर्थ में अण् प्रत्यय विकल्प से डित् होता है।* उशनसा दृष्टम् साम—(१) औशनम् (२) औशनसम्। [उशनस् + अण्, आदिवृद्धि, विकल्प से डित् होने पर टि = अस् का लोप (१) टिलोप न होने पर (२) औशनम्। *और जात = उत्पन्न हुआ—इस अर्थ में जिसका दूसरे के द्वारा बाध हुआ है वह अण् यदि पुनः किया जाता है तो विकल्प से डित् होता है, ऐसा कहना चाहिये।* 'प्राग्दीव्यतोऽण्' से अण् प्राप्त है, काल अर्थ में ठञ् से बाधित हो गया, 'सन्धिवेलाधृतु०' से पुनः किया गया, वह विकल्प से डित् होता है। उदा०—शतभिषज् में होने वाला—(१) शातभिषः, शातभिषजः।

**विमर्श**—भाव यह है कि शतभिषज् नक्षत्र से युक्त काल इस अर्थ में अण् प्रत्यय होता है। उसका लुप् हो जाता है। इसके बाद 'जात = उत्पन्न हुआ, इस अर्थ में 'प्राग्दीव्यतोऽण्' से अण् का विधान किया गया उसका बाध 'कालाट्ठञ्' से होता है, पुनः 'सन्धिवेला' से अण् किया जाता है। यही विकल्प से डित् होता है। जब डित् होता है तब टि का लोप होने से—शातभिषः और डित् न होने पर शातभिषजः—यह बनता है।

*** गोत्रादङ्कवदिष्यते *** (श्लोक वा०) । **दृष्टं सामेत्यस्मिन्नर्थे । औपगवेन दृष्टं साम औपगवकम् । कापटवकम् । 'गोत्रचरणाद् वुञ्'** (४.३.१२६) **भवति ।**

**दृष्टे सामनि जाते च द्विरण्डिद्वा विधीयते ।**
**तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ॥** (म० भा० ४.२.७)

## १४३७. वामदेवाड् ड्यड्ड्यौ ॥ ९ ॥ (१२१०)

**वामदेवशब्दात्तृतीयासमर्थाद् 'दृष्टं साम' इत्येतस्मिन्नर्थे ड्यत्-ड्य—इत्येतौ प्रत्ययौ भवतः । अणोऽपवादः । वामदेवेन दृष्टं साम वामदेव्यं साम । तित्करणं स्वरार्थम् ।**

### न्यासः

**गोत्रादङ्कवदिति ।** यथा तस्याङ्क इत्यत्रार्थे विवक्षिते गोत्रात् प्रत्ययो भवति, 'तेन दृष्टं साम' इत्यत्रार्थे विवक्षिते तथैवेष्यते । **औपगवेन दृष्टं सामेति ।** औपगवशब्दः 'तस्यापत्यम्' इति गोत्रप्रत्ययान्तः । **गोत्रचरणाद् वुञ् भवतीति ।** यथौपगवस्यायमङ्क औपगवक इत्यौपगवशब्दाद् गोत्रप्रत्ययान्तादङ्के वुञ्भवति, तथा 'तेन दृष्टं साम' इत्यत्रापि । ननु च 'गोत्रचरणाद्वुञ्' इत्यत्र नाङ्कार्थ उपात्तः, तत् कथमनेनाङ्कवदित्युच्यमाने वुञ् भवति ? नैष दोषः; तत्राङ्कवदित्यनेन विहितस्येदमर्थो विवक्ष्यते । तेन गोत्रप्रत्ययान्ताद् यथा 'तस्येदम्' इत्यत्रार्थे प्रत्यय इष्यते, तथा तेन दृष्टं सामेत्यत्रापीत्यर्थः ।

**दृष्टे सामनीति** संग्रहः । गतार्थः ॥ ८ ॥

**वामदेवाड् ड्यड्ड्यौ ॥ वामदेव्यम्, वामदेव्यमिति ।** एकस्तित्स्वरेणान्तस्वरितः, द्वितीयः प्रत्ययस्वरेणान्तोदात्तः ।

### पदमञ्जरी

**गोत्रादङ्कवदिति ।** अङ्के यो दृष्टः प्रत्ययः स सर्वोऽतिदिश्यते, न त्वङ्क एवाहृत्य विहितः, तेन 'सङ्घाङ्कलक्षणेषु' इत्यस्याणः 'गोत्रचरणाद् वुञ्' इत्यस्य च वुञोऽतिदेशः ॥ ८ ॥

**वामदेवाड् ड्यड्ड्यौ ॥ डित्करणं किमर्थमिति ।** यस्येति लोपेनैव सिद्धिं मत्वा प्रश्नः । **अनयोर्ग्रहणं मा भूदिति ।** अथ क्रियमाणेऽपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति ? तत्राह—**अननुबन्धकेति ।** 'अननुबन्धकस्य

### भावबोधिनी

[अनु०]* तीय प्रत्ययमात्र से स्वार्थ में ईकक् प्रत्यय विकल्प से होता है ।* उदा—द्वैतीयीकम्, तार्तीयीकम् [द्वितीय + ईकक्, आदिवृद्धि, रपर, भसंज्ञा, अलोप करने पर तार्तीयीकम् । पक्ष में स्वार्थिक 'क' प्रत्यय होने पर] द्वितीयकम्, तृतीयकम् ।* विद्यावाचक तीयप्रत्ययान्त से ईकक् प्रत्यय नहीं होता है ।* उदा०—द्वितीया, तृतीया विद्या [दूसरी विद्या, तीसरी विद्या ।]* गोम प्रत्ययान्त से अङ्क अर्थ के समान प्रत्यय होता है ।* देखा गया साम—इस अर्थ में यह होता है । उदा०—औपगव द्वारा देखा गया साम'—औपगवकम् । [उपगु का गोमापत्य इस अर्थ में अण् प्रत्यय करके औपगव बनता है । औपगवेन दृष्टं साम—इस अर्थ में 'गोमचरणाद् वुञ्' से वुञ्, वु = अक प्रत्यय होता है ।] कापटवकम् [कपटु से अण् करके कापटव बनाकर तेन दृष्टं साम्—इस अर्थ में वुञ् होने पर उक्त रूप सिद्ध होता है ।]

[भाष्योक्त वार्त्तिकों को उद्धृत करते हैं–] (१) उसके द्वारा देखा गया इस अर्थ में और (२) वहाँ उत्पन्न हुआ इस अर्थ में विहित अण् प्रत्यय विकल्प से डित् होता है । (३) तीय प्रत्ययान्त से ईकक् प्रत्यय स्वार्थ में होता है । (४) किन्तु विद्यावाचक तीयप्रत्ययान्त से नहीं होता है । अङ्क अर्थ में जो देखा गया है वह गोमप्रत्ययान्त से अतिदिष्ट होता है ।

**विमर्श—** परम्परया सम्बन्ध को अङ्क कहा जाता है । 'संघाङ्कलक्षणेषु' ४।३।१२७ से जैसे अण् या अन्य प्रत्यय होता है वह 'उसके द्वारा देखा गया साम' इस अर्थ में गोमप्रत्ययान्त से भी होता है ॥८॥

तृतीया समर्थ वामदेव शब्द से 'उसके द्वारा देखा गया साम'—इस अर्थ में ड्यत् और ड्य ये दो प्रत्यय होते हैं। यह अण् का अपवाद है । उदा०—वामदेव के द्वारा देखा गया साम'—वामदेव्यम् [वामदेव + ड्यत्, ड्य = य, डित् होने से टि का लोप] तित् करना स्वर के लिये है । [इससे स्वरित स्वर होता है ।]

**ङित्करणं किमर्थम् ? 'यतोश्चातदर्थे'** (६.२.१५६) **इति नञ उत्तरस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूत् । अननुबन्धकग्रहणपरिभाषया एकानुबन्धकग्रहणपरिभाषया चानयोर्निवृत्तिः क्रियते** (म० भा०) । **अवामदेव्यम् ।**

**सिद्धे यस्येति लोपेन किमर्थं ययतौ ङितौ ।**
**ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥** (म० भा० ४.२.९)

## १४३८. परिवृतो रथः ॥ १० ॥ (१२११)

**तेनेति तृतीयासमर्थात् 'परिवृतः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ परिवृतो रथश्चेत्स भवति । वस्त्रेण परिवृतो रथः वास्त्रो रथः । काम्बलः । चार्मणः ।**

### न्यासः

**ङित्करणं किमर्थमिति ।** 'यस्येति च' इत्येवं लोपस्य सिद्धत्वाड् ङित्करणस्यानर्थक्यं मन्यते—ञ्यड्ञ्यावित्यादि । न वामदेव्यमवामदेव्यमिति—अत्र नञो गुणप्रतिषेधे 'सम्पाद्यर्हहितालमर्थास्तद्धिताः' इत्यतो नञ् इत्यनुवर्त्तमाने 'ययतोश्चातदर्थे' इत्युत्तरपदस्यान्तोदात्तत्वे विधीयमानेऽनयोर्ग्रहणं मा भूदित्येवमर्थं ङित्करणम् । असति च तत्रानयोर्ग्रहणे नञ एव स्वरो भवति, स पुनरुदात्त; 'निपाता आद्युदात्ता भवन्ति' इति वचनात् । अथ क्रियमाणे ङित्करणे कस्मादनयोर्ग्रहणं न भवति ? इत्याह—'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया ञ्यड्ञ्ययोरपि निवृत्तिः क्रियते । यद्ग्रहणेऽपि 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया यतः । अनयोश्च परिभाषयोरस्तित्व एतदेव ङित्करणं लिङ्गम् ।

**संग्रहश्लोके अतदर्थ** इत्यनेन 'ययतोश्चातदर्थे' इत्येतत् सूत्रं लभ्यते । एतस्मिन् सूत्रे इत्यर्थः । **नञ्स्वर इति ।** नञो यः स्वरः स नञ्स्वरः । शेषो गतार्थः ॥ ९ ॥

**परिवृतो रथः ॥ चार्मण इति ।** 'अन्' इति प्रकृतिभावे टिलोपो न भवति । 'न संयोगाद् वमन्तात्' इत्यल्लोपो न भवति ।

### पदमञ्जरी

ग्रहणे न सानुबन्धकस्य' (शा० परि० ४८) इति यग्रहणे ञ्यञ्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया (व्या० परि० ५२) तु यद् ग्रहणे ञ्यतो ग्रहणाभावः । **अवामदेव्यमिति ।** अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति ।

संग्रहश्लोके **अतदर्थे** इत्यनेन 'ययतोश्चातदर्थे' इत्येतत्सूत्रं लक्ष्यते । **नञ्स्वर इति ।** नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं तस्मिन्विधीयमाने इत्यर्थः ॥ ९ ॥

**परिवृतो रथः ॥ चार्मण इति ।** 'अन्' इति प्रकृतिभावः । **परिवृतो रथ इति ।** तदेकान्तग्रहणम्, येन

### भावबोधिनी

'ङित् करने का प्रयोजन क्या है ? [क्योंकि केवल य प्रत्यय करने पर भी 'यस्येति च' से अ का लोप हो जाता है ?] 'ययतोश्चातदर्थे' इससे नञ् से उत्तर का अन्तोदात्तत्व करने पर इन ञ्य और ञ्यत् प्रत्ययों का ग्रहण न हो । 'अनुबन्धहीन के ग्रहण के प्रसंग में अनुबंधविशिष्ट का ग्रहण नहीं होता है' इससे और 'एक अनुबन्ध वाले के ग्रहण के प्रसंग में दो अनुबन्धों वालों का ग्रहण नहीं होता है, इस परिभाषा से इन दोनों ञ्य और ञ्यत् को निवृत्ति कर दो जाती है । उदा०—अवामदेव्यम् [यहाँ अव्ययपूर्व पद मानकर प्रकृतिस्वर से आद्युदात्त ही होता है ।]

[भाष्योक्त श्लोक-वार्तिक प्रस्तुत करते है—]

'यस्येति च' इसी से लोप के सिद्ध रहने पर य और यत् में ङित् किसलिये है ? 'ययतोश्चातदर्थे' इससे—अवामदेव्य—के नञ् स्वर में ग्रहण न हो । [इसके लिये य और यत् को ङित् अर्थात् ञ्य और ञ्यत् किया है ।] ॥९॥

'तेन'—इस तृतीया समर्थ से 'परिवृतः' [ढका हुआ] इस अर्थ में यथाविहित प्रत्यय होता है यदि वह ढका हुआ रथ हो तो । उदा—वस्त्र से ढका हुआ रथ—वास्त्रः रथः [वस्त्र + अण्, आदि वृद्धि] । काम्बलः [कम्बल से ढका

**रथ इति किम् ? वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । यस्य न कश्चिदवयवो वस्त्रादिभिर्वेष्टितः तत्र न भवति । तेनेह न—छात्त्रैः परिवृतो रथः** (म० भा०) ॥

## १४३९. पाण्डुकम्बलादिनिः ॥ ११ ॥ (१२१२)

**पाण्डुकम्बलशब्दात्तृतीयासमर्थात् 'परिवृतो रथः' इत्येतस्मिन्नर्थे इनिः प्रत्ययो भवति । अणोऽपवादः । पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः** (म० भा०) । **पाण्डुकम्बलशब्दो राजास्तरणस्य वर्णकम्बलस्य वाचकः ।**

**मत्वर्थीयेनैव सिद्धे वचनमणो निवृत्त्यर्थम् ॥**

### न्यासः

अथेह कस्मान्न भवति—छात्त्रैः परिवृतो रथ इति ? अत्राह—**समन्ताद् वेष्टित इत्यादि ।** वृणोतिरयं वेष्टने वर्त्तते, तस्य परिणा सर्वतो भावो द्योत्यते । तस्माद् यः सर्वतो वेष्ट्यते तत्रैव प्रत्ययेन भवितव्यम्, न तु छात्त्रै रथः सर्वतो वेष्टितः, ततो न तत्र प्रत्ययस्य प्रसङ्गः । यस्तु छात्त्रैः परिवृतो रथ इति प्रयोगः, स परिवृतस्याध्यारोपेणौपचारिकः । न च मुख्ये सति परिवृतत्वे गौणस्याध्यारोपितस्य ग्रहणं युक्तम् ॥ १० ॥

**पाण्डुकम्बलादिनिः ॥ पाण्डुकम्बलीति ।** 'सौ च' इति दीर्घः ।

**मत्वर्थीयेनैव सिद्ध इति ।** यद्धि येन समन्ताद् वेष्टितं तत् तस्यास्ति । तस्माद् 'अत इनिठनौ' इति मत्वर्थीयेनेनिना सिद्धे यत् तद्वचनं तदणो निवृत्त्यर्थम् । यदि लभ्येत, तन्नारभ्येत । यदि ह्येतद्वचनं न स्यात्, तदा 'परिवृतो रथः' इत्यण्प्रसज्येत, ततश्च पाण्डुकम्बल इति स्यात्, पाण्डुकम्बलीति चेष्यते । तस्मादण्निवृत्त्यर्थमुच्यते ॥ ११ ॥

### पदमञ्जरी

परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यम् । तेन चर्मवस्त्रादावेव भवति, इतरथा छात्त्रादावपि प्रसङ्ग इत्याह—**समन्ताद्वेष्टित इत्यादि ।** वृणोतिर्वेष्टने परिः सर्वतो भावे । **यस्य न कश्चिदवयव इति ।** बाहुल्याभिप्रायमेतत्, न हि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः । ननु तत्कारी चायं यदाह—**छात्रैः परिवृत इति ।** तद्द्वेषी च, यदाह—**समन्ताद् वेष्टित इत्यादि ।** नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृतः इव परिवृतः ॥ १० ॥

**पाण्डुकम्बलादिनिः ॥ मत्वर्थीयेनैव सिद्ध इति ।** यो हि येन परिवृतः स तस्यास्ति । **अणो निवृत्त्यर्थमिति ।** यद्येतन्नारभ्येत, परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत ॥ ११ ॥

### भावबोधिनी

हुआ रथ] चार्मणः [चमड़े से ढका हुआ रथ] । रथ—यह किसलिये है ? वस्त्र से ढका हुआ काय = शरीर । सभी ओर से ढका हुआ परिवृत कहा जाता है । जिसका कोई भी अवयव वस्त्रादि से वेष्टित नहीं होता है, उसमें नहीं होता है । इसलिये यहाँ नहीं होता है—छात्रों द्वारा परिवृत्त = सभी ओर से घिरा हुआ रथ ॥ १० ॥

तृतीयासमर्थ पाण्डुकम्बल शब्द से 'परिवृत रथ' [सभी ओर से ढका हुआ रथ] इस अर्थ में 'इनि' प्रत्यय होता है । यह अण् का अपवाद है । उदा—पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः [पाण्डुकम्बलेन परिवृतः रथः—श्वेतकम्बल से ढका हुआ रथ । पाण्डुकम्बल + इनि = इन्, भसंज्ञा, अलोप पाण्डुकम्बलिन् । प्रथमा के तीनों वचनों के रूप दिये गये हैं ।] पाण्डुकम्बलशब्द राजा कि विछावन में प्रयुक्त होने वाले श्वेत कम्बल का वाचक है । मत्वर्थीय [इनि प्रत्यय] से ही [धनी आदि के समान पाण्डुकम्बली रूप] सिद्ध हो सकता था, यह वचन अण् की निवृत्ति के लिये है ॥ ११ ॥

## १४४०. द्वैपवैयाघ्रादञ् ॥ १२ ॥ (१२१३)

**द्वीपिव्याघ्रयोर्विकारभूते चर्मणी द्वैपवैयाघ्रे, ताभ्यां तृतीयासमर्थाभ्याम् 'परिवृतो रथः' इत्येतस्मिन्नर्थेऽञ् प्रत्ययो भवति। अणोऽपवादः। स्वरे विशेषः। द्वैपेन परिवृतो रथो द्वैपः। वैयाघ्रः॥**

## १४४१. कौमारापूर्ववचने ॥ १३ ॥ (१२१४)

**'कौमार' इत्येतदण्प्रत्ययान्तं निपात्यतेऽपूर्ववचने। पाणिग्रहणस्यापूर्ववचनम्। उभयतः स्त्रियाम् अपूर्वत्वे (म० भा०) निपातनमेतत्। अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारः पतिः। कुमारीशब्दाद् द्वितीया**

### न्यास

**द्वैपवैयाघ्रादञ्॥ द्वीपिव्याघ्रयोर्विकार इत्यादि।** द्वीपिनो विकारश्चर्म, व्याघ्रस्य विकारश्चर्म—इत्यर्थविवक्षायाम् 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययान्तत्वात् द्वैपवैयाघ्रशब्दयोः, ताभ्यामिह द्वीपिव्याघ्रविकारत्वाच् चर्मणी अभिधीयेते। चर्मणैव द्वीपिव्याघ्रविकारेण रथस्य परिवृतत्वं सम्भवति, न विकारमात्रेणेति चर्मणी इह द्वैपवैयाघ्रशब्दाभ्यां विवक्षिते इति गम्यते॥ १२॥

**कौमारापूर्ववचने॥ अपूर्ववचन इति।** अपूर्वस्य वचन इति, अपूर्वाभिधान इत्यर्थः। कस्यापूर्ववचनमित्याह—**पाणिग्रहणस्येत्यादि।** एतच्च सामान्योक्तावपि निपातनसामर्थ्याल्लभ्यते। यथैव हि निपातनसामर्थ्यादन्यदपि किञ्चिदलाक्षणिकं कार्यं लभ्यते, तथेदमपि। **उभयतः स्त्रियामित्यादि।** यदि कौमार इति पुमानभिधीयते, एवमप्यस्यापूर्वत्वं यदा स्त्रिया एव विशेषणं भवति। अथापि कौमारीति स्त्र्यभिधीयते, एव-

### पदमञ्जरी

**द्वैपवैयाघ्रादञ्॥ द्वीपिव्याघ्रयोरिति।** 'विरूपाणामपि समानार्थानाम्'[1] (१. २. ३४ वा० २३)। एकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वान्न भविष्यतीति समाधातव्यम्। चर्मणैव रथस्य परिवरणं सम्भवति, न विकारमात्रेणेति 'चर्मणी' इत्युक्तम्। द्वीपिव्याघ्रशब्दाभ्याम् 'प्राणिरजतादिभ्योऽञ्' इत्यञ्प्रत्ययः, द्वीपिनष्टिलोपः॥ १२॥

**कौमारापूर्ववचने॥ अपूर्ववचन इति।** अपूर्वशब्दो भावप्रधानः। अपूर्वत्वस्य वचनमपूर्ववचनम्, तस्मिन्नपूर्ववचने। कस्य पुनरपूर्वत्वोक्तावित्याह—**पाणिग्रहणस्येति।** एतच्च निपातनसामर्थ्याल्लभ्यते। **उभयतः।** आद्यादित्वात्तसिः। स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव, न पुंस इत्यर्थः। तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते—उभयोरपि निपातनमिति। स्त्रिया एवापूर्वत्व-

### भावबोधिनी

द्वीपी = चीते और बाघ के विकारभूत चर्म द्वैप और वैयाघ्र हैं, इन तृतीयासमर्थ [द्वैप और वैयाघ्र] शब्दों से 'परिवृत्त रथ' [ढका हुआ रथ]—इस अर्थ में अञ् प्रत्यय होता है। यह अण् का अपवाद है। [अण् और अञ् दोनों में केवल 'अ' शेष बचता है अतः] स्वर में अन्तर है। [अञ् होने पर 'ञ्नित्यादिर्नित्यम्' से आद्युदात्त होता है।] उदा०—द्वैप = चीते के चमड़े से ढका हुआ रथ—द्वैपः। व्याघ्र के चमड़े से ढका हुआ रथ—वैयाघ्रः॥ १२॥

अपूर्ववचन अर्थ में कौमार यह अण् प्रत्ययान्त निपातित होता है। पाणिग्रहण का अपूर्ववचन = अपूर्वत्ववचन [पाणिग्रहण का पहले होने का कथन न होना] स्त्रीलिङ्ग और पुंलिङ्ग दोनों में स्त्रीलिङ्ग में अपूर्व होने में यह निपातन है। [कौमारी यह यदि स्त्रीलिङ्ग प्रयोग है अथवा कौमारः यह पुंल्लिङ्ग प्रयोग होता है, दोनों में ही स्त्री का पाणिग्रहण पहले न होना कहा जाने पर यह प्रयोग होता है।] पुंल्लिग—उदा० (१)—अपूर्वपतिं कुमारीम् उपपन्नः पतिः कौमारः पतिः—जिसका पहले पति नहीं था ऐसी कुमारी को प्राप्त हुआ पति—कौमारः पतिः। द्वितीयासमर्थ कुमारी शब्द से उपयन्ता = विवाह करने वाला इस अर्थ में अण् प्रत्यय होता है। [कुमारी + अण्, आदिवृद्धि, भसंज्ञा, ईलोप]। स्त्रीलिङ्ग

---

१. वार्तिकोऽयम्—'एकार्थानामपि विरूपाणाम्' इति।

**समर्थादुपयन्तरि प्रत्ययः। अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारो भार्या (म० भा०)। प्रथमान्तादेव स्वार्थे प्रत्ययोऽपूर्वत्वे द्योत्ये।**

**कौमारापूर्ववचने कुमार्या अण्विधीयते।**
**अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा॥** (म० भा० ४.२.१३)
**कुमार्यां भवः कौमारः पतिः, तस्य स्त्री कौमारी भार्येति सिद्धम्॥**

**न्यासः**

मप्यपूर्वत्वं यदा स्त्रिया एव विशेषणं भवति, न पुंसः, एवमेतन्निपात्यते; नान्यथेत्यर्थः। **अपूर्वपतिमिति।** नास्याः पूर्वः पतिरिति बहुव्रीहिः। पत्या सह यस्याः पाणिग्रहणं निवृत्तं साऽपूर्वपतिः। तां पतिरुपपन्नः प्राप्तवानित्यर्थः। **अपूर्वपतिरिति।** अयमपि बहुव्रीहिः।

**कौमारापूर्ववचन इत्यादि।** कौमार इत्येतन्निपात्यते, अपूर्ववचने। किं पुनरिह निपात्यत इत्याह—**कुमार्या अण् विधीयत इति।** कुमारीशब्दादण् निपात्यत इत्यर्थः। कदेत्याह—**अपूर्वत्वं यदा तस्या इति।** इह हि निपातनेन पुमानभिधीयते, स्त्री वा, तत्र द्वयोरपि पक्षयोरपूर्वत्वम्। यदा तस्याः स्त्रिया विशेषणं भवति, न पुंसः, तदेतन्निपातनम्, नान्यथेत्यर्थः। **कुमार्यां भवतीति वेति।** अनेन योगः प्रत्याख्यायते। यो हि कुमारीं प्राप्तवानसौ तत्र भवति। ततश्च 'तत्र भवः' इति शैषिके भवार्थेऽणन्तं कौमारशब्दं व्युत्पद्येत, ततः पुंयोगलक्षणे ङीषि सति हि कुमारीत्येतत् सिद्धम्। स्वरकृतो विशेषो नास्त्येव। तथा हि अणन्तान् ङीष्यपि कृते 'यस्येति च' इति लोपे च 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तेन ङीपा भवितव्यम्। ङीष् प्रत्ययस्वरेणाद्युदात्त एव। ननु चैवं सति कौमारस्य याऽन्यापि स्त्री कौमारव्यपदेशस्य कारणं सापि कौमारीति प्रसज्यते? नैष दोषः; प्रत्यासत्तेर्हि या तस्य प्रत्यासन्ना सैव तस्य कौमारीति भविष्यति। का पुनस्तस्य प्रत्यासन्ना? या कौमारे

**पदमञ्जरी**

मित्येतत्तु निपातनबलाल्लभ्यते। **अपूर्वपतिमिति।** यस्याः पाणिर्न केनचिद्गृहीतपूर्वः साऽपूर्वपतिः, न विद्यते पूर्वः पतिरिति कृत्वा, तामुपपन्नः = प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः। स तु पूर्वकृतोद्वाहो भवतु मा वा भूत्। **अपूर्वपतिरिति।** अयमपि बहुव्रीहिः, अत्रापि पुरुषः पूर्ववत्।

**कौमारेत्यादि।** कौमारेति निपात्यतेऽपूर्ववचने। किमत्र निपात्यते? कुमार्या अण् विधीयते। कदा? अपूर्वत्वं यदा तस्याः। यदा कुमार्या अपूर्वत्वं न पुंसस्तदेत्यर्थः **कुमार्यां भवतीति वेति।** अनेन योगः प्रत्याख्यायते; यः कुमारीमुपपन्नस्तस्यामसौ भवति, तदायत्तत्वाद्धर्माचरणादेः, ततश्च 'तत्र भवः' इत्येवाण सिद्धः। यद्यपि वाण्याद्यपि कुमार्या भवति तथापि सत्यभिधाने 'तत्र भवः' इति भवत्येव। सूत्रारम्भेऽपि हि नासौ दण्डवारितः,

**भावबोधिनी**

उदा० (२)—अपूर्वपतिः कुमारी पतिम् उपपन्ना—कौमारी भार्या। जिसका पहले पति नहीं था ऐसी कुमारी पति को प्राप्त हुयी। यहाँ प्रथमान्त कुमारी शब्द से अपूर्वत्व द्योत्य रहने पर स्वार्थ में प्रत्यय होता है। [कुमारी + अण्, आदिवृद्धि, भसंज्ञा, ईलोप कौमार + ङीप् = ई—कौमारी।

अपूर्वत्व का कथन रहने पर कुमारी शब्द से अण् प्रत्यय करके कौमार यह निपातन से सिद्ध होता है। [यह कब निपातित होता है?] जब कुमारी का अपूर्ववत्व हो। [अब इस सूत्र के प्रत्याख्यान का प्रतिपादन कर रहे हैं] अथवा—कुमारी में होने वाला—[इसी में 'तत्र भवः' से अण् करके—कौमार और कौमारी शब्द बन जाते हैं, यह निपातन अनावश्यक है।] कुमारी में होने वाला पति—कौमारः पतिः। उस कौमार की स्त्री—इस अर्थ में [पुंयोगादाख्यायाम्' से ङीष् करने पर] कौमारी भार्या—यह सिद्ध होता है।

**विमर्श**—'कौमारापूर्ववचने' इस सूत्र में लुप्त प्रथमान्त अविभक्तिक—कौमार का निर्देश है। अतः यह पृथक् पद है, समास नहीं है। कौमार—यह निपातित होता है। अपूर्व—शब्द अपूर्वत्व—अर्थ में है। पूर्व में होने का कथन न होने पर = अपूर्ववचने। कुमारी शब्द को द्वितीयान्त और प्रथमान्त समर्थ मानकर अण् प्रत्यय होता है। जब द्वितीयान्त—

### १४४२. तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥ (१२१५)

तत्रेति सप्तमीसमर्थादमत्रवाचिनः शब्दात् 'उद्धृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। भुक्तोच्छिष्टमुद्धृतमुच्यते, यस्योद्धरणमिति प्रसिद्धिः। अमत्रम् = भाजनं पात्रमुच्यते। शरावेषूद्धृतः शाराव ओदनः। माल्लिकः। कार्परः।

अमत्रेभ्यः इति किम्। पाणावुद्धृत ओदनः। 'तत्र' इति सप्तमी समर्थविभक्तिः 'क्षीराड्ढञ्' (४.२.२०) इति यावदनुवर्त्तते॥

### १४४३. स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥ (१२१६)

स्थण्डिलशब्दात्सप्तमीसमर्थात् शयितर्यभिधेये यथाविहितं प्रत्ययो भवति, समुदायेन चेद् व्रतं गम्यते। व्रतमिति शास्त्रितो नियम उच्यते। स्थण्डिले शयितुं व्रतमस्य स्थाण्डिलो भिक्षुः। स्थाण्डिलो ब्रह्मचारी।

**न्यासः**

व्यपदेशस्य हेतुः। यस्यामसौ भवन् कौमार इत्युच्यते सैव, नान्या। यद्यपि व्यासादयोऽपि कुमार्यां भवन्ति तथापि तेष्वण् न भविष्यति; अनभिधानात्। एतच्चावश्यमनभिधानमाश्रयणीयमिति; इतरथा हि क्रियमाणेऽपि निपातने 'तत्र भवः' इत्यनेनाण् स्यादेव ॥ १३ ॥

**तत्रोद्धृतममत्रेभ्यः ॥ स्थण्डिलाच्छयितरि व्रते ॥ समुदायेन चेत्यादिना** प्रकृतिप्रत्ययोपाधित्वं व्रतस्य दर्शयति। **शास्त्रितः**—शब्दः 'वाचि यमो व्रते' (३.२.४०) इत्यत्र व्युत्पादितः ॥ १४-१५ ॥

**पदमञ्जरी**

एवं तावत्कौमार इति सिद्धम्। स्त्रियामपि सिद्धम्, कथम्? कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसौ भवन् कौमारव्यपदेशं लभते सैवाभिधीयते न स्त्र्यन्तरम्, एतच्च सूत्रारम्भेऽप्यङ्गीकर्तव्यम् ॥ १३ ॥

**तत्रोद्धृतममत्रेभ्यः ॥** अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्तते, तेन सप्तमीसमर्थाद् विभक्तिर्नोपपद्यते। **भुक्तोच्छिष्टमिति।** शिष्टमेवोच्छिष्टम्, यथा उच्छिनष्टि न सर्वं जुहोतीति भुक्तशिष्टमित्यर्थः। **यस्योद्धरणमिति। प्रसिद्धिरिति।** 'कृत्यल्युटो बहुलम्' इति भूते कर्मणि ल्युट्। **शरावेषूद्धृत इति।** उद्धृत्य निहित इत्यर्थः ॥ १४ ॥

**स्थण्डिलाच्छयितरि व्रते। शास्त्रित इति।** संजातशास्त्र इत्यर्थः। यद्वा—तृतीयासमर्थाद्विधानेऽर्थे

**भावबोधिनी**

कुमारीम् से अण् होता है तब पुरुष का वाचक—कौमार बनता है। जब प्रथमान्त कुमारी से अण् होता है तब स्वार्थ में अण् होकर कौमारी बनता है।

वास्तव में कुमार्यां भवः—कौमारः पतिः इसकी सिद्धि 'तत्र भवः' इस शैषिक अण् प्रत्यय से ही सम्भव है। अतः इस अण् प्रत्ययान्त का निपातन आवश्यक है। इस प्रकार इस सूत्र का खण्डन होता हैं ॥ १३ ॥

तत्र—इस सप्तमीसमर्थ अमत्र = पात्रवाची शब्द से 'उद्धृतम्' इस अर्थ में यथाविहित प्रत्यय होता है। युक्तोच्छिष्ट = खाने से बचा हुआ—उद्धृत कहा जाता है; जिसकी 'निकाल कर रखना'—यह प्रसिद्धि है। [भाव यह है कि भोजन से पूर्व जिसे निकाल कर रखा जाता है उसे 'उद्धृत' कहा जाता है। अमत्र = भाजन, पात्र को कहते हैं। उदा०—शरावेषु उद्धृतः—शारावः। [शराव = मिट्टी के पात्र सिकोरा, पुरवा आदि में खाने के बाद बचा हुआ अन्न]। माल्लिकः [मल्लिका के पुष्प के समान रंग वाले पात्र में रखा हुआ अन्न]। कार्परः [खप्पर में रखा हुआ अन्न]। अमत्र = पात्रवाची से—इसका क्या फल है? पाणि में निकाल कर रखा गया ओदन। [यहाँ पाणि पात्रवाची नहीं है। अतः प्रत्यय नहीं होता है।] 'तत्र' [उसमें = आधारवाची में] यह सप्तमी समर्थ विभक्ति 'क्षीराड्ढञ्' तक चलती है ॥ १४ ॥

सप्तमीसमर्थ स्थण्डिल शब्द से शयनकर्ता अर्थ वाच्य रहने पर यथाविहित प्रत्यय होते हैं, यदि समुदाय द्वारा [निष्पन्न शब्द द्वारा] 'व्रत' का कथन हो रहा हो तो शास्त्र द्वारा विहित नियम को 'व्रत' कहते हैं। उदा०—स्थण्डिल = मिट्टी के चबूतरे आदि पर शयन करने का व्रत है जिसका वह—स्थाण्डिलः भिक्षुः, स्थाण्डिलः ब्रह्मचारी। [स्थाण्डिल =

**व्रत इति किम् ? स्थण्डिले शेते ब्रह्मदत्तः ॥**

**१४४४. संस्कृतं भक्षाः ॥ १६ ॥ (१२१७)**

**तत्रेति सप्तमीसमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्संस्कृतं भक्षाश्चेत्ते भवन्ति। खरविशदमभ्यवहारार्थं 'भक्षम्' इत्युच्यते। सत उत्कर्षाधानम्=संस्कारः। भ्राष्ट्रे संस्कृता भक्षा भ्राष्ट्रा अपूपाः। कालशाः। कौम्भाः।**

**भक्षा इति किम् ? पुष्पपुटे संस्कृतो मालागुणः ॥**

**१४४५. शूलोखाद्यत् ॥ १७ ॥ (१२१८)**

**शूलशब्दादुखाशब्दाच्च सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। अणोऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उख्यम् ॥**

**न्यासः**

**संस्कृतं भक्षाः ॥ संस्कृतमिति।** अत्र सामान्यशब्दत्वात् संस्कृतशब्दस्य नपुंसकलिङ्गत्वम्। एकवचनत्वञ्च। **भक्षा इति।** विशेषशब्दत्वाद् भक्षशब्दस्य पुंलिङ्गत्वम्। बहुवचनत्वञ्च। भक्षशब्दोऽयं घञन्त उपात्तः। स च खरविशदाभ्यवहार्य एव रूढ इत्याह—**खरविशद इत्यादि।** सुबोधम् ॥ १६ ॥

**शूलोखाद् यत्** ॥ १७ ॥

**पदमञ्जरी**

'प्रातिपदिकाद्धात्वर्थे' (ग० सू० १८६ धा० पा० १९१५) इति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः **स्थण्डिले शयितुं व्रतमस्येति।** तुमुनत्र वक्तव्यः; व्रतस्याक्रियारूपत्वात् ॥ १५ ॥

**संस्कृतं भक्षाः ॥ संस्कृतमित्येतत्** कर्मसामान्यं व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनं च, **भक्षा** इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुल्लिङ्गं बहुवचनं च। तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात्संस्कृतमित्येतद्भवति, अत एव विरम्य सम्बन्धं दर्शयति—**यत्तत्संस्कृतम्भक्षास्ते चेद् भवन्तीति,** अणौ यत्कर्मणौ चेत् स कर्तेतिवत्, तच्छब्दस्य प्रतिनिर्दिश्यमानलिङ्गता। **खरविशदमिति।** खरम् = कठिनम्, विशदम् = विभक्तम्। **भक्षशब्देनोच्यत[1] इति।** यद्यप्यब्भक्षो वायुभक्ष इति भक्षयतेरन्यत्रापि प्रयोगः, भक्षशब्दस्तु तत्रैव प्रसिद्ध इति भावः ॥ १६ ॥

**शूलोखाद्यत् ॥ शूलोखादिति।** समाहारद्वन्द्वः, उखा = पात्रविशेषः। यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह

**भावबोधिनी**

अण् आदिवृद्धि, भसंज्ञा, अलोप]। 'व्रत' अर्थ प्रतीत होने पर—इसका क्या फल है ? स्थण्डिल में देवदत्त सोता है। [यह सामान्य कथन है। नियमपूर्वक शयन करना नहीं है। अतः प्रत्यय नहीं होता है ॥ १५ ॥

तत्र—इस सप्तमीसमर्थ प्रातिपदिक से 'संस्कृत' [संस्कार किया गया] इस अर्थ में, यथाविहित प्रत्यय होते हैं, जो संस्कृत हैं वे यदि भक्ष = खाने योग्य पदार्थ हों तो। खर = कड़ी, विशद = अलग-अलग टुकड़ों में बंटी हुयी भोजन सामग्री को 'भक्ष' ऐसा कहा जाता है। उदा०—भाड़ में संस्कृत भक्ष = भक्षणीय अपूप = पुआ—भ्राष्ट्राः। कलश में संस्कृत भक्ष—कालसाः। कुम्भ में संस्कृत भक्ष—कौम्भाः [सभी में अण् प्रत्यय आदि वृद्धि, भसंज्ञा, अलोप]। भक्ष = भक्षणीय—यह किसलिये है ? पुष्पपुट [फूलों के गुच्छे में] संस्कृत मालागुण [माला का सूत्र] यहाँ माला का सूत्र भक्ष नहीं है। अतः प्रत्यय नहीं होता है।] ॥ १६ ॥

सप्तमीसमर्थ शूल शब्द और उखा शब्द से 'संस्कृत भक्ष = भक्षणीय' इस अर्थ में 'यत्' प्रत्यय होता है। यह अण् का अपवाद है। उदा०—शूल में संस्कृत = संस्कार किया गया—शूल्यम् मांसम्। उखायां संस्कृतम्—उख्यम् [उखा = बटलोई आदि पात्रविशेष में संस्कार किया गया मांस। [उखा + त् = य, भसंज्ञा, अलोप] ॥ १७ ॥

1. 'भक्षम् इत्युच्यते'—इति काशिका।

**१४४६. दध्नष्ठक् ॥ १८ ॥ (१२१९)**

**दधिशब्दात् सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दधनि संस्कृतं दाधिकम् ।**

**ननु च संस्कृतार्थे प्राग्वहतेष्ठकं (४.४.१) वक्ष्यति, तेनैव सिद्धम् ? न सिद्ध्यति; दध्ना हि तत्संस्कृतं यस्य दधिकृतमेवोत्कर्षाधानम्, इह तु दधि केवलमाधारभूतं द्रव्यान्तरेण लवणादिना संस्कारः क्रियते ॥**

**१४४७. उदश्वितोऽन्यतरस्याम् ॥ १९ ॥ १२२०)**

**उदश्विच्छब्दात्सप्तमीसमर्थात् 'संस्कृतं भक्षाः' इत्येतस्मिन्नर्थेऽन्यतरस्यां ठक् प्रत्ययो भवति । पक्षे यथाप्राप्तमण् भवति । औदश्वित्कम् । औदश्वितम् ॥**

**न्यासः**

**दध्नष्ठक् ॥ ठकं वक्ष्यति** 'संस्कृतम्' इत्यनेन । **तेनैव सिद्धमिति ।** यद् दध्नि संस्कृतं तद् दध्ना हि संस्कृतं भवतीत्यभिप्रायः । **इह दध्यधिकरणमाधारभूतमिति ।** यथा शूले संस्क्रियमाणस्य मांसस्य शूलम् । न हि शूलेन मांसस्य कश्चित् संस्कारः क्रियते, अपि तु लवणादिना । आधारभावमात्रं तु मांसस्य शूलं प्रतिपद्यते । यदि तर्हि दधि केवलमाधारभूतम्, केन तत्र तर्हि संस्कारः क्रियते ? इत्याह—**द्रव्यान्तरेणेत्यादि** ॥ १८ ॥

**उदश्वितोऽन्यतरस्याम् ॥ औदश्वित्कमिति ।** 'इसुसुक्तान्तात् कः' ॥ १९ ॥

**पदमञ्जरी**

ग्रहणं न भवति; स्वाङ्गे संस्कर्तव्यस्याभावात् । **कथमुख्योऽग्निरिति ।**[1] न ह्यसौ भक्षः, भवार्थे दिगादित्वाद् द्रष्टव्यः ॥ १७ ॥

**दध्नष्ठक् ॥ इह तु दधि केवलमाधारभूतमिति ।** यथा शूले संस्क्रियमाणस्य मांसस्य शूलम् । यद्यप्यत्र दध्यपि संस्कारकम्, तथापि न तद्विवक्षितम्, किन्तु तदाधारस्य द्रव्यान्तरेण यः संस्कारः स एव विवक्षित इति भावः ॥ १८ ॥

**उदश्वितोऽन्यतरस्याम् ॥ औदश्वित्क इति ।** 'इसुसुक्तान्तात्कः' ॥ १९ ॥

**भावबोधिनी**

सप्तमीसमर्थ 'दधि' शब्द से 'संस्कृत भक्ष = भक्षणीय' इस अर्थ में ठक् प्रत्यय होता है । उदा०—दधनि संस्कृतम्—दाधिकम् [दधि + ठक्, ठ = इक, आदिवृद्धि । दही में संस्कृत बनाया गया रायता आदि ।

संस्कृत = संस्कार किया गया—इस अर्थ में 'प्राग्वहतेष्ठक्' सूत्र से ठक् कहा जायगा, उसी से सिद्ध हो जाता [यह सूत्र किसलिये है ?] नहीं सिद्ध होता है; क्योंकि दही के द्वारा वह संस्कृत होता है । जिसका दधि के कारण ही उत्कर्ष होता है । इस सूत्र में तो आधारभूत केवल दही का अन्य द्रव्य लवण आदि के द्वारा संस्कार किया जाता है ।

**विमर्श**—प्रस्तुत सूत्र और 'प्राग्वहतेष्ठक्' दोनों से संस्कार अर्थ में ठक् होता है । परन्तु अर्थ में भेद है । जब दही को अधिकरण मानकर किसी अन्य वस्तु नमक आदि के द्वारा संस्कार किया जाता है तब प्रस्तुत सूत्र से ठक् होता है और सप्तम्यन्त से होता हैं । जब दही संस्कार का करण होता है, तब तृतीयान्त से ठक् करने के लिए 'प्राग्वहतेष्ठक्' सूत्र है । इस दहीं में संस्कार किया गया अथवा दही से संस्कार किया गया—इन दोनों अर्थों में—दधिकम्, यही बनता है ॥१८॥

सप्तमीसमर्थ उदश्वित् शब्द से 'संस्कृत भक्ष = भक्षणीय' इस अर्थ में विकल्प से ठक् प्रत्यय होता है । पक्ष में यथा प्राप्त अण् भी होता है । उदा०—[उदश्विति संस्कृतम्—इस विग्रह में] (१) औदश्वित्कम्, (२) औदश्वितम् [उदश्वित् + ठक् = ठ, 'इसुसुक्तान्ताट्ठक्' से 'ठ' का 'क' आदेश, आदिवृद्धि (१) औदश्वित्कम् । पक्ष में अण् होने पर (२) औदश्वितम्] ॥ १९ ॥

---

१. अयं पाठः मूले न दृश्यते ।

## १४४८. क्षीराड्ढञ् ॥ २० ॥ (१२२२)

**क्षीरशब्दात् सप्तमीसमर्थात् 'संस्कृतं भक्षा' इत्येतस्मिन्नर्थे ढञ् प्रत्ययो भवति। अणोऽपवादः। क्षीरे संस्कृता क्षैरेयी यवागूः ॥**

## १४४९. सास्मिन्पौर्णमासीति संज्ञायाम् ॥ २१ ॥ (१२२३)

**सेति प्रथमासमर्थाद् 'अस्मिन्' इति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं पौर्णमासी चेद्भवति। इतिकरणस्ततश्चेद्विवक्षा भवति। 'संज्ञायाम्' इति समुदायोपाधिः—प्रत्ययान्तेन चेत्संज्ञा गम्यत इति। मासार्धमाससंवत्सराणामेषा संज्ञा। पौषी पौर्णमासी अस्मिन्पौषो मासः। पौषोऽर्धमासः। पौषः संवत्सरः।**

### न्यासः

**क्षीराड् ढञ् ॥ क्षैरेयीति।** 'टिड्ढाणञ्' इति ङीप् ॥ २० ॥

**सास्मिन् पौर्णमासीति संज्ञायाम् ॥ ततश्चेद् विवक्षा भवतीति।** तत इति प्रत्ययान्तो निर्दिश्यते। एतदुक्तं भवति—यदि प्रत्ययान्ताल्लोकेऽस्य विवक्षा भवत्येवं प्रत्ययो भवति;। **प्रत्ययान्तेन चेत्यादिना** संज्ञायाः समुदायोपाधित्वं स्पष्टीकरोति। **एषा संज्ञेति।** या प्रत्ययान्तेन गम्यते। **पौषीति।** 'नक्षत्रेण युक्तः कालः' इत्यण्, तदन्तान् ङीप्।

### पदमञ्जरी

**क्षीराड्ढञ् ॥** अत्र संस्कृतमित्येव सम्बध्यते, न भक्षा इति; तेन यवाग्वामपि भवति। **क्षैरेयीति।** 'टिढ्याणञ्' इत्यादिना ङीप् ॥ २० ॥

**सास्मिन्पौर्णमासीति संज्ञायाम् ॥ ततश्चेद्विवक्षेति।** ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेद् एवं प्रत्ययो भवति, नान्यथेत्यर्थः। **संज्ञायामिति समुदायोपाधिरिति।** एतदेव स्पष्टयति—**प्रत्ययान्तेन चेदिति। पौषी पौर्णमासीति।** 'लुबविशेषे' इति पौर्णमास्यां लुब्न भवतीति पूर्वमेवोक्तम्। **भृतकमासे चेति।** भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति। वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः।

### भावबोधिनी

सप्तमीसमर्थ क्षीर शब्द से 'संस्कृत भक्ष = भक्षणीय' इस अर्थ में ढञ् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—क्षीर में संस्कृत = बनायी गयी—क्षैरेयी यवागूः [दूध में पकायी गयी दलिया आदि। क्षीर + ढञ्, ढ = एय, आदिवृद्धि, ङीप् = ई] ॥ २० ॥

'सा' इस प्रथमा समर्थ से 'अस्मिन्' इस सप्तम्यर्थ में यथाविहित प्रत्यय होता है, यदि वह प्रथमासमर्थ पौर्णमासी हो तो। 'इति' इसलिये है कि उस शब्द से यदि वैसी विवक्षा होती है तभी यह होता है। 'संज्ञा ने' यह समुदाय [प्रकृति + प्रत्यय से निष्पन्न] की उपाधि है—प्रत्ययान्त शब्द के द्वारा यदि संज्ञा की प्रतीति हो रही हो तो। महीना, आधामहीना और संवत्सर = वर्ष की यह संज्ञा है। उदा०—पौषी पौर्णमासी अस्मिन् सः—पौर्णमासः। [पुष्य नक्षत्र के योगवाली पौर्णमासी—पौषी 'नक्षत्रेण युक्तः कालः' से अण् आदिवृद्धि करने पर पौष्य + अ, भसंज्ञा, अलोप, यलोप करने पर पौष। इससे ङीप् करने पर—पौषी। पौषी पौर्णमासी अस्मिन्—इस अर्थ में प्रस्तुत सूत्र से अण् पौषी + अण् = अ, भसंज्ञा, ईलोप करने पर पौषः मासः] पौषः अर्धमासः। पौषः संवत्सरः।

यहाँ नहीं होता है—इस दशरात्र में पौषी पौर्णमासी है। भृतक = नौकरों, मजदूरों के महीने में भी नहीं होती हैं। 'इति' शब्द का प्रयोग और संज्ञा शब्द का प्रयोग—इन दोनों का फल है प्रयोग का अनुसरण। [तब एक से ही निर्वाह सम्भव था] दोनों का प्रयोग क्यों किया जा रहा है? इतिकरण = इति शब्द के प्रयोग की संज्ञा शब्द के साथ

**इह न भवति—पौषी पौर्णमासी अस्मिन्दशरात्र इति** (म० भा०)। **भृतकमासे च न भवति,** (म० भा०)।

**इतिकरणस्य संज्ञाशब्दस्य च तुल्यमेव फलं प्रयोगानुसरणम्, तत्र किमर्थं द्वयमुपादीयते ? संज्ञाशब्देन तुल्यतामितिकरणस्य ज्ञापयितुम्, न ह्ययं लोके तथा प्रसिद्धः। संज्ञार्थत्वे तु संप्रति ज्ञापिते यत्तत्र तत्रोच्यते इतिकरणस्ततश्चेद्विवक्षेति तदुपपन्नं भवति।**

**अथ पौर्णमासीति कोऽयं शब्दः ? पूर्णमासादण्** (म० भा० वा० ४.२.३५), **पौर्णमासी। अथ वा—पूर्णो माः पूर्णमाः; पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते॥**

**न्यासः**

**इह न भवतीति।** संज्ञाया अनवगम्यमानत्वात्। न हि दशरात्रस्य प्रत्ययान्तः संज्ञा, नापि भृतकमासस्य। किं तत् तुल्यं फलमित्याह—**प्रयोगानुसरणमिति।** प्रयोगानुसरणं प्रयोगोपलक्षणमित्यर्थः। संज्ञाग्रहणे ह्येतत् क्रियते—प्रयोगमुपलक्ष्य यत्र प्रयोगो दृश्यते मासार्धमाससंवत्सरेषु तत्र प्रत्यय उत्पादयितव्यः, न तु भृतकमासादौ। इतिकरणेनाप्येतदेव क्रियते। तथा हि—प्रत्ययान्ताद् यदि लोकस्यार्थत्रिवक्षा भवति, एवं हि प्रत्यय उत्पादयितव्यः, नान्यथेति। एवमर्थमितिकरण उपादीयते, ततश्च लोकविवक्षा मासार्द्धमाससंवत्सरविषया भवति, एवं हि न भृतकमासादिविषया। तस्मात् प्रयोगानुसरणम्, उभयोरपि फलं तुल्यमेव। **संज्ञेत्यादि।** ननु च यथा संज्ञाशब्दः प्रयोगानुसरणफलतया लोके प्रसिद्धः, तथेतिकरणोऽपि, तत् किमर्थमिह तस्य तेन तुल्यत्वमेव ज्ञायते ? इत्याह—**न ह्ययमित्यादि।** तथा हि—लोकेऽयं संज्ञाशब्दः प्रयोगानुसरणफलत्वेन यथा प्रसिद्धः, न तथेतिकरणः। तस्मादस्य तेन तुल्यता ज्ञापितेति भावः। **संज्ञार्थत्वे इत्यादिना** ज्ञापनस्य प्रयोजनं दर्शयति। संज्ञया तुल्योऽर्थो यस्य स संज्ञार्थः। समासेन गम्यमानत्वात् तुल्यशब्दो न प्रयुज्यते, यथा 'रुच्यर्थानाम्' इत्यत्र रुचिना समानशब्द इति भावः। संज्ञार्थस्य भावः = संज्ञार्थत्वम्। अर्थशब्दश्चायं प्रयोजनवचनः। **तदुपपन्नं भवतीति।** यत एव संज्ञाशब्देनेतिकरणस्य तुल्यार्थता ज्ञापिता तेन यत्र यत्र प्रयोगानुसरणार्थ इतिकरणः, ततस्ततश्च विवक्षा भवतीत्युच्यते—तदुपपन्नं भवतीति; इतिकरणस्य संज्ञाप्रयोजनत्वात्।

**पूर्णमासादणिति॥** पूर्णो मासो यस्यां तिथाविति तत्रार्थे बहुव्रीहिः। अस्मादेव निपातनादण्। पूर्णमासस्येयं **पौर्णमासी।** 'तस्येदम्' इत्यण्। तिथिविशेषस्येयं संज्ञा। व्युत्पत्तिस्तु यथाकथञ्चित् कर्त्तव्या॥ २१॥

**पदमञ्जरी**

**तुल्यमेव फलमिति।** किं पुनस्तदित्याह—**प्रयोगानुसारणमिति।** ण्यर्थाल्ल्युट्। **संज्ञाशब्देन तुल्यतामिति।** तुल्यफलतामित्यर्थः। **इतिकरणस्य ज्ञापयितुमिति।** किं पुनरिदं ज्ञापकसाध्यम् ? तत्राह—**न ह्ययमिति।** ज्ञापनस्य प्रयोजनं दर्शयति—**संज्ञार्थत्वे त्विति।** संज्ञाशब्देन तुल्यफलत्वे इत्यर्थः। **प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यत इति।** संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शास्त्रे 'संज्ञायाम्' इत्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते।

**पूर्णमासादणिति।** पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादेराकृतिगणत्वादस्मादेव वा निपातनादण्। **मा इति चन्द्रमा उच्यत इति।** चन्द्रमश्शब्दैकदेशप्रयोगः; सत्याभामा भामेतिवत्॥ २१॥

**भावबोधिनी**

तुल्यता ज्ञापित करने के लिये हैं; क्योंकि लोक में ऐसा प्रसिद्ध नहीं है। इस समय संज्ञार्थता ज्ञापित हो जाने पर यहाँ वहाँ जो 'इतिकरण' कहा जाता है, उससे यदि विवक्षा होती है, यह उपपन्न होता है।

पौर्णमासी यह कौन शब्द है ? पूर्णमास शब्द से अण् करके—पौर्णमासी बनता है। अथवा पूर्णो माः—पूर्णमाः, [पूरा चन्द्रमा], पूर्णमसः इयम्—पूर्णचन्द्रमा सम्बन्धी—पौर्णमासी। [पूर्णमास् + अण्, आदिवृद्धि, ङीप्] मा—यह चन्द्रमा को कहा जाता है।

**१४५०. आग्रहायण्यश्वथाट्ठक् ॥ २२ ॥ (१२२४)**

**'सास्मिन्पौर्णमासी' इति सर्वमनुवर्तते। आग्रहायणीशब्दादश्वत्थशब्दाच्च प्रथमासमर्थात्पौर्णमास्युपाधिकाद् अस्मिन्निति सप्तम्यर्थे ठक् प्रत्ययो भवति। अणोऽपवादः। आग्रहायणिको मासः। अर्द्धमासः संवत्सरः। एवम्—आश्वत्थिकः॥**

**१४५१. विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ॥ २३ ॥ (१२२५)**

**फाल्गुन्यादयः पौर्णमासीशब्दास्तेभ्यो विभाषा ठक् प्रत्ययो भवति, 'सास्मिन्पौर्णमासीति संज्ञायाम्'** (४.२.२१) **इत्येतस्मिन्विषये। नित्यमणिप्राप्ते पक्षे ठग्विधीयते। फाल्गुनो मासः, फाल्गुनिकः। श्रावणः, श्रावणिकः। कार्त्तिकः, कार्तिकिकः। चैत्रः, चैत्रिकः॥**

**न्यासः**

**आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥ विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ॥ २३ ॥**

**पदमञ्जरी**

**आग्रहायण्यश्वत्थाट्ठक् ॥** अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, 'पूर्वपदात्संज्ञायाम्' इति णत्वम्। **[अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः इति]**। निपातनात् पौर्णमास्यामपि लुप्॥ २२॥

**भावबोधिनी**

**विमर्श**—काशिकाकार ने अनेक स्थलों के समान यहाँ भी सूत्र के साथ वार्त्तिक को मिला दिया है। 'संज्ञायाम्' यह वार्त्तिक में भी नहीं हैं। वार्त्तिककार ने 'संज्ञा' ग्रहण का परामर्श दिया है। इसीलिये कैयट ने स्पष्ट लिखा है—'संज्ञाग्रहणं सूत्रेऽनार्षमिति वार्त्तिकमारब्धम्।' भाष्यकार के अनुसार 'इति' शब्द से ही 'संज्ञा' अर्थ की प्रतीति हो जाती है। यही बात सिद्धान्तकौमुदी में भी लिखी है। दूसरी अनवधानता यह है कि 'इति' और संज्ञायाम्' इन दोनों के प्रयोग का औचित्य भी प्रदर्शित किया हैं॥ २१॥

'सा अस्मिन् पौर्णमासी' इस सबकी अनुवृत्ति होती है। प्रथमा समर्थ, पौर्णमासी-उपाधि वाले, आग्रहायणी और अश्वत्थ इन शब्दों से 'अस्मिन्' [इसमें]—इस सप्तम्यर्थ में ठक् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—[आग्रहायणी पौर्णमासी अस्मिन् मासे सः]—आग्रहायणिको मासः। [अग्रे हायनमस्या—इस विग्रह में अग्रहायन बनाकर 'प्रज्ञादिभ्यश्च' से स्वार्थिक अण् प्रत्यय णत्व, और ङीप् करके आग्रहायणी पौर्णमासी। आग्रहायणी पौर्णमासी अस्मिन् आग्रहायणी ठक्, ठ = इक, भसंज्ञा, इलोप] आग्रहायणिकः मासः अर्धमासः और संवत्सरः [अगहनी पौर्णमासी वाला महीना, आधा महीना और वर्ष]। इसी प्रकार—आश्वत्थिकः मासः, अर्धमासः, संवत्सरः। [अश्वत्थेन = अश्विनी-नक्षत्रेण युक्ता पौर्णमासी—अश्वत्था। यहाँ प्रत्यय का निपातन से लुप् हो जाता है। इसके बाद अश्वत्था पौर्णमासी अस्मिन् मासे सः—इस विग्रह में अश्वत्था + ठक्, ठ = इक, आदिवृद्धि, भसंज्ञा, आलोप। आश्वत्थ = आश्विन = क्वार महीना, आधा महीना, वर्ष] ॥२२॥

फाल्गुनी आदि पौर्णमासीवाचक शब्द हैं, इनसे 'सा अस्मिन् पौर्णमासी इति संज्ञायाम्' [वह पौर्णमासी है जिसमें, इस प्रकार की संज्ञा प्रतीति में] विकल्प से ठक् प्रत्यय होता है। अण् प्रत्यय नित्य प्राप्त है पक्ष में ठक् का विधान किया किया जा रहा है। उदा०—फाल्गुनः, फाल्गुनिकः मासः। [फाल्गुनी नक्षत्रेण युक्तः कालः इस अर्थ में अण् प्रत्यय करके फाल्गुनी पौर्णमासी अस्मिन् मासे—इस विग्रह में अण् और ठक् होते हैं। (१) फाल्गुनी + अण्, भसंज्ञा, ईलोप, फाल्गुनः (२) फाल्गुनी + ठक्, ठ = इक, भसंज्ञा, ईलोप—फाल्गुनिकः। श्रावणः, श्रावणिकः [श्रावणी + अण्, भसंज्ञा, ईलोप (१) श्रावणः श्रावणी + ठक्, ठ = इक, भसंज्ञा ईलोप—श्रावणिकः] कार्त्तिकः, कार्त्तिकिकः [कृत्तिका नक्षत्र से युक्त पौर्णमासी कार्त्तिकः। कार्तिकी पौर्णमासी अस्मिन् मासे सः—कार्त्तिकी + अण्। कार्तिकी + ठक्] चैत्रः, चैत्रिकः, [चित्रा नक्षत्र से युक्त पौर्णमासी—चैत्री। चैत्री पौर्णमासी अस्मिन् मासे सः—इस अर्थ में चैत्री + अण्, चैत्री + ठक्] ॥२३॥

## १४५२. सास्य देवता ॥ २४ ॥ (१२२६)

**सेति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं देवता चेत्सा भवति। यागसम्प्रदानं देवता देयस्य पुरोडाशादेः स्वामिनी, तस्मिन्नभिधेये प्रत्ययः। इन्द्रो देवताऽस्य ऐन्द्रं हविः। आदित्यम्। बार्हस्पत्यम्। प्राजापत्यम्। देवतेति किम्? कन्या देवताऽस्य।**

**कथमैन्द्रो मन्त्रः? मन्त्रस्तुत्यमपि देवतेत्युपचरन्ति।**

**न्यासः**

**सास्य देवता ॥ तस्मिन्नभिधेय इति।** यागसम्प्रदानभूतदेवतास्वामिनीके पुरोडाशादौ। एष चाभिधेयविशेषः। सामान्योक्तावपीतीत्यस्येहानुवृत्तेर्लभ्यते। **आदित्यम्, बार्हस्पत्यमिति।** 'दित्यदित्यादित्यपत्युत्तरपदात्' इत्यादिना ण्यः। यागस्य देवतेहाभिप्रेता।

ऐन्द्रो मन्त्र इति च प्रयोगे कस्यचित् पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्ति। अतो नासौ देवतेति प्रत्ययेनात्र न भवितव्यमिति मन्यते। **मन्त्रस्तुत्यमिति।** यथा देवता पूजार्हा तथा मन्त्रस्तुत्यमपि वस्तु, ततो देवतासाधर्म्यात् तदपि **देवतेत्युपचरन्ति** विद्वांसः। इन्द्रश्च मन्त्रस्तुत्यो भवति, तस्मादसम्प्रदानभूतमपि तं देवतेत्युपचरन्ति। दैवतोपचारं तत्र कुर्वन्तीत्यर्थः। नन्वेवमपि नैवात्र प्रत्ययेन भवितव्यम्; मुख्ये सति गौणस्याश्रयणस्यायुक्तत्वात्? नैष दोषः; यथैव हि कश्चिदेकेनैव यत्नेन श्वेतो धावतीति तन्त्रेण वाक्यद्वयमुच्चारयति, तथेहाप्याचार्येण द्वे वाक्ये तन्त्रेणोच्चारिते। तत्रैकं मुख्यार्थम्, अपरं गौणार्थं भविष्यति।

**पदमञ्जरी**

**सास्य देवता ॥ यागसम्प्रदानं देवतेति।** यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः, स्वार्थिकश्च तल्; तथापि समुदायशक्त्या देवताशब्दो यागे दर्शपूर्णमासादौ यद्यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्तते, न स जातिविशेष इत्यर्थः। **देयस्य पुरोडाशादेः स्वामिनीति।** दिवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्तिं दर्शयति, एवं च कृत्वा 'वाय्वृतुपित्रुषसो यत्', 'कालेभ्यो भववत्' इति वचनमुपपद्यते, न ह्यृतुषु पितृषु उषसि वा जातिरस्ति। तथा पितृदेवत्यम्, देवदेवत्यमिति प्रयोगोऽप्येवमेवोपपद्यते।

**कथमिति।** पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः **मन्त्रस्तुत्यामपीत्यादि।** नानेनौपचारिकत्वं प्रयोगस्योच्यते, अपि तु मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु **नैरुक्तानामि**त्येतावान्विशेषः। **उपचरन्तीति** ब्रुवते, प्रयुञ्जव इत्यर्थः।

**भावबोधिनी**

सा [वह] इस प्रथमासमर्थ से 'अस्य' [इसका]—इस षष्ठ्यर्थ में यथाविहित प्रत्यय होता है, जो प्रथमासमर्थ है वह यदि देवताविशेष का वाचक हो। याग में सम्प्रदान [जिसके उद्देश्य से हविर्दान आदि किया जाता है] देवता, देय पदार्थ पुरोडाश आदि का स्वामी होता हैं, उसके अभिधेय रहने पर प्रत्यय होता है। उदा०—इन्द्र है देवता इसका वह—ऐन्द्रं हविः [इन्द्र + अण्, आदिवृद्धि, भसंज्ञा, अलोप] आदित्यम् [आदिति + ण्य = य, आदिवृद्धि, भसंज्ञा, अलोप] बार्हस्पत्यम् [बृहस्पति + ण्य = य, आदि वृद्धि, भसंज्ञा, इलोप] प्राजापत्यम् [प्रजापति + ण्य, शेष पूर्ववत्]। देवता—यह किसलिये है? कन्या देवता अस्य। [कन्या देवतावाची नहीं हैं। अतः प्रत्यय नहीं होता] ऐन्द्रः मन्त्रः—यह प्रयोग कैसे होता है? मन्त्रों द्वारा स्तुति के योग्य को भी 'देवता' ऐसा व्यवहार किया जाता हैं।

'आग्नेयो वै ब्राह्मणो देवता'—यह प्रयोग कैसे होता है? [क्योंकि यह याग सम्प्रदान और मन्त्रस्तुत्य ये दोनों अर्थ नहीं हैं] उपमान = सादृश्य के द्वारा हो जायगा [काषायौ कर्णौ—यहाँ जैसे कषाय रंग वाले वस्त्र के रंग के समान रंगवाले कान। इसी आग्नेय के समान आग्नेय। किसी स्थल पर अग्नि को देवता मानकर प्रत्यय आदि हुये हैं। उसी का सादृश्य मानकर यहाँ भी प्रत्यय कर लेना चाहिये]। 'महाराजप्रोष्ठपदाट्ठञ्' सूत्र तक 'सास्य देवता' इसका अधिकार चलता है। ['सास्मिन् पौर्णमासी' से] 'सा' इसकी अनुवृत्ति होते रहने पर पुनः समर्थविभक्ति ''सा' का निर्देश 'संज्ञा' की निवृत्ति के लिये है।

**कथम्—आग्नेयो वै ब्राह्मणो देवतेति ? उपमानाद्भविष्यति । 'महाराजप्रोष्ठपदाट्ठञ्'** (४.२.३५) **इति यावत् 'सास्य देवता' इत्यधिकारः । सेति प्रकृते पुनः समर्थविभक्तिनिर्देशः संज्ञानिवृत्त्यर्थः ॥**

**१४५३. कस्येत् ॥ २५ ॥ (१२२७)**

**कशब्दो देवतायां प्रजापतेर्वाचकः, ततः पूर्वेणैवाण्प्रत्ययः सिद्ध इकारादेशार्थं वचनम् । कस्य इकारादेशो भवति प्रत्ययसन्नियोगेन । कायं हविः । कायमेककपालं निर्वपेत्** (मै० सं० ३.१५.१०) **॥**

**१४५४. शुक्राद् घन् ॥ २६ ॥ (१२२८)**

**शुक्रशब्दात् 'सास्य देवता' इत्यस्मिन्नर्थे घन् प्रत्ययो भवति । अणोऽपवादः शुक्रियं हविः । शुक्रियोऽध्यायः ॥**

**न्यासः**

**कथमित्यादि ।** अग्नेर्हि न मुख्यं देवतात्वम्, नापि गौणम् । तत्र मुख्यं तावन्नास्ति; देयाभावेनासम्प्रदानभूतत्वात् । गौणमपि नास्ति; मन्त्रशब्दाभावेन मन्त्रस्तुत्यतयानुपात्तत्वात् । तस्मादत्र प्रत्ययेन न भवितव्यमिति भावः । **उपमानाद्भविष्यतीति ।** देवतास्वामिनीक एवात्र प्रत्यय उपपद्यते । यस्त्वर्थान्तरे प्रत्ययान्तप्रयोगः स आग्नेय इवाग्नेय इत्युपमानाद् भविष्यति, यथा—काषायौ गर्दभस्य कर्णाविति । ननु च सास्मिन् पौर्णमासीति सेति प्रकृतमेव । तत् किमर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इत्यत आह—**सेति प्रकृत इत्यादि ।** यदिदं सेति प्रकृतं तत्संज्ञासम्बद्धमिति, तदनुवृत्तौ संज्ञाग्रहणस्याप्यनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं पुनरिह समर्थविभक्तिर्निर्दिश्यत इति ॥ २४ ॥

**कस्येत् ॥** तकारो मुखसुखार्थः, न दीर्घनिवृत्त्यर्थः । भाव्यमानेनाणा सवर्णानामग्रहणात् । सत्यपि सवर्णग्रहण आन्तरतम्याद् ह्रस्वस्य ह्रस्व एव भविष्यति, न दीर्घः । **प्रजापतेर्वाचक इति ।** अनेनासर्वनामत्वमस्य दर्शयति । इकारस्य 'यस्येति च' इति लोपो न भवति, विधानसामर्थ्यात् । **कायमिति ।** वृद्ध्यायादेशौ ॥ २५ ॥

**शुक्राद् घन्** ॥ २६ ॥

**पदमञ्जरी**

**कथमित्यादि ।** पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः । **उपमानादिति ।** काषायौ गर्दभस्य कर्णावितिवद् गौणोऽयं प्रयोग इत्यर्थः । **सेति प्रकृत इति ।** प्रकृतं हि साग्रहणं संज्ञया सम्बद्धमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ॥ २४ ॥

**कस्येत् ॥** किमो विभक्तौ कादेशं कृत्वा कस्येति निर्दिष्टमित्याशङ्कामपनयति—**कशब्द इति ।** एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः । कस्मै अनुब्रूहीति, 'न कस्मै देवाय हविषा विधेम' (ऋ०) इति तु छान्दसः स्मैभावः, यदिन्द्राग्नी अवमस्यामित्यादिवत् । **कायमिति ।** इत्वे कृते यस्येति लोपः प्राप्तः परत्वादादिवृद्ध्या बाध्यते, श्रीर्देवतास्य श्रायमितिवत् । 'सोमाट्ट्यण्' इत्यत्र कग्रहणे च क्रियमाणे यद्यपि यस्येति लोपात्परत्वाद् वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव ॥ २५-२६ ॥

**भावबोधिनी**

**विमर्श**—'सास्मिन् पौर्णमासीति संज्ञायाम्' इस काशिकासम्मत सूत्र से 'सा' की अनुवृत्ति होने पर 'संज्ञायाम्' की भी अनुवृत्ति होती है । उसका सम्बन्ध करने पर 'संज्ञाविशेष' की प्रतीति में ही यह प्रत्यय होता । पुनः 'सा' का ग्रहण कर देने पर यह 'संज्ञायाम्' सम्बद्ध नहीं होता है ॥ २४ ॥

'क' शब्द प्रजापति देवता का वाचक है, इससे पूर्ववर्त्ती सूत्र द्वारा ही अण् प्रत्यय सिद्ध है; इकार आदेश करने के लिये यह सूत्र है । प्रत्यय के सन्नियोग से 'क' का इकारान्त [इत्] आदेश होता है । उदा०—कायं हविः [क = प्रजापति देवता है जिसका—ऐसा हवि । क + अण्, इ आदेश—क् इ + अ, वृद्धि ऐ, आय् आदेश] कायम् एककपालं निर्वपेत् ॥ २५ ॥

'सा अस्य देवता' [वह इसका देवता है ]—इस अर्थ में शुक्र शब्द से घन् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—शुक्रियं हविः [शुक्र देवता वाली हवि ।] शुक्रियोऽध्यायः [शुक्र देवता सम्बन्धी अध्याय । शुक्र + घ् का इय्, भसंज्ञा, अलोप] ॥ २६ ॥

**१४५५. अपोनप्त्रपान्नप्तृभ्यां घः ॥ २७ ॥ (१२२९)**

**अपोनप्तृ, अपान्नप्तृ–इत्येताभ्यां घः प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । अपोनप्त्रियं हविः** (श० ब्रा० ३.२९.१२), **अपांनप्त्रियम् ।**

**अपोनपाद्, अपांनपादिति देवताया नामधेये एते, तयोस्तु प्रत्ययसन्नियोगेन रूपमिदं निपात्यते ॥**

**१४५६. छ च ॥ २८ ॥ (१२३०)**

**अपोनप्तृ, अपान्नप्तृ—इत्येताभ्यां छकारः प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये । अणोऽपवादः । अपोनप्त्रीयं हविः** (आप० श्रौ० २२.२२.२) **। अपान्नप्त्रीयम्** (काठ० सं० १२.६) **। योगविभागः संख्यातानुदेशपरिहारार्थः ।**

*** छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् *** (म० भा० ४.२.२८ वा० १) **॥ पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम्** (म० भा०) **॥**

**न्यासः**

**अपोनप्त्रपान्नप्तृभ्यां घः ।** अपोनपात्, अपान्नपादिति यद्येते देवतानामधेये तत् कथमेतद्विलक्षणं प्रकृतिरूपं सूत्रे श्रूयते ? इत्याह—**तयोस्तु प्रत्ययसन्नियोगेनेत्यादि** ॥ २७ ॥

**छ च ॥** अथ किमर्थं योगविभागः क्रियते, न 'अपोनप्तृ-अपान्नप्तृभ्यां घच्छौ' इत्येकयोग एव क्रियते ? इत्याह—**योगविभाग इत्यादि ।** एकयोगे हि द्वे प्रकृती, प्रत्ययावपि द्वावेव, समसंख्यत्वात् संख्यातानुदेशः स्यात्; अतस्तन्निवृत्तये योगविभागः क्रियते ।

**पदमञ्जरी**

**अपोनप्त्रपान्नप्तृभ्यां घः ॥ अपोनपात् अपांनपादिति देवतानामधेये इति ।** पृषोदरादित्वादनयोः साधुत्वम् । **तयोस्तु प्रत्ययसन्नियोगेनेति ।** एवं च अपोनपाते अनुब्रूहि, अपांनपातेऽनुब्रूहि, अपोनपात्तं यज, अपां नपातं यजेति सम्प्रैषः । वेदे तु अपोनप्त्रे स्वाहेति छान्दसः प्रयोगः ॥ २७ ॥

**छ च ॥ योगविभाग इत्यादि ।** पूर्वसूत्र एव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ, प्रकृती अपि द्वे इति

**भावबोधिनी**

'साऽस्य देवता' [वह देवता है इसकी] इस विषय में 'अपोनप्तृ' और 'अपान्नप्तृ' इन दोनों शब्दों से 'घ' प्रत्यय होता है । यह अण् का अपवाद है । उदा०—अपोनप्त्रियं हविः, अपान्नप्त्रियम् [अपोनपात् देवता है इसका, अपान्नपात् है देवता इसका इस अर्थ में घ प्रत्यय करने पर प्रकृति के अपोनप्तृ और अपान्नप्तृ आदेश हो जाते हैं । अपोनप्तृ + घ, घ = इय, ऋ का यण् र्—अपोनप्त्रिय । अपान्नप्तृ + घ = इय, यण् अपान्नप्त्रियम्] अपोनपात् और अपान्नपात् ये देवताओं के नाम हैं, प्रत्यय-सन्नियोग से इनका 'अपोनप्तृ' और 'अपान्नप्तृ' ये रूप निपातित किये जाते हैं ॥ २७ ॥

'सा अस्य देवता' [वह देवता है इसका] इस विषय में 'अपोनप्तृ' और 'अपान्नप्तृ' इन शब्दों से 'छ' प्रत्यय होता है । यह अण् का अपवाद है । उदा०—अपोनप्त्रीयं हविः । अपान्नप्त्रीयं हविः । [अपोनपात् + छ, अपोनपात् का अपोनप्तृ आदेश, छ् का ईय् आदेश, ऋ का यण् अपान्नपात् + छ, प्रकृति का अपान्नप्तृ आदेश, छ् का ईय, ऋ का यण् ।] [पूर्वसूत्र में 'छ' का समावेश सम्भव रहने पर भी] योग विभाग = दूसरा सूत्र बनाना यथासंख्य से आदेश रोकने के लिए है ।

**विमर्श**—'अपोनप्त्रपान्नप्तृभ्यां घ : छः च' ऐसा एक ही सूत्र बनाने से कार्यनिर्वाह सम्भव था । किन्तु यहाँ दूसरा सूत्र बनाने का प्रयोजन है 'यथासंख्य' रोकना । दो प्रकृतियों और दो प्रत्ययों का एक साथ उल्लेख रहने पर क्रमशः प्रत्यय होने लग जाते, दोनों प्रकृतियों से दोनों प्रत्यय नहीं हो पाते । अतः यह सूत्र अलग बनाया गया है । अब दोनों शब्दों से दोनों प्रत्यय होते हैं ।

**★ शतरुद्राच्छश्च घश्च** (वा० २) **शतरुद्रीयम्** (तै० सं० ५.४.३.१) ॥ **शतरुद्रियम्** ॥ (मै० स० ३.३.४)

## १४५७. महेन्द्राद् घाणौ च ॥ २९ ॥ (१२३१)

**महेन्द्रशब्दाद् घाणौ प्रत्ययौ भवतः, चकाराच्छश्च, 'सास्य देवता' इत्यस्मिन्विषये। महेन्द्रो देवतास्य महेन्द्रियं हविः। माहेन्द्रम्** (तै० सं० ६.५.५.३) **। महेन्द्रीयम्** (का० सं० १५.१) ॥

## १४५८. सोमाट् टयण् ॥ ३० ॥ (१२३२)

**सोमशब्दात् ट्यण्प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये। अणोऽपवादः। णकारो वृद्धयर्थः। टकारो ङीबर्थः। सोमो देवतास्य सौम्यं हविः। सौम्यं सूक्तम्। सौमी ऋक्** (मै० सं० १.७.४) ॥

**न्यासः**

**छप्रकरण इत्यादि।** पैङ्गाक्षीपुत्रादिभ्यश्छप्रकरणे छस्योपसंख्यानम् = प्रतिपादनं कर्त्तव्यम्। तत्रेदं प्रतिपादनम्—चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन पैङ्गाक्षीपुत्रादिभ्यश्छो भवतीति ॥ २८ ॥

**महेन्द्राद् घाणौ च ॥** 'अथ महेन्द्रादण् च' इत्येव कस्मान्नोक्तम्? चकाराद् घच्छौ भविष्यतः, एवमुच्यमाने ह्येष्यमपि विज्ञायते—अनन्तरं छ एव चकारेणात्र कृष्यत इति। तस्मात् तथा मा विज्ञायीति घग्रहणम् ॥ २९ ॥

**सोमाट् टयण् ॥ सौमीति।** 'हलस्तद्धितस्य' इति यलोपः ॥ ३० ॥

**पदमञ्जरी**

स्यात्सङ्ख्यातानुदेशः। **शतरुद्रीयमिति।** शतशब्दोऽनन्तवचनः, शतं रुद्रा देवताऽस्येति घच्छौ, तयोर्विधानसामर्थ्याद् 'द्विगोर्लुगनपत्ये' लुग्न भवति ॥ २८ ॥

**महेन्द्राद्घाणौ च ॥** 'महेन्द्रादण्च' इत्युच्यमानेऽनन्तरश्छ एव समुच्चीयेत, न व्यवहितो घ इति पुनर्ग्रहणम् ॥ २९ ॥

**सोमाट् टयण् ॥ सौमीति।** टित्त्वान्ङीप्, 'हलस्तद्धितस्य' इति यलोपः ॥ ३० ॥

**भावबोधिनी**

[अनु०] ★ 'छ प्रत्यय के प्रकरण में पैङ्गाक्षीपुत्री आदि शब्दों से उपसंख्यान करना चाहिए।★ उदा०—पैङ्गाक्षीपुत्रीयन्। [पैङ्गाक्षीपुत्री + छ = ईय]। तार्णबिन्दवीयम्। [तार्णबिन्दवी + छ = ई य]। ★ शतरुद्र शब्द से छ और घ प्रत्यय होते हैं।★ शतरुद्रीयम् [शतरुद्र + छ = ईय]। शतरुद्रियम् [शतरुद्र + घ = इय। शतरुद्र देवता है जिसका] ॥ २८ ॥

'सा अस्य देवता' [वह देवता है इसका]—इस विषय में 'महेन्द्र' शब्द से 'घ' और 'अण्' ये दो प्रत्यय होते हैं, चकार के बल से 'छ' यह [तीसरा] प्रत्यय भी होता हैं। उदा०—महेन्द्रः देवता अस्य—इस विग्रह में (१) महेन्द्रियम् [महेन्द्र + घ = इय, त्रसंज्ञा, अलोप] (२) माहेन्द्रम् [महेन्द्र + अण्, आदिवृद्धि,] (३) महेन्द्रीयम् [महेन्द्र + छ = ईय] ॥ २९ ॥

'सा अस्य देवता' [वह देवता है इसका]—इस विषय में सोम शब्द से ट्यण् = य प्रत्यय होता है। यह अण् का अपवाद है णकार वृद्धि के लिए है। टकार ङीप् के लिए है। उदा०—सोमः देवता अस्य—सौम्यम् हविः [सोम + टयण् = य, आदिवृद्धि, भसंज्ञा, अलोप] सौम्यम् सूत्रम्। सौमीऋक् [सोम + ट्यण् = य, आदिवृद्धि, भसंज्ञा अलोप य् लोप टित् होने से 'टिड्ढाणञ्' से ङीप् = ई सौम् इ = सौमी] ॥ ३० ॥

## १४५९. वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥ (१२३३)

**वाय्वादिभ्यः शब्देभ्यो यत्प्रत्ययो भवति 'सास्य देवता' इत्येतस्मिन्विषये। अणोऽपवादः। वायुर्देवतास्य वायव्यम्। ऋतव्यम्। पित्र्यम्** (ऋ० ८.२०.१३) **। उषस्यम् ॥**

## १४६०. द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ ३२ ॥ (१२३५)

**द्यावापृथिव्यादिभ्यश्छःप्रत्ययो भवति चकाराद्यत् 'सास्य देवता' इत्यस्मिन्विषये। अणो ण्यस्य चापवादः। द्यौश्च पृथिवी च द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयम्** (मै० सं० १.८.१०), **द्यावापृथिव्यम्** (तै० सं० १.८.२.१)**। शुनश्च सीरश्च तौ देवते अस्येति शुनासीरीयम्** (काठ० सं० २६.४), **शुनासीर्यम्**

### न्यासः

**वाय्वृतुपित्रुषसो यत् ॥ वायव्यम्। ऋतव्यमिति।** 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः। **पित्र्यमिति।** 'रीङृतः' इति रीङ्, यस्येति लोपः ॥ ३१ ॥

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ अणो ण्यस्य चापवाद इति।** वास्तोष्पतिशब्दाद् 'दित्यदित्यादित्य०' इत्यादिना प्राप्तस्य ण्यस्यायमपवादः। शेषेभ्यस्त्वौत्सर्गिकस्याणः। वास्तुनः पतिर्वास्तोष्पतिः। वास्तुशब्दस्य नपुंसकस्य पुंल्लिङ्गता, षष्ठ्यर्थेलुक् च निपातनात्। षष्ठ्याः 'पतिपुत्रपृष्ठ'

### पदमञ्जरी

**वाय्वृतुपित्रुषसो यत् ॥ वायव्यमिति।** 'ओर्गुणः', 'वान्तो यि प्रत्यये'। **पित्र्यमिति।** 'रीङृतः' इति रीङ्, यस्येति लोपः ॥ ३१ ॥

**द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ॥ अणो ण्यस्य चापवाद इति।** वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः। शेषेभ्योऽणः। **द्यावापृथिव्याविति।** 'दिवो द्यावा', 'दिवसश्च पृथिव्याम्' इति द्यावादेशः। **शुनासीराविति।** 'देवता द्वन्द्वे च' इत्यानङादेशः। **शुनो वायुः, सीर आदित्य इति।** अन्ये तु एकमेव शुनसीरमिन्द्रस्य गुणममन्यन्त, यथाहाश्वलायनः—'इन्द्रो वा शुनासीरः' ( आश्व० श्रौ० ) इति। मन्त्रलिङ्गञ्च भवति—इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति। मरुतोऽस्य सन्ति मरुत्वानिन्द्रः। **अग्नीषोमीर्यमिति।** 'ईदग्नेः सोमवरुणयोः' वास्तीः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात्साधुः। गृहमेधशब्दमकारान्तं

### भावबोधिनी

'सा अस्य देवता' [वह देवता है इसका–] इस विषय में वायु आदि शब्दों से यत् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—वायुः देवता अस्य—वायव्यम् [वायु = यत् = य, भसंज्ञा उकार का गुण 'ओर्गुणः' से; वायो + य, ओ का अव् आदेश वाय् अव् य = वायव्य] ऋतव्यम् [ऋतु + यत्, शेष पूर्ववत्]। पित्र्यम् [पितृ = यत्, 'रीङ ऋतः' से ऋ का रीङ् = री आदेश, पित् री + य, भसंज्ञा, ईलोप—पित्र्यम्] उषस्यम् [उषस् + यत्] ॥ ३१ ॥

'सा अस्य देवता' [वह देवता है इसका]–इस अर्थ में द्यावापृथिवी आदि शब्दों से 'छ' प्रत्यय और चकार के बल से यत् प्रत्यय भी होता है। यह अण् और ण्य प्रत्ययों का अपवाद हैं। उदा०—द्यौश्च पृथिवी च—द्यावापृथिव्यौ [द्युलोक और पृथ्वी]—देवता हैं इसके—द्यावापृथिवीयम्, द्यावापृथिव्यम् [द्यावापृथिवी + छ = ईय, द्यावापृथिवी + यत्, भसंज्ञा, ईलोप]। शुनश्च सीरश्च—शुनासीरे [द्वन्द्व में 'देवता द्वन्द्वे च' सूत्र में पूर्वपद को अनङ् आगम, दीर्घ करने पर शुना-सीर] तौ देवते अस्य—इस अर्थ में शुनासीरीयम्, शुनासीर्यम् [शुनासीर + छ = ईय, शुनासीर + यत्, भसंज्ञा, अलोप]। शुन = वायु। सीर = सूर्य। [शुनासीर का अर्थ हुआ वायु और सूर्य देवता]। मरुत्वान् देवता है इसका—इस अर्थ में—मरुत्वतीयम्, मरुत्वत्यम् [मरुत्वत् + छ = ईय, मरुत्वत् + यत्] अग्निश्च सोमश्च—अग्नीषोमौ [अग्नि और सोम, द्वन्द्व में

(मै० ४.३.३)। **शुनः=वायुः। सीरः=आदित्यः। मरुत्वान्देवतास्य मरुत्वतीयम्** (तै० सं० ४.४.२.२), **मरुत्वत्यम्। अग्नीषोमीयम्** (तै० सं० १.८.१.१) **अग्नीषोम्यम्। वास्तोष्पतीयम्** (तै० सं० ३.४.१०.३), **वास्तोष्पत्यम्** (मै० सं० १.५.१३)। **गृहमेधीयम्** (ऋ० ७.५६.१४), **गृहमेध्यम्** (काठ० सं० ३६.९)॥

## १४६१. अग्नेर्ढक्॥ ३३॥ (१२३६)

**अग्निशब्दाद् ढक् प्रत्ययो भवति 'सास्य देवता' इत्येतस्मिन्विषये। अणोऽपवादः। अग्निर्देवतास्य आग्नेयोऽष्टाकपालः** (काठ० सं० ८.१०)।

**★ प्राग्दीव्यतीयेषु तद्धितार्थेषु सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः ★॥**

## १४६२. कालेभ्यो भववत्॥ ३४॥ (१२३७)

**कालविशेषवाचिभ्यः शब्देभ्यो भववत्प्रत्यया भवन्ति 'सास्य देवता' इत्यस्मिन्विषये 'कालाट्ठञ्'** (४.३.११) **इति प्रकरणे भवे प्रत्यया विधास्यन्ते, ते 'सास्य देवता' इत्यस्मिन्नर्थे तथैवेष्यन्ते, तदर्थमिदमुच्यते।**

**वत्करणं सर्वसादृश्यपरिग्रहार्थम्। मासे भवं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्।**

### न्यासः

इत्यादिना षत्वम्। **द्यावापृथिव्याविति।** 'दिवो द्यावा' इति द्यावादेशः। **शुनासीरीय इति।** 'देवताद्वन्द्वे च' इत्यानङ्। **अग्नीषोमीयमिति।** 'ईदग्नेः सोमवरुणयोः' इतीत्त्वम्, 'अग्नेः स्तुत्स्तोमसमाः' इति षत्वम्॥ ३२॥

**अग्नेर्ढक्**॥ ३३॥

**कालेभ्यो भववत्॥** बहुवचनग्रहणेन स्वरूपग्रहणे निरस्ते, कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह—**कालविशेषवाचिभ्य इत्यादि। वत्करणमित्यादि।** सर्वस्य सादृश्यस्य परिग्रहो यथा स्यादित्येवमर्थं

### पदमञ्जरी

बह्वृचा मन्यन्ते। 'मरुद्भ्यो गृहमेधेभ्य उत्तरा' इत्याश्वलायनः। 'गृहमेधास आगता' इति च **मन्त्रलिङ्गम्।** 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति तु **तैत्तिरीयकम्।** तत्र चेकारान्तो नकारान्तो वेति विप्रतिपन्नाः॥ ३२॥

**अग्नेर्ढक्॥** कलेर्ढगित्यत्रोक्तमेवार्थं स्मारयति—**प्राग्दीव्यतीयेष्विति॥ ३३॥**

**कालेभ्यो भववत्॥ कालविशेषवाचिभ्य इति।** स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात्। **वत्करणमित्यादि।** असति वत्करणे 'कालेभ्यो भवः' इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये

### भावबोधिनी

'ईदग्ने सोमवरुणयोः' से ईत्व, 'अग्नेः स्तुत्सोमसमाः' से षत्व] तौ देवते अस्य अर्थ में—अग्नीषोमीयम्, अग्नीषोम्यम् [छ = ईय, यत् में भसंज्ञा, अलोप]। वास्तोष्पतीयम्, वास्तोष्पत्यम् [वास्तोः पतिः—वास्तोष्पतिः—यह नियमित करके छ और यत् प्रत्ययों में पूर्ववत् सिद्धि होती है। वास्तोष्पति देवता इसका—यह अर्थ है] गृहमेध देवता है इसका—इस अर्थ में—गृहमेधीयम्, गृहमेध्यम्॥ ३२॥

'सा अस्य देवता' [वह देवता है इसका]—इस विषय में 'अग्नि' शब्द से ढक् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—अग्नि देवता है इसका—आग्नेयः अष्टाकपालः [अग्नि + ढक्, ढ = एय, आदि, वृद्धि, भसंज्ञा इलोप]।

★ प्राग्दीव्यतीय तद्धितप्रत्ययार्थों में सर्वत्र अग्नि और कलि शब्दों से ढक् प्रत्यय कहना चाहिए। ★ [अतः आग्नेय और कालेय—यही रूप सर्वत्र होता है।]॥ ३३॥

कालविशेषवाची शब्दों से 'साऽस्य देवता'—इस अर्थ में भगवत् = भव अर्थ में होने वाले प्रत्ययों के समान प्रत्यय होते हैं। 'कालाट्ठञ्' इस प्रकरण में भव = होने वाला—इस अर्थ में प्रत्ययों का विधान किया जायगा, वे प्रत्यय 'साऽस्य देवता' इस अर्थ में उसी प्रकार इष्ट हैं; इसके लिए अर्थात् उन प्रत्ययों को करने के लिए यह सूत्र बनाया गया है। सभी प्रकार के सादृश्य का परिग्रहण कराने के लिए 'वत्' लगाया गया है। उदा०—मासे भवम्—मासिकम्

**वासन्तम् । प्रावृषेण्यम् । तथा—मासो देवतास्य मासिकम् । आर्धमासिकम् । सांवत्सरिकम् । वासन्तम् । प्रावृषेण्यम् ।**

### १४६३. महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥ (१२३८)

**महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् प्रत्ययो भवति 'सास्य देवता' इत्यस्मिन्विषये । महाराजो देवतास्य माहाराजिकम् । प्रौष्ठपदिकम् ।**

**न्यासः**

वत्करणम् । 'कालेभ्यो: भव:' इत्युच्यमाने यदि तावन् कालग्रहणं भवप्रत्ययैः सम्बध्यते ? भवेऽर्थे कालेभ्यो विधास्यन्ते ये प्रत्ययास्ते 'सास्य देवता' इत्येतस्मिन्नर्थे भवन्ति, तदा च देवताप्रकृतिरविशेषिता स्यात् । एवञ्च देवतामात्रवाचिनः प्रातिपदिकादविशेषेण प्रत्ययाः प्रसज्येरन् । अथ देवताप्रकृतिभिः कालग्रहणं सम्बध्यते ? भवे ये विधास्यन्ते ते प्रत्ययाः कालेभ्यो देवताभ्यः प्रसज्येरन् । अथाप्युभयेषां सन्निधानाद् विशेष्यभेदेन वाक्यभेदाच्च प्रत्ययैः प्रकृतिभिश्च सम्बध्यते—कालेभ्यो भवेऽर्थे विधास्यन्ते ये प्रत्ययास्ते कालेभ्यो देवताभ्यो भवन्तीति ? एवमपि यः कश्चित् कालप्रकृतिः प्रत्ययो यतः कुतश्चित् कालाद्देवतायाः स्यात्, ऋतुभ्योऽण् मुहूर्तादिभ्योऽपि[1] स्यात् । वतौ तु सति तस्य सादृश्यविधानात् सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया भवार्थे विधास्यन्ते, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न भवत्यनिष्टप्रसङ्गः । **वासन्त** इति । सन्धिवेलादिसूत्रेणाण् । **प्रावृषेण्य इति** । 'प्रावृष एण्यः' ॥ ३४ ॥

**महाराजप्रोष्ठपदाट् ठञ्** ॥ ३५ ॥

**पदमञ्जरी**

प्रत्यया विधास्यन्ते ते 'सास्य देवता' इत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात्, ततश्च 'कालाट्ठञ्' इति ठञिन्द्रादेरपि प्राप्नोति । अथ पुनरेवं सम्बन्धः—भवे ये प्रत्यया विधास्यन्ते ते भवन्ति कालेभ्यो देवताभ्य इति ? एवमपि भवप्रत्यया न विशेषिताः स्युः, ततश्च 'दिगादिभ्यो यत्' इति यत् प्रत्ययोऽपि भवे विहितः कालवाचिभ्योऽस्मिन्नर्थे प्राप्नोति । अथाप्येवं सम्बन्धः—कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति तत्र सकृत् श्रुतस्य तस्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद् दुर्लभः । अथापि लभ्येत, एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योऽण् मुहूर्त्तादेरपि प्राप्नोति । वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेऽर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टम् ॥ ३४ ॥

**महाराजप्रोष्ठपदाट्ठञ्** ॥ महाराजो वैश्रवणः, प्रोष्ठपदशब्दात्पूर्वेण नक्षत्राणि प्राप्ते वचनम्, नवयज्ञ

**भावबोधिनी**

मास = ठक् ठ = इक, आदिवृद्धि मास में होने वाला । यहाँ 'कालाट्ठञ्' से ठञ् हुआ है ।] सांवत्सरिकम् । [संवत्सरे भवम् । ठञ् प्रत्यय होता है ।] वासन्तम् [वसन्ते भवम्—'सन्धिवेला से अण् ।] प्रावृषेण्यम् [प्रावृषि भवम् ।' प्रावृषेण्यः' से एण्य प्रत्यय होता है ।] इसी प्रकार मास देवता है इसका—इस अर्थ में—मासिकम् अर्धमास देवता है इसका यहाँ—आर्धमासिकम् । वसन्त है देवता इसका यहाँ—वासन्तम् । प्रावृट् है देवता इसका यहाँ— प्रावृषेण्यम् । [इस प्रकार काल अर्थ के समान ही सभी प्रत्यय होने से एक प्रकार के ही रूप बनते हैं ॥ ३४ ॥

'सा अस्य देवता' [वह देवता है इसका]—इस विषय के महाराज और प्रोष्ठपद शब्दों से ठञ् प्रत्यय होता है । उदा०—महाराजः देवता अस्य—इस विग्रह में माहाराजिकम् [महाराज + ठञ्, ठ = इक, आदिवृद्धि ।] प्रौष्ठपदिकम् [प्रोष्ठपद देवता है इसका—इस विग्रह में प्रोष्ठपद + ठञ्, ठ = इक, आदिवृद्धि] ।

---

१. 'देवताभ्योऽपि' इति महीशूरसंस्करणे पाठः ।

★ **ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम्** ★ (म० भा० ४.२.३५ वा० १)। **नवयज्ञोऽस्मिन्वर्तते नावयज्ञिकः कालः। पाकयज्ञिकः॥**

★ **पूर्णमासादण्** ★ (म० भा० ४.२.३५ वा० २)। **पूर्णमासोऽस्यां वर्तते 'पौर्णमासी' तिथिः'** (मै० ५.६.९)॥

## १४६४. पितृव्यमातुलमातामहपितामहाः॥ ३६॥ (१२४२)

**पितृव्यादयो निपात्यन्ते। समर्थविभक्तिः, प्रत्ययः, प्रत्ययार्थोऽनुबन्ध इति सर्वं निपातनाद्विज्ञेयम्।**

★ **पितृमातृभ्यां भ्रातर्यभिधेये व्यत्, डुलच्—इत्येतौ प्रत्ययौ निपात्येते** (म० भा० ४.२.३६ वा० १)। **पितुर्भ्राता—पितृव्यः। मातुर्भ्राता—मातुलः।**

★ **ताभ्यां पितरि डामहच्** ★ (वा० २)। ★ **मातरि षिच्च** (वा० ३) ★। **ताभ्यामेव पितरि डामहच् प्रत्ययो भवति—पितुः पिता पितामहः, मातुः पिता मातामहः। मातरि षिच्च—पितामही, मातामही।**

★ **अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः** ★ (म० भा० ४.२.३६ वा० ५)। **अवेर्दुग्धम् अविसोढम्।**

**न्यासः**

**पितृव्यमातुलमातामहपितामहाः॥ पितामही, मातामहीति।** 'षिद्गौरादिभ्यश्च' इति ङीष्॥ ३६॥

**पदमञ्जरी**

आग्रयणम्। **पूर्णमासादणिति।** अस्मिन्वर्तत इत्येव। **पौर्णमासीति।** पूर्णो मासोऽस्यां तिथौ वर्तत इति विग्रहः, एषेव च व्युत्पत्तिः 'सास्मिन्पौर्णमासी' इत्यत्रापि दर्शिता॥ ३५॥

**पितृव्यमातुलमातामहपितामहाः॥ पितृमातृभ्यामिति।** स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङोऽभावश्च। **डामहजिति।** कथं तर्ह्याकारेऽवग्रहः—माता + महः, पिता + मह इति? तस्मान्महप्रत्ययः पितृमातृभ्यां निपातितस्तयोश्चानङादेश इति केचित्। **वृत्तिकारस्तु** संहितापाठस्यैव नित्यत्वात् 'न लक्षणेन पदकारा अनुवर्त्याः' इति न्यायेनावग्रहो मा कारीति मन्यते। **मातरि षिच्चेति।** षित्वमुपसङ्ख्येयमित्यर्थः। न पुनः षकारोऽनुबन्धः कर्तव्य इति देशाभावात्—मातामहा इत्यपि मन्त्रे दृश्यते।

**अवेर्दुग्ध इति।** दुग्धं क्षीरम्। सोढादीनाम् 'आदेशप्रत्यययोः' इति षत्वं न भवति, सकारोच्चारणसामर्थ्यात्।

**भावबोधिनी**

★ ठञ् प्रत्यय के प्रकरण में 'तत् अस्मिन् वर्तते' [वर है इसमें]—इस अर्थ में नवयज्ञ आदि शब्दों से ठञ् करना चाहिये।★ उदा०—नवयज्ञः वर्तते अस्मिन् [नवयज्ञ हो रहा है इस काल में वह]—नावयाज्ञिकः कालः [नवयज्ञ + ठञ्, ठ = इक, आदिवृद्धि] ★ पूर्णमास शब्द से अण् होता है ★ पूर्णमासः वर्तते अस्यां तिथौ सा [पूरा महीना हो रहा है इस तिथि में वह]—पौर्णमासी तिथिः [पूर्णमास + अण्, आदिवृद्धि, भसंज्ञा, अलोप]॥ ३५॥

पितृव्य आदि शब्द निपातन से सिद्ध होते हैं। समर्थविभक्ति, प्रत्यय, प्रत्ययार्थ और अनुबन्ध—ये सभी निपातन से समझने चाहिये। ★ भाई अर्थ वाच्य रहने पर पितृ शब्द से व्यत् और मातृ शब्द से डुलच् इन दो प्रत्ययों का निपातन किया जाता।★ उदा०—पितुर्भ्राता—पितृव्यः [चाचा। पितृ + व्यत् = व्य]। मातुः भ्राताः—मातुलः [मामा। मातृ + डुलच् = डल, डित् होने के कारण टि का लोप]। ★ मातृ और पितृ शब्दों से, पिता अर्थ वाच्य रहने पर, डामहच् प्रत्यय होता है। ★ माता अर्थ में होने वाला प्रत्यय षित् होता है। ★ पितुः पिता—पितामहः [बाबा, पितृ + डामहच् = आमह, टि का लोप। मातृ + डामहच् = आमह, टिलोप]—मातामहः। [नाना]। माता अर्थ में डामहच् षित् हो जाता है—पितामही, मातामही [पितृ + डामहच् = आमह, टिलोप, षित् होने के कारण 'षित् गौरादिभ्यश्च' से ङीष् होने पर पितामही = दादी। मातृ + डामहच् = आमह, टिलोप, षित् होने से ङीष्—मातामही = नानी] ★ अवि शब्द से दुग्ध अर्थ में सोढ, दूस और मरीसच् प्रत्यय होते हैं। ★ अवि का दूध—इस अर्थ में—अविसोढम्, अविदूसम्, अवि-मरीसम्।

**अविदूसम् । अविमरीसम्** (म० भा०) ॥

**तिलान्निष्फलात्पिञ्जपेजौ प्रत्ययौ वक्तव्यौ** * (वा० ६) । **निष्फलस्तिलः तिलपिञ्जः । तिलपेजः ।**
* **पिञ्जश्छन्दसि डिच्च** * (वा० ७) । **तिल्पिञ्जः दण्डेनं नडम्** (अथर्व० १२.२.५४) ॥

## १४६५. तस्य समूहः ॥ ३७ ॥ (१२४३)

**'तस्य' इति षष्ठीसमर्थात् 'समूहः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । किमिहोदाहरणम् ? चित्तवदाद्युदात्तमगोत्रं यस्य च नान्यत्प्रतिपदं ग्रहणम् । अचित्ताट्ठक्** (४.२.४७) **वक्ष्यति—'अनुदात्तादेरञ्'** (४.२.४४), **'गोत्राद् वुञ्'** (४.२.३९) **प्रतिपदं च 'केदाराद्यञ्च'**(४.२.४०) **इत्येवमादि, तत्परिहारणात्रोदाहरणं द्रष्टव्यम् । काकानां समूहः काकम् । शौकम्**[१] **। बाकम् । बालाकम्) 'इनित्रकट्यचश्च'** (४.२.५१)**इति यावत्समूहाधिकारः ॥**

* **गुणादिभ्यो ग्रामज्वक्तव्यः**[२] * **। गुणग्रामः । करणग्रामः । गुण । करण । तत्त्व । शब्द । इन्द्रिय । आकृतिगणः ॥**

**न्यासः**

**तस्य समूहः ॥ काकम्**[3]**, शौकम्, वाकमिति ।** काकशुकवकशब्दा आद्युदात्ताः । 'प्राणिनां कुपूर्वाणाम्' इत्यनेन । अस्यायमर्थः—प्राणिविशेषवाचिनां शब्दानां य आदिभूताः कवर्गात् पूर्वे तेषामुदात्तो भवतीति ॥ ३७ ॥

**पदमञ्जरी**

**निष्फलस्तिल इति ।** सस्यावस्थायां फलरहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ॥ ३६ ॥

**तस्य समूहः ॥** सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति—**किमिहोदाहरणमिति ।** काकशुकवकशब्दा आद्युदात्ताः 'प्राणिनां कुपूर्वाणाम्' (फि० सू० २. ३०) इत्यनेन, अस्यार्थः—व्यधिकरणे षष्ठ्यौ, अथादिः प्राक् शकटेरित्यत आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणम्यते, प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति । तत्र शौकमित्यनुदाहरणम्; खण्डिकादिषु पाठात् । वकशब्दस्तूदाहार्यः ॥ ३७ ॥

**भावबोधिनी**

* निष्फल = फलरहित या प्रयोजनशून्य तिल शब्द से पिञ्ज और पेज ये दो प्रत्यय होते हैं । * निष्फलः तिलः—तिलपिञ्जः, तिलपेजः । * वेद में पिञ्ज प्रत्यय डित् समझना चाहिये । * निष्फलः तिलः—तिल्पिञ्जः [तिल + पिञ्ज, डित् होने से टि = अलोप करने पर हलन्त रह जाता है] ॥ ३६ ॥

'यस्य' [उसका] इस षष्ठीसमर्थ से समूहः' इस अर्थ में यथाविहित प्रत्यय होते हैं । यह कौन उदाहरण है ? चित्तवान्, आद्युदात्त, अगोत्र और जिसका प्रतिपद ग्रहण नहीं होता है । 'अचित्तवाची से ठक् कहा जायगा', 'अनुदात्तादि से अञ्', गोत्रवाची से वुञ्' और प्रतिपद = पदविशेष का उच्चारण करके—'केदार से यञ् होता है' आदि; इनको छोड़कर अन्य को यहाँ उदाहरण समझना चाहिये । उदा०—काकानां समूहः—काकम् [काक + अण् = अ] शौकम् [शुकानां समूहः—शुक + अण्, आदिवृद्धि] । बाकम् [बकानां समूहः । बक + अण्, आदिवृद्धि] 'इनित्र कट्यचश्च' इस सूत्र तक 'समूहः' का अधिकार है । * गुण आदि से ग्रामच् प्रत्यय होता है । * गुणानां समूहः—गुणग्रामः [गुण + ग्रामच्, च् की इत्सञ्ज्ञा लोप । गुणों का समूह] करणग्रामः [करणानां समूहः—इस अर्थ में ग्रामच् प्रत्यय होता है ।] गुण । करण । तत्त्व । शब्द । इन्द्रिय । [ये शब्द गुणादिगण में हैं ।] आकृतिगण है । [अतः अन्य शब्दों का भी समावेश कर लेना चाहिये] ॥ ३७ ॥

---

१. वस्तुस्त्वत्र 'खण्डिकादिभ्यश्च' इत्यञेव भवतीति नेदमुदाहरणम् । न्यासानुसार्येवात्रास्माभिस्त्विदं स्थापितमिति ध्येयम् । अधिकोऽयं पाठः क्वचित् पुस्तकेषु ।

२. गुणादिभ्य इत्यारभ्याकृतिगण इत्यन्तः पाठो बहुषु पुस्तकेषु नास्ति ।

३. कौकमिति महीशूरपुस्तके पाठः ।

## १४६६. भिक्षादिभ्योऽण् ॥ ३८ ॥ (१२४४)

**'भिक्षा' इत्येवमादिभ्यः शब्देभ्योऽण् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। अण्ग्रहणं बाधकबाधनार्थम्। भिक्षाणां समूहो भैक्षम्। गार्भिणम्। युवतिशब्दोऽत्र पठ्यते, तस्य ग्रहणसामर्थ्याद् पुंवद्भावो न भवति—'भस्याऽढे तद्धिते'** (६.३.३५) (वा० ७३१) **इति। युवतीनां समूहो यौवतम्।**

**भिक्षा। गर्भिणी। क्षेत्र। करीष। अङ्गार। चर्मिन्[1]। धर्मिन्[1]। सहस्र। युवति। पदाति। पद्धति। अथर्वन्[2]। दक्षिणा। भूत[3] ॥**

**न्यासः**

**भिक्षादिभ्योऽण् ॥** अथाण्ग्रहणं किमर्थम्, न भिक्षादिभ्यो यथाविहितमेवोच्येत? इत्यत आह— **अण्ग्रहणमित्यादि।** भिक्षाशब्दोऽयम् 'गुरोश्च हलः' इत्यकारप्रत्ययान्तत्वादन्तोदात्तः। तत्र 'अनुदात्तादेरञ्' इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राण् स्यात् पुनर्वचनमनर्थकं स्यात्? नैतदस्ति; परत्वादचित्तलक्षणष्ठक् प्राप्नोति, अतस्तद्बाधनार्थं पुनर्वचनं स्यात्। अञ्प्रत्ययस्तु स्यादेव, अण्ग्रहणात् पुनरणेवेति न भवत्येष दोषः। **गार्भिणमिति।** गर्भिणीनां समूहो 'भस्याऽढे तद्धिते'। 'सिद्धत्वात्[4] प्रत्ययविधौ' इति पुंवद्भावेन स्त्रीप्रत्ययनिवृत्तिः, ततोऽण्, तस्मिन् 'नस्तद्धिते' इति टिलोपः प्राप्तः, 'इनण्यनपत्ये' इति प्रकृतिभावान्न भवति। **तस्य ग्रहणेति।** युवतिशब्दस्य यदि पुंवद्भावो न भवति, तदा तस्य प्रत्ययान्तत्वाद् 'अनुदात्तादेः' इत्यञि प्राप्ते तद्बाधनार्थमिहाण्ग्रहणमर्थवद्भवति। यदि पुंवद्भावः स्यात् तदा तदनर्थकं स्यात्। तथा हि—'सिद्धश्च प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते बुद्धिस्थे पुंवद्भावेन भवितव्यम्। युवशब्दस्य 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वम्। तत्र यदि पुंवद्भावः

**पदमञ्जरी**

**भिक्षादिभ्योऽण् ॥ अण्ग्रहणं बाधकबाधनार्थमिति।** भिक्षाशब्दोऽयम् 'गुरोश्च हलः' इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततः 'अनुदात्तादेः' इत्यञ् अणो बाधकः प्राप्नोति, तस्य बाधनार्थमण्ग्रहणम्। ननु च यद्यत्राञ् स्यात्पुनर्वचनमनर्थकं स्यात्? नानर्थकम्; परत्वादचि तत्तल्लक्षणष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरण्ग्रहणादणेव भवति। **गार्भिणमिति।** 'भस्याऽढे तद्धिते' (वा० ७३१) इति पुंवद्भावेन ङीपो निवृत्तिः, ततोऽणि 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपाभावः। **तस्य ग्रहणसामर्थ्यात् पुंवद्भावो न भवतीति।** यदि स्यात्, 'सिद्धत्वात्प्रत्ययविधौ' इति वचनादनुत्पन्न एव तद्धिते पुंवद्भावेन भवितव्यम्। युवशब्दश्च 'कनिन्युवृष' (द० उ० ६.५१) इति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिक एवाण् सिद्ध इति तस्येह

**भावबोधिनी**

'तस्य समूहः' [उसका समूह] इस विषय में 'भिक्षा' आदि शब्दों से अण् प्रत्यय होता है। अण् का ग्रहण बाधक का बाध करने के लिये है। उदा०—भिक्षाणां समूहः—भैक्षम् [भिक्षाओं का समूह। भिक्षा + अण्, आदिवृद्धि, भसंज्ञा, आलोप] गार्भिणम् [गर्भिणीनां समूहः इस अर्थ में गर्भिणी + अण्, भसंज्ञा, पुंवद्भाव, अलोप, आदिवृद्धि] इस गण में 'युवति' शब्द से पढ़ा गया है, उसके ग्रहण सामर्थ्य से पुंवद्भाव नहीं होता है—'भस्याढे तद्धिते'। युवतीनां समूहः—यौवतम् [युवति + अण् आदिवृद्धि, भसंज्ञा, ईलोप। युवतियों का समूह।] [इस गण में पठित शब्द]—भिक्षा। गर्भिणी क्षेत्र। करीष। अङ्गार। चर्मिन्। धर्मिन्। सहस्र। युवति। पदाति। पद्धति। अथर्वन्। दक्षिणा। भूत ॥ ३८ ॥

---

१. 'चर्मन्, धर्मन्'—इति वा पाठः।  २. 'अर्चन्'—इति वा पाठः।

३. विषय। श्रोत्र। * वृक्षादिभ्यः खण्डः *। वृक्षखण्डः। तरुखण्डः। वृक्ष। तरु। पादप—इत्यधिकमत्र पुस्तकद्वये। तत्रैकस्मिन् पुस्तके 'वृक्षादिभ्यः षण्डप्रत्ययो भवति। वृक्षषण्डः, तरुषण्डः'—इति वा पाठः।

४. सम्प्रति भाष्यसंस्करणे तु 'सिद्धश्च' इति पाठ उपलभ्यते।

**१४६७. गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥३९॥ (१२४६)**

**गोत्रादिभ्यो वुञ्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतेऽपत्यमात्रं न तु पौत्रप्रभृत्येव । औपगवानां समूहः औपगवकम् । कापटवकम्** (म० भा०) **। उक्षन्—औक्षकम् । उष्ट्र—औष्ट्रकम् । उरभ्र—औरभ्रकम् । राजन्—राजकम् । राजन्य—राजन्यकम् । राजपुत्र—राजपुत्रकम् । वत्स—वात्सकम् । मनुष्य—मानुष्यकम् । अज—आजकम् । 'प्रकृत्याऽके राजन्यमनुष्ययुवानः'** (७.१.१ वा०) **इति यलोपो न भवति—'आपत्यस्य च तद्धितेऽनाति'** (६.४.१५१) **इति ।**

*** वृद्धाच्चेति वक्तव्यम् *** (४.२.३९ वा० १) **। वृद्धानां समूहो वार्द्धकम् ॥**

**न्यासः**

स्यादुत्सर्गलक्षणेनैवाण् सिद्ध इतीह ग्रहणमनर्थकं स्यात् । तस्माद् मा भूदस्यानर्थक्यमिति तस्य ग्रहणसामर्थ्यादिव पुंवद्भावो न भवति, तेन यौवतमिति सिद्धं भवति ॥ ३८ ॥

**गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति ।** यद्येवम्, गोत्रग्रहणेनैतस्य सिद्धत्वाद् राजन्यमनुष्ययोरुपादानमनर्थकम् ? नैतदस्ति; न हि तौ गोत्र-प्रत्ययान्तौ, जातेः प्रत्ययार्थत्वात् । यद्येवम्, लोपस्य प्राप्तिरेव नास्ति, तत्र यदुक्तम्—'प्रकृत्याके राजन्यमनुष्य-युवानः' इति यलोपो न भवतीति, तदनर्थकं स्यात् ? एतत् पुनरेकीयमतमाश्रित्योक्तम् । केचिदाचार्या राजन्य-मनुष्ययोरपत्यप्रत्ययान्तत्वमिच्छन्ति अतस्तन्मतमाश्रित्यैतदुक्तमित्यदोषः, तन्मतेन तर्हि राजन्यमनुष्ययोर्ग्रहण-मनर्थकं स्यात् ? ज्ञापनार्थत्वात् । तेनैतद् ज्ञाप्यते—राजन्यमनुष्ययोर्यकारस्य किञ्चिदपत्याश्रितं कार्यं न भवतीति । किं पुनस्तत् ? आपत्यव्यपदेशम् । तेन राजन्यकम्, मानुष्यकमिति—अत्रापि 'आपत्यस्य च तद्धितेऽनाति' इति यलोपो न भवतीति । तथा सूत्रोपात्त एव राजन्यमनुष्ययोः प्रकृतिभावः 'प्रकृत्याके राजन्यमनुष्ययुवानः' इत्यनेनाख्यायत् इति वेदितव्यम् ।

**वृद्धाच्चेति वक्तव्यमिति ।** वृद्धशब्दाद् वुञ् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—इह पुनरुत्तरसूत्राच्चकारोऽनुवर्तते सिंहावलोकितन्यायेन, स चानुक्तसमुच्चयार्थः, तेन वृद्धशब्दाद् वुञ् भवतीति । योगश्चायं यथायोगमणञोरपवादः ॥ ३९ ॥

**पदमञ्जरी**

पाठोऽनर्थकः स्यात् । **यौवतमिति ।** यथा तु वार्त्तिकं तथा पुंवद्भाव इष्यते । आह हि—'भिक्षादिषु युवति-ग्रहणानार्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधौ' इति ॥ ३८ ॥

**गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ अपत्याधिकारादन्यत्रेति ।** यद्येवम्, राजन्यमनुष्ययोरुपादानमनर्थकम्, गोत्र इत्येवसिद्धम् । न तावपत्यप्रत्ययान्तौ; जातेः प्रत्ययार्थत्वात् । उक्तं हि—

**भावबोधिनी**

'तस्य समूहः' [उसका समूह]—इसके विषय में गोत्र आदि शब्दों से वुञ् प्रत्यय नहीं होता हैं । अपत्याधिकार से भिन्न स्थल पर अपत्यमात्र लौकिक गोत्र का ग्रहण होता है न कि पौत्रप्रभृति शास्त्रीय गोत्र का । उदा०—औपगवानां समूहः—औपगवकम् [औपगव + वुञ्, 'वु' का 'युवोरनाकौ' से 'अक' आदेश] । कापटवकम् [कापटवों का समूह] । औक्षकम् [उक्षों का समूह । उक्षन् + वुञ्] । उष्ट्रकम् । [ऊँटों का समूह] और भ्रम् [उरभ्रों का समूह] । राजकम् [राजाओं का समूह] । राजन्यकम् [राजन्यों का समूह] । राजपुत्रकम् [राजपुत्रों का समूह] । वात्सकम् [वत्सों का समूह] । मानुष्यकम् [मनुष्यों का समूह] । आजकम् [अजों = बकरों का समूह] । अक परे रहते राजन्य, मनुष्य और युवन् का प्रकृतिवद्भाव हो जाता है ।' इसके कारण 'आपत्यस्य च तद्धितेऽनाति' से य् का लोप नहीं होता है ।

* वृद्ध शब्द से भी वुञ् कहना चाहिये । * वृद्धानां समूहः—वार्द्धकम् [वृद्ध + वुञ्, वु = अक, आदिवृद्धि, रपर] ॥ ३९ ॥

**१४६८. केदाराद्यञ्च ॥ ४० ॥ (१२४८)**

**केदारशब्दाद् यञ्प्रत्ययो भवति, चकाराद् वुञ् च, 'तस्य समूहः' इत्येतस्मिन्विषये। अचित्त-लक्षणस्य ठकः** (४.२.४७) **अपवादः। केदाराणां समूहः कैदार्यम्। कैदारकम्।**

*** गणिकायाश्च यञ्वक्तव्यः *** (म० भा० ४.२.४० वा० १) **गणिकानां समूहो गाणिक्यम् ॥**

**१४६९. ठञ् कवचिनश्च ॥ ४१ ॥ (१२४९)**

**कवचिन्शब्दाट्ठञ् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। कवचिनां समूहः कावचिकम्। चकारः केदारादित्यस्यानुकर्षणार्थः—केदाराणां समूहः कैदारिकम् ॥**

**१४७०. ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥ (१२५०)**

**ब्राह्मणादिभ्यः शब्देभ्यो यन्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। नकारः स्वरार्थः। ब्राह्मणानां समूहः ब्राह्मण्यम्। माणव्यम्। वाडव्यम्।**

**न्यासः**

**केदाराद् यञ्च ॥ गणिकायाश्च यञ् वक्तव्यः।** वक्तव्यो व्याख्येय इत्यर्थः तत्रेदं व्याख्यानम्—इहाप्युत्तरसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन गणिकाशब्दादपि यञ् भवतीति, वुञ् न भवतीति; अनभिधानात् ॥ ४० ॥

**ठञ् कवचिनश्च।** कवचिञ्शब्दो मत्वर्थीयेनिप्रत्ययान्तः, प्रत्ययस्वरेणान्तोदात्तः तस्मादनुदात्तादिलक्षणेऽञि प्राप्ते वचनम् ॥ ४१ ॥

**ब्राह्मणमाणववाडवाद् यन् ॥ पृष्ठादुपसंख्यानमिति।** पृष्ठशब्दाद् यन्प्रत्ययस्योपसंख्यानम् = व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेन पृष्ठशब्दादपि

**पदमञ्जरी**

'राज्ञोऽपत्ये जातिग्रहण०, (वा० ३९२) मनोर्जातावञ्यतौ षुक्चेति। किं तर्ह्युच्यते 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' (वा० ८१४) इति यलोपो न भवतीति, यावताऽनापत्ययकारत्वेनैव न भविष्यति? सत्यम्; अपत्यार्थत्वमभ्युपेत्यैतदुच्यते। यद्यपत्यार्थत्वमभ्युपेयते, राजन्यमनुष्ययोर्ग्रहणमनर्थकम्? नानर्थकम्; ज्ञापनार्थत्वात्, एतज् ज्ञापयति—नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति न वक्तव्यम्। **औपगवकमिति।** यथात्र परोऽप्यनुदात्तादेरञ् न भवति. तथा 'खण्डिकादिभ्यश्च' इत्यत्र वक्ष्यते ॥ ३९ ॥ ४० ॥४१॥

**ब्राह्मणमाणववाडवाद्यन् ॥ नकारः स्वरार्थ इति।** 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वं यथा स्यात्। किमर्थं पुनर्ब्राह्मणादिभ्यो यन्विधीयते, न प्रकृतो यञेव विधीयते, न हि वृद्धेषु यञो यनो वा विशेषोऽस्ति—तदेव

**भावबोधिनी**

'तस्य समूहः' इस विषय में केदार शब्द से यञ् प्रत्यय और चकार के बल से वुञ् प्रत्यय होते हैं। अचित्त-वाले को मानकर प्राप्त होने वाले ठक् का अपवाद है। उदा०—केदाराणां समूहः—कैदार्यम्, कैदारकम् [केदार + यञ्, आदिवृद्धि, भसंज्ञा, अलोप, केदार + वुञ्, वु का अक, आदिवृद्धि] ★ गणिका शब्द से यञ् प्रत्यय कहना चाहिये। ★ गणिकानां समूहः—गाणिक्यम् [गणिका + यञ्, भसंज्ञा, आलोप, आदिवृद्धि] ॥ ४० ॥

'तस्य समूहः' [उसका समूह इस अर्थ में 'कवचिन्' शब्द से ठञ् प्रत्यय है। उदा०—कवचिनां समूहः—कावचिकम् [कवच + ठञ्, ठ का इक, आदिवृद्धि।] 'केदारात्' इसका अनुकर्षण करने के लिये चकार है—केदाराणां समूहः—कैदारिकम्। [केदार + ठञ्, आदिवृद्धि, ठ का इक, क्यारियों का समूह] ॥४१॥

'तस्य समूहः' [उसका समूह]—इस विषय में ब्राह्मण आदि शब्दों से यन् प्रत्यय होता है। नकार [आद्युदात्त] स्वर के लिये है। उदा०—ब्राह्मणानां समूहः—ब्राह्मण्यम् [ब्राह्मण + यन् = य, भसंज्ञा, अलोप] माणव्यम् [माणवानां

*** यन्प्रकरणे पृष्ठादुपसंख्यानम् *** (म० भा० ४.२.४२ वा० १) **। पृष्ठानां समूहः पृष्ठ्यः षडहः** (ऐ० ब्रा०) **।**
*** अह्नः खः क्रतौ *** (वा० २, ३) **। अह्नां समूहः अहीनः क्रतुः** (काठ० सं० २४.१०) **।**
**क्रताविति किम् ? आह्नः । खण्डिकादिषु दर्शनादञ्भवति ।**
*** पर्श्वा णस्वक्तव्यः *** (वा० ४) **। पर्शूनां समूहः पार्श्वम् । पदसंज्ञकत्वाद् गुणो न भवति ।**
*** वातादूलः[1] * ( ? ) । वातानां समूहो वातूलः[1] ॥**

## १४७१. ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४३ ॥ (१२५१)

**ग्रामादिभ्यस्तल्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये । ग्रामाणां समूहः ग्रामता । जनता । बन्धुता । सहायता ।**

### न्यासः

भविष्यतीति । **अहीन इति ।** 'अह्नष्टखोरेव' टिलोपः । **आह्न इति ।** 'अल्लोपोऽनः' इत्यकारलोपः । ननु चाचित्त-लक्षणेन ठका भवितव्यम्, तत् कथमाह्न इति भवति ? इत्याह—**खण्डिकादिष्वित्यादि ।**

**णस् वक्तव्य इति ।** सकारः 'सिति च' इति विशेषणार्थः । तेन पार्श्वमित्यत्र भत्वाभावात् 'ओर्गुणः' न भवति ॥ ४२ ॥

**ग्रामजनबन्धुसहायेभ्यस्तल् ।** ग्रामशब्दादचित्तलक्षणे ठकि प्राप्ते । जनशब्दो ञित्स्वरेणाद्युदात्तः; घञन्तत्वात् । यथा बन्धुशब्दोऽपि नित्स्वरेणाद्युदात्त एव । तथा हि स 'धान्ये नित्' इति वर्त्तमाने 'शृस्वृस्निहित्र्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्यनेन व्युत्पादित उप्रत्ययान्तः । आद्युदात्तत्वादणि प्राप्ते सहायशब्दोऽपि 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः । तत्र अनुदात्तादेरञि प्राप्ते तलो विधानम् ।

### पदमञ्जरी

रूपम्, स एव स्वरः, ठञस्त्वस्वरितत्वादननुवृत्तिः ? ज्ञापनार्थं तु । एतज् ज्ञापयति—अन्येभ्यऽप्ययम् । किं सिद्धं भवति ? पृष्ठादुपसङ्ख्यानं चोदयिष्यति तन्न वक्तव्यं भवति ।

**पृष्ठानां समूह इति ।** पृष्ठशब्दः स्तुतिविशेषवचनः । **पृष्ठ्यः षडह इति ।** तद्वति तदुपचारः ।

**णस्वक्तव्य इति ।** सकारः पदसञ्ज्ञार्थः, तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति ॥ ४२ ॥ ४३ ॥

### भावबोधिनी

समूहः—इस अर्थ में माणव + यन्] वाडवानां समूहः—वाडव्यम् [वाडवानल का समूह] ।* यन् प्रत्यय के प्रकरण में 'पृष्ठ' शब्द उपसंख्यान करना चाहिये ।* पृष्ठानां समूहः—पृष्ठ्यः षडहः [पृष्ठ + यन्, भसंज्ञा, अलोप । एक विशेषप्रकार की स्तुति को पृष्ठ कहते हैं !] *अहन् शब्द से क्रतु अर्थ में 'ख' प्रत्यय होता है ।* अह्नां समूहः—अहीनः क्रतुः [अहन् + ख = ईन, 'अह्नष्टखोरेव' से टि = अन् का लोप—अह् + ईन = अहीनः । क्रतु अर्थ में—इसका क्या फल है ? आह्नः [अहन् + अञ्, आदिवृद्धि, उपधालोप] खण्डिकादिगण (४।२।४५) में होने से अञ् प्रत्यय होता है । * पर्शू शब्द से णस् कहना चाहिये ।* पर्शूनां समूहः—पार्श्वम् [पर्शू + णस् = अ, आदिवृद्धि स् की इत्संज्ञा होने से 'सिति च' से भसंज्ञा का निषेध और पदसंज्ञा हो जाने से उकार गुण न होकर यण् होता है ।] पद संज्ञक होने से गुण नहीं होता है । * वात शब्द से अल् प्रत्यय होता है ।* वातानां समूहः—वातूलः [वात + ऊल, भसंज्ञा, अलोप] ॥४२॥

'तस्य समूहः' [उसका समूह] इस विषय में 'ग्राम' आदि शब्दों से तल् प्रत्यय होता है । उदा०—ग्रामाणां समूहः—ग्रामता । [ग्राम + तल् = त, तलन्त स्त्रीलिङ्ग होता है । अतः टाप् करके ग्रामता आदि रूप बनते हैं ।

---

१-१. अयं पाठो बहुत्र नास्ति ।

*** गजाच्चेति वक्तव्यम् ( म० भा० ४.२.४४ वा० )। गजानां समूहो गजता ॥**

## १४७२. अनुदात्तादेरञ् ॥ ४४ ॥ ( १२५३ )

**अनुदात्तादेः शब्दादञ्प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। कपोतानां समूहः कापोतम्। मायूरम्। तैत्तिरम् ॥**

## १४७३. खण्डिकादिभ्यश्च ॥ ४५ ॥ ( १२५४ )

**'खण्डिका' इत्येवमादिभ्यः शब्देभ्योऽञ् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। आद्युदात्तार्थमचित्तार्थं च वचनम्। खण्डिकानां समूहः खाण्डिकम्। वाडवम्। क्षुद्रकमालवशब्दोऽत्र पठ्यते। क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः। ततः पूर्वेणैवाञि सिद्धे वचनं गोत्रवुञ्—( ४.२.३९ ) बाधनार्थम्।**

### न्यासः

**गजाच्चेति वक्तव्यमिति।** गजशब्दात् तल् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं चेह चकारस्यानुवृत्तिमाश्रित्य कर्त्तव्यम् । ४३ ॥

**अनुदात्तादेरञ् ॥ कापोतम्, मायूरमिति।** कपोतमयूरशब्दौ 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तौ। **तैत्तिरमिति।** तित्तिरिशब्दः 'इगुपधात् किद्' इति कित्प्रत्ययान्तः। तरतेः सन्वत्तुक् चाभ्यासस्येति प्रत्ययस्वरेणान्तोदात्तः। ननु च सन्वद्भावादाद्युदात्तः प्राप्नोति ? 'उणादयो बहुलम्' इति बहुलवचनात् स्वरे सन्वद्भावो न भविष्यतीत्यदोषः ॥ ४४ ॥

**खण्डिकादिभ्यश्च ॥ आद्युदात्तार्थमचित्तार्थञ्च वचनमिति।** असत्येतस्मिन्नाद्युदात्तेभ्योऽण् स्यात्, अचित्तेभ्योऽचित्तलक्षणष्ठक् प्रसज्येत। **क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्व इति।** क्षुद्रकस्यापत्यानि बहूनि 'जनपदशब्दात् क्षत्रियादञ्', मालवस्यापत्यानि बहूनि। 'वृद्धेत्कोशलाजादाञ् ञ्यङ्'। तयोः 'तद्राजस्य' इति बहुषु लुक्, पश्चाद् द्वन्द्वः। **ततः पूर्वेणाञि सिद्ध इति।** समासान्तोदात्तत्वे कृते द्वन्द्वसमासस्यानुदात्तादित्वात्। **वचनं गोत्रवुञो बाधनार्थम्।** 'गोत्रोक्षोष्ट्रोरभ्र' इत्यादिना गोत्रलक्षणो वुञ् प्राप्नोति, तद्बाधनार्थं क्षुद्रकमालवकस्येह गणे पाठः।

### पदमञ्जरी

**अनुदात्तादेरञ् ॥ [अचित्तात्परत्वाद् ठका भवितव्यमिति।]** चित्तवन्त उदाहृताः, कपोतमयूरशब्दौ 'लघावन्ते' ( फि० सू० २-४२ ) इति मध्योदात्तौ, इगुपधात्कः, तरतेः सन्वत्तुक् चाभ्यासस्येति किप्रत्ययान्तस्तित्तिरिशब्दः प्रत्ययस्वरेणान्तोदात्तः। सन्वद्भावेनाद्युदात्तत्वं न भवति; 'उणादयो बहुलम्' इति बहुलवचनात् ॥४४॥

**खण्डिकादिभ्यश्च ॥ क्षुद्रकाश्चेति।** क्षुद्रकस्यापत्यानि, जनपदशब्दादिति विहितस्य तद्राजस्य लुक्, मालवात्तु वृद्धलक्षणस्य ञ्यङः। **पूर्वेणाञि सिद्धे इति।** समासान्तोदात्तत्वे सति शेषनिघातेनानुदात्तादित्वात्।

### भावबोधिनी

जनता [ जनानां समूहः ]। बन्धुता [ बन्धूनां समूहः ]। सहायता [ सहायानां समूहः ]।

* गज शब्द से भी कहना चाहिये। * गजानां समूहः-गजता [ हाथियों का समूह ] ॥ ४३ ॥

'तस्य समूहः' [ उसका समूह ]-इस विषय में अनुदात्तादि [ जिसके आदि में अनुदात्त स्वर है उस ] से अञ् प्रत्यय होता है। उदा० कपोतानां समूहः—कापोतम् [ कपोत + अञ्, आदिवृद्धि। अन्तोदात्त होने से आदि अनुदात्त हो जाता है। ] मायूरम् [ मयूराणां समूहः —मायूरम् ]। तैत्तिरम् [ तित्तीराणां समूहः, अञ्, आदिवृद्धि। कबूतरों का समूह, मोरों का समूह, तीतरों का समूह। ] ॥४४॥

'तस्य समूहः' [ उसका समूह ]—इस विषय में खण्डिका आदि शब्दों से अञ् प्रत्यय होता है। आद्युदात्त और अचित्तवान् से प्रत्यय करने के लिये यह सूत्र है। उदा० खण्डिकानां समूहः—खाण्डिकम्। [ खण्डिका + अञ्, आदिवृद्धि, भसंज्ञा, आलोप। मटर का ढेर ]। वाडवम् [वडवानां समूहः, वडवा + अञ् आदिवृद्धि, भसंज्ञा, आलोप। घोड़ियों का समूह]।

**ननु च परत्वादञा वुञ् बाधिष्यते, न च गोत्रसमुदायो गोत्रम्, न च तदन्तविधिरत्रास्ति (म० भा०) ? एवं तर्हि एतज् ज्ञापयति—वुञि पूर्वविप्रतिषेधः, सामूहिकेषु च तदन्तविधिरस्तीति ( म० भा० )। प्रयोजनम्—औपगवकं कापटवकमिति वुञ् भवति, वानहस्तिकं गौधेनुकमिति च तदन्तविधिः।**

**'क्षुद्रकमालवात्' इत्येतावता योगविभागेन पूर्वविप्रतिषेधस्तदन्तविधिश्च ज्ञापितः, पुनरस्यैव नियमार्थ-**

**न्यासः**

**ननु चेत्यादि**। परत्वादेवाञ् वुञं बाधिष्यत इत्यतो नार्थो वुञो बाधनार्थेनानेन वचनेनेति भावः। एतच्च गोत्रत्वमभ्युपेत्योक्तम्। इदानीं गोत्रत्वमेव न भवतीति दर्शयितुमाह—**न चेत्यादि**। गोत्रसमुच्चयोऽयम्। **न च गोत्रसमुदायो** गोत्रग्रहणेन गृह्यते, यथा जनपदसमुदायो न जनपदग्रहणेन। तथा च काशयश्च कोशलाश्च काशि-कोशलाः, तेषु भवाः काशिकोशलीयाः। जनपदत्वाभावात् 'जनपदवध्योश्च' इति वुञ् न भवति, 'वृद्धाच्छः' एवं तु भवति। स्यादेतत् यद्यपि **गोत्रसमुदायो** गोत्रं न भवति, तदवयवस्तु भवति, क्षुद्रकमालवकशब्दोऽवयवो गोत्रम्, अतस्तदन्तविधिना तदन्ताद् गोत्रसमुदायादपि वुञ् प्राप्नोति ? अत आह—**न चेत्यादि**। न हि सर्वतस्तदन्त-विधिर्भवतीति। तथाहि—'येन विधिस्तदन्तस्य' इत्यत्रोक्तम्—'समासप्रत्ययविधौ प्रतिषेधः', 'उगिद्वर्णग्रहणवर्जम्' इति। प्रत्ययविधिश्चायम्। येषु तत्र च तदन्तविधिरिष्यते ते तत्रैव 'भयाद्यादिग्रहणम्' इत्यादिना परिगणिताः, न चास्य तत्र परिगणनम्। ततो नास्ति तदन्तविधिः। **एवं तर्हीत्यादि**। यदयं क्षुद्रकमालवकग्रहणं करोति वुञ्बाधनार्थम्, तज्ज्ञापयति— वुञि पूर्वविप्रतिषेधो भवति, न परविप्रतिषेधः। **सामूहिकेषु च तदन्तविधिरस्तीति**। किमेतस्य ज्ञापने प्रयोजनमित्याह—**औपगवकम्, कापटवकमिति**। एतद् वुञ् पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनम्।

**पदमञ्जरी**

**ननु च परत्वादिति**। अभ्युपेत्य गोत्रत्वमेतदुक्तम्, तदेव तु नास्तीत्याह—**न च गोत्रसमुदायो गोत्रमिति**। तत्र च यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यत इति काशिकोसलीया इत्यत्र छ एव भवति, न जनपदलक्षणो वुञ्, तद्वदत्रापि गोत्रलक्षणो वुञ् न प्राप्नोतीति भावः। स्यादेतत्—मा भूत्समुदायो गोत्रम्, मालवशब्दस्तु गोत्रं भवति, ततश्च तदन्तविधिना समुदायादपि वुञ्प्राप्नोतीति ? तत्राह **न चेति**। 'येन विधिस्तदन्तस्य' इत्यत्र हि 'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्तम्। **एवं तर्हीत्यादि**। कथमेकेन यत्नेनोभयं शक्यं ज्ञापयितुम् ? शक्यमित्याह, अन्यथानुपपत्त्या ज्ञापकं भवति, उभयेन च विना नास्मादञ्विधानमुपपद्यत इति। किमत्रानुपपन्नम् ? तत्र पूर्ववि-प्रतिषेधज्ञापनस्य प्रयोजनमौपगवकं कापटवकमिति। वुञोऽवकाशः यदाद्युदात्तम्—ग्लुचुकस्यापत्यं ग्लुचुकायनिः, 'प्राचामवृद्धात्फिन्' तेषां समूहो ग्लौचुकायनकमिति; अञस्तु कापोतमित्याद्यगोत्रमवकाशः; गोत्रादनुदात्तादेरुभय-प्रसङ्गे परत्वादञ् स्यात्, अस्मात्तु ज्ञापकाद् वुञेव भवति। तदन्तविधिज्ञापनस्य प्रयोजनम्—वनहस्तिनां समूहो वानहस्तिकम्। **गौधेनुकमिति**। 'जङ्गलधेनुवलजान्तस्य' इत्युत्तरपदवृद्धिविकल्पः।

पुनरस्यैव नियमार्थत्वं वर्णयिष्यन् कथमेकेन यत्नेनोभयं लभ्यम्- ज्ञापनं च नियमश्च ? इत्याशङ्क्याऽह—

**भावबोधिनी**

क्षुद्रकमालव शब्द का यहाँ पाठ है। क्षुद्रक और मालव—यह क्षत्रियवाचियों का द्वन्द्व है। इनसे पूर्व सूत्र से ही अञ् प्रत्यय सिद्ध रहने पर गोत्रवाची से वुञ् का बाध करने के लिये यह सूत्र है।

परवर्त्ती होने के कारण अञ् प्रत्यय से वुञ् का बाध हो जायगा; गोत्रसमुदाय गोत्र नहीं होता है; और यहाँ तदन्तविधि नहीं होती है ? यदि ऐसी बात है तो यह ज्ञापित करता है—वुञ् के विषय में पूर्वविप्रतिषेध होना चाहिये, और सामूहिक अर्थ में तदन्तविधि होती हैं। प्रयोजन है—औपगवकम्, कापटवकम्—इनमें वुञ् होता है; वानहस्तिकम्, गौधेनुकम् यहाँ तदन्तविधि होती है। [ तदन्तविधि हो जाने से 'अचित्तहस्तिधेनोष्ठक्' (४।२।४७) से वनहस्ति और गोधेनु' से ठक् प्रत्यय समूह अर्थ में होता है। ]

**मुच्यते 'सेनासंज्ञायाम्' इति—क्षुद्रकमालवात्सेनासंज्ञायामेवाञ्भवति। क्षौद्रकमालवी सेना। क्षौद्रकमालवकमन्यत्**[1] **( म० भा० )।**

**अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात्।**
**गोत्राद् वुञ्, न च तद्गोत्रं तदन्तान्न च सर्वतः॥ १॥**

**न्यासः**

असति ह्येतस्मिञ् ज्ञापने परविप्रतिषेधेन 'अनुदात्तादेरञ्' इत्यञ् स्यात्। वुञस्तु यत्राद्युदात्तत्वं सोऽवकाशः—**ग्लौचुकायनकमिति**। ग्लुचुकायनशब्दो हि 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तः। **वानहस्तिकम्, गौधेनुकमिति**। तदन्तविधिज्ञापनस्य प्रयोजनम्। असत्येतस्मिञ् ज्ञापने 'अचित्तहस्तिधेनोष्ठक्' इति धेनुहस्तिशब्दाभ्यां विधीयमानष्ठक् न तदन्तात् स्यात्।

**क्षुद्रकमाळवकादिति**। गणे 'क्षुद्रकमालवात् सेनासंज्ञायाम्' इति पठ्यते, तत्र यद्ययमेको योगः स्यात्, एकेन यत्नेन च ज्ञापनं नियमश्च न लभ्यते। तस्मादत्र योगविभागः कर्त्तव्यः। तत्र क्षुद्रकमालवादित्येको योगः, सेनासंज्ञायामिति द्वितीयः। तत्र पूर्वो योगो ज्ञापनार्थः, उत्तरो नियमार्थः। **पुनरस्यैवेति**। क्षुद्रकमालवादित्यस्यैव योगस्य। **क्षौद्रकमालवीति**। 'टिड्ढाणञ्' इति ङीप्। क्षौद्रकमालवकमन्यदिति। तदन्तविधिनात्र वुञ् भवति।

**अञ्सिद्धेरित्यादि**। क्षुद्रकमालवशब्दाद् 'अनुदात्तादेरञ्' इत्यञ् सिद्धः। तत् कोऽर्थः=किं प्रयोजनं तस्य गणपाठेन? न किञ्चिदित्यर्थः। स्यादेतत्—यो गोत्रलक्षणो वुञ् स्यादतस्तद्बाधनार्थः पाठः? इत्याह—**गोत्राद्वुञ् विधीयते**। न च क्षुद्रकमालवशब्दो गोत्रम्, तत् कुतस्ततो वुञ्प्राप्तिः? **तदन्तादित्यादि**। यद्यपि क्षुद्रकमालवशब्दो गोत्रसमुदायो गोत्रं न भवति, तदवयवस्तु भवति, तेन तदन्तविधिना प्राप्नोत्येव। **न च सर्वत इति**। न च तदन्तविधिः सर्वत्रैव भवति। परिगणितेष्वेव कार्येषु तदन्तविधिरिष्यते, न चेदं तत्र परिगण्यते, तत् कुतस्तदन्त-

**पदमञ्जरी**

**क्षुद्रकमालवादित्येतावतेति**। योगविभागेन यत्नद्वयमाश्रीयत इत्यर्थः। **क्षौद्रकमालवी, क्षौद्रकमालवकमिति**। उभयत्रापि मालवादुत्पन्नस्य ञ्यङः 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे 'आपत्यस्य' इति यलोपः।

**अञ्सिद्धिरित्यादि अनुदात्तादेरिति**। हेतुगर्भं विशेषणम्; यतोऽयं क्षुद्रकमालवशब्दोऽनुदात्तादिस्तेन तस्मादनुदात्तादेरित्येवाञः सिद्धिरस्ति। **कोऽर्थः**। तस्य गणपाठेनेति शेषः। न किञ्चत्प्रयोजनम् इत्यर्थः। **गोत्रलक्षणो वुञ्** प्राप्नोति, अतस्तद्बाधनार्थः पाठ इति चेत्तत्राह—**गोत्राद्वुञिति**। **गोत्राद् वुञ्** विधीयते, न च तत्क्षुद्रकमालवेतिशब्दरूपगोत्रमित्यर्थः। **तदन्तादिति**। मालवशब्दस्य गोत्रत्वात्तदन्तविधिना प्राप्नोत्येव। **न स सर्वत**[2] **इति**। आद्या-

**भावबोधिनी**

'क्षुद्रकमालवात्' इस योगविभाग से पूर्वविप्रतिषेध और तदन्तविधि ज्ञापित होती है, पुनः इसी का नियम करने के लिये कहा जा रहा है 'सेनासंज्ञायाम्'। 'क्षुद्रकमालव' शब्द से सेना की संज्ञा में ही अञ् प्रत्यय होता है—क्षौद्रकमालवी सेना। [ अञ् प्रत्यय करने पर ङीप् होता है ] अन्य अर्थ में वुञ् होता है—क्षौद्रकमालवकम् [ यहाँ तदन्तविधि मान कर वुञ् होता है। ]

[ श्लोकवार्तिकों का अर्थ ] 'अनुदात्तादेरञ्' (४।२।४४) सूत्र से ही अञ् प्रत्यय सिद्ध है तब खण्डिकादिगण में क्षुद्रकमालव शब्द के पाठ का क्या फल है? [ गोत्रवाची होने से वुञ् प्राप्त होता है उसका बाध करने के लिये पाठ है?] गोत्रवाची से वुञ् प्रत्यय कहा गया है किन्तु क्षुद्रकमालव शब्द गोत्र नहीं है [ अपितु गोत्रसमुदाय है, दो शब्दों का समुदाय है। अतः वुञ् की प्राप्ति ही नहीं है। ] [ यह कहें कि गोत्र-प्रत्ययान्त जिसके अन्त में है वह भी गोत्र है, ऐसी तदन्तविधि से वुञ् प्राप्त होता है? ] सर्वत्र तदन्तविधि नहीं होती है केवल परिगणित शब्दों में ही होती है। [ अतः यहाँ तदन्तविधि

१. अत्र 'गोत्रलक्षणो वुञेव भवति' इत्यधिकं पुस्तकान्तरे।
२. 'न चाऽसर्वतः' इति मूले पाठः।

ज्ञापकं स्यात्तदन्तत्वे तथा चापिशलेर्विधिः।
सेनायां नियमार्थं च यथा बाध्येत चाञ् वुञा ॥ २ ॥ ( म० भा )

**खण्डिका । वडवा । ॐ क्षुद्रकमालवात्सेनासंज्ञायाम् ॐ ( ग० सू० ८२ ) । भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध ॥**

**न्यासः**

**विधिना** वुञ्प्राप्तिः । **ज्ञापकं स्यादित्यादि** । इदं हि क्षुद्रकमालवग्रहणं ज्ञापनार्थं भवेत् । एतज्ज्ञापयति—सामूहिकेषु तदन्तविधिरस्तीति । एवं कृत्वाऽऽपिशलेर्विधिरुपपन्नो भवति । विधीयतेऽनेनेति विधिः, स पुनः 'धेनोरनञः' इति, एतद्धि तत्सूत्रम् । अस्यायमर्थः—धेनुशब्दः समूहेऽर्थे ठकमुत्पादयति, न चेद्धेनुशब्दो नञ उत्तरो भवतीति । नञ्पूर्वपदो न भवतीति यावत् । यदि तत्र सामूहिकेषु तदन्तविधिर्न स्याद्, 'अनञः' इति वचनं नोपपद्यते । असति तदन्तविधौ धेनुशब्दादुच्यमानः प्रत्ययः, कः प्रसङ्गो यदधेनुशब्दात् स्यात् ? तदेतदनञिति वचनं परमर्थवद्भवति यदि सामूहिकेषु तदन्तविधिर्भवति, नान्यथा । प्रयोजनान्तरमाह—**सेनायामित्यादि** । सेनासंज्ञायामेव क्षुद्रकमालवशब्दादञ् भवतीत्येष नियमो यथा स्यादित्येवमर्थस्तस्य गणे पाठ इत्यर्थः । **यथेत्यादि** । चेति समुच्चये । पूर्वविप्रतिषेधेन वुञाऽञो बाधनं यथा स्यादित्येवमर्थो गणे पाठः ।

**पदमञ्जरी**

दित्वात्सप्तम्यन्तात्तसिः, स तदन्तविधिः सर्वत्र न भवतीत्यर्थः । **तदन्तत्वे इति** । तदन्तविधिरस्तीत्यस्मिन्नर्थ इत्यर्थः । **तथा चेति** । धेनुरनञिकमुत्पादयतीति **आपिशलेः सूत्रम्** । अत्र वृद्धचर्थोऽनुबन्धो मृग्यः, इकस्यैव चेसुसुक्तान्तात्परस्य कादेशो द्रष्टव्यः । अर्थमात्रं वा **भाष्यकारेण** निर्दिष्टम् । इकमिति ठकमित्यर्थः । धेनूनां समूहो धैनुकम् । अनञिति किम् ? अधेनूनां समूह आधेनवम्, उत्सादिपाठादञ् । यद्यपि धेनुशब्दः सूत्रे पठ्यते, तथापि बष्कयास इति लिङ्गादधेनु शब्दादपि भवति । तत्र यदि सामूहिकेषु तदन्तविधिर्न स्यात्, अनञिति प्रतिषेधोऽर्थकः स्यात् ।

प्रयोजनान्तरमप्याह—**सेनायामिति । यथेति** । पूर्वविप्रतिषेधेन वुञाऽञो बाधो यथा स्यादित्येवमर्थश्च तस्य **गणे पाठ** इत्यर्थः । उलूकशब्दोऽत्र पठ्यते स 'लघावन्ते' ( फि० सू० २.४२ ) इति मध्योदात्तः । छन्दसि तु "यदुलूको वदति मोघमेतत्, इत्या उलूक आपप्तदिति" यदाद्युदात्तत्वम्, तच्छान्दसम् । भाषायां तु मध्योदात्तमेव, तत्र पूर्वेणैवाञ् सिद्धः, तस्मादेवं वक्तव्यम्—औलूक्यशब्दो गर्गादियञन्तः, यतः 'यञञोश्च' इति बहुषु लुकि कृते रूपम्, तदिह पठ्यत इति । असति हि तस्य पाठे उलूकानां समूह इत्यर्थविवक्षायां 'गोत्रेऽलुगचि' इति लुकः

**भावबोधिनी**

न होने से वुञ् की प्राप्ति नहीं है । ] तब [ समूह-प्रकरण में ] तदन्तविधि होती है—इसका यह [ पाठ ] ज्ञापक हो जायगा । और इस प्रकार आपिशलि आचार्य की विधि [ 'धेनोरनञः' आ० सू० ] उपपन्न होती है । अथवा सेना अर्थ में नियम करने के लिये क्षुद्रकमालव का पाठ है अर्थात् 'क्षौद्रकमालवी सेना' की सिद्धि के लिये गण में पाठ है । अथवा परवर्त्ती भी अञ् प्रत्यय का वुञ् बाध कर लेता है अर्थात् पूर्वविप्रतिषेध द्वारा वुञ् अञ् का बाध कर लेता है ।

**विमर्श**—आपिशलि आचार्य ने 'धेनोरनञः' यह सूत्र बनाया है । समूह अर्थ में धेनु से ठक् = इक होता है यदि धेनु शब्द नञ् का उत्तरवर्त्ती नहीं होता है, अर्थात् नञ् पूर्वपद—अधेनु—से नहीं होता है । यदि समूह अर्थ वाले प्रत्ययों में तदन्तविधि नहीं मानी जायगी तो 'अधेनु' शब्द से ठक् की प्राप्ति ही नहीं है, इसके परिहार के लिये 'अनञ्' ग्रहण करना व्यर्थ है । वह व्यर्थ होकर ज्ञापित करता है कि इस प्रकरण में तदन्तविधि होती है । तब क्षुद्रकमालव से वुञ् प्राप्त है उसके वारणार्थ खण्डिकादिगण में क्षुद्रकमालव शब्द का पाठ है ।

दूसरा प्रयोजन यह है कि सेना अर्थ में ही क्षुद्रकमालव शब्द से अञ् प्रत्यय करने के लिये पाठ है—क्षौद्रकमालवो सेना । अन्य अर्थ में वुञ् ही होता है—क्षौद्रकमालवकम् ।

**१४७४. चरणेभ्यो धर्मवत् ॥ ४६ ॥ ( १२९९ )**

**चरणशब्दाः कठकलापादयः, तेभ्यः षष्ठीसमर्थेभ्यः समूहे धर्मवत् प्रत्यया भवन्ति । 'गोत्रचरणाद् वुञ्' ( ४.३.१२६ ) इत्यारभ्य प्रत्यया वक्ष्यन्ते, तत्रेदमुच्यते—'चरणाद्धर्माम्नाययोः' ( ४.३.१२६ वा ) इति, तेन**

**न्यासः**

**खण्डिक इति ।** खण्डिकशब्दो मत्वर्थीयठन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । 'बल संवरणे' इत्यस्माद् 'उणादयो बहुलम्' इत्यवन्प्रत्यये डलयोरेकत्वस्मरणाल् लकारस्य डकारादेशे टापि वडवेति भवति । भिक्षुकशब्दोऽपि कुत्सार्थविवक्षायां[1] कन्नन्तत्वात् पूर्वपदाद्युदात्तः । शुकोलूकयोरपि 'प्राणिनां कुपूर्वाणाम्' ( फि० सू० २.३० ) इति कुपूर्वादिरुदात्त एव । श्वञ्शब्दः 'कनिन् युवृषि' इत्यतः कनिन्ग्रहणेऽनुवर्तमाने 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इति कनिन्प्रत्ययान्तो निपातितः, तेनासावपि पूर्ववदाद्युदात्तः । युगवरत्राशब्दयोरचित्तार्थः । संहतविगृहीतार्थं युगवरत्राग्रहणं वर्णयन्ति-यौगम्, वारत्रम्, यौगवरत्रमिति ॥ ४५ ॥

**चरणेभ्यो धर्मवत् ॥ गोत्रचरणाद् वुञित्यारभ्येति ।** ननु च तत्र धर्मग्रहणं नास्ति, तत् कथं धर्मवदित्यतिदेशः प्रयुज्यते ? इत्याह—**तत्रेदमित्यादि ।** इदमेव धर्मवदिति वचनं लिङ्गभूतं गमयति—चरणाद्धर्माम्नाययोरित्येतद्वचनं शेषभूतमिति । न हि तेन विनातिदेश उपपद्यते । **वति सादृश्यार्थ इति ।** असति हि वतौ यदि चरणग्रहणं धर्मप्रत्ययैरभिसम्बध्यते —चरणेभ्यो धर्मेऽर्थे ये प्रत्यया अभिधास्यन्ते ते भवन्ति 'तस्य समूहः' इत्येतस्मिन्नर्थ इति, समूहप्रकृतिर्न विशेषिता स्यात् । एवञ्चेह प्रकृतिमात्राद्धर्मप्रत्ययाः प्रसज्येरन् । अथ प्रकृतिः सम्बध्यते—धर्मे

**पदमञ्जरी**

प्रतिषेधादौलुक्यशब्दाद् गोत्राश्रयो वुञ्प्राप्नोति । शुकशब्दोऽत्र पठ्यते, 'तस्य समूहः' इत्यत्र तु 'यस्य च नान्यत्प्रतिपदविधानमस्ति' इत्युक्त्वोदाहृतम्—काकं शौकमिति, तस्मात्तत्र शौकमित्यस्य स्थाने बाकमिति पठितव्यम् । बकशब्दः 'प्राणिनां कुपूर्वाणाम्' ( फि० सू० २.३० ) इत्याद्युदात्तः । युगवरत्रेति पठ्यते, तत्सङ्घातविगृहीतार्थमिच्छन्ति —यौगवरत्रम्, यौगम्, वारत्रमिति, तत्र सङ्घातपक्षे 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावेन पुंसकह्रस्वत्वे सति युगवरत्रेति दीर्घनिर्देशोऽनुपपन्नः तस्माद्युगसहिता वरत्रेति समासः कर्तव्यः, जातिपरत्वाभावाद्वा एकवद्भावाभावः ॥ ४५ ॥

**चरणेभ्यो धर्मवत् ॥ गोत्रचरणाद् वुञित्यारभ्य प्रत्यया वक्ष्यन्ते इति ।** ननु च न तत्र धर्मग्रहणमस्ति, तत्कथं धर्मवदित्यतिदेशो युज्यत इत्याह —**तत्रेदमिति ।** इदमेव धर्मवदितिवचनं लिङ्गमस्ति, तत्र चरणाद्धर्माम्नाययोरिति । **वीतः सर्वसादृश्यार्थ इति ।** असति तस्मिन् 'चरणेभ्यो धर्मः' इत्युच्यमाने यदि तावदेवं सम्बन्धः,

**भावबोधिनी**

अथवा पूर्वविप्रतिषेध मान लिया जाता है । अतः पूर्ववर्ती भी 'गोत्रोक्षोष्ट्रोरभ्र०' (४।२।३९) से होनेवाला वुञ् प्रत्यय परवर्ती प्रस्तुत सूत्र से होने वाले अञ् का बाध कर लेता है । तब नियम करने के लिये गणवार्तिक है कि सेना अर्थ में अञ् ही होता है अन्य अर्थ में वुञ् होता है । इस प्रकार 'क्षुद्रकमालव' का पाठ सार्थक है ।

[ अनु० ] [ इस गण में पठित शब्द— ] खण्डिका । वडवा । ❀ क्षुद्रकमालव से केवल सेना अर्थ में अञ् होता है । ❀ भिक्षुक । शुक । उलूक । श्वन् । युग । अहन् । वरत्रा । हलबन्ध । ४५॥

कठ, कलाप आदि चरणशब्द हैं, [ शाखा के प्रवर्तक आदि ग्रन्थ के लिये 'चरण' शब्द है । इसीलिये उन शाखाओं के अध्येताओं को भी चरण कहा जाता है । अतः कठ आदि ग्रन्थ और उनके अध्येता दोनों को चरण कहते हैं । ] इन षष्ठीसमर्थ शब्दों से 'समूह' अर्थ में 'धर्मवत्' प्रत्यय होते हैं । 'गोत्रचरणाद् वुञ्' (४।३। २६) से लेकर प्रत्यय कहे जायेंगे उनमें यह वचन पठित है—'चरण से धर्म और आम्नाय अर्थों में प्रत्यय होते हैं ।' उससे 'धर्मवत्' [ धर्म के

---

१. 'अनुकम्पार्थविवक्षायाम्' इति पाठा० ।

**धर्मवदित्यतिदेशः क्रियते । वतिः सर्वसादृश्यार्थः । कठानां धर्मः काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम् । तथा समूहेऽपि—काठकम् । कालापकम् । छान्दोग्यम् । औक्थिक्यम् । आथर्वणम्**[1] ॥

**न्यासः**

ये विधास्यन्ते प्रत्ययास्ते भवन्ति 'चरणेभ्यः समूहः' इत्येतस्मिन्नर्थे, एवमपि धर्मप्रत्यया न विशेषिताः स्युः । ततश्चाचरणेभ्योऽपि ये धर्मे विधास्यन्ते प्रत्ययास्तेऽपीह चरणेभ्य आपद्येरन् । अथाप्युभयसन्निधानादुभयं विशेष्यते, तेन वाक्यभेदं कृत्वा प्रत्ययैः प्रकृतिभिः सम्बध्यते—चरणेभ्यो धर्मेऽर्थे ये प्रत्यया विधास्यन्ते ते समूहे भवन्ति चरणेभ्य इति ? एवमपि कश्चित् चरणप्रकृतिकः प्रत्ययो यतः कुतश्चिच्चरणात् समूहे स्यात् । 'कौपिञ्जलहास्तिपदादण्' छन्दोगादिभ्योऽपि स्यात् । वतौ तु तस्य सादृश्ये विधानात् सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यश्चरणविशेषणेन ये प्रत्यया विहिताः, इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया भवन्तीति न किञ्चिदनिष्टमापद्यते । तस्मात् सर्वसादृश्यपरिग्रहार्थं वत्करणं कर्तव्यम् । **काठकम्, कालापकमिति** । 'गोत्रचरणाद् वुञ्' । **छान्दोग्यम्, औक्थिक्यमिति** । 'छन्दोगोक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः' इति ञ्यः । **आथर्वणमिति** । 'कौपिञ्जलहास्तिपदादण्', 'आथर्वणिकस्येकलोपश्च' इत्यण्, इकलोपश्च । एते प्रत्यया यथा चरणेभ्यो धर्मे भवन्ति, तथा समूहेऽपि ॥ ४६ ॥

**पदमञ्जरी**

चरणेभ्यो धर्मे ये प्रत्यया विधास्यन्ते ते भवन्ति, समूह इति समूहप्रकृतिरविशेषिता स्यात्, ततश्च काकादिभ्योऽपि वुञादयः प्रसज्येरन् । अथ पुनरेवं सम्बन्धः—धर्मे ये प्रत्यया विधास्यन्ते ते चरणेभ्यः समूहे भवन्तीति ? एवमपि धर्मप्रत्यया न विशेषिताः स्युः, ततश्च 'तस्येदम्' इति विधास्यमाना अणादयोऽपि कठादिभ्य आपद्येरन् । अथाप्येवं सम्बन्धः—चरणेभ्यो धर्मे ये प्रत्ययास्ते भवन्ति चरणेभ्य एव समूह इति ? तत्र सकृत् श्रुतस्य चरणशब्दस्यैवमुभयसम्बन्ध एव तावद् दुर्लभः, अथापि लभ्येत ? एवमपि यः कश्चिद्धर्मे प्रत्ययो यतः कुतश्चिच्चरणशब्दात्स्यात्, 'कौपिञ्जलहास्तिपदादण्' कठादिभ्योऽपि स्यात्, वतिनिर्देशे तु सति सर्वसादृश्यपरिग्रहो भवति । तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया धर्मे विधास्यन्ते, इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव भवन्तीति न किञ्चिदनिष्टम् । **काठकम्, कालापकमिति** । गोत्रचरणाद् वुञ् । **छान्दोग्यमिति** । 'छन्दोगौक्थिक' इति ञ्यः । **आथर्वणमिति** । 'आथर्वणिकस्येकलोपश्च' इत्यण् इकलोपश्च ॥ ४६ ॥

**भावबोधिनी**

समान ]-यह अतिदेश किया जाता है । [ अर्थात् वहाँ जिनसे जिस प्रत्यय का विधान है उसे समूह अर्थ में भी समझना चाहिये । ] वति प्रत्यय सम्पूर्ण सादृश्य के लिये है । उदा०—कठानां धर्मः काठकम्, कलापानां धर्मः कालापकम्, छन्दोगानां धर्मः छान्दोग्यम्, आथर्वणिकानां धर्मः—आथर्वणम् । इसी प्रकार - कठानां समूहः—काठकम् [ कठ + वुञ् ] । कलापानां समूहः—कालापकम् [ कलाप + वुञ्, दोनों में 'गोत्रचरणाद् वुञ्' 'सूत्र से वुञ्, वु = अक, आदिवृद्धि होती है । ] छन्दोगानां समूहः छान्दोग्यम्, औक्थिनां समूहः—औक्थिक्यम् [ दोनों शब्दों से छन्दोगौक्थिक०' (४।३।१२८) सूत्र से ञ्य = य प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप होता है । ] आथर्वणिकानां समूहः – आथर्वणम् [ आथर्वणिक शब्द से 'आर्थर्वणिकस्येकलोपश्च' (४।३।१३३) से अण् प्रत्यय और इक का लोप होता है । इस प्रकार धर्म और समूह दोनों अर्थों में एक समान रूप होते हैं । अतः उक्त शब्दों के दोनों अर्थ होते हैं ] ॥ ४६ ॥

१. "ननु धर्मे न कोऽपि प्रत्ययो विधास्यते, कथं धर्मवदित्यतिदेशः ? एतदेव ज्ञापयति वार्तिककारः 'गोत्रचरणाद्वुञ्' इत्यस्मिन्प्रकरणे सर्वयोगशेषम् 'चरणाद्धर्माम्नाययोः' इति भगवतः पाणिनेरप्यभिमतम्' इति" -- इत्यधिकं क्वचित् पुस्तके दृश्यते ॥

## १४७५. अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥ ( १२५६ )

**अचित्तार्थेभ्यो हस्तिधेनुशब्दाभ्यां च ठक् प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये । अणञोरपवादः । अपूपानां समूह आपूपिकम् । शाष्कुलिकम् । हास्तिकम् । धैनुकम् ।**

**❀ धेनोरनञ इति वक्तव्यम् ❀ ( म० भा०—४.२.४५ आपिशलेः सूत्रमिदम् ) । आधेनवम् ( म० भा० ) ।**

## १४७६. केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥ ( १२५७ )

**केश, अश्व—इत्येताभ्यां यथासंख्यं यञ्, छ—इत्येतौ प्रत्ययौ भवतोऽन्यतरस्याम् 'तस्य समूहः' इत्येतस्मिन्विषये । केशानां समूहः कैश्यम् । कैशिकम् । अश्वानां समूह आश्वम् । अश्वीयम् ॥**

### न्यासः

**अचित्तहस्तिधेनोष्ठक् ॥ अचित्त इति ।** अर्थप्रधानत्वान्निर्देशस्यार्थस्येदं ग्रहणम्, न स्वरूपस्य, तेनाचित्तवाचिभ्यष्ठग् विज्ञायत इत्याह—**अचित्तवाचिभ्यः शब्देभ्य इति ।** हस्तिधेनुशब्दयोश्च शब्दप्रधानत्वान्निर्देशस्य स्वरूपग्रहणम् । अत एव हस्तिधेनुशब्दाभ्यामिति ।

**अधेनोरिति[1] वक्तव्यमिति ।** धेनुशब्दादनञ्पूर्वाट् ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—वक्ष्यमाणमिहान्यतरस्यांग्रहणमुभयोरपि योगयोः शेषो विज्ञायते, व्यवस्थितविभाषा च । तेन धेनुशब्दादनञ्पूर्वादेव भवतीति, न नञ्पूर्वादिति । **आधेनवमिति ।** 'उत्सादिभ्योऽञ्' । ननु च धेनुशब्दस्तत्र पठ्यते, तत् कथमधेनुशब्दाद् भवतीति ? तत्रापि तदन्तविधेः सम्भवात् । तत् कथं विज्ञायते ? वष्कयास इति वष्कयशब्दस्य समासे प्रतिषेधात् । वष्कयशब्दाद्धि प्रत्ययविधानम्, गोवष्कयशब्दान्न प्राप्नोति, किं समासप्रतिषेधेन ? इतः प्रतिषेधाद्विज्ञायते—अस्ति तत्र तदन्तविधिरिति ॥ ४७ ॥

**केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥** केशशब्दादचित्तलक्षणे ठकि प्राप्त वचनमिदम् । अश्वशब्दादप्यणि सूत्रमिदमारभ्यते । अन्यतरस्यांग्रहणाट् ठगणावपि भवतः ॥ ४८ ॥

### पदमञ्जरी

**अचित्तहस्तिधेनोष्ठक् ॥ अणञोरपवाद इति ।** अचित्तार्थेषु येननाप्राप्तिन्यायेनाणोऽपवादः । कपोतादिषु चित्तवस्तु चरितार्थस्याञोऽपि परत्वाद्बाधक इत्यर्थः । हस्तिधेनुशब्दयोस्तु प्रत्ययस्वरेणान्तोदात्तयोरनुदात्तादिलक्षणस्याञोऽपवादः । हस्तिशब्दः 'हस्ताज्जातौ' इतीनिप्रत्ययान्तः । धेनुशब्दः 'धेटोऽनुश्च' ( द० उ० १.१४५ ) इति नुप्रत्ययान्तः । **आधेनवमिति ।** उत्सादिपाठादञ् 'जङ्गलधेनुवलजान्तस्य' इति पक्षे वृद्ध्यभावः ॥ ४७ ॥ ४८ ॥

### भावबोधिनी

'तस्य समूहः' [ उसका समूह ] इस विषय में अचित्त=निर्जीव पदार्थवाचक और हस्ती एवं धेनु—शब्द से ठक् प्रत्यय होता है । अण् और अञ् का अपवाद है । उदा०—अपूपानां समूहः—आपूपिकम् [ पुओं का समूह । अपूप+ठक्, ठ=इक, आदिवृद्धि, भसंज्ञा, अलोप ] । शष्कुलीनां समूहः—शाष्कुलिकम् [ शष्कुली+ठक् ] । हस्तिनां समूहः—हास्तिकम् [हस्तिन्+ठक्] धेनूनां समूहः—धैनुकम् [धेनु+ठक्, ठ=क, आदिवृद्धि हाथियों का समूह । गायों का समूह] ।

❀ नञ् से परवर्ती-धेनु से नहीं होता है । ❀ अधेनूनां समूहः—आधेनवम् [ अधेनु+अञ्, आदिवृद्धि, उ का गुण, ओ का अव् आदेश ] [ यह आपिशलिसूत्र है । ] ॥ ४७ ॥

केश और अश्व—इन दोनों शब्दों से क्रमशः 'यञ्' और 'छ' ये दो प्रत्यय 'तस्य समूहः' [ उसका समूह ]—इस विषय में विकल्प से होते हैं । उदा०—केशानां समूहः कैश्यम्, कैशिकम् [ केशों का समूह । केश+यञ्, आदिवृद्धि,

---

१. 'धेनोरनञ इति' काशिकापाठः । आपिशलेस्तु एतादृश एव पाठः ।

**१४७७. पाशादिभ्यो यः ॥ ४९ ॥ ( १२५८ )**

**पाशादिभ्यो यः प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। पाशानां समूहः पाश्या। तृण्या[1]। पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। नड। वन[2] ॥**

**१४७८. खलगोरथात् ॥ ५० ॥ ( १२५९ )**

**खलगोरथशब्देभ्यो यः प्रत्ययो भवति 'तस्य समूहः' इत्येतस्मिन्विषये। खलानां समूहः खल्या। गव्या। रथ्या। पाशादिष्वपाठ उत्तरार्थः[3] ॥**

**न्यासः**

**पाशादिभ्यो यः** ॥ अचित्तलक्षणके ठकि प्राप्ते वचनमिदम् ॥ ४९. ॥

**खलगोरथात्** ॥ गोशब्दादणि प्राप्ते खलरथाभ्यामचित्तलक्षणे ठकीदं वचनम्। अत्र पाशादिष्वेव खलादीनां पाठः कस्मान्न कृतः ? इत्याह—**पाशादिष्वपाठ उत्तरार्थ इति**। उत्तरसूत्र इनित्रकट्यचः खलादिभ्य एव यथा स्युः, पाशादिभ्यो मा भूविनि ॥ ५० ॥

**पदमञ्जरी**

**पाशादिभ्यो यः** ॥ यप्रत्ययान्तं स्वभावतः स्त्रीलिङ्गम्। वातशब्दोऽत्र पठ्यते—वातानां समूहो वात्या, पृथग्वातादर्शनादयुक्तोऽत्र समूहः, तस्माच्छीघ्रत्वे प्रत्ययो वक्तव्यः ? नैष दोषः; एकस्यापि वातावयविनो दिग्भेदेन भेदोऽध्यारोपः, तदाश्रयश्च समूहः। अथ वा—प्रतिदिशं वातावयविन एव भिद्यन्ते, तथा च प्रतिभासः—पूर्वो वातः, उत्तरो वातः, सर्वतो वान्ति वाता इति। आह च— वायोर्वायुसम्मूर्छनं नानात्वे लिङ्गमिति ॥ ४९ ॥

**खलगोरथात्** ॥ अथ कस्मात्खलादयोऽपि पाशादिष्वेव न पठिताः, एवं हि विभक्तिर्नोच्चारयितव्या भवति ? तत्राह—**पाशादिष्वपाठ इति** ॥ ५० ॥

**भावबोधिनी**

भसंज्ञा, अलोप। पक्ष में 'अचित्त०' ४।२।४७ से ठक्, केश + ठक् ठ का इक, आदिवृद्धि—कैशिकम्। ] अश्वानां समूहः—आश्वम्, अश्वीयम्। [ घोड़ों का समूह। अश्व + छ = ईय। पक्ष में औत्सर्गिक अण्, आदिवृद्धि ] ॥ ४८ ॥

'तस्य समूहः' [ उसका समूह ]—इस विषय में पाश आदि शब्दों से 'य' प्रत्यय होता है। उदा०—पाशानां समूहः—पाश्या [ पाश + यः, भसंज्ञा, अलोप, स्त्रीलिङ्ग होने से टाप् ]। तृणानां समूहः—तृण्या [ तृण + य, भसंज्ञा, अलोप, टाप्। यप्रत्ययान्त शब्द स्त्रीलिङ्ग रहते हैं। अतः इनसे टाप् होता है। इस गण में पठित शब्द— ] पाश। तृण। धूम। वात। अङ्गार। पोत। बालक। पिटक। पिटाक। शकट। हल। नड। वन ॥ ४९ ॥

'तस्य समूहः' [उसका समूह] —इस विषय में खल, गो और रथ —इन शब्दों से 'य' प्रत्यय होता है। उदा०—खलानां समूहः—खल्या [खल + य, टाप्। दुष्टों का समूह] गवां समूहः—गव्या [गो + य, अव् आदेश। गायों का समूह] रथानां समूहः—रथ्या [रथ + य, टाप्। रथों का समूह]। [ इन शब्दों को पाशादि-गण में क्यों नहीं पढ़ दिया गया ? ] पाशादि में इनका पाठ न होना उत्तरार्थ = अग्रिम सूत्र में अनुवृत्ति के लिये है। [ अग्रिम सूत्र में केवल इन्हीं तीन की अनुवृत्ति हो, अन्य की न हो, इस कारण यह अलग सूत्र बनाया गया है। ] ॥ ५० ॥

---

१. अत्र 'स्त्रीलिङ्गत्वं लोकाश्रयत्वाल्लिङ्गस्य' इत्यधिकं पुस्तकान्तरे।

२. अत्र —'पाटलका, गल'—इत्यधिकौ शब्दौ पुस्तकान्तरे।

३. 'योगविभाग उत्तरार्थः' इति पाठा०।

**१४७९. इनित्रकट्यचश्च ।। ५१ ।। ( १२६० )**

**खलगोरथशब्देभ्यो यथासंख्यम् 'इनि' 'त्र' कटचच्'—इत्येते प्रत्यया भवन्ति 'तस्य समूहः' इत्येतस्मिन् विषये । खलिनी । गोत्रा । रथकट्या ।**

**❀खलादिभ्य इनिर्वक्तव्यः ❀ ( म० भा० ४.२५१ वा० १ ) । डाकिनी[1] । कुण्डलिनी । कुटुम्बिनी ।**

**❀ कमलादिभ्यः[1] खण्डच् प्रत्ययो भवति ❀ ( वा ? ) । कमलखण्डम् । अम्भोजखण्डम् ।**

**कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिराकृतिगणः ।।**

**❀ नरकरितुरङ्गाणां स्कन्धच् प्रत्ययः ❀ ( वा०? ) । नरस्कन्धः । करिस्कन्धः । तुरङ्गस्कन्धः ।।**

**❀ पूर्वादिभ्यः काण्डः प्रत्ययो भवति ❀ (वा ?) । पूर्वकाण्डम् । तृणकाण्डम् । कर्मकाण्डम्[2] ।।**

**न्यासः**

**इनित्रकटचचश्च** ।। **खलादिभ्य इनिर्वक्तव्य इति** । वक्तव्यो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम् चकारोऽत्र क्रियते, स चानुक्तसमुच्चयार्थः, तेन खलादिभ्य इनिप्रत्ययो भविष्यति । आदिशब्दश्चायं प्रकारे, खलप्रकार इत्यर्थः । किं पुनस्ते खलप्रकाराः ? येभ्य इनिर्दृश्यते । यदि तर्हि खलादिभ्य इनिर्भवति, वैषम्याद् यथासंख्यं न प्राप्नोति ? वाक्यभेदाददोषः । एकं वाक्यं यथासंख्यं न भवति, इह द्वे वाक्ये इति । इनित्रकट्यचः खलगोरथेभ्यो भवन्तीत्येकं वाक्यम्; चकारश्चानुक्तसमुच्चयार्थः, ततः खलादिभ्य इनिर्भवतीति द्वितीयम् । द्वितीये तु वाक्ये खलशब्दस्य तत्र प्रकारोपलक्षणत्वं वेदितव्यम्, न तु प्रकृतित्वम् ।। ५१ ।।

**पदमञ्जरी**

**इनित्रकटचचश्च** ।। योगविभागो यथासङ्ख्यार्थः, अन्यथा इनित्रकटचचस्त्रयश्चकाराद्यश्चेति चत्वारः प्रत्ययाः, प्रकृतयस्तु तिस्र इति वैषम्यं स्यात् ।

**खलादिभ्य इति** । खलादयः प्रयोगतो गम्याः । एतेऽपि प्रत्ययाः स्वभावतः स्त्रियामेव ।। ५१ ।।

**भावबोधिनी**

'तस्य समूहः' [ उसका समूह ] इस विषय में—( १ ) खल, ( २ ) गो और ( ३ ) रथ—इन शब्दों से क्रमशः ( १ ) इनि, ( २ ) त्र और ( ३ ) कटयच् ये प्रत्यय होते हैं । उदा० —खलिनी [ खलानां समूहः—खल+इनि ] । गोत्रा [ गवां समूहः, गो+त्र ] । रथकट्या [ रथानां समूहः—रथकट्या । इन तीनों में स्त्रीलिङ्ग होने से ङीप् और टाप् प्रत्यय होते हैं । दुष्टों का समूह । गायों का समूह । रथों का समूह । ]

❀ खल आदि से इनि प्रत्यय करना चाहिये । ❀ उदा०—डाकिनी । कुण्डलिनी । कुटुम्बिनी [ डाक, कुण्डल और कुटुम्ब इनका समूह—इस अर्थ में इनि प्रत्यय करके ङीप् करने पर रूप सिद्ध होते हैं । ]

❀ कमल आदि शब्दों से खण्डच् प्रत्यय होता है । ❀ कमलखण्डम् [ कमलानां समूहः । कमल+खण्डच् । कमलों का समूह । इस गण में इन शब्दों का पाठ है— ] कमल । अम्भोज । पद्मिनी । कुमुद । सरोज । पद्म । नलिनी । कैरविणी । कमलादिगण आकृतिगण है । [ अतः इस प्रकार के और भी शब्द इसके अन्तर्गत समझ लेना चाहिये । ]

❀ नर, करि और तुरङ्ग शब्दों से स्कन्धच् प्रत्यय होता है । ❀ नरस्कन्धः [ नराणां समूहः, नर+स्कन्धच् । ] करिस्कन्धः [ करिणां समूहः ] । तुरङ्गस्कन्धः [ तुरङ्गानां समूहः ] । मनुष्यों का समूह । हाथियों का समूह । घोड़ों का समूह ।

❀ पूर्व आदि शब्दों से काण्ड प्रत्यय होता है । ❀ पूर्वकाण्डम् [ पूर्वाणां समूहः; पूर्व+काण्ड ] । तृणकाण्डम्

---

१–१. अयं पाठः क्वचिन्नास्ति ।

२. अस्मिन् गणे डाकिनी-डूकिनी, कुटुम्बिनी-कुदुम्बिनी-कुन्दुम्बिनि-इत्येवं पाठभेदः पुस्तकान्तरे दृश्यते ।

## १४८०. विषयो देशे ॥ ५२ ॥ ( १२६१ )

**'समूहः' इति निवृत्तम् । षष्ठी समर्थविभक्तिरनुवर्त्तते । तस्येति षष्ठीसमर्थाद् 'विषयः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, योऽसौ विषयो देशश्चेत्स भवति ।**

**विषयशब्दोऽयं बह्वर्थः । क्वचिद् ग्रामसमुदाये वर्तते—विषयो लब्ध इति । क्वचिदिन्द्रियग्राह्ये— चक्षुर्विषयो रूपमिति । क्वचिदत्यन्तशीलिते ज्ञेये—देवदत्तस्य विषयोऽनुवाक इति । क्वचिदन्यत्राभावे— मत्स्यानां विषयो जलमिति । तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थम् । शिबीनां विषयो देशः शैबः । औष्ट्रः ।**

**देश इति किम् ? देवदत्तस्य विषयोऽनुवाकः ॥**

### न्यासः

**विषयो देशे ॥ योऽसौ विषयो देशश्चेत् स भवतीति ।** ननु च यो विषयः स देश एव भवति, किं तद्विशेषणेन देशग्रहणेन ? इत्याह—**विषयशब्दोऽयमित्यादि । अत्यन्तशीलित इति ।** अत्यन्ताभ्यस्त इत्यर्थः ॥ ५२ ॥

### पदमञ्जरी

**विषयो देशे** ॥ ननु च विषयस्य देशत्वाव्यभिचाराद् देश इति विशेषणं व्यर्थमित्यत आह—**विषयशब्दोऽयमिति । अत्यन्तशीलितः** =अत्यन्ताभ्यस्तः । **तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थमिति ।** यद्येवम्, देशग्रहणमेवास्तु मा भूद्विषयग्रहणम् ? नैवं शक्यम्; देशशब्दोऽपि नानार्थः, देशनं देश इति क्रियाशब्दस्यापि भावात् । **शिबीनां विषयो देशः शैब इति ।** कथं शिबयो देश इति ? निवासविवक्षायाम् 'तस्य निवासः', 'जनपदे लुप्' इति लुपि भविष्यति । नन्वर्थभेदो भवति, शिबीनां निवासो जनपद इत्यत्र स्वस्वामिभावो न प्रतीयते, अन्यदीयेऽपि जनपदे निवाससम्भवात्; शिबीनां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते, न तु निवासार्थः, तत्रावसतामपि स्वामित्वसम्भवात् ? सत्यम्; य एवासौ येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते, न निवासमात्रे । अत्र चाभिधानस्वाभाव्यं हेतुः । एवं च शिबीनां विषयः शैव इत्यत्रार्थे शिबय इत्यपि भवति । एवं वसातीनां विषयो वासातः, तेषामेव निवासो वसातयः । तथा गान्धारीणां विषयो गान्धारः, निवासो गान्धारयः । अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्रा इति- निवासरूपतैव विवक्ष्यते, न विषयरूपता ।

### भावबोधिनी

[ तृणानां समूहः, तृण + काण्ड ] कर्मकाण्डम् [ कर्मणां समूहः, कर्म + काण्ड ] पूर्ववालों का समूह । तृणों का समूह । कर्मों का समूह ।

**विमर्श**—काशिकाकार ने खण्डच्, स्कन्धच् और काण्ड इन तीन प्रत्ययों के विधायक वचन यहाँ उद्धृत किये हैं । परन्तु प्रस्तुत सूत्र के भाष्य या गणपाठ आदि में कहीं भी इनका उल्लेख नहीं है । इनका मूलस्थान अन्वेषणीय है । सिद्धान्तकौमुदी में उल्लेख नहीं है । सम्भव है किसी अन्य सूत्र के भाष्य या गणपाठ में इनका उल्लेख हो । न्यास एवं पदमञ्जरी में इनके विषय में कोई विशेष संकेत नहीं है ॥ ५१ ॥

'समूह' इसकी निवृत्ति है, अनुवृत्ति नहीं होती है । षष्ठीसमर्थ विभक्ति की अनुवृत्ति होती है । 'तस्य' [ उसका ]— इस षष्ठीसमर्थ से 'विषय' इस अर्थ में यथाविहित प्रत्यय होते हैं, यदि जो विषय है वह देश हो तो । [ भाव यह है कि यदि विषय की देश रूप से प्रतीति हो रही हो तो प्रत्यय होते हैं । ]

[ विषय तो देश ही होता है तब देश को विशेषण रूप से कहने की क्या आवश्यकता है ? ] 'विषय' शब्द के बहुत अर्थ होते हैं—( १ ) कहीं ग्रामसमुदाय अर्थ में [ विषय शब्द ] प्रयुक्त होता है—'विषय [ ग्राम समुदाय ] प्राप्त हो गया ।' ( २ ) कहीं इन्द्रिय से गृहीत = ज्ञात होने योग्य अर्थ में [ विषय शब्द है ]—नेत्र का विषय रूप है । [ नेत्रेन्द्रिय से ग्राह्य रूप है । ] ( ३ ) कहीं अत्यन्तपरिशीलित [ बहुत अभ्यस्त ] ज्ञेय = ज्ञानयोग्य अर्थ में है—देवदत्त का विषय अनुवाक है । ( ४ ) कहीं अन्यत्र अभाव अर्थ में है—मछलियों का विषय जल है । [ जल से अन्यत्र कहीं भी नहीं रह सकतीं । ]

## १४८१. राजन्यादिभ्यो वुञ् ॥ ५३ ॥ ( १२६२ )

राजन्यादिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति 'विषयो देशे' इत्येतस्मिन्नर्थे। अणोऽपवादः। राजन्यानां विषयो देशः राजन्यकः। दैवयानकः। आकृतिगणश्चायम्। मालवानां विषयो देशः मालवकः। वैराटकः। त्रैगर्त्तकः।

राजन्य। देवयान। शालङ्कायन। जालन्धरायण। आत्मकामेय। अम्बरीषपुत्र। वसाति। बैल्ववन। शैलूष। उदुम्बर। बैल्वत। आर्जुनायन। संप्रिय। दाक्षि। ऊर्णनाभ[1] ॥

## १४८२. भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥ ( १२६३ )

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासंख्यं विधल्, भक्तल्—इत्येतौ प्रत्ययौ भवतः 'विषयो देशे' इत्येतस्मिन्विषये। अणोऽपवादः। भौरिकिविधः। वैपेयविधः। ऐषुकार्यादिभ्यः—ऐषुकारिभक्तः। सारस्यायनभक्तः।

भौरिकि। वैपेय। भौलिकि। चैटयत। काणेय। वाणिजक। वालिज। वालिज्यक। शैकयत। वैकयत। इति भौरिक्यादिः ॥

**न्यासः**

**राजन्यादिभ्यो वुञ्** ॥ **आकृतिगणश्चायमिति**। अपरिसमाप्ततां राजन्यादेर्दर्शयति। आदिशब्दश्चायं प्रकारार्थः ॥ ५३ ॥ **भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** ॥ ५४ ॥

**पदमञ्जरी**

**एवं राजन्यादिभ्यो वुञित्यत्रापि** विषयविवक्षायां राजन्यकम्, निवासो राजन्याः। तत्रैव बैल्वतादिषु विषयविवक्षैव, तेन बैल्वतकम्, आम्बरीषपुत्रकमित्याद्येव भवति। सर्वत्र चाभिधानशक्तिरेव हेतुः, तदाह—"विषयाभिधाने जनपदे लुप्, बहुवचनविषयाद् गान्धार्यादिभ्यो वा, राजन्यादिभ्यो वा वुञ्, वैल्ववनादिभ्यो नित्यम्,

**भावबोधिनी**

इस स्थिति में [ सूत्र में ] देश का ग्रहण ग्रामसमूह का ज्ञान कराने के लिए है अर्थात् जब ग्रामसमुदाय विषय हो तब प्रत्यय होते हैं। ] उदा०—शिबीनां विषयो देशः—शैबः [ शिबियों का विषय = ग्रामसमुदाग शैब कहा जाता है ] औष्ट्रः [ उष्ट्राणां विषयः देशः—ऊटों का गाँव ]। देश अर्थ हो—इसका क्या फल है? देवदत्त का विषय अनुवाक है। [ यहाँ अनुवाक देश नहीं है अतः प्रत्यय नहीं होता है ] ॥ ५२ ॥

'विषयो देशे' [ विषय देश रहने पर ]— इस अर्थ में राजन्य आदि शब्दों से वुञ् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—राजन्यों का विषय देश—राजन्यकः [ राजन्य + वुञ्, वु = अक ] देवयानों का विषय देश—दैवयानकः [ देवयान + वुञ् ]। यह आकृतिगण है। [ अतः अपठित शब्दों से भी वुञ् होता है। ] मालवों का विषय देश—मालवकः [मालव + वुञ् ]। विराटों का विषय देश—वैराटकः। त्रिगर्तों का विषय देश—त्रैगर्त्तः [त्रिगर्त + वुञ् ]।

[इस गण में पठित शब्द–] राजन्य। देवयान। शालङ्कायन। जालन्धरायण। आत्मकामेय। अम्बरीषपुत्र। वसाति। वैल्ववन। शैलूष। उदुम्बर। बैल्वत। आर्जुनायन। संप्रिय। दाक्षि। ऊर्णनाभ ॥ ५३ ॥

'विषयः देशः' [विषय देश] इस विषय में (क) भौरिकि आदि तथा (ख) ऐषुकारि आदि शब्दों से क्रमशः—विधल और भक्तल् ये प्रत्यय होते हैं। ये अण् के अपवाद हैं। उदा०—भौरिकीणां विषयः देशः—भौरिकिविधः [ भौरिकि + विधल् ]। वैपयानां विषयः देशः वैपेयविधः [वैपेय+विधल्] ऐषुकारी आदि से भक्तल् प्रत्यय—ऐषुकारिभक्तः [ऐषुकारि + भक्तल्] सारस्यायनभक्तः [ सारस्यायनानां विषयः देशः ]।

---

१. आप्रीत, अव्रीड, वैतिल, वात्रक —एते शब्दाः पुस्तकान्तरेऽधिकाः दृश्यन्ते।

**ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव[1] ॥**

## १४८३. सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥ ५५ ॥ ( १२६४ )

**'सः' इति समर्थविभक्तिः । 'अस्य' इति प्रत्ययार्थः । 'आदिः' इति प्रकृतिविशेषणम् । इतिकरणो विवक्षार्थः । 'छन्दसः' इति प्रकृतिनिर्देशः । 'प्रगाथेषु' इति प्रत्ययार्थविशेषणम् । 'सः' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं छन्दश्चेत्तदादिर्भवति, यत्तदस्येति निर्दिष्टं प्रगाथाश्चेत्ते भवन्ति । इतिकरणस्ततश्चेद्विवक्षा । पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः । आनुष्टुभः जागतः ।**

### न्यासः

**सोऽस्यादिरितिच्छन्दसः प्रगाथेषु** ॥ **छन्दस इति** । न स्वरूपग्रहणम्, नापि मन्त्रब्राह्मणयोः । कस्य तर्हि ? अक्षराणामियत्तावचनश्छन्दःशब्दोऽस्ति, यस्य जगत्यादयो विशेषाः, तस्येदं ग्रहणम् । तस्यैव हि प्रगाथ इत्यादौ सम्बन्धः, नेतरस्य । तेन पङ्क्त्यादिभ्यः प्रत्ययो भवतीत्युक्तं भवति ।

### पदमञ्जरी

न वाभिधेयस्य निवासविषयत्वात् । निवासविवक्षायां लुप्, विषयविवक्षायां तु प्रत्यय इति" [ म० भा० ( ४. २. ५२ वा० १–५ ) ] ॥ ५२ ॥ ५३ ॥ ५४ ॥

**सोऽस्यादिरितिच्छन्दसः प्रगाथेषु** ॥ **छन्दस इति** न स्वरूपग्रहणम्, नापि मन्त्रब्राह्मणयोः, कस्य तर्हि ? अक्षराणामियतावचनश्छन्दःशब्दोऽस्ति, यस्य जगत्यादयो विशेषास्तस्य ग्रहणम्; प्रगाथानामादौ तस्यैव सम्भवात्, तेन पङ्क्त्यादिशब्देभ्यः प्रत्ययः । यत्र द्वे ऋचौ तिस्रः क्रियन्त इति चतुर्थषष्ठौ पादौ बार्हतो प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येदित्येवमादिना प्रकारेण । तद्यथा—"यज्ञायज्ञा वः प्रियं मित्रं न शंसिषों प्रियं मित्रं न शंसिषमूजे निपातमिति" । तत्र योऽयमुच्चारणप्रकारस्तद्ग्रथनम् । **प्रग्रथनादिति** । प्रगाथशब्दप्रवृत्तिनिमित्तं दर्शयति, प्रग्रथ्यत

### भावबोधिनी

[ मौरिक्यादि-गण में पठित शब्द—] मौरिकि । वैपेय । मौलिकि । चैटयत । काणेय । वाणिजक । वालिज । वालिज्यक । शैकयत । वैकयत । यह मौरिक्यादि-गण है ।

[ ऐषुकार्यादिगण में पठित शब्द—] ऐषुकारि । सारस्यायन । चान्द्रायण । द्व्याक्षायण । त्र्यायण । औडायन । जौलायन । खाडायन । सौवीर । दासमित्रि । दासमित्रायण । शौद्रायण । दाक्षायण । शयण्ड । तार्क्ष्यायण । शौभ्रायण । सायण्डि । शौण्डि । वैश्वमाणव । वैश्वधेनव । नद । तुण्डदेव । विशदेव ॥ ५४ ॥

'सः' [ यह प्रथमान्त ]—यह समर्थविभक्ति है । 'अस्य' [ इसका ]—यह प्रत्ययार्थ है । 'आदिः' [ आदि ] यह प्रकृति का विशेषण है । इति—यह विवक्षा के लिये है । 'छन्दसः' [ छन्दः का ] यह प्रकृति का निर्देश है । प्रगाथों में—यह प्रत्ययार्थ का विशेषण है । 'सः' इस प्रथमासमर्थ से 'अस्य' [ इसका ]—इस षष्ठ्यर्थ में यथाविहित प्रत्यय होते हैं, जो प्रथमासमर्थ है वह यदि छन्द है, वह उसके आदि में हो तो यत्, तत् अस्य [ जो, वह, इसका ] इससे निर्दिष्ट वे यदि प्रगाथ होते हैं तो । 'इति' इसलिए है कि यदि उससे [ उक्त ] विवक्षा होती है । उदा०—पंक्तिः आदिः अस्य सः—पाङ्क्तः प्रगाथः । त्रिष्टुप् आदिः अस्य सः— त्रैष्टुभः प्रगाथः । जगती आदिः अस्य सः—जागतः प्रगाथः ।

**विमर्श**—प्रगाथेषु यह सप्तमी षष्ठीएकवचन के स्थान पर—प्रगाथस्य—के तात्पर्य में है । सः अस्य प्रगाथस्य आदिः—इस अर्थ में प्रथमान्त छन्दोविशेषवाची शब्द से अणादि प्रत्यय होते हैं । यहाँ लोकप्रसिद्ध छन्द का ग्रहण है, न स्वरूप का और न मन्त्रब्राह्मण का । जिस प्रगाथ का आदि पंक्ति छन्द होता है उसे पाङ्क्त प्रगाथ कहते हैं । पङ्क्ति एक विशेष छन्द है । इससे अण प्रत्यय, भसंज्ञा, इलोप, आदिवृद्धि करने पर पाङ्क्तः प्रगाथः बनता है । प्रगाथ की व्याख्या

---

१. अलायत, औलालायत, शौण्ड, शयाण्ड, वैश्वदेव—एते शब्दा अधिकाः क्वचित् पठ्यन्ते ।

**आदिरिति किम् ? अनुष्टुम्मध्यमस्य प्रगाथस्य। छन्दस इति किम् ? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेष्विति किम् ? पङ्क्तिरादिरस्यानुवाकस्य। प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते। यत्र द्वे ऋचौ प्रग्रथनेन तिस्रः क्रियन्ते स प्रग्रथनात्प्रकर्षगानाद्वा 'प्रगाथः' इत्युच्यते।**

**※ छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम् ※ (म० भा० ४.२.५५ वा० १) त्रिष्टुबेव त्रैष्टुभम् (ऋकसर्वा०)। (जगत्येव) जागतम् (ऋकसर्वा०)॥**

**न्यासः**

**प्रग्रथनेनेति।** उच्चारणविशेषणेन प्रग्रन्थनात् प्रकर्षाद् गायनार्थाद्वेति। एतेन यन्निमित्तकः प्रगाथशब्दस्तां क्रियां दर्शयति। प्रगाथशब्दोऽयं यदा 'अकर्त्तरि च कारके संज्ञायाम्' इति कर्मणि घञन्तो व्युत्पाद्यते—प्रग्रथ्यतेऽसौ प्रगाथ इति, पृषोदरादिपाठाद् ग्रन्थे रेफानुनासिकयोर्लोपश्च, तदा प्रग्रन्थनक्रियानिमित्तको भवति। यदा तु 'कै गै शब्दे' इत्यस्माद् 'उणादयो बहुलम्' इति प्रगाथस्थन्प्रत्ययान्तो व्युत्पाद्यते, तदा गायनक्रियानिमित्तो भवति।

**नपुंसक इत्यादि।** नपुंसकलिङ्गे स्वार्थ एव च्छन्दसः प्रत्ययस्योपसंख्यानम्। तत्रेदं व्याख्यानम्—इतिकरणो विवक्षार्थः। तेन यत्र प्रत्ययान्ताच्छिष्टानां विवक्षा भवति तत्र प्रत्ययेन भवितव्यम्। नपुंसकलिङ्गे स्वार्थेऽपि च सा भवति, अतस्तत्रापि प्रत्ययो भवति। अवश्यं चैतदेव विज्ञेयम्। यो हि मन्यते–'सर्वातिप्रसङ्गनिवृत्तिरितिकरणेन क्रियते' इति, तस्यासावनर्थक एव स्यात्; सर्वातिप्रसङ्गानामुपाधिभिर्निरस्तत्वात्॥ ५५॥

**पदमञ्जरी**

इति प्रगाथः, 'अकर्तरि च कारके' इति कर्मणि घञ्, पृषोदरादित्वाद्रेफनकारयोर्लोपः। **प्रागाणाद्वेति।**[1] 'कृत्यचः' इति णत्वम्, 'कै गै शब्दे', (धा० पा० ९१६, ९१७) प्रगीयत इति प्रगाथः, 'उषिकुषिगतिभ्यस्थन्' (द० उ० ६-२९) **त्रैष्टुभमिति।** कुटीर इति स्वार्थिकस्यापि रप्रत्ययस्य यथा भिन्नलिङ्गता, तथेहापि नपुंसकत्वं द्रष्टव्यम्॥ ५५॥

**भावबोधिनी**

आगे देखनी चाहिये।]

[अनु०] आदि हो—इसका क्या फल है ? अनुष्टुप् मध्यमस्य प्रगाथस्य। [अनुष्टुप् छन्द है मध्य में जिस प्रगाथ के—यहाँ नहीं होता है।] छन्दोविशेषवाचक से– यह किस लिये है ? उदुत्यशब्दः आदिः अस्य प्रगाथस्य। [उदुत्य शब्द छन्दोवाचक नहीं है अतः प्रत्यय नहीं होता है।] प्रगाथ का—यह किस लिये है ? पङ्क्ति आदि है जिस अनुवाक की—[यहाँ अनुवाक है प्रगाथ नहीं। अतः प्रत्यय नहीं होता है।]। प्रगाथ शब्द क्रियानिमित्तक है और कुछ मन्त्रविशेष के लिये ही प्रयुक्त होता है। जहाँ दो ऋचायें प्रग्रथन के द्वारा तीन कर दी जाती हैं, वह प्रग्रथन अथवा प्रकर्षगान के कारण 'प्रगाथ' ऐसा कहा जाता है।

**विमर्श**—प्रग्रथ्यते असौ प्रगाथः—यहाँ 'अकर्तरि च कारके संज्ञायाम्' (३।३।१९) सूत्र से कर्म में घञ् प्रत्यय होता है—प्रग्रन्थ + घञ् = अ, निपातनात् रेफ और अनुनासिक न् का लोप कर देने पर प्रगथ् + अ बना कर उपधावृद्धि होती है। जब गायन क्रिया की प्रतीति करानी इष्ट होती है तब '√गै' से थन् औणादिक प्रत्यय, 'ऐ' का आत्व कर दिया जाता है। जब कहीं विभिन्न छन्दों की दो या तीन ऋचाओं का ग्रथन किया जाता है तब उसे प्रगाथ कहा जाता है। उसके आदि का जो छन्द होता है उसी के नाम पर उस प्रगाथ का नाम हो जाता है जैसे—पाङ्क्तः प्रगाथः, आनुष्टुभः प्रगाथः आदि।

※ छन्द से प्रत्यय के विधान में नपुंसकलिङ्ग में स्वार्थ में प्रत्यय कहना चाहिये। ※ उदा०—त्रिष्टुप् एव त्रैष्टुभम् जगती एव जागतम्। [त्रिष्टुप् + अण्, आदिवृद्धि, जगती + अण्, आदिवृद्धि भसंज्ञा, ईलोप]॥ ५५॥

---

१. मुद्रितमूलपुस्तके प्रग्रथनादिति पाठ उपलभ्यते, स पदमञ्जर्यसम्मतः।

**१४८४. संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५६ ॥ ( १२६५ )**

**'सोऽस्य'** इति समर्थविभक्तिः, प्रत्ययार्थश्चानुवर्तते। प्रथमासमर्थविशेषणं प्रयोजनं योद्धारश्च। प्रत्ययार्थविशेषणं संग्रामः। प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च शब्देभ्यः प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे संग्रामेऽभिधेये यथाविहितं प्रत्ययो भवति। भद्रा प्रयोजनमस्य संग्रामस्य भाद्रः संग्रामः। सौभद्रः। गौरिमित्रः।

योद्धृभ्यः— अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः। स्यान्दनाश्वः। भारतः।

संग्राम इति किम्? सुभद्रा प्रयोजनमस्य दानस्य। प्रयोजनयोद्धृभ्य इति किम्? सुभद्रा प्रेक्षिकाऽस्य संग्रामस्य॥

**१४८५. तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५७ ॥ ( १२६६ )**

**तदिति प्रथमासमर्थात् 'अस्याम्' इति सप्तम्यर्थे णः प्रत्ययो भवति, यत्तदिति निर्दिष्टं प्रहरणं चेत्तद्भवति। यदस्यामिति निर्दिष्टं क्रीडा चेत्सा भवति। इतिकरणस्ततश्चेद्विवक्षा। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा।**

**न्यासः**

**संग्रामे प्रयोजनयोद्धृभ्यः॥** अत्र 'संग्रामे' इति प्रत्ययार्थ इति, सप्तम्यन्तत्वात्, 'प्रयोजनयोद्धृभ्यः' इति पञ्चम्यन्तत्वात् प्रकृतिनिर्देशः, ततश्च 'समर्थानां प्रथमाद्वा' इत्येतद्विरुध्यते; प्रथमस्य प्रत्ययार्थत्वेन द्वितीयस्य प्रकृतित्वेनोपादीयमानत्वादित्यस्य चोद्यस्य निरासायाह—**सोऽस्येति समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तत इति।** एतेनैतद् दर्शयति—'प्रयोजनयोद्धृभ्यः' इत्येतदेवमर्थं यस्मात् पूर्वसूत्रादेव स इति प्रथमं तदिहानुवर्त्तते, तद्विशेषणं तु प्रयोजनयोद्धृभ्य इति। प्रत्ययार्थोऽप्यस्येति पूर्वसूत्रादनुवर्त्तते, तद्विशेषणं संग्रामः, ततो नास्ति विरोधः; पूर्वसूत्रे यो प्रथमानिर्दिष्टस्तत एव प्रत्ययविधानादिति ॥ ५६ ॥ **तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५७ ॥**

**पदमञ्जरी**

**संग्रामे प्रयोजनयोद्धृभ्यः॥** 'समर्थानां प्रथमाद्वा' इति वचनात्संग्रामवाचिभ्यः प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्यश्चरमनिर्दिष्टेभ्य इत्याशङ्क्याह—**सोऽस्येति समर्थविभक्तिरित्यादि। प्रथमासमर्थविशेषणमिति।**

**भावबोधिनी**

'सः अस्य' इस समर्थविभक्ति की और प्रत्ययार्थ की अनुवृत्ति होती है। प्रथमासमर्थ का विशेषण 'प्रयोजन' और 'योद्धा' हैं। प्रत्ययार्थ का विशेषण संग्राम है। प्रयोजनवाची और योद्धृवाची प्रथमासमर्थ शब्दों से 'अस्य' [ इसका ] इस षष्ठ्यर्थ में 'संग्राम' अर्थ वाच्य रहने पर यथाविहित प्रत्यय होते हैं। उदा०—भद्रा है प्रयोजन इस संग्राम का—भाद्रः संग्रामः। [ सुभद्रा प्रयोजनम् अस्य संग्रामस्य सः ] सौभद्रः। गौरिमित्रः [ गौरिमित्री प्रयोजनम् अस्य संग्रामस्य सः। इनमें भद्रा, सुभद्रा और गौरिमित्री को प्रयोजन=उद्देश्य बनाकर होने वाला संग्राम अर्थ प्रतीत होता है। प्रथमासमर्थ भद्रा, सुभद्रा और गौरिमित्री शब्दों से अण्, आलोप, इलोप, आदिवृद्धि आदि कार्य होता है। ]

योद्धृवाची से—अहिमाला योद्धारः अस्य संग्रामस्य स आहिमालः। [ अहिमाल जिसके योद्धा हैं वह आहिमाल संग्राम होता है। ] स्यान्दनाश्वः [स्यन्दनाश्व योद्धा हैं इस संग्राम के वह]। भारतः [भरतवंशी योद्धा हैं इस संग्राम के वह]।

संग्राम अर्थ रहने पर—यह किस लिये है? सुभद्रा प्रयोजन है इस दान की। [ यहाँ नहीं होता है। ] प्रयोजन और योद्धृवाची से—यह किस लिये है? सुभद्रा प्रेक्षिका अस्य संग्रामस्य। [ सुभद्रा इस संग्राम की प्रेक्षिका है। प्रयोजन या योद्धा नहीं है। अतः प्रत्यय नहीं होता है ] ॥ ५६ ॥

'तत्' इस प्रथमासमर्थ से 'अस्याम्' इस सप्तमी के अर्थ में 'ण' प्रत्यय होता है जो 'तत्' [ वह ]—इससे निर्दिष्ट है वह यदि 'प्रहरण' होता हो तो। जो 'अस्याम्' इससे निर्दिष्ट है वह यदि क्रीड़ा हो तो। 'इति' इसलिये है कि उससे विवक्षा हो तो। [ भाव यह है कि जिस प्रथमान्त से 'ण' प्रत्यय करना है वह प्रहरण=आयुध का वाचक होना चाहिये और

**प्रहरणमिति किम् ? माला भूषणमस्यां क्रीडायाम् । क्रीडायामिति किम् ? खड्गः प्रहरणमस्यां सेनायाम् ॥**

**१४८६. घञः सास्यां क्रियेति ञः ॥ ५८ ॥ ( १२६७ )**

**'सा' इति समर्थविभक्तिः । 'अस्याम्' इति प्रत्ययार्थः स्त्रीलिङ्गः । 'क्रिया' इति प्रकृत्यर्थविशेषणम् । 'घञः' इति प्रकृतिनिर्देशः । इतिकरणो विवक्षार्थः । घञन्तात्क्रियावाचिनः प्रथमासमर्थात् 'अस्याम्' इति सप्तम्यर्थे स्त्रीलिङ्गे ञः प्रत्ययो भवति । 'घञः' इति कृद्ग्रहणम्, तत्र गतिकारकपूर्वमपि गृह्यते । श्येन पातोऽस्यां वर्तते श्यैनंपाता । तैलंपाता ।**

**न्यासः**

**घञः सास्यां क्रियेति ञः ॥ क्रियेति प्रकृतिविशेषणमिति ।** यत्र तद् घञन्तं क्रियावाचि चेद् भवतीति । तेन भावे यो घञ् तदन्तात् प्रत्ययो भवतीत्युक्तं भवति । ननु च भावे यो घञ् तेनैव तदन्तं क्रियावाचि ? यस्माद् धात्वर्थस्य सिद्धता नाम यो धर्मस्तत्र घञादिभिर्भवितव्यमित्युक्तं प्राक्, धर्मधर्मिणोर्भेदस्याविवक्षितत्वात् क्रियाधर्मोऽपि क्रियाशब्देनोक्त इत्यदोषः । **इतिकरणो विवक्षार्थ इति ।** ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्त्तिष्यते, तत् किं पुनरिह तस्योपादानम् ? इतिकरणस्येह प्रकरणेऽनधिकारतां दर्शयितुं पुनरुपादानम् । तेन 'तदधीते तद्वेद' इत्यत्रास्येतिकरणस्याननुवृत्तौ विवक्षानियमाभावादध्येतृवेदितृमात्रे प्रत्ययः सिद्धो भवतीत्येके । वैचित्र्यार्थमितिकरणोपादानमित्यपरे । **श्यैनम्पातेति ।** 'शल हुल पत्लृ गतौ', भावे घञ्, श्येनस्य पात इति षष्ठीसमासः । ञे विहिते 'श्येनतिलस्य पाते ञः' इति मुम् ।

**पदमञ्जरी**

तेन विशेष्यद्वारेण प्रयोजनयोद्धार एव प्रथमनिर्दिष्टाः । **प्रत्ययार्थविशेषणं संग्राम इति ।** तेन तद्द्वारेण संग्रामश्चरमनिर्दिष्टः ॥ ५६ ॥ ५७ ॥

**घञः सास्यां क्रियेति ञः ॥ अस्यामिति प्रत्ययार्थः स्त्रीलिङ्ग इति ।** तेन लिङ्गस्य विवक्षितत्वं दर्शयति । **घञन्तात्क्रियावाचिन इति ।** भावे यो घञ् तदन्तादित्यर्थः । **श्यैनम्पातेति ।** पतनं पातः, श्येनानां पात इति कर्तरि षष्ठ्याः समासः, ततो ञः, 'श्येनतिलस्य पाते ञः' इति मुम् । **प्राकार इति ।** द्रव्यवचनोऽयं कर्मणि

**भावबोधिनी**

क्रीडा अर्थ प्रत्यय से प्रतीत होना चाहिये । इति शब्द इसलिये है कि विवक्षा में ही यह प्रत्यय होता है विवक्षा न होने पर नहीं होता है । ] उदा० दण्डः प्रहरणम् अस्यां क्रीडायां सा—दाण्डा । [ डंडा है आयुध जिस क्रीडा में वह दाण्डा क्रीडा कही जाती है । दण्ड + ण = अ, आदिवृद्धि,, टाप् डंडेबाजी का खेल ] । मौष्टा [ मुष्टिः प्रहरणम् अस्यां क्रीडायां सा—मौष्टा । मुष्टि + ण = अ, आदिवृद्धि, भसंज्ञा, ईलोप, टाप्, मुक्कों से जिसमें लड़ा जाय वह क्रीडा मुक्केबाजी का खेल ।]

प्रहरण=आयुध--यह किसलिये है ? माला भूषण=अलंकार है इस क्रीडा में । [यहाँ प्रहरण की प्रतीति नही है अतः प्रत्यय नहीं होता है । ] क्रीडा में—यह किसलिये है ? खड्ग प्रहरण है इस सेना में । [ यहाँ सेना की प्रतीति है क्रीडा की नहीं । अतः प्रत्यय नहीं होता है ॥ ५७ ॥

'सा' यह समर्थविभक्ति है । 'अस्याम्' [ इसमें ] यह प्रत्ययार्थ स्त्रीलिङ्ग है । 'क्रिया' यह प्रकृत्यर्थ का विशेषण है। 'घञः' [ घञन्त से ]—यह प्रकृति का निर्देश है । 'इति' का प्रयोग विवक्षा के लिये है । घञ् प्रत्ययान्त क्रियावाची प्रथमासमर्थ से 'अस्याम्' [ इसमें ]—इस सप्तम्यर्थ स्त्रीलिङ्ग में 'ञ' प्रत्यय होता है । 'घञः' यह कृत् प्रत्यय का ग्रहण है । इसमें गति और कारक जिसके पूर्व में है उसका भी ग्रहण होता है । उदा०—श्येनपातः अस्यां क्रियायां सा—श्यैनम्पाता । [ पतनं पातः, श्येनानां पातः इस समास के बाद—श्येनपातः, श्येनपात बाज का गिरना या गिराना जिस क्रिया में वह—इस अर्थ में प्रस्तुत सूत्र से 'ञ' प्रत्यय आदिवृद्धि भसंज्ञा, अलोप कर देने के बाद श्येनतिलस्य

**घञ इति किम् ? श्येनपतनमस्यां वर्तते । क्रियेति किम् ? प्राकारोऽस्यां वर्तते ।**

**अथ समर्थविभक्तिः प्रत्ययार्थश्च कस्मात्पुनरुपादीयते, यावता द्वयमपि प्रकृतमेव ? क्रीडायामित्यनेन तत्सम्बद्धम्, अतस्तदनुवृत्तौ क्रीडानुवृत्तिरपि सम्भाव्येत । सामान्येन चेदं विधानम् । दण्डपातोऽस्यां तिथौ वर्तते दाण्डपाता तिथिः । मौसलपाता तिथिः ॥**

## १४८७. तदधीते तद्वेद ॥ ५९ ॥ ( १२६९ )

**तदिति द्वितीयासमर्थाद् 'अधीते', 'वेद'—इत्येतयोरर्थयोर्यथाविहितं प्रत्ययो भवति । छन्दोऽधीते**

### न्यासः

**प्राकार इति** । करोतेः प्रपूर्वाद् 'अकर्त्तरि च कारके संज्ञायाम्' इति कर्मणि घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति प्रशब्दस्य दीर्घः । भवतीदं घञन्तम्, न तु क्रियावाचि; प्राकारस्य द्रव्यत्वात् ।

**अथेत्यादि चोद्यम्** । **क्रीडायामित्यनेन तत्सम्बद्धमित्यादि** परिहारः । स्यादेतत् अनुवर्त्ततां क्रीडा, तस्याञ्चेदं प्रत्ययविधानमिष्यत इत्यत आह—**सामान्येन चेत्यादि** ॥ ५८ ॥

**तदधीते तद्वेद** ॥ **वैयाकरण इति** । 'न य्वाभ्याम्' इत्यादिना वृद्धिप्रतिषेधः, ऐजागमश्च ।

### पदमञ्जरी

घञन्तः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति प्रशब्दस्य दीर्घत्वम् । **सामान्येन चेदं विधानमिति** । एतदेवोदाहरणेन द्रढयति—**दण्डपात इति** ॥ ५८ ॥

**तदधीते तद्वेद** ॥ इह योऽयं ग्रन्थमधीते स तं स्वरूपतो वेत्ति, यश्च वेत्ति सोऽवश्यमधीते—इत्यन्यतरोपादानेन सिद्धम्, किमर्थमिमावर्थावुपदिश्येते ? नैतयोरावश्यकः समावेशः, अध्ययनम् = शब्दपाठः, अर्थावबोधः = वेदनम्, भवति च—कश्चित्संपाठं पठति नार्थं वेत्ति, कश्चिच्चार्थं वेत्ति न संपाठं पठति ।

### भावबोधिनी

पाते ञे' ६।२।६९ से मुम्=म् आगम होता है ।] तैलम्पातः । [तिलों का गिरना जिस क्रिया में है वह । तिलानां पातः—समास करके तिलपात से 'ञ' आदिवृद्धि और मुम् आगम होता है । ]

घञ् प्रत्ययान्त से—यह किसलिये है ? श्येनपतनम् अस्यां क्रियायां सा । [ यहां ल्युट् प्रत्ययान्त 'पतन' है, घञ् प्रत्ययान्त 'पात' नहीं । अतः प्रत्यय नहीं होता है ] क्रिया हो—यह किसलिये है ? प्राकारः अस्यां क्रियायां वर्तते । [ यहां नही होता है क्योंकि 'प्राकार' यह द्रव्यवाची है क्रियावची नहीं । अतः प्रत्यय नहीं होता है । ]

समर्थविभक्ति [ =सा ] और प्रत्ययार्थ [ =अस्याम् ] इनका दूसरी बार उल्लेख क्यों किया जा रहा है क्योंकि इन दोनों की अनुवृत्ति [ पूर्वसूत्र से ] हो ही जाती है ? [ इसका उतर यह है कि ] पूर्वसूत्र में इनका सम्बन्ध 'क्रीडायाम्' [ क्रीडा अर्थ ] के साथ है, अतः इनकी अनुवृत्ति मानने पर 'क्रीडा' इसकी भी अनुवृत्ति सम्भव होने लग जाती । किन्तु सूत्र सामान्य विधान करता है । [ अतः इनमें भी यह प्रत्यय होता है — ] दण्डपातः अस्यां तिथौ वर्तते—दाण्डपाता तिथिः [ दण्डपात + 'ञ' आदिवृद्धि, टाप् ] मौसलपाता तिथिः । [ मूसलपातः अस्यां तिथौ वर्तते—इस अर्थ में 'ञ' प्रत्यय, टाप् । ] ॥ ५८ ॥

तद्' [ उसको ]—इस द्वितीया-समर्थ से 'अधीते' [ अध्ययन करता है ] और 'वेद' [ जानता है ]—इन अर्थों में यथाविहित प्रत्यय होते हैं । उदा०—छन्दः अधीते—वेद वा, छान्दसः [ वेद पढ़ने वाला जानने वाला छन्दस् + अण्, आदिवृद्धि ] व्याकरणम् अधीते वेद वा—वैयाकरणः । व्याकरण पढ़नेवाला या जाननेवाला । व्याकरण + अण् = अ, ऐच् आगम व् ऐ याकरण = वैयाकरण ] नैरुक्तः [ निरुक्त + अण् अर्थ पूर्वोक्त ] निमित्तानि वेद—नैमित्त [ निमित्त = शुभ अशुभ शकुन आदि जानने वाला । निमित = अण् ] । मौहूर्तः [ मुहूर्तम् अधीते, वेद वा । मुहूर्त + अण्, आदिवृद्धि । ज्योतिषी ] उत्पातं वेद—औत्पातः [ उत्पात + अण् । ]

छान्दसः । वैयाकरणः । नैरुक्तः । निमित्तानि वेद नैमित्तः । मौहूर्तः । औत्पातः ।

द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थम् ॥

**१४८८. क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥ ( १२७० )**

क्रतुविशेषवाचिभ्य उक्थादिभ्यश्च सूत्रान्ताच्च ठक्प्रत्ययो भवति 'तदधीते तद्वेद' (४.२.५९) इत्यस्मिन्विषये । अणोऽपवादः । अग्निष्टोममधीते वेद वा आग्निष्टोमिकः । वाजपेयिकः । उक्थादिभ्यः—औक्थिकः ।

**न्यासः**

**द्विस्तद्ग्रहणमित्यादि** । यदि 'तदधीते वेद' इत्येवोच्येत प्रत्ययार्थद्वयस्य द्वितीयासमर्थे समुच्चयो विज्ञायेत, ततश्च यस्त्वधीते वेत्ति च तत्रैव स्यात्; यस्त्वधीते केवलं न वेत्ति, वेत्ति वा केवलं नाधीते तत्र न स्यात् । द्विस्तद्ग्रहणे तु वाक्यभेदादधीयाने विदुषि च प्रत्येकं प्रत्ययः सिध्यति । तदर्थं द्विस्तद्ग्रहणम् । नैतद् द्विस्तद्ग्रहणस्य प्रयोजनम्, यथैव हि 'तेन दीव्यति खनति जयति जितम्' इत्यत्र सकृत् समर्थविभक्त्युपादानेऽपि प्रत्ययार्थचतुष्टयेन तृतीयासमर्थेन समुच्चयो न विज्ञायते, तथेहापि न विज्ञास्यते । तेन यथा दीव्यतिप्रभृतिषु प्रत्ययो भवति, तथेहापि प्रत्येकमधीयाने विदुषि च भविष्यतीति ? न ब्रूमः—इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति । कुतस्तर्हि ? 'क्रतूक्थादिसूत्रान्ताट्ठक्' 'वसन्तादिभ्यष्ठक्' इत्यत्र च । किं कारणं तत्र न स्यात् ? क्रतुशब्दः कर्मनामधेयः, वसन्तादयोऽप्यृतुवचनाः, तेषामध्ययनं नोपपद्यते । तत्सहचरिते ग्रन्थे स्यात्, स च तत्र गौण इति न गृह्यते । मुख्य एवार्थे वेदने सम्भवतीति तेभ्यो विदुष्येव प्रत्ययः स्यात्, नाध्येतरि । पुनर्द्विस्तद्ग्रहणाद् गौणस्यापि ग्रहणं भवतीति प्रत्येकमध्येतृविदुषोरत्र ठक्प्रत्ययो भवति ॥ ५९ ॥

**क्रतूक्थादिसूत्रान्ताट्ठक्** ॥ क्रतुशब्दः कर्मनामधेयः, तस्याध्यनवेदने द्वे न सम्भवत इति साहचर्यात् तदर्थो ग्रन्थो गृह्यते, न तु क्रतुनामा क्रतुरस्तीति तद्विशेषा येऽग्निष्टोमादयस्तदर्थो ग्रन्थो गृह्यते, तत्र चाह—क्रतुविशेष-

**पदमञ्जरी**

**द्विस्तद्ग्रहणमित्यादि** । 'तदधीते वेद' इत्यमुच्यमाने समुच्चयो विज्ञायेत, ततश्च यस्तदधीते वेद च तत्रैव स्यात्, यस्तु केवलमधीते वेद वा न तत्र स्यात्; द्विस्तद्ग्रहणे तु वाक्यभेदेनाधीयानविदुषोः पृथक्प्रत्ययविधानं सिध्यति । ननु च 'तदस्य तदस्मिन्स्यात्' इत्यत्र नानार्थनिर्देशे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति द्विस्तद्ग्रहणेन न्यायो व्युत्पादयिष्यते, अत एव 'तेन दीव्यति' इत्यत्र प्रत्यर्थं प्रत्ययो भवति ? न ब्रूमः—इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति, किं तर्हि ? उत्तरत्र 'क्रतूक्थादिसूत्रान्ताठ्ठक्', 'वसन्तादिभ्यष्ठक्' इत्यत्रापि, किं च कारणं न स्यात् ? क्रतुशब्दः कर्मनामधेयं वसन्तादयोऽप्यर्थाः, न तेषामध्ययनं सम्भवति, तस्य शब्दविषयत्वात्, तत्सहचरिते तु ग्रन्थे सम्भवति, गौणत्वात्तु न गृह्यते, मुख्य एव त्वर्थे वेदनं सम्भवतीति तेभ्यो विदुष्येव स्याद्, नाध्येतरि । पुनस्तद्ग्रहणात्तु यत्नाद् गौणस्यापि ग्रहणात्तत्रापि भवति ॥ ५९ ॥

**क्रतूक्थादिसूत्रान्ताट्ठक्** ॥ **क्रतुविशेषवाचिभ्य इति** । स्वरूपस्य तु ग्रहणं न भवति, यदि स्यादुक्थादिष्वेव पठेत् । क्रतुसामान्यवाचिनामपि सोमयागादीनां पर्यायाणां न भवति; उक्थादिषु यज्ञशब्दस्य पाठात् । तस्माद्वि-

**भावबोधिनी**

[ तदधीते वेद - ऐसा न कह कर 'तद् अधीते, तद् वेद' ] दो बार 'तद्' का ग्रहण अध्ययन करनेवाले और जानने वाले इन दोनों अर्थों में अलग अलग विधान के लिये है । [ अतः व्याकरण को केवल पढ़नेवाला अथवा केवल जानने वाला भी वैयाकरण कहा जाता है । यदि दो बार 'तद्' का ग्रहण नहीं किया जाता तो अध्ययन और ज्ञान दोनों करने वाला—इसी अर्थ में प्रत्यय हो पाता ] ॥ ५९ ॥

क्रतु=यज्ञविशेष के वाचक, उक्थादि और सूत्रशब्दान्त [ समर्थ प्रातिपादकों ] से 'तद् अधीते तद् वेद' [ उसे पढ़ाता है, उसे जानता है ]—इस विषय में ठक् प्रत्यय होता है । यह अण् का अपवाद है । उदा० अग्निष्टोमम्

**लौकायतिकः । सूत्रान्तात्—वार्त्तिकसूत्रिकः । सांग्रहसूत्रिकः ।**

**ॐ सूत्रान्तादकल्पादेरिष्यते ॐ ( ग० सू० ८३ ) । कल्पसूत्रमधीते काल्पसूत्रः, अणेव भवति । उक्थशब्दः केषुचिदेव सामसु रूढः । यज्ञायज्ञीयात्परेण यानि गीयन्ते, न च तान्यधीयाने प्रत्यय इष्यते, किं तर्हि ? सामलक्षणे औक्थिक्ये वर्तमान उक्थशब्दः प्रत्ययमुत्पादयति । उक्थमधीते, औक्थिकः । औक्थिक्यमधीत इत्यर्थः । औक्थिक्यशब्दाच्च प्रत्ययो न भवत्येव; अनभिधानात् ।**

**न्यासः**

वाचिभ्य इति । अग्निष्टोममधीत इत्यग्निष्टोमेन सहचरितं तदर्थग्रन्थमधीत इत्यर्थः ।

**सूत्रान्तादकल्पादेरिष्यत इति** । किमिष्यत एव ? ततो न तत् शस्यते, लभ्यते च । कुतः ? वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानात् । किं तर्हि ? **सामलक्षण औक्थिक्ये वर्त्तमाने इति** । उक्थसंज्ञकानां साम्नां लक्षणं व्याख्याग्रन्थ औक्थिक्यः 'छन्दोगौक्थिक्य' इत्यादिना ञ्यः । तत्रौक्थिक्ये सामलक्षणे ग्रन्थे वर्त्तमान उक्थशब्दः प्रत्ययमुत्पादयति । कुत एतत् ? गौणेन सह क्रतुशब्देन निर्देशात् । औक्थिक्ये उक्थशब्दस्य वृत्तिस्तादर्थ्याद्भवति । भवति च तादर्थ्यात् ताच्छब्द्यम्, यथा—प्रदीपार्था मल्लिका प्रदीप इति । अत्रौक्थिक्यं योऽधीते कथं तत्र भवितव्यम् ? इत्यत आह —**औक्थिक्यशब्दाच्चेति** । तत्रैव कारणमाह—**अनभिधानादिति** ।

**पदमञ्जरी**

शेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि प्रत्ययः, तत्प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरि । **वार्त्तिकसूत्रिक इति** । वृत्तौ साधु वार्त्तिकम् 'कथादिभ्यष्ठक्' । वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात्प्रत्ययः । एवं **सांग्रहसूत्रिक इति** । कल्पसूत्रमिति कर्मधारयः, समाहारद्वन्द्वो वा ।

**यज्ञायज्ञीयात्परेणेति** । एनपा योगे पञ्चमी चिन्त्या, एनबपि परशब्दात्पाक्षिकः, यदा तद्विधौ 'उत्तराधरदक्षिणादातिः' इति नानुवर्तते, दिक्शब्देभ्य इत्येवानुवर्तते । **न च तान्यधीयाने प्रत्यय इष्यत इति** । ठग्, अण् च प्रत्ययद्वयमपि नेष्यते, तेनोक्थान्यधीयत इति वाक्यमेव भवति । अत्र च अभिधानमेव शरणम्, सामलक्षणं प्रातिशाख्यम् । **औक्थिक्य इति** । औक्थिकानामाम्नायः, इदमर्थे 'छन्दोगौक्थिक' इति ञ्यः । **औक्थिक्यशब्दाच्च प्रत्ययो न भवतीति** । अण्प्रत्यय इत्यर्थः, इदं प्रसङ्गादुक्तम् । **सूत्रान्तादिति** । अत्यल्प-

**भावबोधिनी**

अधीते वेद वा—अग्निष्टोमिकः [ अग्निष्टोम को पढ़ने वाला या जानने वाला । अग्निष्टोम + ठक्, ठ = इक, आदिवृद्धि ]। वाजपेयिकः [ वाजपेय यज्ञ का अध्ययन करने वाला, जानने वाला । वाजपेय + ठक्, शेष पूर्ववत् । इनमें अग्निष्टोम और वाजपेय शब्द इन यज्ञों के प्रतिपादक ग्रन्थों के लिए हैं, तभी अध्ययन की उपपत्ति होती है । ] उक्थआदि से—औक्थिकः । [सामवेद के किसी ग्रन्थ को उक्थ कहते हैं, उसे पढ़ने वाला या जाननेवाला] लौकायतिकः [लोकायत = चार्वाक दर्शन पढ़ने वाला । जानने वाला । ] सूत्रान्त से—वार्त्तिकसूत्रिकः [ वार्त्तिकसूत्रम् अधीते वेद वा । वार्त्तिक और सूत्र का कर्मधारय करके प्रत्यय करना चाहिये । ] सांग्रहसूत्रिकः [ संग्रहसूत्र को पढ़ने वाला । ]

ॐ सूत्रान्त शब्द, जिसके आदि में कल्प शब्द नहीं है, से ठक् प्रत्यय इष्ट है । ॐ कल्पसूत्रम् अधीते वेद वा—काल्पसूत्रः—यहाँ अण् ही होता है । [ क्योंकि इसमें कल्प शब्द आदि में है । ] उक्थ शब्द सामवेद के कुछ विशेष ग्रन्थों में ही रूढ है । यज्ञायज्ञीय सूक्त के बाद में जो गाये जाते हैं, उनका अध्ययन करने वाला—इस अर्थ में प्रत्यय इष्ट नहीं है; तो क्या ? [ लक्षण द्वारा ] उक्थ शब्द सामलक्षण = प्रातिशाख्य औक्थिक्य के अर्थ में प्रयुक्त होता हुआ प्रत्यय को उत्पन्न कराता है । अतः उक्थम् अधीते—औक्थिकः । औक्थिक्य का अध्ययन करता है—यह अर्थ है । [ उक्थ शब्द औक्थिक्यपरक है तो इससे भी प्रत्यय होना चाहिये ? ] औक्थिक्य शब्द से तो प्रत्यय होता ही नहीं है, क्योंकि अनभिधान है । [ अतः औक्थिक्यम् अधीते—यह वाक्य ही होता है । तद्धितप्रत्ययान्त नहीं होता है । ]

**❀ विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यम् ❀ (म० भा० ४. २. ६० वा० )। ( विद्या ) वायसविद्यिकः। सार्पविद्यिकः। ( लक्षण: ) गौलक्षणिकः। आश्वलक्षणिकः। ( कल्पः ) मातृकल्पिकः। पाराशरकल्पिकः। ( सूत्रम्—वार्तिकसूत्रिकः, सांग्रहसूत्रिकः )।**

**❀ विद्या च नाङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा ❀ ( श्लो० वा० ) अङ्गविद्यामधीते आङ्गविद्यः। क्षात्त्रविद्यः। धार्मविद्यः। सांसर्गविद्यः। त्रैविद्यः।**

**❀ आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्यः ❀ ( श्लोक० वा० )। आख्यानाख्यायिकयोरर्थग्रहणम्, इतिहासपुराणयोः स्वरूपग्रहणम्। यावक्रीतिकः। प्रैयङ्गविकः। वासवदत्तिकः। सौमनोत्तरिकः। ऐतिहासिकः। पौराणिकः।**

**न्यासः**

'विद्यालक्षणकल्पसूत्रान्तात्' इत्यस्यातिप्रसक्तस्यापवादमाह—**विद्या चेत्यादि**। विद्याशब्दोऽनङ्गक्षत्रधर्मसंसर्गत्रिपूर्व एव प्रत्ययमुत्पादयति, नाङ्गादिपूर्व इत्यर्थः। **त्रैविद्य इति**। त्र्यवयवा विद्या, शाकपार्थिवादित्वादुत्तरपदलोपी समासः। त्रिविद्यामधीते त्रैविद्यः।

यावक्रीतमाख्यानमधीते **यावक्रीतिकः**। प्रियङ्गुमधीते प्रैयङ्गविकः। वासवदत्तामाख्यायिकामधीते **वासवदत्तिकः**। सुमनोत्तरामधीते **सौमनोत्तरिकः**।

**पदमञ्जरी**

मिदमुच्यत इत्याह—**विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यमिति। विद्या** चेत्यादिवाक्येनातिप्रसक्तस्यापवादः। अङ्गादिपूर्वो विद्याशब्दः प्रत्ययं नोत्पादयतीत्यर्थः। **त्रैविद्य इति**। त्र्यवयवा विद्या त्रिविद्या, तामधीते त्रैविद्यः। तिस्रो विद्या अधीत इति तु विग्रहे 'द्विगोर्लुगनपत्ये' इति लुक्प्रसङ्गः।

**यावक्रीतिक इति**। यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतशब्देनोच्यते, एवं प्रैयङ्गवमधिकृत्य कृतमुपचारात्प्रैयङ्गवमुच्यते। **वासवदत्तिक इति**। वासवदत्तामधिकृत्य कृता आख्यायिका, 'अधिकृत्य कृते ग्रन्थे' इत्यत्रार्थे 'वृद्धाच्छः', तस्य 'लुबाख्यायिकाभ्यो बहुलम्' (वा० ४६७) इति लुप्, ततोऽनेन ठक्। एवं **सौमनोत्तरिक, ऐतिहासिक इति**। इति हासीदिति यत्रोच्यते स इतिहासः, पृषोदरादित्वात्साधुः।

**भावबोधिनी**

❀ विद्या, लक्षण, कल्प और सूत्र जिनके अन्त में है, उनसे प्रत्यय इष्ट है। ❀ वायसविद्यिकः [ वायसविद्याम् अधीते वेद वा। वायसविद्या + ठक्, ठ = इक, भसंज्ञा, आलोप। कौआ-सम्बन्धी विद्या का जानकार ]। सार्पविद्यिकः [ सर्पविद्या पढ़ने वाला या जानने वाला। सर्पविद्या + ठक्, आदिवृद्धि, शेष पूर्ववत् ] गौलक्षणिकः। आश्वलक्षणिकः [ गाय के लक्षण जानने वाला, घोड़े के लक्षण जानने वाला ]। मातृकल्पिकः [ मातृकल्प का जानकार ], पाराशरकल्पिकः [ पराशर कल्प को जानने वाला ]। [ वार्त्तिकसूत्र का जानकार, संग्रहसूत्र का जानकार ] ❀ अङ्ग, क्षत्र, धर्म, संसर्ग और त्रि—ये शब्द जिसके पूर्व में है, ऐसे विद्या शब्द से उक् प्रत्यय नहीं होता है। ❀ अङ्गविद्याम् अधीते—अङ्गविद्यः। [ ठक् न करके औत्सर्गिक अण् प्रत्यय होता है। सामुद्रिक शास्त्र पढ़ने या जानने वाला ]। क्षात्रविद्यः [ क्षत्रिय-सम्बन्धी विद्या का जानकार ], धर्मविद्यः [ धर्म-सम्बन्धी विद्या जानने वाला ], सांसर्गविद्यः [ संसर्ग विद्या को जानने वाला ], त्रैविद्यः [ तीन विद्याओं को जानने वाला। इन सभी में ठक् न होकर अण् ही होता है। ]

❀ आख्यान, आख्यायिका, इतिहास और पुराण शब्दों से ठक् प्रत्यय कहना चाहिये। ❀ आख्यान और आख्यायिका इनके अर्थ का ग्रहण [ अर्थात् शब्द से प्रत्यय न करके आख्यायिकावाची से प्रत्यय करना है ] और इतिहास एवं पुराण—इन शब्दरूपों का ग्रहण है। यावक्रीतिकः [ यवक्रीत को आधार मानकर बनाया गया आख्यान भी यवक्रीत है, उसे पढ़ने वाला—इस अर्थ में ठक् प्रत्यय है 'ठ' का इक, आदिवृद्धि] प्रैयङ्गविकः। प्रैयङ्गव को आधार मानकर बनाया गया आख्यान भी प्रैयङ्गव कहा जाता है। इससे ठक् किया जाता है। ] वासवदत्तिकः [ वासवदत्ता को मानकर बनायी गयी आख्यायिका—इस अर्थ 'छ' प्रत्यय और उसका लोप हो जाने के बाद—वासवदत्ता शब्द से ठक् होता

❀ **सर्वसादेर्द्विगोश्च लः** ❀ ( श्लो० वा० )। **सर्ववेदः। सर्वतन्त्रः। सादेः—सवार्त्तिकः। ससंग्रहः। द्विगोः—द्विवेदः। पञ्चव्याकरणः।**

❀ **अनुसूर्लक्ष्यलक्षणे च** ❀ ( श्लो० वा० )। **अनुसूर्नाम ग्रन्थः, तमधीते आनुसुकः। लाक्षिकः। लाक्षणिकः।**

❀ **इकन्बहुलं पदोत्तरपदात्** ❀। **पूर्वपदिकः**[1]।

**न्यासः**

**सर्वसादेर्द्विगोश्च ल इति।** सर्वादेः सादेर्द्विगोरुत्पन्नस्य ठको लोपो भवतीत्यर्थः। ननु च 'द्विगोर्लुगनपत्ये' इत्येव सिद्धः? सत्यमेतत्; इह तु कैश्चिद् 'विद्यालक्षणकल्पसूत्रान्ताद्' इत्यादिना प्रतिपदं प्रत्ययो विधीयते। तद् द्वैष्यमपि जायेत प्रतिपदविधानान्न लुक्, ततो लुग्वचनम्।

**अनुसूर्लक्ष्यलक्षणे चेति।** अनुसूशब्दः प्रत्ययमुत्पादयति। लक्ष्यलक्षणे च शब्दरूपे प्रत्ययमुत्पादयतः। **आनुसुक इति।** 'इसुसुक्तान्तात् कः' इति कः, 'केऽणः' इति ह्रस्वः।

**इकन् बहुलं पदोत्तरपदादिति।** पदशब्द उत्तरपदं यस्य स तथोक्तः।

**पदमञ्जरी**

**सर्वसादेरिति।** सर्वादेः, सादेर्द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति लुग्भवतीत्यर्थः, अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः, 'द्विगोश्च' इत्यनेन 'द्विगोर्लुगनपत्ये' इत्ययमेव लुक् स्मारितः। **सर्ववेद इति।** सर्ववेदानधीते इत्यणो लुक्। **सवार्त्तिक इति।** वार्त्तिकान्तमधीते इति अन्तवचने सहशब्दस्याव्ययीभावः, 'अव्ययीभावे चाकाले' इति सभावः, ततोऽणो लुक्।

**अनुसूरिति।** अनुसूशब्दष्ठकमुत्पादयति, लक्ष्यलक्षणशब्दौ चेत्यर्थः। **आनुसुक इति।** अनुसूमधीत इति ठक्, तस्य 'इसुसुक्तन्तात्कः' इति कादेशः, 'केऽणः' इति ह्रस्वः।

**पदोत्तरपदादिति।** पदशब्द उत्तरपदं यस्य स तथोक्तः, पूर्वपदमधीते **पूर्वपदिकः। एवमुत्तरपदिकः।**

**भावबोधिनी**

है।] सौमनोत्तरिकः। [ सुमनोत्तराम् अधीते यहाँ भी ठक् है। सुमनोत्तरा को आधार मानकर बनायी गयी आख्यायिका—इस अर्थ में प्रत्यय करके उसका लोप कर दिया जाता है। तब ठक् होता है। ] ऐतिहासिकः [ इतिहास पढ़ने और जानने वाला ], पौराणिकः [ पुराण को पढ़ने और जानने वाला ]।

❀ सर्व और स जिसके आदि में है तथा जो द्विगु है, उससे [ उत्पन्न ठक् प्रत्यय का ] ल=लोप होता है। ❀ उदा०—सर्ववेदः [ सर्ववेद पढ़ने या जानने वाला ]। सर्वतन्त्रः [ सभी तन्त्र=शास्त्र पढ़ने या जानने वाला ]। सवार्त्तिकः [ वार्त्तिक ग्रन्थ-पर्यन्त अध्ययन करने वाला। यहाँ अन्तवचन में सह के साथ अव्ययीभाव करके 'स' आदेश होता है। ] ससंग्रहः [ संग्रहग्रन्थपर्यन्त पढ़ने या जानने वाला। शेष पूर्ववत् ]। द्विगु से—द्विवेदः [ दो वेदों को पढ़ने और जानने वाला ] पञ्चव्याकरणः। [ पाँच व्याकरण पढ़ने या जानने वाला। इन सभी में प्रत्यय करके उनका लोप कर दिया जाता है। ]

❀ अनुसु, लक्ष्य और लक्षण—इन शब्दों से भी तद् अधीते, तद् वेद—इस अर्थ में ठक् प्रत्यय होता है। ❀ उदा०—अनुसु नामक ग्रन्थ है, उसे पढ़ने वाला—आनुसुकः [ अनुसु+ठक्, ठ का क आदेश और "केऽणः" ( क० सू० ७.४.१३ ) सूत्र से ऊ का ह्रस्व ] लाक्षिकः [ लक्ष्य+ठक्, ठ=इक, भसंज्ञा, अलोप, य् लोप ] लाक्षणिकः [ लक्षण+ठक्, ठ=इक, आदिवृद्धि, भसंज्ञा, अलोप ]।

❀ पद यदि उत्तरपद हो तो इकन् होता है। ❀ पूर्वपदिकः [ पूर्वपदम् अधीते वेद वा। पूर्वपद+इकन् भ संज्ञा, अलोप ]।

---

१. "इकन् बहुलं पदोत्तरपदात्। पदोत्तरपदिकः। अन्ये तु पदोत्तरपदादिति पदशब्द उत्तरपदं यस्य तस्मादित्यर्थं व्याचक्षते; तन्मते पूर्वपदिकः, उत्तरपदिकः" इति क्वचित्पाठः।

**❀ शतषष्टेः षिकन् पथो बहुलम् ❀ ( श्लो० वा० )। शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी। बहुलग्रहणादणपि भवति—शातपथः, षाष्टिपथः।**

**उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। निरुक्त। यज्ञ। चर्चा। धर्म। क्रमेतर। श्लक्षण। संहिता। पद। क्रम। संघात। वृत्ति। संग्रह। गुणागुण। आयुर्वेद। ❀ सूत्रान्तादकल्पादेः ❀ ( ग० सू० ८३ ) ❀ विद्यालक्षणकल्पसूत्रान्तात् ❀ ( ग० सू० ८४ )। ❀ 'विद्या चानङ्गक्षत्रधर्मसंसर्गत्रिपूर्वा' ❀ (ग० सू० ८५ )। ❀ आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठक् ❀ ( ग० सू० ८६ )। ❀ सर्वसादेर्द्विगोश्च लः ❀ ( ग० सू० ८७ )। ❀ अनुसूर्लक्ष्य लक्षणे च ❀ ( ग० सू० ८८ )। ❀ द्विपदी ज्योतिषि ❀ ( ग० सू० ८९ )। अनुपद। अनुकल्प। अनुगुण। ❀ इकन्बहुलं पदोत्तरपदात् ❀ (ग० सू० ९०)। ❀ शतषष्टेः षिकन् पथो बहुलम् ❀ ( ग० सू० ९१ )।**

## १४८९. क्रमादिभ्यो वुन् ॥ ६१ ॥ ( १२७१ )

**'क्रम' इत्येवमादिभ्य शब्देभ्यो वुन्प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये। अणोऽपवादः। क्रमकः। पदकः।**

**क्रम। पद। शिक्षा। मीमांसा। सामन्॥**

## १४९०. अनुब्राह्मणादिनिः ॥ ६२ ॥ (१२७२ )

**न्यासः**

**शतषष्टेः षिकन् पथ इति।** शतषष्टिशब्दाभ्यामुत्तरस्मात् पथः षिकन् प्रत्ययौ भवति। षकारो ङीषर्थः, नकारः स्वरार्थः। एतत् सर्वमुक्थादिषु पाठादेव सिद्धम्। यदपीह किञ्चिन्न पठ्यते, तदपि च बहुलग्रहणेन संगृहीतम्। उक्थादिष्वपि षिकन् बहुलं पदोत्तरपदाच्चेति पठ्यते॥ ६०॥**क्रमादिभ्यो वुन्॥ ६१॥**

**अनुब्राह्मणादिनि॥ ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणमिति।** यथार्थेऽव्ययीभावं दर्शयति। ननु योऽनुब्राह्मणमधीते तस्यानुब्राह्मणमस्तीति तत्र मत्वर्थीयेनैवेनिना सिद्धम्, तत् किमर्थमिदम्? अण्बाधनार्थम्।

**पदमञ्जरी**

**शतषष्टेरिति।** शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् भवति। षकारो ङीषर्थः॥६०॥

**अनुब्राह्मणादिनिः। ब्राह्मणसदृश इति।** 'यथार्थे यदव्ययम्' इति साहश्येऽव्ययीभावः।

**भावबोधिनी**

❀ शत और षष्टि इनसे परे पथिन् शब्द से षिकन् बहुल रूप से होता है। ❀ शतपथम् अधीते वेद वा—शतपथिकः, शतपथिकी [ शतपथ + षिकन् = इक, स्त्रीलिङ्ग में 'षिद्गौरादिभ्यश्च' ( वा० सू० ४.१.४१ ) से ङीष् होता है। ] षष्टिपथिकः, षष्टिपथिकी। बहुलग्रहण के कारण अण् प्रत्यय भी होता है—शातपथः, षाष्टिपथः [ शतपथ + अण्, षष्टिपथ + अण्, आदिवृद्धि ]।

[ उक्थादिगण में पठित शब्द-] उक्थ। लोकायत। न्याय। न्यास। निमित्त। पुनरुक्त। निरुक्त। यज्ञ। चर्चा। धर्म। क्रमेतर। श्लक्षण। संहिता। पद। क्रम। संघात। वृत्ति। संग्रह। गुणागुण। आयुर्वेद। अकल्पादि-सूत्रान्त। ❀ विद्या, लक्षण, कल्प और सूत्रशब्दान्त से ❀ ❀ और अङ्ग, क्षत्र, धर्म, संसर्ग तथा त्रि--जिसके पूर्व में नहीं है, ऐसे शब्द से ही होता है। ❀ ❀ आख्यान, आख्यायिका, इतिहास और पुराण से ठक् होता है। ❀ ❀ सर्व और स जिसके आदि में है तथा द्विगु से इन प्रत्ययों का लोप होता है। ❀ ❀ अनुसू, लक्ष्य और लक्षण से होता है। ❀ ❀ ज्योति अर्थ में द्विपदी होता है। ❀ अनुपद। अनुकल्प। अनुगुण। ❀ पद शब्द उत्तरपद हो तो इकन् होता है। ❀ ❀ शत और षष्टि से उत्तरवर्ती पथिन् = पथ शब्द से षिकन् प्रत्यय बहुल रूप से होता है। ❀॥ ६०॥

'तद् अधीते, तद्वेद' [ उसे पढ़ता है, उसे जानता है ]--इस विषय में 'क्रम' आदि शब्दों से वुन् प्रत्यय होता है। यह अण् का अपवाद है। उदा० -क्रमकः। पदकः। [ क्रमम् अधीते वेद वा, पदम् अधीते वेद वा—इस अर्थ में

अनुब्राह्मणशब्दादिनिः प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये। अणोऽपवादः। ब्राह्मणसदृशोऽयं ग्रन्थोऽनुब्राह्मणम्। तदधीते अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः।

मत्वर्थ 'अत इनिठनौ' ( ५. २. ११५ ) इति इनिना सिद्धम् ? तत्रैतस्माट्ठन्नपि प्राप्नोति। अनभिधानान्न भविष्यति ? अणो निवृत्त्यर्थं तर्हि वचनम् ॥

## १४९१. वसन्तादिभ्यष्ठक् ॥ ६३ ॥ ( १२७३ )

'वसन्त' इत्येवमादिभ्यष्ठक्प्रत्ययो भवति 'तदधीते तद्वेद' इत्यस्मिन्विषये। अणोऽपवादः। वसन्तसहचरितोऽयं ग्रन्थो वसन्तः, तमधीते वासन्तिकः। वार्षिकः।

वसन्त। वर्षाशरद्[1]। हेमन्त। शिशिर। प्रथम। गुण। चरम। अनुगुण। अपर्वन्। अथर्वन्।

### न्यासः

यदीदं नोच्येत 'तदधीते तद्वेद' इत्यण् प्रसज्येत ॥ ६२ ॥

**वसन्तादिभ्यष्ठक्** ॥ **वसन्तसहचरितो ग्रन्थो वसन्त इति**। यो वसन्ते पठ्यते, नियोगेन यत्र च वसन्तो वर्ण्यते स वसन्तसहचरितो भवति। **वर्षाशरदमिति**। वर्षाश्च शरच्च वर्षाशरदम्। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच्। समासान्तेन निर्देशः ॥ ६३ ॥

### पदमञ्जरी

चोदयति—**मत्वर्थ इति**। परिहरति—**तत्रैतस्मादिति**। दूषयति—**अनभिधानादिति**। साक्षात्परिहारमाह—**अणो निवृत्त्यर्थं तु वचनमिति**। क्वचित्तु मत्वर्थ इत्यादि न पठ्यते ॥ ६१ ॥ ६२ ॥

**वसन्तादिभ्यष्ठक्** ॥ **वसन्तसहचरित इति**। यत्र वसन्तो वर्ण्यते यो वा वसन्तेऽध्येयः। वसन्तसाहचर्यात्ताच्छब्द्य लभते।

उक्थादिष्वेते पठितव्याः, ते वा वसन्तादिषु ? तथा तु न कृतमित्येव। अथर्वन्शब्दोऽत्र पठ्यते, स उपचारेण प्रोक्ते ग्रन्थे वर्तते। अथर्वणमधीते आथर्वणिकः, 'दाण्डिनायनहास्तिनायन' इति निपातनात् 'नस्तद्धिते' इति टिलोपाभावः ॥ ६३ ॥

### भावबोधिनी

क्रम और पद शब्दों से वुन्, वु = अक प्रत्यय होता है। इस गण में पठित शब्द—] क्रम। पद। शिक्षा। मीमांसा। सामन्। [ शिक्षकः। मीमांसकः। सामकः ] ॥ ६१ ॥

'तद् अधीते, तद् वेद' [ उसे पढ़ता है, उसे जानता है ]—इस विषय में 'अनुब्राह्मण' शब्द से 'इनि' प्रत्यय होता है। ब्राह्मण [ ग्रन्थ ] के सदृश यह ग्रन्थ—अनुब्राह्मण होता है। इसको पढ़ता है—अनुब्राह्मणी [ अनुब्राह्मण + इनि = इन्, प्रातिपदिकसम्बन्धी कार्य करके प्रथमा एकवचन का रूप है। ] अनुब्राह्मणिनौ, अनुब्राह्मणिनः।

मतुप् [ इसका है, इसमें है—इस ] के अर्थ में 'अत इनिठनौ' ( पा० सू० ५.२.११५ ) से इनि प्रत्यय करने से यह रूप सिद्ध है ? इससे तो ठन् प्रत्यय भी प्राप्त होता है। अनभिधान के कारण नहीं होगा ? तब तो अण् की निवृत्ति के लिए यह सूत्र है ॥ ६२ ॥

'तद् अधीते, तद् वेद [ उसे पढ़ता है, उसे जानता है ]—इस विषय में वसन्त आदि से ठक् प्रत्यय होता है। अण् का अपवाद है। वसन्त का सहचरित यह ग्रन्थ वसन्त कहा जाता है। [ भाव यह है कि जिस ग्रन्थ में वसन्त का वर्णन है अथवा जो वसन्त में पढ़ा जाता है। इस प्रकार वसन्त का साहचर्य होने से ग्रन्थ भी वसन्त कहा जाता है ]—तम् अधीते [ उस वसन्त को पढ़ता है—] वासन्तिकः। वार्षिकः [ वसन्त + ठक्, वर्षा + ठक्, आदिवृद्धि, ठ का इक भ संज्ञा, अ और आ का लोप करने पर रूपों की सिद्धि होती है। ]

---

१. 'वर्षा, शरद्'—इति शब्दद्वयात्मकः मुद्रितः पाठः।

## १४९२. प्रोक्ताल्लुक् ॥ ६४ ॥ ( १२७४ )

**प्रोक्तसहचरितः प्रत्ययः 'प्रोक्तः'। प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य लुग्भवति। पाणिनिना प्रोक्तं पाणिनीयम्, तदधीते पाणिनीयः। आपिशलः। स्त्रियां स्वरे च विशेषः—पाणिनीया ब्राह्मणी॥**

**न्यासः**

**प्रोक्ताल्लुक्॥** युक्तो निर्देशो यदि प्रोक्तनामा ग्रन्थो व्याकरणादिर्भवति, न चासावस्ति; अन्यार्थेन ततः परः सम्भवतीत्येतं दोषमपाकर्तुमाह—**प्रोक्तसहचरित इत्यादि**। साहचर्यात् सोऽयमित्यभेदोपचारेण प्रोक्तार्थे यो विहितः प्रत्ययः स प्रोक्तशब्देनोक्त इति दर्शयति। **पाणिनीय इति**। 'वृद्धाच्छः' तदन्तात् 'तदधीते तद्वेद' इत्यण्। तस्य लुक् **पाणिनीयः**। आपिशलिना प्रोक्तमित्यण्, तस्य लुक्-**आपिशलः**। कः पुनरत्र विशेषोऽर्थो लुकि सति, यावता तदेव रूपम्? इत्याह—**स्त्रियामित्यादि**। असति लुकि 'टिड्ढाणञ्' इति ङीप् स्यात्, सोऽणः स्वरेणान्तोदात्तः। लुकि हि सति टाब् भवति, स्वरेण तु मध्योदात्तः। आपिशलिशब्दाल्लुकि सति स्वरे नास्ति विशेषः। सत्यपि हि लुक्यन्तोदात्तत्वेन भवितव्यम्। स्त्रियां तु पूर्वोक्तो विशेषो वर्त्तते—न हि लुकि सति ङीब् भवति; सत्यप्यणि तत्रैव 'अनुपसर्जनाद्' इत्यधिकारात् प्रतिषेधात्, प्रोक्तार्थविहितस्य चाण इहोपसर्जनत्वात्॥ ६४॥

**पदमञ्जरी**

**प्रोक्ताल्लुक्॥ प्रोक्तसहचरित इति**। अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यायोगान्मुख्यार्थासम्भवाद् गौणस्य ग्रहणमित्यर्थः। अपर आह—प्रोक्तशब्द इह स्वर्यते, तेन तदधिकारविहितः प्रत्ययो गृह्यत इति। यदि वा प्रोक्ते भवः प्रोक्त इति सौत्रोऽयमतद्धितनिर्देशः। **पाणिनीयमिति**। ननु पणोऽस्यास्तीति पणी, तस्यापत्यं पाणिनः, पाणिनस्यापत्यं पणिनो युवा पाणिनिः, ततः 'तेन प्रोक्तम्' इत्यर्थविवक्षायां 'यूनि लुक्' इति इञो लुकि कृते प्रत्ययलक्षणेन 'इञश्च' इत्यण् प्राप्नोति? नैष दोषः; 'इञश्च' इत्यत्र 'कण्वादिभ्यो गोत्रे' इत्यतः 'गोत्रे' इत्यनुवर्तते, तेनेञं विशेषयिष्यामः - गोत्रे य इञ् विहितस्तदन्तादिति। तत्र च पारिभाषिकं गोत्रं गृह्यते, तेन यूनीञो न भविष्यति, ततो वृद्धाच्छः; आपिशलिशब्दाद् 'इञश्च' इत्यण्, उभयत्राध्येतृप्रत्ययस्य लुक्। नन्वत्र लुकि सति, असति वा तदेव रूपमिति नास्ति विशेषः? तत्राह—**स्त्रियां स्वरेच विशेष इति**। असति लुकि स्त्रियाम् 'टिड्ढाणञ्' इत्यादिना ङीप् स्यात्, अण्स्वरेणान्तोदात्तत्वं च। लुकि तु सति टाब् भवति, छस्वरेण मध्योदात्तत्वं च। आपिशले तु स्वरे नास्ति विशेषः, यथा तु लुकि सत्यपिशलेत्यत्र ङीब्न भवति, तथा 'अनुपसर्जनाद्' इत्यत्र प्रत्यपादि॥ ६४॥

**भावबोधिनी**

[ इस गण में पठित शब्द—] वसन्त। वर्षा। शरद्। हेमन्त। शिशिर। गुण। चरम। अनुगुण। अपर्वन्। अथर्वन्॥ ६३॥

प्रोक्तसहचरित = प्रोक्त अर्थ में विहित प्रत्यय को 'प्रोक्त' कहा गया है। प्रोक्त प्रत्ययान्त से अध्येता और वेदिता [ पढ़ने वाले और जानने वाले ] अर्थों में होने वाले प्रत्यय का लुक् हो जाता है। उदा० - पाणिनिना प्रोक्तम् पाणिनीयम्, तद् अधीते वेद वा पाणिनीयः। [ पाणिनि द्वारा प्रोक्त—इस अर्थ में "वृद्धाच्छः' ( पा० सू० ४.१.११४ ) से छ = ईय प्रत्यय करने पर पाणिनीयम् बनता है। इसके बाद 'तद्दधीते तद्वेद'। ( पा० सू० ४।२।५९ ) इस सूत्र से जो अण् प्रत्यय होता है, उसका लुक् हो जाने से मूल प्रोक्त प्रत्ययान्त ही रहता है। ] आपिशलः। आपिशलिना प्रोक्तम्—इस अर्थ में अण् प्रत्यय करने पर भसंज्ञा, इलोप—आपिशलम्। तद् अधीते, तद्वेद—इस अर्थ में पुनः होने वाले प्रत्यय का लुक् हो जाता है। ] स्त्रीलिङ्ग में और स्वर में विशेष = भेद हो जाता है—पाणिनीया ब्राह्मणी। [ यदि अण् का लुक् नहीं होता तो "टिड्ढाणञ्" ( ४.१.१५ ) से ङीप् होने लगता और अण् के स्वर के कारण वह अन्तोदात्त हो जाता। लुक् होने पर टाप् होता हैं और मध्योदात्त रहता है। आपिशल में भी ङीप् होने लगता। ]॥ ६४॥

**१४९३. सूत्राच्च कोपधात् ॥ ६५ ॥ ( १२७७ )**

**सूत्रवाचिनः ककारोपधादुत्पन्नस्य प्रत्ययस्य लुग्भवति। अप्रोक्तार्थं आरम्भः। पाणिनीयमष्टकं सूत्रम्, तदधीते अष्टकाः पाणिनीयाः। दशका वैयाघ्रपदीयाः। त्रिकाः काशकृत्स्नाः।**

**❀ संख्याप्रकृतेरिति वक्तव्यम् ❀ ( म० भा० ४. २. ६५ )। इह मा भूत्—महावार्तिकं सूत्रमधीते माहावार्त्तिकः। कालापकमधीते कालापकः।**

**कोपधादिति किम् ? चतुष्टयमधीते चातुष्टयः॥**

**न्यासः**

**सूत्राच्च कोपधात्॥** कोपधादिति वचनात् स्वरूपग्रहणं न भवतीत्यतः सूत्रवाचिनो ग्रहणं विज्ञायत इत्याह—**सूत्रवाचिनः प्रातिपदिकादिति। अष्टकमिति।** अष्टावध्यायाः परिमाणमस्य। 'तदस्य परिमाणम्' इत्युनुवर्त्तमाने 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति च 'संख्याया अतिशदन्तायाः कन्' इति कन्।

**संख्याप्रकृतेरिति वक्तव्यमिति।** संख्या प्रकृतिर्यस्य प्रत्ययस्य स संख्याप्रकृतिः। तदन्तात् कोपधादुत्पन्नस्य लुब् भवतीत्येतदर्थरूपं वक्तव्यम्, व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम् -वेति वर्त्तते, सा च व्यवस्थितविभाषा, तेन संख्याप्रकृतेरेव भविष्यति, नान्यस्मादिति।

**चातुष्टयमिति।** चत्वारोऽवयवा अत्येति 'संख्याया अवयवे तयप्' 'ह्रस्वात् तादौ तद्धिते' इति मूर्धन्यः षत्वं भवति। एतत् संख्याप्रकृतिप्रत्ययान्तम्, न तु कोपधम्, किं तर्हि ? योपधम्॥ ६५॥

**पदमञ्जरी**

**सूत्राच्च कोपधात्। अष्टकं सूत्रमिति।** अष्टावध्यायाः परिमाणमस्य, 'संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'संख्याया अतिशदन्तायाः कन्'।

**संख्याप्रकृतेरिति वक्तव्यमिति।** संख्या प्रकृतिर्यस्य प्रत्ययस्य तदन्तात्कोपधादिति वक्तव्यमित्यर्थः। **कालापकमधीयते कालापक इति।** कलापिना प्रोक्तमधीयते कालापाः, 'कलापिनोऽण्', 'नान्तस्य टिलोपे सब्रह्मचारि' ( वा० ४६९ ) इत्यौपसंख्यानिकष्टिलोपः, ततः 'तदधीते' इत्यण्, प्रोक्ताल्लुक्। कालापानामाम्नाय इति 'गोत्रचरणाद् वुञ्', कालापकम्, ततः 'तदधीते' इत्यण्, तस्य लुग्न भवति, यदि स्याद् ञित्स्वरेणाद्युदत्तत्वं स्यात् लुगभावे त्वण एव स्वरो भवति, स्त्रियां च ङीब् भवति।

**चतुष्टय इति।** चत्वारोऽवयवा अस्य 'संख्याया अवयवे तयप्', 'ह्रस्वात्तादौ तद्धिते' इति मूर्द्धन्यः॥६५॥

**भावबोधिनी**

सूत्रवाचक ककारोपध शब्द से होने वाले प्रत्यय का लुक् हो जाता है। यह प्रोक्त से भिन्न स्थल के लिए बनाया गया है। उदा० -पाणिनीयम् अष्टकं सूत्रम् तद् अधीते —अष्टकाः पाणिनीयाः [ अष्टौ अध्यायाः परिमाणमस्य—इस अर्थ में 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' ( वा० सू० ५.१.५८ ) 'संख्यायाः अतिशदन्तायाः कन्' ( पा० सू० ५.१.२२ ) से कन् प्रत्यय करने पर 'अष्टकम्' बनता है। 'उसको पढ़ने वाला या जानने वाला' इस अर्थ में उत्पन्न प्रत्यय का लुक् हो जाता है। ] दशका वैयाघ्रपदीयाः [ दश अध्यायाः परिमाणम् अस्य —दशकम्। तद् अधीते वेद वा इस अर्थ में होने वाले प्रत्यय का लुक् हो जाता है। ] त्रिकाः काशकृत्स्नाः [ त्रयः अध्यायाः परिमाणम् अस्य— त्रिकम्। तद् अधीते वेद वा—इस अर्थ में होने वाले प्रत्यय का लुक् हो जाता है। पाणिनि के व्याकरण में आठ अध्याय है। व्याघ्रपाद के व्याकरण में दस अध्याय और काशकृत्स्न के व्याकरण में तीन अध्याय हैं। आज अन्य व्याकरण उपलब्ध नहीं हैं। ] ❀ संख्यावाचक जिस प्रत्यय की प्रकृति हैं, उससे ही लुक् कहना चाहिये। ❀ यहाँ नहीं होना चाहिये—महावार्तिकं सूत्रम् अधीते—माहावार्त्तिकः। कालापकम् अधीते —कालापकः। [ यहाँ संख्यावाची नहीं है। अतः लुक् नहीं होता है। ]

ककार जिसकी उपधा में हो उससे—इसका क्या फल है ? चतुष्टयम् अधीते चातुष्टयः। [ चत्वारः अवयवाः अस्य—इस विग्रह में 'संख्याया अवयवे तयप्' ( ५.२.४२ ) से तयप् प्रत्यय और मूर्धन्यादेश करने पर 'चतुष्टय' शब्द

## १४९४. छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥ ( १२७८ )

**प्रोक्तग्रहणमनुवर्तते । छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाण्येव भवन्ति । अध्येतृवेदितृप्रत्ययविषयाणि । अनन्यभावो[1] विषयार्थः, तेन स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यं च निवर्तते । कठेन प्रोक्तमधीयते**

**न्यासः**

छन्दोब्राह्मणानि च तद्विषयाणि ॥ **प्रोक्तग्रहणमनुवर्तते इति ।** तच्चेहार्थात् प्रथमान्तं विज्ञायते छन्दोब्राह्मणानीत्यस्य समानाधिकरणार्थम्, अत आह **छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानीति भवन्ति ।** स्वरूपग्रहणमिह न भवति । तथा हि –प्रोक्तग्रहणमिहानुवर्त्तते, न च च्छन्दोब्राह्मणशब्दौ प्रोक्तप्रत्ययान्तौ । तस्माच्छन्दोब्राह्मणवाचिनो ये शब्दाः प्रोक्तप्रत्ययान्तास्ते गृह्यन्ते । किमर्थं पुनरिदमुच्यते ? इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता लभ्यते । तथा हि क्वचित् तदन्तस्य स्वातन्त्र्यमुपलभ्यते, यथा— पाणिनिना प्रोक्तं पाणिनीयं शास्त्रम् । प्रोक्तार्थ एव वृत्तिः = स्वातन्त्र्यम् । पाणिनीयशब्दस्य चात्र प्रोक्तार्थ एव वृत्तिः । क्वचिदुपाध्यन्तरयोगः, यथा—पाणिनीयं महत् भवतु विहितमिति । क्वचिद्वाक्यम्—पाणिनीयमधीत इति । क्वचिद् वृत्तिः—पाणिनीय इति । तदिह छन्दोब्राह्मणानामध्येतृवेदितृविषया वृत्तिर्यथा स्यात् । प्रकारान्तरं मा भूदित्येवमर्थमिदमुच्यते । **अध्येतृवेदितृ इति ।** अध्येतृवेदितृप्रत्ययौ विषयो येषामिति बहुव्रीहिः । **अनन्यत्रभावो विषयार्थ इति ।** यथा मत्स्यानां जलं विषय इत्यत्रानन्यत्रभावे विषयशब्दो वर्त्तते, तथेहापि । एतेन यद्यपि ग्रामसमुदायादिष्वप्यर्थेषु विषयशब्दस्य वृत्तिः, तथापीहानन्यत्रभावे वर्तमानः संगृह्यत इति दर्शयति । तेनेत्यादिना अनन्यत्रभाववृत्तिशब्दस्य फलं दर्शयति ।

**पदमञ्जरी**

छन्दोब्राह्मणानि च तद्विषयाणि ॥ **प्रोक्तग्रहणमनुवर्तते इति ।** तद्धचनुवर्तमानमेव पूर्वसूत्र आरम्भसामर्थ्यान्न सम्बध्यते । **छन्दांसि च ब्राह्मणानि चेति ।** तद्वाचीनि शब्दरूपाणीत्यर्थः । स्वरूपग्रहणं तु न भवति; बहुवचननिर्देशात्, अप्रोक्तप्रत्ययान्तत्वाच्च । **प्रोक्तप्रत्ययान्तानीति ।** प्रोक्तादिति पञ्चम्यन्तं प्रकृतं प्रथमाबहुवचनान्तं विपरिणम्यते, 'छन्दोब्राह्मणानि' इत्यनेन सामानाधिकरण्यादिति भावः । **अध्येतृप्रत्ययविषयाणीत्यने**नैतद्दर्शयति—तच्छब्देनाध्येतृवेदितृप्रत्ययः परामृश्यते, विधेयतया प्रधानत्वात्; नाध्येतृवेदितारावर्थौ, तयोः प्रत्ययविधौ गुणभावादिति । किं सिद्धं भवति ? अध्येतृविषयमपि वाक्यं निवर्त्तितं भवति । **अनन्यभावो विषयार्थ इति ।** ग्रामसमुदायादिवृत्तिस्तु विषयशब्दोऽसम्भवान्न गृह्यते । अत्र यद्यधीते, वेदेत्यनुवर्तेत, ततोऽध्येतृवेदितृविवक्षायामेव तद्विषयता विधीयेत, ततश्च तद्विषयमेव वाक्यं निवर्तयेत्, न क्रियान्तरविषयम्,

**भावबोधिनी**

बनता है । अध्येता अर्थ में अण् प्रत्यय और आदिवृद्धि होती है । इसकी उपधा में ककार नहीं है, अतः प्रत्यय का लुक् नहीं होता है ] । ६५ ॥

प्रोक्तग्रहण की अनुवृत्ति होती है । प्रोक्त प्रत्ययान्त छन्दोवाची = वेदवाची और ब्राह्मणवाची शब्द तद्विषयक ही होते हैं = अध्येतृ और वेदितृ को ही विषय बनाते हैं । [ भाव यह है कि अध्येता और वेदिता अर्थों के बिना छन्दोवाची और ब्राह्मणवाची का स्वतन्त्र प्रयोग नहीं होता है । इनसे भिन्न प्रोक्तप्रत्ययान्त शब्दों का केवल प्रोक्त अर्थ में भी प्रयोग होता है, जैसे पाणिनिना प्रोक्तम् –पाणिनीयम् । ] सूत्रस्थ विषय शब्द का अर्थ है—अनन्यभाव [ और दूसरा न होना ] । इस कारण स्वतन्त्र प्रयोग और अन्य उपाधि = विशेषण के योग और वाक्य की निवृत्ति हो जाती है । उदा०—कठेन प्रोक्तम् अधीयते—कठाः [ "कलापिवैशम्पायनान्तेवासिभ्यश्च" ( ४।३।१०४ ) सूत्र से वैशम्पायन के शिष्यवाचक कठ शब्द से णिनि प्रत्यय होता है, "कठचरकाल्लुक्" ( ४।३।१०७ ) से इस णिनि का लुक् हो जाने पर 'कठ' ही बचता है । इसका अर्थ है कठ ऋषि द्वारा प्रोक्त ग्रन्थ । कठेन प्रोक्तम् अधीयते इस अर्थ में "तदधीते तद्वेद" ( ४।२।५९ ) से अण् होता है, इसका भी लोप

१. न्यासे तु 'अनन्यत्रभाव' इति पाठः ।

**कठाः। मौदाः। पैप्पलादाः आर्चाभिनः। वाजसनेयिनः। ब्राह्मणानि खल्वपि—ताण्डिनः। भाल्लविनः। शाट्यायनिनः। ऐतरेयिणः।**

**न्यासः**

एवं ह्यनन्यत्रभावो भवति यदि स्वातन्त्र्यादि न भवति। उपाध्यन्तरयोगो महत्त्वादिना विशेषेण सम्बद्धः कठ इति। **कठेन प्रोक्तमिति**। 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः, तस्य 'कठचरकाल्लुक्', ततः कठेन प्रोक्तमधीते तद्वेदेति पुनरण्, तस्यापि 'प्रोक्ताल्लुक्' इति लुक्। **मौदाः, पैप्पलादा इति**। 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः—मोदेन प्रोक्तमिति, कलापिनोऽण्' इत्यण्, तदन्ताद् 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक्। **आर्चाभिन इति**। ऋचाभेन प्रोक्तमिति 'कलापिवैशम्पायनान्तेवासिभ्यश्च' इति णिनिः', तदन्तात् 'तनधीते तद्वेद' इत्यण्। **वाजसनेयिन इति**। वाजसनेयेन प्रोक्तमिति। 'शौनकादिभ्यश्छन्दसि' इति णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक्। **ताण्डिन इति**। ताण्डयशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति णिनिः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः। ततः 'तदधीते तद्वेद' इत्यण् तस्य लुक्। **भाल्लविन इति**। भाल्लविशब्दादिञन्तात् प्रोक्तार्थे पूर्ववण्णिनिः, तदन्तात् तद्वेदेत्यण्, तस्य लुक्। **शाट्यायनिन इति**। शाट्यशब्दाद् गर्गादियञन्ताद् 'यञिञोश्च' इति फक्, ततः प्रोक्तार्थे पूर्ववण्णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक्। **ऐतरेयिण इति**। ऐतरेयशब्दाच् शुभ्रादिढगन्तात् पूर्ववण्णिनिः, ततः 'तदधीते' इत्यण्, तस्य लुक्।

**पदमञ्जरी**

नापि स्वातन्त्र्यमुपाध्यन्तरयोगं च। यदाह—तत्र 'यथाधिकारात्तद्विषयप्रसङ्गः' इति। तस्मात्प्रोक्तग्रहणमेवानुवर्तते, नाधीते वेदेति। तच्छब्देन च प्रत्ययः परामृश्यते, विषयशब्दश्च अनन्यभावार्थः। तेन सर्वमेतत्स्वातन्त्र्यादि निवर्तते। आह च—'सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात्' इति। प्रोक्तग्रहणमेवाधिक्रियते, नाधीते वेदेत्येतावर्थावित्यर्थः।

इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता दृश्यते—स्वातन्त्र्यम्, उपाध्यन्तरयोगः, वाक्यम्, अध्येतृवेदित्रोः प्रत्यय इति। स्वातन्त्र्यं तावत्—पाणिनिना प्रोक्तं पाणिनीयमिति। प्रोक्तार्थ एव वृत्तिः; उपाध्यन्तरयोगः। महत्पाणिनीयमिति वाक्यम्। पाणिनीयमधीत इति प्रत्ययः—पाणिनीयाश्छात्रा इति। छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानां नित्यमध्येतृवेदितृप्रत्यान्ततैवेष्यते, न तु स्वातन्त्र्यादि, तदर्थमिदमारभ्यते, तदाह—

**भावबोधिनी**

'प्रोक्ताल्लुक्' ( ४।२।६४ ) से हो जाता है। इस स्थिति में 'कठाः' का अर्थ होता है कठ ऋषि द्वारा प्रोक्त ग्रन्थ के अध्ययन करने वाले और जानने वाले।] मौदाः [ मोद ऋषि द्वारा प्रोक्त ग्रन्थ के अध्येता या ज्ञाता ]। आर्चाभिनः [ आर्चायिनः ] [ ऋचाभ ऋषि द्वारा प्रोक्त ग्रन्थ के अध्येता या ज्ञाता ]। वाजसनेयिनः [ वाजसनेय द्वारा प्रोक्त ग्रन्थ के अध्येता या ज्ञाता ]।

ब्राह्मणवाची—ताण्डिनः [ ताण्ड्य द्वारा प्रोक्त ब्राह्मण के अध्येता या ज्ञाता। ताण्ड्य शब्द से 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' ( पा० सू० ४.३.१०५ ) इससे णिनि प्रत्यय ताण्ड्य + णिनि = इन्, भ संज्ञा, 'आपत्यस्य च तद्धितेऽनाति' ( पा० सू० ६.४.१५१ ) से य् लोप करने पर ताण्डिन् बनता है। अध्येतृ अर्थ में विहित प्रत्यय का लुक् हो जाता है। ] भाल्लविनः। [ भाल्लवि ऋषि द्वारा प्रोक्त ब्राह्मण ग्रन्थ के अध्येता या ज्ञाता। ] शाट्यायनिनः [ शाट्यायन द्वारा प्रोक्त ब्राह्मण ग्रन्थ के अध्येता या ज्ञाता ] ऐतरेयिणः [ ऐतरेय ऋषि द्वारा प्रोक्त ब्राह्मण ग्रन्थों के अध्येता या ज्ञाता। इन सभी में "तदधीते तद्वेद" ( ४.२.५९ ) सूत्र द्वारा जो अण् होता है, वह "प्रोक्ताल्लुक्" ( ४.२.६४ ) सूत्र से लुप्त हो जाने पर प्रोक्तप्रत्ययान्त रूप ही शेष रहता है। ]

**ब्राह्मणग्रहणं किम्, यावता छन्द एव तद् ? ब्राह्मणविशेषप्रतिपत्त्यर्थम्, इह तद्विषयता मा भूत्— याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । सौलभानि ( म० भा० ) ।**

**चकारोऽनुक्तसमुच्चयार्थः । कल्पे—काश्यपिनः । कौशिकिनः । सूत्रे—पाराशरिणो भिक्षवः । शैलालिनो नटाः । कर्मन्दिनः । कृशाश्विनः ।**

**न्यासः**

**ब्राह्मणविशेषप्रतिपत्त्यर्थमिति ।** ब्राह्मणविशेषः पुराणप्रोक्तत्वम् । तस्य प्रतीतिः = प्रतिपत्तिर्यथा स्यादित्येवमर्थं ब्राह्मणग्रहणम् । **याज्ञवल्क्यानीति ।** याज्ञवल्क्यशब्दाद् गर्गादियञन्तात् प्रोक्तार्थे 'कण्वादिभ्यो गोत्रे' इत्यण् । **सौलभानीति** सुलभेन प्रोक्तानीति । पूर्ववत् 'कलापिनोऽण्' इत्यण् । अत्र स्वातन्त्र्यं भवति । न हीह पुराणप्रोक्तत्वमस्ति; इदानीन्तनेन प्रोक्तत्वात् । काश्यपिनः, कौशिकिन इति । काश्यपेन प्रोक्तः कल्पः, कौशिकेन प्रोक्त इति । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' तदन्तात् 'तदधीते' इत्यण्, तस्य लुक् । पाराशरिणः, शैलालिन इति । पाराशर्येण प्रोक्तं सूत्रम्, शिलालिना प्रोक्तं सूत्रम्—'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति णिनिः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः, ततः 'तदधीते' इत्यण्, तस्य लुक् । **कर्मन्दिनः, कृशाश्विन इति ।** कर्मन्देन प्रोक्तं सूत्रम्, कृशाश्वेन प्रोक्तं सूत्रमिति 'कर्मन्दकृशाश्वादिनिः' तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य लुक् ।

**पदमञ्जरी**

**तेनेति ।** एवं च कृत्वार्थद्वयस्यापि तन्त्रेण विग्रहः कर्तव्य इति दर्शयति । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य 'कठचरकाल्लुक्' इति लुक्, ततः 'तदधीते' इत्यण्, ततस्तस्यापि 'प्रोक्ताल्लुक्' इति लुक् । मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थे औत्सर्गिकोऽण् । शेषं यथायोगं पूर्ववत् । ऋचाभ = वैशम्पायनान्तेवासी । एवं **ताण्ड्यः** । वाजसनेशब्दः शौनकादिः । **ताण्डिन इति ।** 'आपत्यस्य' इति यलोपः । **माल्लविशब्द** इञन्तः । शाट्यशब्दाद् गर्गादिञन्ताद् 'यञिञोश्च' इति फक् । ऐतरेयशब्दः शुभ्रादिढगन्तः, तेभ्यः 'पुराणप्रोक्तेषु' इति णिनिः, सर्वत्राध्येतृप्रत्ययस्य लुक् ।

**भावबोधिनी**

ब्राह्मण का ग्रहण किसलिये है, क्योंकि वह भी छन्दः है ? [ छन्दः = वेद = मन्त्र और ब्राह्मण को वेद कहा जाता है । अतः ब्राह्मण को पृथक् लिखने की आवश्यकता नहीं है ? ] ब्राह्मण ग्रन्थविशेष का ज्ञान कराने के लिए स्वतन्त्र रूप से ब्राह्मण शब्द का ग्रहण है, यहाँ पर उसका विषय न होने लग जाय—याज्ञवल्क्य द्वारा प्रोक्त ब्राह्मण—याज्ञवल्क्यानि [ याज्ञवल्क्येन प्रोक्तम्—इस अर्थ में अण् ] सौलभानि [ सुलभेन प्रोक्तम्—इस अर्थ में अण् आदिवृद्धि । ये पुराणप्रोक्त नहीं है, अपितु बाद के ऋषियों द्वारा प्रोक्त है । अतः इनका ग्रहण नहीं होता है । ]

चकार का उल्लेख अनुक्तों के समुच्चय के लिए है । कल्पे—काश्यपिनः [ काश्यपेन प्रोक्तः कल्पः—इस अर्थ में "काश्यपकौशिकाभ्यामृषिभ्यां णिनिः" ( ३.३.१०२ ) से णिनि करके काश्यपिन् बनता है । तदन्त शब्द से अध्येतृ अर्थ में अण् और इसका लुक् होता है । ] कौशिकिनः [ कौशिक द्वारा प्रोक्त कल्प—कौशिकी । इसके अध्येता इस अर्थ में अण् प्रत्यय और उसका लुक् । ] सूत्र अर्थ—पाराशरिणः भिक्षवः [ पाराशर्येण प्रोक्तम्—पाराशरि सूत्रम् । पाराशर्य + णिनि = इन् भसंज्ञा, अलोप, य्लोप ] । अध्येतृ अर्थ वाले प्रत्यय का लुक् ] शैलालिनः नटाः [ शिलालेन प्रोक्तम्—इस अर्थ णिनि—शैलालिन् इसके अध्येता—इस अर्थ में विहित प्रत्यय का लुक् ] कर्मन्दिनः, कृशाश्विनः [ कर्मन्देन प्रोक्तम्, कृशाश्वेन प्रोक्तम्—इस अर्थ में 'कर्मन्दकृशाश्वादिनिः' ( ४.१.१११ ) सूत्र से इनि प्रत्यय, भसंज्ञा, अलोप करने पर—कर्मन्दिन् और कृशाश्विन्— बनता है । इनसे अध्येतृ अर्थ वाले प्रत्यय करके उनका लोप करना चाहिये । ]

छन्दोब्राह्मणानीति किम् ? पाणिनीयं व्याकरणम् । पैङ्गी कल्पः ( म० भा० ) ।

## १४९८. तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ६७ ॥ ( १२७९ )

'तत' इति प्रथमा समर्थविभक्तिः । 'अस्मिन्' इति प्रत्ययार्थः । 'अस्ति' इति प्रकृत्यर्थविशेषणम् । इतिकरणो विवक्षार्थः । 'देशे तन्नाम्नि' ( ४. ४. ६७-७० ) इति प्रत्ययार्थविशेषणम् । तदिति प्रथमासमर्था-

**न्यासः**

**पैङ्गी कल्प इति** । पिङ्गेन प्रोक्तः कल्पः—'पुराणप्रोक्त' इत्यादिना णिनिः । तत्र स्वातन्त्र्यमेव भवति, न च तद्विषयता ॥ ६६ ॥

**तदस्मिन्नस्तीति देशे तन्नाम्नि** ॥ **प्रत्ययान्तनामेति** । यदि तर्हि तन्नाम्नि देशे प्रत्ययः, इतिकरणोऽनर्थकः, तन्नामग्रहणादेवातिप्रसङ्गनिवृत्तिः ? नैतदस्ति; द्विविधं हि नाम—सङ्केतितम्, अनुवृत्तञ्च । सङ्केतितं यद्यापि व्यवहारपदवीं नानुपतति, अनुवृत्तञ्च व्यवहारमनुपतति । तत्रानुवृत्तं यन्नाम तत्रायं योगः । अनुवृत्तञ्च व्यावहारिकम्, तत्प्रतिपत्त्यर्थमितिकरणः क्रियते, ग्रामादिविशेषपरिग्रहार्थश्च । यद्येवम्, इतिकरण एव क्रियताम्,

**पदमञ्जरी**

**ब्राह्मणविशेषप्रतिपत्त्यर्थमिति** । ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वम् । **याज्ञवल्क्यानीति** । याज्ञवल्क्यशब्दः कण्वादिः, सुलभादौत्सर्गिकोऽण् , अत्र स्वातन्त्र्यं भवति । 'पुराणप्रोक्तेषु' इत्यत्र वक्ष्यति—'याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्याख्यानेषु वार्ता' इति । **काश्यपिनः, कौशिकिन इति** । 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' । **पाराशरिण इति** । पाराशर्यशब्दाद् गर्गादियञन्तात् 'पाराशर्यशिलालिभ्याम्' इति णिनिः, पूर्ववद्यलोपः । **कर्मन्दिन इति** । 'कर्मन्दकृशाश्वादिनिः' । पिङ्गशब्दात्पुराणप्रोक्तेषु' इति णिनिः ॥ ६६ ॥

**तदस्मिन्नस्तीति देशे तन्नाम्नि** ॥ **इतिकरणस्ततश्चेद्विवक्षेति** । ननु तन्नामग्रहणादेवातिप्रसङ्गो न भविष्यति ? तन्न; द्विविधं नाम—कदाचित्केनचित्सङ्केतितम्, नित्यं व्यवहारानुपाति । तत्र द्वितीयस्य परिग्रहार्थमितिकरणः क्रियते, भूमादिविशेषपरिग्रहार्थं च । 'तन्नाम्नि' इत्येतत्तु नामधेयताविरोधिनो बलीयसोऽपि प्रत्ययान् बाधितुम्,

**भावबोधिनी**

छन्दोवाची एवं ब्राह्मण विशेषवाची यह किसलिये है ? पाणिनीयं व्याकरणम् । पैङ्गी कल्पः । [ पिङ्गेन प्रोक्तः—इस अर्थ में णिनि करके पैङ्गी बनता है । इनका स्वतन्त्र प्रयोग ही होता है । ]

**विमर्श**—जिस प्रकार पाणिनिना प्रोक्तम्—पाणिनीयम् यह स्वतन्त्र प्रयोग भी होता है और पाणिनीयम् अधीयते—इस अर्थ में प्रोक्तप्रत्ययान्त से प्रत्यय करके उसका लुक् करके भी प्रयोग होता है—पाणिनीयाः छात्राः और वाक्य का भी प्रयोग होता है । परन्तु वेदवाची और ब्राह्मण विशेषवाची प्रोक्तप्रत्ययान्त का अकेला प्रयोग नहीं होता है, सदैव अध्येतृ या वेदितृ प्रत्ययान्त ही प्रयोग होता है, इसीलिए यह सूत्र बनाया गया है । निष्कर्ष यह है कि कठेन प्रोक्तम् इस अर्थ में 'कठम्' आदि का स्वतन्त्र प्रयोग नहीं होता है, जैसा कि पाणिनिना प्रोक्तम्—पाणिनीयम् होता है । इनमें तो कठेन प्रोक्तम् अधीयते—इसी अर्थ में कठाः आदि का प्रयोग सदैव अध्येतृ—प्रत्ययान्त अथवा वेदितृ प्रत्ययान्त ही होता है ॥ ६६ ॥

'तत्' यह प्रथमा समर्थ-विभक्ति है । 'अस्मिन्' [ इसमें ]—यह प्रत्ययार्थ है । 'अस्ति' [ है ] यह प्रकृत्यर्थ का विशेषण है । 'इति' का प्रयोग विवक्षा के लिए है, 'तन्नाम्नि देशे' [उस नाम वाला देश—इस अर्थ में]—यह प्रत्ययार्थ का विशेषण है । 'तत्' इस प्रथमासमर्थ से 'अस्मिन्' [ इसमें ]—इस सप्तम्यर्थ में यथाविहित प्रत्यय होते हैं, जो प्रथमासमर्थ है, वह यदि 'होता है ।' जो 'अस्मिन्' इससे निर्दिष्ट है, वह देश यदि उस नाम वाला होता है तो—प्रत्ययान्त नाम वाला, इति का प्रयोग—उससे यदि वैसी विवक्षा होती है तो । उदा०—उदुम्बराः अस्मिन् देशे सन्ति

**दस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थमस्ति चेत्तद्भवति, यदस्मिन्निति निर्दिष्टं देशश्चेत्स तन्नामा भवति—प्रत्ययान्तनामा, इतिकरणस्ततश्चेद्विवक्षा। उदुम्बरा अस्मिन् देशे सन्ति औदुम्बरः। बाल्बजः। पार्वतः। मत्वर्थीयापवादो योगः॥**

## १४९६. तेन निर्वृत्तम् ॥ ६८ ॥ (१२८०)

**'तेन' इति तृतीयासमर्थात् 'निर्वृत्तम्' इत्यस्मिन्विषये यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। 'देशे तन्नाम्नि' इति चतुर्ष्वपि योगेषु सम्बध्यते। सहस्रेण निर्वृत्ता साहस्री परिखा। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी। हेतौ कर्त्तरि च यथायोगं तृतीया समर्थविभक्तिः॥**

**न्यासः**

कि तन्नाम्नीत्यनेन ? एतदपि न कर्त्तव्यम्; नामधेयता विरोधिनोऽपि बलीयसोऽपि प्रत्ययान् बाधितुम्। कथम् ? नाप्राप्ते मतुप्ययं योग आरभ्यमाणो मतुपमपवादत्वाद् बाधते। तदपवादैस्त्विवनिठनादिभिः सह सम्प्रधारणाया-मपवादविप्रतिषेधादिनिठनादय एव स्युः। नामग्रहणे तु सति बलीयोभिरपि सम्प्रधारणाया सम्प्रत्ययो भवति—यो नामधेयतां गमयति स चातुरर्थिक एवेति। अतः स एव भवति॥ ६७॥

**तेन निर्वृत्तम्॥ चतुर्ष्वपीति।** अनन्तरातीतेऽस्मिन् वक्ष्यमाणयोश्च योगयोः। **कर्त्तरि चेति।** लक्ष्यानुरोधेन क्वचिद्धेतौ क्वचित् कर्त्तरि च सहस्रेणेति हेतौ, कुशाम्बेनेति कर्त्तरि। यदा हेतौ तदा वृत्तेरकर्मत्वान्निर्वृत्त इति कर्त्तरि निष्ठा, यदा कर्त्तरि तदाऽन्तर्भावितण्यर्थत्वात् कर्मणि। अकर्मका अप्यन्तर्भावितण्यर्थाः सकर्मका भवन्ति॥ ६८॥

**पदमञ्जरी**

अन्यथा नाप्राप्ते मतुप्यारम्भात्तस्यायं बाधकः। तदपवादैस्त्विवनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादि-निठनादय एव स्युः॥ ६७॥

**तेन निर्वृत्तम्॥** निर्वृत्तमित्यन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः॥ ६८॥

**भावबोधिनी**

सः—औदुम्बरः [ यहाँ प्रथमासमर्थ उदुम्बरं शब्द से अण् होता है, जिस देश में उदुम्बर होते हैं, उसका नाम बताना है। उदुम्बर+अण्, आदिवृद्धि। जहाँ गूलर होते हैं, वह देश—औदुम्बर कहा जाता है। ] बाल्वजः [ बल्वज हैं जिस देश में वह बाल्वजः ]। पार्वतः [ पर्वताः सन्ति अस्मिन् देशे ] यह मत्वर्थीय [ मतुप्, इनि आदि ] का अपवाद है। [ इसमें वचन अविवक्षित है। अतः अस्ति और सन्ति सभी में होता है। यहाँ से चातुरर्थिक प्रत्यय प्रारम्भ होते हैं। इनमें पहला अर्थ इस सूत्र में बताया गया है॥ ६७॥

'तेन' [ उसने या उसके द्वारा ]—इस तृतीयासमर्थ से 'निर्वृत्तम्' [ बनाया गया ]—इस विषय में यथाविहित प्रत्यय होते हैं, यदि देश का नाम प्रतीत हो रहा हो। 'तन्नाम्नि देशे' [ उस नाम वाला देश=स्थान वाच्य रहने पर ]—इसका सम्बन्ध चारों सूत्रों के साथ होता है। उदा०—सहस्रेण निर्वृत्ता परिखा—साहस्री [ एक हजार रुपयों से बनायी गयी परिखा ]। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी [ कुशाम्ब नामक व्यक्ति द्वारा बनायी गयी नगरी। अण् प्रत्यय, आदिवृद्धि, भसञ्ज्ञा, अलोप, ङीप्=ई ] हेतु और कर्ता इन दोनों में लक्ष्यानुसार तृतीया समर्थ विभक्ति समझ लेनी चाहिये। [ कहीं हेतुवाची तृतीयान्त से और कहीं कर्तृवाची तृतीयान्त से प्रत्यय होता है। चार अर्थों में यह दूसरा अर्थ है ]॥ ६८॥

**१४९७. तस्य निवासः ॥ ६९ ॥ ( १२८१ )**

'तस्य' इति षष्ठीसमर्थात् 'निवासः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति देशनामधेये गम्यमाने। निवसन्त्यस्मिन्निति निवासः। ऋजुनावां निवासो देश आर्जुनावो देशः। शैबः। औदिष्ठः ॥

**१४९८. अदूरभवश्च ॥ ७० ॥ ( १२८२ )**

पूर्वा समर्थविभक्तिरनुवर्तते। तस्येति षष्ठीसमर्थाद् 'अदूरभवः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। विदिशाया अदूरभवं नगरं वैदिशम्। हैमवतम्।

चकारः पूर्वेषां त्रयाणामर्थानामिह सन्निधानार्थः। तेनोत्तरेषु चत्वारोऽप्यर्थाः सम्बद्ध्यन्ते ॥

**१४९९. ओरञ् ॥ ७१ ॥ ( १२८३ )**

चत्वारोऽर्था ( ४. २. ६७–७० ) अनुवर्तन्ते। उवर्णान्तात्प्रातिपदिकाद्यथाविहितं समर्थविभक्तियुक्तादञ् प्रत्ययो भवति 'तदस्मिन्नस्ति' इत्येवमादिष्वर्थेषु। अणोऽपवादः। अरडु—आरडवम्। कक्षतु—काक्षतवम्।

**न्यासः**

तस्य निवासः ॥ ६९ ॥ अदूरभवश्च ॥ ७० ॥ ओरञ् ॥ यथायथमिति। यथास्वम्। तत्र प्रथमे

**पदमञ्जरी**

तस्य निवासः ॥ **ऋजुनावामिति**। ऋज्वी नौर्येषां तेषामित्यर्थः ॥ ६९ ॥

**अदूरभवश्च** ॥ अदूरमन्तिकं तत्र भवतीत्यदूरभवः, निपातनात्सप्तमीसमासः। **विदिशाया इति**। 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति षष्ठी। **चकार इत्यादि**। असति तु तस्मिन्नानन्तर्यादयमेवार्थ उत्तरत्र सम्बध्येत ॥ ७० ॥

**ओरञ्** ॥ अरडुः=क्षत्रियविशेषः। **नद्यां तु मतुप्परत्वादिति**। आरडवमित्यादिरञोऽवकाशः, 'नद्यां

**भावबोधिनी**

'तस्य' [ उसका ] इस षष्ठी समर्थ से 'निवासः' [ निवास=रहने का स्थान ] इस अर्थ में यथाविहित प्रत्यय होता है यदि देश का नाम वाच्य हो तो। जहाँ रहते हैं उसे निवास कहते हैं। उदा० ऋजुनावां निवासः—आर्जनावः। [ ऋजु=सीधी नौ=नाव है जिनकी उनको 'ऋजुनौ' कहते हैं। ऋजुनौ + अण्, आदिवृद्धि, रपर, औ का आव् आदेश ] शैबः। औदिष्ठः। [ शिबीनां निवासः, उदिष्ठानां निवासः इस विग्रह में अण्, आदिवृद्धि। चार अर्थों में यह तीसरा अर्थ है ] ॥ ६९ ॥

पूर्व सूत्र की समर्थ विभक्ति [ तस्य–इस ] की अनुवृत्ति होती है। तस्य' [ उसका ] इस षष्ठीसमर्थ से 'अदूरभवः' [ समीप में होनेवाला ] इस अर्थ में यथाविहित प्रत्यय होते हैं। उदा० विदिशाया अदूरभवः –वैदिशम् [ विदिशा के समीप होने वाला—वैदिशम्। विदिशा + अण्, आदिवृद्धि, भसंज्ञा, आलोप ] हैमवतम् [ हिमवतः अदूरभवम्—हिमालय के समीप होने वाला —इस अर्थ में अण्, आदिवृद्धि। यह अर्थ है। ]

सूत्रस्थ चकार पूर्ववर्ती तीनों अर्थों का यहाँ सन्निधान=सम्बन्ध करने के लिए है। इस कारण आगे वाले सूत्रों में चारों अर्थों का सम्बन्ध होता है।

**विमर्श** चतुर्णाम् अर्थानां समूहः—चतुरर्थी। अकारान्त द्विगु में ङीप् होता है। 'तत्र भवः'—इस अर्थ में 'अध्यात्मादेष्ठञिष्यते' इस वचन से ठञ् करके आदिवृद्धि, ठ का इक करने पर चातुरर्थिक शब्द बनता है। ( १ ) तदस्मिन्नस्तीति देशे तन्नाम्नि, ( २ ) तेन निर्वृत्तम्, ( ३ ) तस्य निवासः, ( ४ ) अदूरभवश्च—इन चार सूत्रों से चार अर्थों में प्रत्यय होते हैं। इन्हें चातुरर्थिक प्रत्यय कहा जाता है। प्रस्तुत सूत्र के आगे वाले सूत्रों में चारों अर्थों का सम्बन्ध है। अतः निष्पन्न शब्द से इन चार अर्थों की प्रतीति होती है ॥ ७० ॥

उक्त चार अर्थों की अनुवृत्ति होती है। समर्थविभक्तियुक्त उवर्णान्त प्रातिपदिक से यथाविहित प्रत्यय 'तदस्मिन्नस्ति' आदि चार अर्थों में होते हैं। यह अण् का अपवाद है। उदा०—अरडु—आरडवम्। [ अरडु + अञ्, आदिवृद्धि,

कर्कटेलु-- कार्कटेलवम् । नद्यास्तु परत्वान्मतुब्भवति—इक्षुमती ।

अञधिकारः—प्राक् 'सुवास्त्वादिभ्योऽणः' ( ४. २. ७७ ) ।

**१५००. मतोश्च बह्वजङ्गात् ॥ ७२ ॥ ( १२८४ )**

बह्वज् अङ्गं यस्यासौ बह्वजङ्गो मतुप्, तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । ऐषुकावतम्[1] । सैध्रकावतम् ।

बह्वजङ्गादिति किम् ? आहिमतम् । यावमतम् । अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा विज्ञायते, मत्वन्तविशेषणं मा विज्ञायीति । मालावतां निवासो मालावतम् ॥

**न्यासः**

प्रथमासमर्थविभक्तियुक्तात् । द्वितीये तृतीयासमर्थविभक्तियुक्तात् । तृतीयचतुर्थयोः षष्ठीसमर्थविभक्तियुक्तात् । **नद्यास्तु परत्वान्मतुबेव भवतीति** । 'नद्यां मतुप्' इत्यनेन ॥ ७१ ॥

**मतोश्च बह्वजङ्गात् ॥ मालावतमिति** । यदि बह्वजिति, न भवत्येष दोषः ॥ ७२ ॥

**पदमञ्जरी**

मतुप्' इत्यस्योदुम्बरावतीत्यादिः ॥ ७१ ॥

**मतोश्च बह्वजङ्गात् ॥ चातुरर्थिक इति** । चतुर्णामर्थानां समूहश्चतुरर्थी, तत्र भवः, अध्यात्मादित्वाट्ठञ् । तद्धितार्थे द्विगौ तु ठञो लुक् स्यात् ।

**अङ्गग्रहणं किमिति** । 'मतोश्च बह्वचः' इत्येवास्तु, व्यधिकरणे पञ्चम्यौ, बह्वचो यो विहितो मतुप् तदन्तादिति विज्ञायमाने सिद्ध्यत्येव विवक्षितमिति प्रश्नः । **मतुबन्तविशेषणं मा भूदिति** । अन्यथा सामानाधि-

**भावबोधिनी**

उ का गुण ओ, अव् आदेश ] कक्षतु —काक्षतवम् । [ कक्षतु + अञ् शेष पूर्ववत् ] कर्कटेलु—कार्कटेलवम् [ प्रक्रिया पूर्ववत् ] । परन्तु उकारान्त नदीवाचक से तो परवर्ती होने के कारण मतुप् होता है—इक्षुमती । [ इक्षु + मतुप् = मत् + ङीप् = ई ] ।

'सुवास्त्वादिभ्योऽण्' ४।२।७७ से पहले तक अञ् प्रत्यय का अधिकार है ॥ ७१ ॥

बहुत से अचों वाला अङ्ग है जिसका वह बह्वजङ्ग मतुप् है । [ अर्थात् मतुप् परे रहते जिस प्रकृति के बहुत से अच् हैं, वह बह्वजङ्ग मतुप् होता है । ] उस मतुबन्त प्रातिपदिक से चातुरर्थिक अञ् प्रत्यय होता है । अण् का अपवाद है । उदा० ऐषुकावतम् । सैध्रकावतम् [ इषुकाः सन्ति अस्यां नद्याम् —इस अर्थ में "नद्यां मतुप्' ४।२।८२ से मतुप् करने पर इषुका + मत्, म् का व् इषुकावत् "उगितश्च" ४।१।६ से ङीप्—इषुकावती नदी । इससे अञ् प्रत्यय आदिवृद्धि भसंज्ञा, ईलोप करने पर रूप सिद्ध होता है । इषुका = सरकण्डे । सिध्रका एक विशेष वृक्ष जिस वन में हैं वह सिध्रकावत । इससे अञ् प्रत्यय, शेष प्रक्रिया पूर्ववत् । ] बहुत अचों वाले अङ्ग से —इसका क्या फल है ? आहिमतम् । यावमतम् । [ अहिमत् और यावमत् में अहि और यव में दो ही अच् हैं । अत् अञ् न होकर अण् होता है । स्वर में भेद है ।

बह्वज् यह अङ्ग का विशेषण जिस प्रकार बन सके—इसके लिए अङ्ग का ग्रहण है, मतुबन्त का विशेषण न बन सके अर्थात् बहुत अचोंवाला मतुबन्त—ऐसी प्रतीति न होकर बहुत अचोंवाला अङ्ग ऐसी प्रतीति कराने के लिए अङ्ग का ग्रहण है । ] मालावतां निवासः—मालावतम् । [ यहाँ मालावत् से अण् होता है, अञ् नहीं होता है । ] ॥ ७२ ॥

---

१. 'ऐकटावतम् इति पाठा० ।

## १५०१. बह्वचः कूपेषु ॥ ७३ ॥ ( १२८५ )

बह्वचः प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः कूपेष्वभिधेयेषु । अणोऽपवादः । यथासम्भवमर्थाः सम्बध्यन्ते । दीर्घवरत्रेण निर्वृत्तः कूपः, दैर्घवरत्रः । कापिलवरत्रः ॥

## १५०२. उदक्च विपाशः ॥ ७४ ॥ ( १२८६ )

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेष्वञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तः कूपो दात्तः । गौप्तः ।

उदगिति किम् ? दक्षिणतो विपाशः । कूपेष्वणेव—दात्तः । गौप्तः । स्वरे विशेषः । महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य ! ॥

## १५०३. सङ्कलादिभ्यश्च ॥ ७५ ॥ ( १२८७ )

'कूपेषु' इति निवृत्तम् । 'सङ्कल' इत्येवमादिभ्योऽञ् प्रत्ययो भवति चातुरर्थिकः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । संगतः कलः सङ्कलः, सङ्कलेन निर्वृत्तः साङ्कलः । पौष्कलः ।

सङ्कल । पुष्कल । उद्वप । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपि

### न्यासः

बह्वचः कूपेषु ॥ ७३ ॥ उदक् च विपाशः ॥ ७४ ॥ सङ्कलादिभ्यश्च ॥ ७५ ॥

### पदमञ्जरी

करण्ये सम्भवति, वैयधिकरण्यस्यायुक्तत्वात् तस्यैव विशेषणं स्यादिति विभावः । अस्ति चेदिदानीं क्वचिदबह्वञ् मत्वन्तो यदर्थं बह्वज्ग्रहणं स्यात् ? अस्तीत्याह—स्ववान्, श्ववान् ॥ ७२ ॥ ७३ ॥

उदक्च विपाशः ॥ महती सूक्ष्मेक्षिकेति । एवं नाम स्वरेऽप्याचार्योऽवहित इति आचार्यस्य प्रशंसैषा ॥७४॥

### भावबोधिनी

कूप=कुआँ अर्थ अभिधेय रहने पर बहुत अचों वाले प्रातिपदिक से चातुरर्थिक अञ् प्रत्यय होता है । अण् का अपवाद है । जैसा सम्भव होता है, वैसा अर्थों के साथ सम्बन्ध होता है । उदा० —दीर्घवरत्र द्वारा बनाया गया कुआँ—दैर्घवरत्रः । कपिलवरत्र द्वारा बनाया गया कुआँ—कापिलवरत्रः [ दीर्घवरत्र + अञ्, कपिलवरत्र + अञ्, आदिवृद्धि, भसंज्ञा, अलोप । ] ॥ ७३ ॥

विपाट्=विपाशा नदी के उत्तरी तट पर जो कुएँ हैं, वे यदि वाच्य रहते हैं तो चातुरर्थिक अञ् प्रत्यय होता है। यह अण् का अपवाद है। जिसमें बहुत अच् नहीं है, उसके लिए यह सूत्र बनाया जा रहा है । उदा०—दत्त द्वारा बनवाया गया कुआँ— दात्तः । [ गुप्तेन निर्वृत्तः—] गौप्तः । [ दत्त + अञ्, गुप्त + अञ्, आदिवृद्धि, भसंज्ञा, अलोप ] उत्तरी तट पर—यह किसलिये हैं ? विपाट् = विपाशा के दक्षिणी तट पर बनवाये गये कुएँ वाच्य रहने पर अण् होता है—दात्तः । गौप्तः । [ अण् और अञ् में रूप एक ही प्रकार का रहता है केवल ] स्वर में विशेष=अन्तर हो हो जाता हैं । [ अञ् में 'ञ्नित्यादिर्नित्यम्' ( ६.१.१९७ ) से आद्युदात्त होता है । अण् होने पर अन्तोदात्त होता है । ] सूत्रकार पाणिनि की बहुत सूक्ष्म दृष्टि है । [ भिन्न-भिन्न स्थानों के प्रयोग में प्रयुक्त स्वर का भेद भी पाणिनि की दृष्टि से नहीं छूटा, यह साधारण बात नहीं है ] ॥ ७४ ॥

'कूपेषु' [ कुआँ अर्थ वाच्य रहने पर ]—इसकी निवृत्ति हो जाती है। सङ्कल आदि प्रातिपदिकों से चातुरर्थिक अञ् प्रत्यय होता है । अण् का अपवाद है । यथासम्भव अर्थों का सम्बन्ध रहता है । संगतः कलः—संकलः, संकल द्वारा बनवाया गया— साङ्कलः । पौष्कलः [ संकल + अञ्, पुष्कल + अञ्, आदिवृद्धि, भसंज्ञा, अलोप । इस गण में इन शब्दों का पाठ है—] ।

संकल । पुष्कल । उद्वप । उडुप । उत्पुट । कुम्भ । विधान । सुदक्ष । सुदत्त । सुभूत । सुनेत्र । सुपिङ्गल ।

ङ्गल। सिकता। पूतीकी। पूलास। कूलास। पलाश। निवेश। गवेष। गम्भीर। इतर। शर्मन्। अहन्। लोमन्। वेमन्। वरुण। बहुल। सद्योज। अभिषिक्त। गोभृत्। राजभृत्। गृह। भूत। भल्ल। माल। वृत्॥

**१५०४. स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥ ( १२८८ )**

**'देशे तन्नाम्नि' इत्यस्य विशेषणम्—सौवीरादयः, स्त्रीत्वं च। ङ्याप्प्रातिपदिकादञ् प्रत्ययो भवति चातुरर्थिकः। अणोऽपवादः। सौवीरे स्त्रीलिङ्गे देशे वाच्ये साल्वे प्राचि। सौवीरे तावत्—दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री। साल्वे—विधूमाग्निना निर्वृत्ता वैधूमाग्नी। प्राचि खल्वपि—ककन्देन निर्वृत्ता काकन्दी। माकन्दी। माणिचरी। जारुषी॥**

**१५०५. सुवास्त्वादिभ्योऽण् ॥ ७७ ॥ ( १२८९ )**

**'सुवास्तु' इत्येवमादिभ्योऽण् प्रत्ययो भवति चातुरर्थिकः[1]। अञ् उवर्णान्तलक्षणस्य कूपलक्षणस्य चापवादः। सुवास्तोरदूरभवं नगरं सौवास्तवम्। वार्णवम्।**

**अण्ग्रहणं नद्यां मतुपो बाधनार्थम्। सौवास्तवी नदी।**

**न्यासः**

**स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥**

**सुवास्त्वादिभ्योऽण् ॥ उवर्णान्तलक्षणस्येत्यादि।** य उवर्णान्तास्तेभ्यः 'ओरञ्' इति प्राप्तस्यात्रोऽपवादः। शेषेभ्यश्च 'बह्वचः कूपेषु' इत्यादिना प्राप्तस्य कूपलक्षणस्य। अथाण्ग्रहणं किमर्थम्, सुवास्त्वादिभ्यो यथाविहितमेवोच्येत। पुनर्वचनं यो विहितो न च प्राप्नोति तदर्थं विज्ञायते। अणेव च विहितो न प्राप्नोति, अपवादेन बाधितत्वात्।

**पदमञ्जरी**

**सुवास्त्वादिभ्योऽण् ॥ अञ इति।** 'अण्ग्रहणरहितसूत्राभिप्रायमेतत्। तस्य तु प्रयोजनं स्वयमेव वक्ष्यति—'अण्ग्रहणं मतुपो बाधनार्थम्' इति। तेन वस्तुतो मतुपोऽप्ययमपवादः। अथाण्ग्रहणं किमर्थम्, न सुवास्त्वादिभ्यो यथा विहितमित्येवोच्येत, पुनर्वचनाद्धि को विहितो न च प्राप्नोति स एव भविष्यति स चाणेव? तत्राह—**अण्ग्रहणमिति।** असत्यण्ग्रहणे मध्येऽपवादन्यायेन ( व्या० परि० १० ) यथाविहितमित्युच्यमानोऽणत्र एव बाधकः

**भावबोधिनी**

सिकता। पूतीकी। पूलास। कूलास। पलाश। निवेश। गवेष। गम्भीर। इतर। शर्मन्। अहन्। लोमन्। वेमन्। वरुण। बहुल। सद्योज। अभिषिक्त। गोभृत्। राजभृत्। गृह। भृत। भल्ल। माल। वृत्॥ ७५॥

'उस नामवाले देश में' इसके विशेषण हैं—सौवीर आदि और स्त्रीत्व। ङ्यन्त, आबन्त और प्रातिपदिक से चातुरर्थिक अञ् प्रत्यय होता है। अण् का अपवाद है। सौवीर, साल्व और पूर्वदेश स्त्रीलिङ्ग में वाच्य रहने पर यह प्रत्यय होता है। सौवीर देश वाच्य रहने पर—दत्तामित्र द्वारा निर्वृत्त=बनायी गयी नगरी—दात्तामित्री। [ दत्तामित्र + अञ्, आदिवृद्धि, भसंज्ञा, अलोप, ङीप्=ई ] साल्व देश वाच्य रहने पर—विधूमाग्नि द्वारा निर्वृत्त=बनायी गयी नगरी—वैधूमाग्नी। [ विधूमाग्नि + अञ्, आदिसंज्ञा, इलोप, ङीप् ] पूर्वदेश वाच्य रहने पर ककन्द द्वारा निर्वृत्त=बनायी गया नगरी—काकन्दी। [ मकन्द द्वारा निर्वृत्त नगरी ] माकन्दी। [ मणिचर द्वारा निर्वृत्त नगरी ] माणिचरी। [ जारुष द्वारा निर्वृत्त नगरी ] जारुषी। [ इन सभी में अञ् प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप, ङीप् होते हैं। ]॥७६॥

सुवास्तु आदि प्रातिपदिकों से चातुरर्थिक अण् प्रत्यय होता है। उवर्णान्त और कूप अर्थ मानकर होने वाले अञ् का अपवाद है। उदा०—सुवास्तु नदी से अदूर=समीप होने वाला नगर—सौवास्तवम्। [ सुवास्तु + अण्, आदिवृद्धि, भसंज्ञा, उकार का गुण, अव् आदेश ] [ वर्णु नदी के अदूर=समीप होने वाला ] वार्णवम्।

---

१. 'यथासंभवमर्थसंबन्धः'—इत्यधिकं क्वचित्।

**सुवास्तु । वर्णु । भण्डु । खण्डु[1] । सेचालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह्य[2] । अहिसक्थ । वृत् ॥**

**१५०६. रोणी ॥ ७८ ॥ ( १२९० )**

**रोणीशब्दादणप्रत्ययो भवति चातुरर्थिकः । यथासंभवमर्थसंबन्धः । कूपलक्षणस्याञोऽपवादः । रोणीति कोऽयं निर्देशः, यावता प्रत्ययविधौ पञ्चमी युक्ता ? सर्वावस्थप्रतिपत्त्यर्थमेवमुच्यते—रोणीशब्दः सर्वावस्थोऽणप्रत्ययमुत्पादयति, केवलस्तदन्तश्च । रौणः । आजकरोणः । सैंहिकरोणः ॥**

**न्यासः**

अथ स भविष्यतीत्यत आह—**अण्ग्रहणमित्यादि** । असति ह्यण्ग्रहणे 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति नदीमतुपा सह संप्रधारणायां परत्वान्नदीमतुप् स्यात् । अणो ग्रहणादणेव भवति । तस्मान्मतुपो बाधनार्थमण्ग्रहणम् ॥ ७७ ॥

**रोणी ॥ कोऽयं निर्देश इति** । कुत्सितोऽयं इत्यर्थः । कुत्सितत्वं तु लक्षणातिक्रान्तत्वात् । तदेव लक्षणातिक्रान्तत्वं दर्शयितुमाह--**यावतेत्यादि** । **सर्वावस्थाप्रतिपत्त्यर्थमित्यादि** । सर्वावस्था च केवलस्य तदन्तस्य च प्रतिपत्तिः प्रकृतित्वेन यथा स्यादित्येवमर्थमुच्यते । यदि 'रोण्याः' इत्यादिनिर्देशः क्रियेत तदा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति केवलादेव स्यात्, न तदन्ताद् । रोणीति शास्त्रानपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिहोच्यते, तदस्याः परिभाषाया अनपेक्षणादिह तदन्तादपि प्रत्ययः सिद्धो भवति । ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न चेदं प्रातिपदिकम्; स्त्रीप्रत्ययान्तत्वात् । अथ मतम्—प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति प्रातिपदिकस्य तदन्तविधेः

**पदमञ्जरी**

स्याद्, नदीमतुपा तु परत्वाद्बाध्येत, पुनरण्ग्रहणात्तु मतुपो विषये भवतीत्यर्थः । किञ्च 'ओरञ्' इत्यस्य नद्यां मतुप्परत्वाद् बाधक इत्युक्तम्, तत्रासत्यण्ग्रहणे यथाविहितमित्युच्याने नद्याम् 'ओरञ्' एव स्याद् वचनं तु मतुपो बाधनार्थं स्यात् । तस्मादेतदर्थमप्यण्ग्रहणं कर्तव्यम् ॥ ७७ ॥

**रोणी ॥ केवलस्तदन्तश्चेति** । अन्यथा 'ग्रहणवता प्रातिपदकेन तदन्त-विधिप्रतिषेधात्' ( व्या० परि० ८९ ) केवलादेव स्यात्, न तदन्तात् । रोणीति पुनः शास्त्रनिरपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिह सूच्यत इति परिभाषाया अनपेक्षणात्तदन्तादपि भवति । ननु च रोणीनि नेदं प्रातिपदिकम्, स्त्रीप्रत्ययान्तत्वात्; न च 'ग्रहणवता प्रातिपदिकेन' इत्यत्र लिङ्गविशिष्टस्य ग्रहणम्, येन स्त्रीप्रत्ययान्तेनापि तदन्तविधिः प्रतिषिध्येत, स्वरूपविधिविषया परिभाषेयं प्रातिपदिकस्य स्वरूपग्रहणे लिङ्गविशिष्टस्यापि

**भावबोधिनी**

अण् का ग्रहण नदी अर्थ में प्राप्त होने वाले मतुप् का बध करने के लिए है । उदा०—सौवास्तवी नदी । [ इस गण में इन शब्दों का पाठ है--] सुवास्तु । वर्णु । भण्डु । खण्डु । सेचालिन् । कर्पूरिन् । शिखण्डिन् । गर्त । कर्कश । शटीकर्ण । कृष्ण । कर्क । कर्कन्धूमती । गोह्य । अहिसक्थ । वृत् ॥ ७७ ॥

रोणी शब्द से चातुरर्थिक अण् प्रत्यय होता है । यथासम्भव अर्थों का सम्बन्ध होता है । कूप अर्थ में प्राप्त होने वाले अञ् का अपवाद है । रोणी यह कैसा निर्देश, क्योंकि प्रत्ययविधान में पञ्चमी-विभक्ति का निर्देश उचित होता है ? [ यहाँ पर प्रथमा का निर्देश है ? ] सभी अवस्थाओं का ज्ञान कराने के लिए इस प्रकार का उल्लेख है—रोणी शब्द सभी अवस्था में अण् प्रत्यय ही उत्पन्न कराता है, अकेला हो अथवा तदन्त [ रोणीशब्दान्त ] हो । उदा० -रौणः ।

१. 'कण्डु'—इति पाठा० ।

२. 'गाहि'—इति पाठा० ।

**१५०७. कोपधाच्च ॥ ७९ ॥ ( १२९१ )**

**ककारोपधाच्च प्रातिपदिकादणप्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । कूपलक्षणस्यौवर्णलक्षणस्य चाञोऽपवादः । कार्णच्छिद्रिकः कूपः । कार्णवेष्टकः । कृकवाकुना निर्वृत्तं कार्कवाकवम् । त्रैशङ्कवम् ॥**

**१५०८. वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥ ८० ॥ ( १२९२ )**

**वुञादयः सप्तदश प्रत्ययाः, अरीहणादयोऽपि सप्तदशैव प्रातिपदिकगणाः । आदिशब्दः प्रत्येकमभिसम्बध्यते । तत्र यथासंख्यं सप्तदशभ्यः प्रातिपदिकगणेभ्यः सप्तदश प्रत्यया भवन्ति चातुरर्थिकाः । अणोऽपवादः । यथासम्भवमर्थसम्बन्धः । अरीहणादिभ्यो वुञ्प्रत्ययो भवति । आरीहणकम् । द्रौघणकम् ।**

**(१) अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । साम्परायण । क्रौष्ट्रायण । भास्त्रायण । मैत्रायण ।**

**न्यासः**

प्रतिषिध्यमानः स्त्रीप्रत्ययान्तस्यापि प्रतिषिध्यत इति, एतच्च यत्र हि प्रातिपदिकस्य स्वरूपग्रहणं तद्विषया परिभाषेति प्राग् ज्ञापितमेतत् ? एवं तर्हि तस्य ज्ञापनस्य प्रायिकत्वं दर्शयति । तेन क्वचिदस्वरूपग्रहणेऽप्येषा परिभाषा प्रवर्त्तते । तेन कुमारीमाचष्टे कुमारयतीत्यत्र 'णाविष्ठवत् प्रातिपदिकस्य' इतीष्ठवद्भावः सिद्धो भवति ॥ ७८ ॥ **कोपधाच्च ॥ ७९ ॥**

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥**

**पदमञ्जरी**

ग्रहणं भवतीत्युक्तत्वात् ? यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं भवतीति **भाष्यकारपक्षः**, तदाश्रयेणैतदुक्तम् । एवं च **वृत्तिकारस्याप्ययमेव** पक्षः । ङ्याप्सूत्रे तु परिपक्षो दर्शित इति गम्यते । किं सिद्धं भवति ? कुमारीमाचष्टे कुमारयति—'णाविष्ठवद्' ( वा० ८१३ ) इति टिलोपः सिद्धो भवति ॥ ७८ ॥

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ॥** सूत्रे कुमुदशब्दो द्विरुपादीयते, तत्रारीहणकृशाश्वर्श्यकुमुदाश्च

**भावबोधिनी**

रोणी + अण्, आदिवृद्धि, भसंज्ञा, ईलोप ] सैंहिकरोणः । [ सिंहकरोणी + अण्, प्रक्रिया पूर्ववत् । इसमें यथासम्भव चातुरर्थिक की प्रतीति होती है । ] ॥ ७८ ॥

ककारोपध प्रातिपदिक से चातुरर्थिक अण् प्रत्यय होता है । यथासम्भव अर्थों का सम्बन्ध होता है । कूपलक्षण और उवर्णलक्षण अञ् का अपवाद है । उदा०—कार्णच्छिद्रिकः कूपः । [ कर्णच्छिद्रिका द्वारा निर्वृत्त कुआँ । कर्णच्छिद्रिका + अण्, आदिवृद्धि, भसंज्ञा, आ का लोप ] कार्णवेष्टकः [ कर्णवेष्टका + अण् ] । कृकवाकु द्वारा निर्वृत्त = बनवाया गया—कार्कवाकम् [ कृकवाकु + अण्, आदिवृद्धि, उकार का गुण, अव् आदेश ] । त्रैशङ्कवम् [ त्रिशङ्कु + अण्, आदिवृद्धि, उकार का गुण, अव् आदेश ] ॥ ७९ ॥

वुञ् आदि सत्तरह प्रत्यय हैं और अरीहण आदि सत्तरह ही प्रातिपदिकगण [ में पठित शब्द प्रकृति ] हैं । [ कुमुदादिभ्यः ] यह 'आदि' शब्द प्रत्येक के सम्बद्ध होता है । इनमें क्रमशः सत्तरह प्रातिपदिक गणों से सत्तरह चातुरर्थिक प्रत्यय होते हैं । यह अण् का अपवाद है । यथासम्भव अर्थ का सम्बन्ध होता है । ( १ ) अरीहण आदि से वुञ् प्रत्यय होता है । उदा०—आरीहणकम् । [ अरीहण + वुञ् = वु = अक, आदिवृद्धि ], द्रौघणकम् । [ द्रुघण + वुञ् = वु = अक, आदिवृद्धि ] ।

( १ ) [ अरीहणादि गण में पठित शब्द— ] अरीहण । द्रुघण । खदिर । सार । भगल । उलन्द । साम्परायण ।

त्रैगर्त्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । वैमतायन[1] । सौसायन । शाण्डिल्यायन । शिरीष । बधिर[2] । अरीहणादिः ॥

(२) कृशाश्वादिभ्यश्छण्प्रत्ययो भवति । कार्शाश्वीयः । आरिष्टीयः । कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता[3] । अवनत । विकुघास । अरुस् । अवयास[4] । मौद्गल्य । कृशाश्वादिः ॥

(३) ऋश्यादिभ्यः कः प्रत्ययो भवति । ऋश्यकः । न्यग्रोधकः । ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण[5] । ऋश्यादिः ॥

(४) कुमुदादिभ्यष्ठच्प्रत्ययो भवति । कुमुदिकम् । शर्करिकम् । कुमुद । शर्करा । न्यग्रोध । इत्कट[6] । गर्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत[7] । कुमुदादिः ॥

(५) काशादिभ्य इलः प्रत्ययो भवति । काशिलम् । वाशिलम् । काश । वाश । अश्वत्थ । पलाश । पीयूष । विश[8] । तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गृह । काशादिः[9] ।

(६) तृणादिभ्यः शः प्रत्ययो भवति । तृणशः । नडशः । तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण ।

**भावबोधिनी**

कौष्ट्रायण । मास्त्रायण । मैत्रायण । त्रैगर्तायन । रायस्पोष । विपथ । उद्दण्ड । उदञ्चन । खाडायन । खण्ड । वीरण । काशकृत्स्न । जाम्बवन्त । शिंशपा । किरण । रैवत । बैल्व । वैमतायन । सौसायन । शाण्डिल्यायन । शिरीष । बधिर । [ ये ] अरीहणादि हैं ।

( २ ) कृशाश्व आदि शब्दों से छण् प्रत्यय होता है । उदा०—कार्शाश्वीयः [ कृशाश्व + छण्, छण् = छ = ईय, आदिवृद्धि ] आरिष्टीयः [ अरिष्ट + छण् = छ = ईय, आदिवृद्धि ] इस गण में पठित शब्द — कृशाश्व । अरिष्ट । अरीश्व । वेश्मन् । विशाल । रोमक । शबल । कूट । रोमन् । वर्वर । सुकर । सूकर । प्रतर । सदृश । पुरग । सुख । धूम । अजिन । विनता । अवनत । विकुघास । अरुस् । अवयास । मौद्गल्य । ये कृशाश्वादि हैं ।

( ३ ) ऋश्य आदि से क प्रत्यय होता है । उदा०—ऋश्यकः । न्यग्रोधकः । [ इस गण में पठित शब्द— ] ऋश्य । न्यग्रोध । शिरा । निलीन । निवास । निधान । निवात । निबद्ध । विबद्ध । परिगूढ । उपगूढ । उत्तराश्मन् । स्थूलबाहु । खदिर । शर्करा । अनडुह् । परिवंश । वेणु । वीरण । ये ऋश्यादि हैं ।

( ४ ) कुमुद आदि शब्दों से ठच् प्रत्यय होता है । उदा०—कुमुदिकम् । [ कुमुद + ठच् = ठ = इक, भसंज्ञा, अलोप ] शर्करिकम् । [ शर्करा + ठच्, ठ = इक् , अलोप ] इस गण में पठित शब्द— ] कुमुद । शर्करा । न्यग्रोध । इत्कट । गर्त । बीज । अश्वत्थ । बल्वज । परिवाप । शिरीष । यवाष । कूप । विकङ्कत । ये कुमुदादि हैं ।

( ५ ) काश आदि से इल प्रत्यय होता है । उदा०—काशिलम् । [ काश + इल. भसंज्ञा, अलोप ] वाशिलम् । [ वाश + इल ] काश । वाश । अश्वत्थ । पलाश । पीयूष । विश । तृण । नर । चरण । कर्दम । कर्पूर । कण्टक । गृह । वे काशादि हैं ।

( ६ ) तृण आदि से श प्रत्यय होता है । उदा०—तृणशः [ तृण + श ] । नडशः । [ इस गण में पठित शब्द ]

---

१. 'मैमतायण'-इति पाठा० ।

२. 'वैगर्तायण, गोमतायण, सौमतायण, खाण्डायण, विपाश, सुयज्ञ, जम्बु, समर्थ—एतेऽत्र गणे क्वचिदधिका शब्दाः ।

३. 'वनिता'–इति पाठा० । ४. 'अयावस्'-इति पाठा० ।

५. खण्ड, परिवृत्त, कर्दम, अंशु —एतेऽत्र गणेऽधिकाः पुस्तकान्तरे । ६. उत्कट–इति पाठा० ।

७. कण्टक, कङ्कट, संकट, पलाश. त्रिक, कत, दशग्राम—पुस्तकान्तरे एतेऽधिकाः शब्दा अत्र गणे ।

८. विस-इति पाठा० । ९. आवास, नड, वन, वधूल, बर्बर–एतेऽत्र शब्दा गणेऽधिकाः पुस्तकान्तरे ।

**जन । बल । लव । वन । तृणादिः ।**

**(७) प्रेक्षादिभ्य इनिप्रत्ययो भवति । प्रेक्षी । हलकी । प्रेक्षा । हलका[1] । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । इर्कुट[2] । प्रेक्षादिः ।**

**(८) अश्मादिभ्यो रप्रत्ययो भवति । अश्मरः । अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा[3] । अश्मादिः ।**

**(९) सख्यादिभ्यो ढञ् प्रत्ययो भवति । साखेयम् । साखिदत्तेयम् । सखि । सखिदत्त । वायुदत्त । गोहित[4] । भल्ल । पाल । चक्रपाल । चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल[5] । सख्यादिः ।**

**(१०) संकाशादिभ्यो ण्यप्रत्ययो भवति । सांकाश्यम् । काम्पिल्यम् । संकाश । [कम्पिल] काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । कूट । मलिन । तीर्थ । अगस्ति । बिरत । चिकार । विरह । नासिका । संकाशादिः ।**

**(११) बलादिभ्यो यः प्रत्ययो भवति । बल्यः । कुल्यम् । बल । वुल । तुल । उल । डुल । कवल । वन । कुल । बलादिः ॥**

**(१२) पक्षादिभ्यः फक् प्रत्ययो भवति । पाक्षायणः । तौषायणः । पक्ष । तुष । अण्ड । काम्बलिक । चित्र ।**

**भावबोधिनी**

तृण । नड । बुस । पर्ण । वर्ण । चरण । अर्ण । जन । बल । लव । वन । ये तृणादि हैं ।

( ७ ) प्रेक्षा आदि से इनि = इन् प्रत्यय होता है । उदा०—प्रेक्षी [ प्रेक्षा + इनि, भसंज्ञा, आलोप ] हलकी । [ हलका + इनि ] । [ इसमें पठित शब्द ] प्रेक्षा । हलका । बन्धुका । ध्रुवका । क्षिपका । न्यग्रोध । [ यह कुमूदादि गण में भी पठित है । ] इर्कुट । ये प्रेक्षादि हैं ।

( ८ ) अश्म आदि से 'र' प्रत्यय होता है । उदा०—अश्मरः [ अश्मन् + र, पदसंज्ञा, न् का लोप ] अश्मन् । यूष । रूष । मीन । दर्भ । वृन्द । गुड । खण्ड । नग । शिखा । ये अश्मादि हैं ।

( ९ ) सखि आदि से ढञ् प्रत्यय होता है । उदा०—साखेयम् [ सखि + ढञ्, ढ=एय, आदिवृद्धि, भसंज्ञा, इकारलोप ] । साखिदत्तेयम् । [ सखिदत्त + ढञ्, ढ=एय, आदिवृद्धि, भसंज्ञा, इलोप ] । सखि । सखिदत्त । वायुदत्त । गोहित । भल्ल । पाल । चक्रपाल । चक्रवाल । छगल । अशोक । करवीर । सीकर । सकर । सरस । समल । ये सख्यादि हैं ।

( १० ) संकाश आदि से ण्य प्रत्यय होता है । उदा०—सांकाश्यम् । [ संकाश + ण्य=य, आदिवृद्धि, भसंज्ञा, अलोप । ] काम्पिल्यम् [ कम्पिल + ण्य=य, शेष पूर्ववत् ] संकाश । [ कम्पिल ] काम्पिल्य । समीर । कश्मर । शूरसेन । सुपथिन् । सक्थच । यूप । अंश । एग । अश्मन् । [ अश्मादिगण में भी इसका पाठ है । ] कूट । मलिन । तीर्थ । अगस्ति । बिरत । [ विरत ] चिकार । विरह । नासिका । ये संकाशादिगण में पठित हैं ।

( ११ ) बल आदि से 'य' प्रत्यय होता है । उदा० - बल्यः । [ बल + य, भसंज्ञा, अलोप ] । कुल्यम् । बल । तुल । उल । डुल । कवल । वन । कुल । ये बलादि हैं ।

( १२ ) पक्ष आदि से फक् होता है । उदा०—पाक्षायणः । [ पक्ष + फक्=फ=आयन, आदिवृद्धि ] तौषायणः [ तुष + फक् ] । पक्ष । तुष । अण्ड । काम्बलिक । चित्र । अश्मन् [ यह अश्मादिगण और संकाशादिगण में भी पठित

---

१. फलका–इति पाठा० । २. बुधका, संकट, कूपका कर्कटा, सुकटा, सुक, महा—एते शब्दा अत्राधिकाः पुस्तकान्तरे ।
३. यूथ, रुष, नद, नख, काट, पाम एतेऽत्र शब्दा गणेऽधिकाः पुस्तकान्तरे । ४ गोहिल–इति पाठा० ।
५. चर्क, वक्रपाल, उशीर, सुरस, रोह, तमाल, कदल, सतल–एते शब्दा अत्र गणेऽधिकाः क्वचित् ।

अश्मन् । अतिस्वन् । पथिन्पन्थ च[1] । पक्षादिः ।

(१३) कर्णादिभ्यः फिञ्प्रत्ययो भवति । कार्णायनिः । वासिष्ठायनिः । कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जीवन्ती । जित्व । अण्डीवत्[2] । कर्णादिः ।

(१४) सुतङ्गमादिभ्य इञ्प्रत्ययो भवति । सौतङ्गमिः । मौनिचित्तिः । सुतङ्गम । मुनिचित्त । विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन् । अर्जुन । अजिर । जीव । सुतङ्गमादिः ।

(१५) प्रगदिन्नादिभ्यो ञ्यः प्रत्ययो भवति । प्रागद्यम् । प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । प्रगद्यादिः ।

(१६) वराहादिभ्यः कक् प्रत्ययो भवति । वाराहकम् । पालाशकम् । वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा[3] । वराहादिः ॥

(१७) कुमुदादिभ्यष्ठक् प्रत्ययो भवति । कौमुदिकम् । कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण[4] । कुमुदादिः ।

शिरीषशब्दोऽरीहणादिषु, कुमुदादिषु, वराहादिषु च पठ्यते, औत्सर्गिकोऽपि तत इष्यते, तस्य च वरणादिषु दर्शनाल्लुब्भवति । तथा चोक्तम्—शिरीषाणामदूरभवा ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति ॥

### भावबोधिनी

है । ] अतिस्वन् । पथिन और पन्थ । ये पक्षादि हैं ।

( १३ ) कर्ण आदि से फिञ् प्रत्यय होता है । उदा०—कार्णायनिः । [ कर्ण + फिञ्, फ्=आयन्, आदिवृद्धि, भसंज्ञा, अलोप ] । वासिष्ठायनिः । [ वसिष्ठ + फिञ् ] कर्ण । वसिष्ठ । अलुश । शल । डुपद । अनडुह्य । पाञ्चजन्य । स्थिरा । कुलिश । कुम्भी । जीवन्ती । जित्व । अण्डीवत् । ये कर्णादि हैं ।

( १४ ) सुतङ्गम आदि से इञ् प्रत्यय होता है । उदा० —सौतङ्गमिः । [ सुतङ्गम + इञ्, आदिवृद्धि, भसंज्ञा, अलोप ] मौनचित्तिः । [ मुनिचित्त + फिञ् ] विप्रचित्त । महापुत्र । श्वेत । गडिक । शुक्र । विग्र । बीजवापिन् । श्वन् । अर्जुन । अजिर । जीव । ये सुतङ्गमादि हैं ।

( १५ ) प्रगदिन् आदि से ञ्य प्रत्यय होता है । उदा०—प्रागद्यम् । [ प्रगद + ञ्य=य, आदिवृद्धि भसंज्ञा, अ का लोप ] प्रगदिन् । मगदिन् । शरदिन् । कलिव । खडिव । गडिव । चूडार । मार्जार । कोविदार । ये प्रगद्यादि हैं ।

( १६ ) वराह आदि शब्दों से कक् प्रत्यय हाता है । उदा०—वाराहकम् । [ वराह + कक् = क, आदिवृद्धि], पालाशकम् । [ पालाश + कक्, आदिवृद्धि ] वराह । पलाश । शिरीष । पिनद्ध । स्थूण । विदग्ध । विजग्ध । विभग्न । बाहु । खदिर । शर्करा । [ यह कुमुदादिगण में भी पठित है । ] ये वराहादि शब्द है ।

( १७ ) कुमुद आदि से ठक् प्रत्यय होता है । उदा०—कौमुदिकम् । [ कुमुद + ठक्, ठ = इक, आदिवृद्धि ] कुमुद । गोमथ । रथकार । दशग्राम । अश्वत्थ । शाल्मली । कुण्डल । मुनिस्थूल । कूट । मुचुकर्ण । ये कुमुदादि शब्द हैं ।

शिरीष शब्द अरीहणादिगण में, कुमुदादिगण में और वराहादिगण में पठित है; औत्सर्गिक [ अण् प्रत्यय ] भी इससे इष्ट है, इसका वरणादि में दर्शन होता है, [ उसमें देखा जाता है । ] अतः [ प्रत्यय का ] लुप् हो जाता है । जैसा कि कहा गया है--

---

१. कुम्भ, सीरज, सीरक, सरक, सलक, सरस, समल, रोमन्, लोमन्, हंसका, लोमक, सकण्डक, अस्तिबल, यमल, हस्त, हिंसक-क्वचिदेते शब्दा अत्र गणेऽधिकाः ।

२. अर्क, लूष, स्फिक् ज्ञावत्—एते शब्दा अत्र गणेऽधिकाः क्वचित् ।

३. विनद्ध, निबद्ध, विरुद्ध, मूल-एतेऽ गणेऽधिकाः पुस्तकान्तरे ।

४. कुन्द, मधुकर्ण, शुचिकर्ण, शिरीष-- एतेऽत्राधिका शब्दाः ।

## १५०९. जनपदे लुप् ॥ ८१ ॥ ( १२९३ )

'देशे तन्नाम्नि' इति यश्चातुरर्थिकः प्रत्ययो भवति, तस्य देशविशेषे जनपदेऽभिधेये लुब्भवति। ग्रामसमुदायः = जनपदः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। मत्स्याः। अङ्गाः। वङ्गाः। मगधाः। सुह्माः। पुण्ड्राः।

इह कस्मान्न भवति—उदुम्बरा अस्मिन्सन्ति, औदुम्बरो जनपदः, वैदिशो[1] जनपद इति? तन्नाम्नीति वर्तते। न चात्र लुबन्तं तन्नामधेयं भवति॥

## १५१०. वरणादिभ्यश्च ॥ ८२ ॥ ( १३०१ )

'वरण' इत्येवमादिभ्य उत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य लुब् भवति। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं वरणाः। शृङ्गी। शाल्मलयः। चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति। [2]कटुकबदर्या अदूरभवो ग्रामः कटुकबदरी। शिरीषाः। काञ्ची।

### न्यासः

**औत्सर्गिकोऽपि तत्रेष्यत इति**। यद्येवम्,तस्य श्रवणं प्राप्नोतीत्यत आह **—तस्य चेत्यादि। तथा चोक्तमित्यादि**। तदेव द्रढयति—औत्सर्गिक इत्येव। शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनमिति भाष्यकारवचनाल्लभ्यते। विशेषविहितानां हि लुपा न भवितव्यम्। अत औत्सर्गिकस्य लुब् भवतीति विज्ञायते॥ ८०॥

**जनपदे लुप्॥ ८१॥ वरणादिभ्यश्च॥ ८२॥**

### पदमञ्जरी

काशतृणादयश्चेति द्वन्द्वयोर्द्वन्द्वकरणादेकशेषाभावः। **कुमुदादिष्विति**। ऋश्यादेरनन्तरेषु औत्सर्गिकोऽपि तत् इष्यत इत्यादि यदुक्तं तदेवाप्तप्रयोगेण द्रढयति—**तथा चोक्तमिति**। 'लुपि युक्तवद्' इत्यत्र **भाष्यकारेण** तदुक्तम्। अथास्मात्प्रयोगाद्विशेषविहितानामेव पक्षे लुब् भवतीति कस्मान्नोच्यते? तथा वा भवतु; सर्वथा चातूरूप्यमेवात्र नः समीहितम्॥ ८०॥ वरणादिभ्यश्च॥ ८१॥

### भावबोधिनी

शिरीष से अदूर = समीप होने वाला गाँव शिरीष, उसका वन—शिरीषवनम्।

**विमर्श—**प्रस्तुत सूत्र चातुरर्थिक प्रत्ययों का विधान करता है। अतः पठित शब्दों में प्रतीत होने वाले अर्थों के साथ जिन अर्थों का सम्बन्ध सम्भव होता है, वे ही अर्थ समझकर प्रयोग करना चाहिये। सर्वत्र सभी अर्थ हो, यह अनिवार्यता नहीं है॥ ८०॥

'उस नाम वाला देश' इस अर्थ में जो चातुरर्थिक प्रत्यय होता है, यदि देश-विशेष जनपद अर्थ वाच्य रहे तो इसका लुप् = लोप हो जाता है। गाँवों का समुदाय जनपद [ कहा जाता है ]। उदा०—पञ्चालों का निवास जनपद—पञ्चालाः, कुरुओं का निवास जनपद—कुरवः। [ पञ्चालानां निवासः जनपदः इस अर्थ में 'तस्य निवासः' ( ४।२।६९ ) से अण् होता है और प्रस्तुत सूत्र से लुप् हो जाता है। इसके बाद "लुपि युक्तिवद् व्यक्तिवचने" ( १।२।५१ ) से प्रकृति के समान पुल्लिङ्ग बहुवचन हो जाने पर 'पञ्चालाः' आदि प्रयोग बनते हैं। इसी प्रकार और सभी शब्दों में बहुवचन समझना चाहिये। ] मत्स्याः [ मत्स्यानां निवासः = जनपदः ] अङ्गाः [ अङ्गानां निवासः = जनपदः ] बङ्गाः [ बङ्गानां निवासः = जनपदः ] मगधाः। सुह्माः। पुण्ड्राः।

---

१. 'वैतसः'—इति पाठा०।

२. 'कन्दुक'—इति पाठा०।

वरणाः। पूर्वौ गोदौ[1]। आलिङ्गचायन। पर्णी। शृङ्गी। शाल्मलयः। सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरशा। आकृत्या॥

**१५११. शर्कराया वा॥ ८३॥ (१३०२)**

शर्कराशब्दादुत्पन्नस्य चातुरर्थिकस्य प्रत्ययस्य वा लुब्भवति।

वाग्रहणं किम्, यावता शर्कराशब्दः कुमुदादिषुव राहादिषु च पठ्यते, तत्र पाठसामर्थ्यात्प्रत्ययस्य पक्षे श्रवणं भविष्यति? एवं तर्हि एतज्ज्ञापयति—शर्कराशब्दादौत्सर्गिको भवति, तस्यायं विकल्पितो लुबिति। शर्करा। शार्करम्। गणपाठाच्च श्रवणम्, उत्तरसूत्रे विहितौ च द्वौ प्रत्ययौ। तदेवं षड् रूपाणि भवन्ति—शर्करा, शार्करम्, शर्करिकम्, शार्करकम्, शार्करिकम्, शर्करीयमिति॥

न्यासः

**शर्कराया वा**॥ **पाठसामर्थ्यादित्यादि**। यदि नित्यो लुप् स्याद्, गणयोरस्य पाठोऽनर्थकः स्यात्। तस्मात् पाठसामर्थ्यादेव पक्षे श्रवणं भविष्यतीत्यत आह। एवं तर्हीत्यादिना वाग्रहणस्य ज्ञापकं दर्शयति। **शर्करेति**। औत्सर्गिकस्य लुप्। **शार्करमिति**। तस्यैव पक्षे श्रवणम्। **शर्करिकमिति**। कुमुदादि त्वाट् ठच्। **शार्करकमिति**। वराहादित्वात्। कक्। **शार्करिकम्, शर्करीयमिति**। उत्तरसूत्रेण ठक्छौ॥ ८३॥

पदमञ्जरी

**शर्कराया वा**। **कुमुदादिष्विति**। ऋश्याद्यनन्तरेषु। **पाठसामर्थ्यादिति**। नित्ये हि लुपि गणयोरस्य पाठोऽनर्थकः स्यात्। **शर्करेति**। अणो लुप्। **शार्करमिति**। तस्यैव श्रवणम्। **शार्करिकमिति**। कुमुदादित्वाट्ठच्। **शार्करकमिति**। वराहादित्वात्कक्, 'केऽणः' इति ह्रस्वः। **शार्करिकम्, शर्करीयमिति**। उत्तरसूत्रेण ठक्छौ॥ ८३॥

भावबोधिनी

इनमें [ लुप् ] क्यों नहीं होता है—उदुम्बर जिसमें है, औदुम्बरः जनपदः। [ उदुम्बर+अण्, आदिवृद्धि ]। वैदिशः जनपदः? 'उस नाम वाला' इसकी अनुवृत्ति होती है और यहाँ पर लुबन्त शब्द उस नाम वाला नहीं होता है। [ अतः लुप् नहीं होता है। ]

वरण आदि प्रातिपदिकों से उत्पन्न=विहित चातुरर्थिक प्रत्यय का लुप् लोप हो जाता है। जनपद से भिन्न अर्थ में लुप् करने के लिए यह सूत्र है। उदा०—वरण [ वृक्षों ] के अदूर=समीप में होने वाला नगर—वरणाः। [ वरण + अण्, लुप् और पूर्ववत् पुलिङ्ग बहुवचन ] शृङ्गी [ शृङ्गी के समीप होने वाला नगर ] शाल्मलयः [ शाल्मली वृक्षों के समीप वाला नगर ] अनुक्त शब्दों के समुच्चय के लिए [ पठित ] चकार शब्द इसकी आकृतिगणता बोधित कराता है। कटुकबदरी के अदूर=समीप होने वाला ग्राम—कटुकबदरी। शिरीषाः। [ शिरीष वृक्षों के समीप वाला गाँव ] काञ्ची [ काञ्ची के समीप वाला गाँव ]। [ इस गण में पठित शब्द— ] वरणाः। पूर्वौ गोदौ [ पूर्व के दो गोद नामक गाँव ] आलिङ्गायन। पर्णी। शृङ्गी। शाल्मलयः। सदाण्वी। वणिकि। वणिक। जालपद। मथुरा। उज्जयिनी। गया। तक्षशिला। उरसा। आकृति से [ अन्य शब्द भी लिये जाते हैं ]॥ ८२॥

शर्करा शब्द से उत्पन्न होने वाले चातुरर्थिक प्रत्यय का विकल्प से लुप् लोप हो जाता है।

'वा' का ग्रहण किसलिए है, क्योंकि कुमुदादिगण में और वराहादिगण में शर्करा शब्द का पाठ है। इन गणों में पाठ के सामर्थ्य से ही पक्ष में प्रत्यय का श्रवण हो जायगा? यदि ऐसी बात है तो यह ज्ञापित करता है—शर्करा शब्द से औत्सर्गिक प्रत्यय होता है, उसका यह लुप् विकल्प से किया जा रहा है। शर्करा। [ यह लुप् का रूप है ] शार्करम्। [ यह लुप् न होने का रूप है। ] [ कुमुदादि और वराहादि ] गणों में पाठ होने से [ ठच् और कक् ] प्रत्ययों का श्रवण होता है। अगले सूत्र में दो प्रत्ययों का विधान किया गया है। इस प्रकार छह रूप होते हैं—(१) शर्करा, (२) शार्करम्, (३) शर्करिकम्, (४) शार्करकम्, (५) शार्करिकम्, (६) शर्करीयम्॥ ८३॥

---

१. 'पूर्वेण गोदौ, अपरेण गोदौ'—इति पाठा०।

**१५१२. ठक्छौ च ॥ ८४ ॥ ( १३०३ )**

शर्कराशब्दाट्ठक्, छ—इत्येतौ प्रत्ययौ भवतश्चातुरर्थिकौ। यथासम्भवमर्थसम्बन्धः। शार्करिकम्। शर्करीयम् ॥

**१५१३. नद्यां मतुप् ॥ ८५ ॥ ( १३०४ )**

नद्यामभिधेयायां मतुप्प्रत्ययो भवति चातुरर्थिकः। तन्नाम्नो देशस्य विशेषणं नदी। उदुम्बरा यस्यां सन्ति उदुम्बरावती। मशकावती। वीरणावती। पुष्करावती। इक्षुमती। द्रुमती।

इह कस्मान्न भवति—भागीरथी, भैमरथी ? मतुबन्तस्यातन्नामधेयत्वात्।

**१५१४. मध्वादिभ्यश्च ॥ ८६ ॥ ( १३०५ )**

'मधु' इत्येवमादिभ्यः शब्देभ्यो मतुप्प्रत्ययो भवति चातुरर्थिकः। अनद्यर्थ आरम्भः। मधुमान्। विसवान्।

**न्यासः**

ठक्छौ च ॥ ८४ ॥ नद्यां मतुप्। उदुम्बरावतीति। 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः ॥ ८५ ॥

**पदमञ्जरी**

नद्यां मतुप् ॥ 'तदस्यास्त्यस्मिन्' इति मतुपि सिद्धे वचनमिदं तदस्मिन्नस्तीति प्राप्तस्याणो बाधनार्थं निर्वृत्ताद्यर्थं च, तत्सूचितम् चातुरर्थिक इति। देशस्य विशेषणं नदीति। यद्यपि 'विशिष्टलिङ्ग' इत्यत्रोक्तम्—

**भावबोधिनी**

शर्करा शब्द से चातुरर्थिक ठक् और छ प्रत्यय होते हैं। यथासम्भव अर्थों का सम्बन्ध होता है। उदा०—शार्करिकम्। शर्करीयम्।

**विमर्श** शर्करा शब्द के छः रूप होते हैं। पत्थर के छोटे-छोटे टुकड़े 'शर्करा' कहे जाते हैं। ये जिस देश में होते हैं—इस अर्थ में 'तदस्मिन्नस्तीति देशे' ४।२।६६ से औत्सर्गिक अण् होता है उसका वैकल्पिक लुप् पूर्ववर्ती सूत्र से होता है ( १ ) शर्करा। लुप् न होने पर आदिवृद्धि भसंज्ञा आलोप—( २ ) शार्करम्। कुमुदादिगण में पाठ होने से "वुच्छण्" ४।२।७९ से ठच् प्रत्यय और ठ का इक, भसंज्ञा, आलोप, ( ३ ) शर्करिकम्। कुमुदादिगण में पाठ है अतः 'वुञ्छण्' ४।२।७९ से ही कक् होने पर, ह्रस्व, आदिवृद्धि, ( ४ ) शार्करकम्। "ठक् छौ च" (४।२।८३) से ठक् होने पर ठ का इक, आदिवृद्धि भसंज्ञा, आलोप, ( ५ ) शार्करिकम्, छ = ईय करने पर, ( ६ ) शर्करीयम् ये रूप होते हैं ॥ ८४ ॥

नदी अर्थ वाच्य रहने पर चातुरर्थिक मतुप् प्रत्यय होता है। उस नाम वाले देश का विशेषण नदी होती है। उदा०—उदुम्बर [ गूलर ] हैं जिस नदी में वह—उदुम्बरावती। [ उदम्बर + मतुप् = मत्, यहाँ "मतौ बह्वचोऽनजिरादीनाम्" से दीर्घ होता है मादुपधायाश्च मतोर्वोऽयवादिभ्यः' ८।२।९ से मकार का वकार और 'उगितश्च ४।१।६ से ङीप् करने पर रूप सिद्ध होता है। इसी प्रकार ] मशकावती। वारणावती। पुष्करावती। इक्षुमती। द्रुमती। [ ये मशक आदि से युक्त नदियों के नाम हैं। ]

इनमें क्यों नहीं होता है—भागीरथी, भैमरथी ? [ इनमें ] मतुप्प्रत्ययान्त उसका नाम नहीं होता है। [ अतः सूत्र की प्रवृत्ति नहीं होती है। "तेन निर्वृत्तम् ( ५. १. ७९ ) इससे अण् और ङीप् करने पर रूप सिद्ध होता है ] ॥ ८५ ॥

मधु आदि शब्दों से चातुरर्थिक मतुप् प्रत्यय होता है। नदी से भिन्न अर्थों के लिए यह सूत्र बनाया गया है। उदा०—मधुमान्। विसवान् [ मधु + मतुप्, विस + मतुप् मत्, 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' सूत्र से म् का व् करने पर रूप सिद्ध होता है। ]

मधु । विस । स्थाणु । मुष्टि[1] । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मरुव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । मध्वादिः ।

## १५१५. कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥ ( १३०६ )

'कुमुद', 'नड', 'वेतस'—इत्येतेभ्यः शब्देभ्यो ड्मतुप् प्रत्ययो भवति चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् ।

❀ महिषाच्चेति वक्तव्यम् ❀ ( म० भा० ४.२.८७ ) । महिष्मान्नाम देशः ॥

## १५१६. नडशादाड् ड्वलच् ॥ ८८ ॥ ( १३०७ )

नडशादशब्दाभ्यां ड्वलच् प्रत्ययो भवति चातुरर्थिकः । यथासम्भवमर्थसम्बन्धः । नड्वलम् । शाद्वलम् ॥

### न्यासः

**मध्वादिभ्यश्च** ॥ ८६ ॥ **कुमुदनडवेतसेभ्यो ड्मतुप्** ॥ कुमुदशब्दात् ठच्छकोः प्राप्तयोः । नडशब्दादपि 'नडशादाड्ड्वलच्' इति 'नडादीनां कुक्च' इति । अस्मिंश्च विधौ प्राप्ते वेतसशब्दादपि मतुब् विधीयते । **महिषाच्चेत्यादि** । 'महिषशब्दान्मतुब् विधीयते' इत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेन महिषशब्दादपि भविष्यतीति ॥ ८७ ॥

**नडशादाड् ड्वलच्** ॥ नडशब्दात् पूर्वसूत्रेण ड्मतुप्यपि प्राप्ते शादशब्दादप्यणि ड्वलज्विधीयते ॥ ८८ ॥

### पदमञ्जरी

'नदीग्रहणमदेशत्वात् जनपदो हि देशः' इति, इह तु नद्यां देश इति; सम्बन्धसामर्थ्यादजनपदो देशग्रहणेन गृह्यते, एवं च पर्वतेष्वपि चातुरर्थिको भवति । अन्ये त्वाहुः—नद्यपि देश एव, लोकप्रसिद्धेः; 'विशिष्टलिङ्ग' इत्यत्र तु नदीग्रहणं यस्य द्वन्द्वस्य सर्वे एवावयवो नदीवचनस्तत्परिग्रहार्थम्, यत्र कश्चिदवयवो नदीवचनः, कश्चिदन्यदेशवाची—तत्र मा भूदित्येवमर्थमिति । **उदुम्बरावतीत्यादौ** 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घत्वम् । **भागीरथीति** । 'तेन निर्वृत्तम्' इत्यण् ॥ ८६ ॥

**कुमुदनडवेतसेभ्यो ड्मतुप्** ॥ कुमुद्वानित्यादौ 'झयः' 'मादुपधायाश्च' इति वत्वम् । अथ वकारादिरेव कस्मान्न विहितः ? ज्ञापनार्थम्, एतज्ज्ञापयति—अन्येभ्योऽप्ययं भवतीति । तेन महिष्मानिति सिद्धं भवति, महिषाच्चेति न वक्तव्यं भवति । एतेनैतदपि निरस्तम्—प्रकृतस्यैव मतुपो डित्त्वातिदेशेन सिद्धमिति, न हि डित्त्वातिदेशे पूर्वोक्तं ज्ञापनं समर्थितं भवति ॥ ८७ ॥

**नडशादाड् ड्वलच्** ॥ शादशब्दो दोपधः, 'पङ्कोऽस्त्री शादकर्दमौ' ( अ० को० १।९।९ ) इति ॥ ८८ ॥

### भावबोधिनी

मधु । विस । स्थाणु । मुष्टि । इक्षु । वेणु । रम्य । ऋक्ष । कर्कन्धु । शमी । किरीर । हिम । किशरा । शर्पणा । मरुत् । मसव । दार्वाघाट । शर । इष्टका । तक्षशिला । शक्ति । आसन्दी । आसुति । शलाका । आमिधी । खडा । वेटा । ये मध्वादिगण में पठित शब्द हैं ॥ ८६ ॥

कुमुद, नड, वेतस—इन शब्दों से चातुरर्थिक ड्मतुप् प्रत्यय होता है । उदा०—कुमुद्वान् । [ कुमुद + ड्मतुप = मत्, डित् होने के कारण 'अ' का लोप, म् का व् ] नड्वान् । वेतस्वान् ।

* महिष शब्द से ड्मतुप् कहना चाहिये । * महिष्मान् नामक देश । [ महिष + ड्मतुप् = मत्, डित् होने के कारण 'अ' का लोप । ] ॥ ८७ ॥

नड और शाद शब्दों से चातुरर्थिक ड्वलच् प्रत्यय होता है । यथासम्भव अर्थों के साथ सम्बन्ध होता है । उदा०—नड्वलम् । शाड्वलम् [ नड + ड्वलच् = वल, डित् होने से 'अ' का लोप ] ॥ ८८ ॥

१. 'दृष्टि' 'हृष्टि' इति वा पाठा० ।

## १५१७. शिखाया वलच् ॥ ८९ ॥ ( १३०८ )

शिखाशब्दाद्वलच् प्रत्ययो भवति चातुरर्थिकः। यथासंभवमर्थसम्बन्धः। शिखावलं नाम नगरम्। मतुप्प्रकरणेऽपि शिखाया वलचं ( ५. २. ११३ ) वक्ष्यति, तददेशार्थं वचनम् ॥

## १५१८. उत्करादिभ्यश्छः ॥ ९० ॥ ( १३०९ )

उत्कर-इत्येवमादिभ्यश्छः प्रत्ययो भवति चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। उत्करीयम्। शफरीयम्।

उत्कर। सम्फल[1]। शफर। पिप्पल। पिप्पलीमूल। अश्मन्। अर्क। पर्ण। सुपर्ण। खलाजिन। इडा। अग्नि। तिक। कितव। आतप। अनेक। पलाश। तृणव। पिचुक। अश्वत्थ। शकाक्षुद्र। भस्त्रा। विशाला। अवरोहित। गर्त्त। शाल। अन्य। जन्या। अजिन। मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय। श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। उत्करादिः॥

## १५१९. नडादीनां कुक् च ॥ ९१ ॥ ( १३१० )

'नड'—इत्येवमादीनां कुगागमो भवति, छश्च प्रत्ययश्चातुरर्थिकः। यथासम्भवमर्थसम्बन्धः। नडकीयम्। प्लक्षकीयम्।

### न्यासः

शिखाया वलच् ॥ शिखाया वलचं वक्ष्यतीति। 'दन्तशिखात् संज्ञायाम्' इत्यनेन ॥ ८९ ॥

उत्करादिभ्यश्छः ॥ ९० ॥ नडादीनां कुक् च ॥ क्रुञ्चाया ह्रस्वत्वञ्चेति। क्रुञ्चाशब्दस्य कुग्भवति ह्रस्वत्वञ्च—क्रौञ्चकीयमिति। तक्षन्नलोपश्चेति। तक्षन्नित्येतस्य कुगागमो भवति, नलोपश्च—तक्षकीयमिति ॥ ९१ ॥

### पदमञ्जरी

शिखाया वलच् ॥ शिखाया वलज्वक्ष्यतीति। 'दन्तशिखात्संज्ञायाम्' इत्यनेन। तददेशार्थं वचनमिति। इदं तु निर्वृत्ताद्यर्थम्, देशे तन्नाम्न्यणो बाधनार्थं च ॥ ८९. ॥

नडादीनां कुक् च ॥ तक्षन्नलोपश्चेति। यदि पुनरयं कुक् परादिः क्रियेत, नान्तस्य पदत्वात्सिद्धो नलोपः; किन्तु कुटि प्रत्ययादेरादेशानुपपत्तिः, छस्याप्रत्ययादित्वादीयादेशो न प्राप्नोति ॥ ९१ ॥

### भावबोधिनी

शिखा शब्द से चातुरर्थिक वलच् प्रत्यय होता है। यथासम्भव अर्थों का सम्बन्ध होता है। उदा०—शिखावलं नाम नगरम्। मतुप् प्रत्यय के प्रकरण में भी शिखा से वलच् प्रत्यय कहा जायगा, वह अदेश=देशभिन्न अर्थ के लिए वचन है ॥ ८९ ॥

उत्कर आदि से चातुरर्थिक छ प्रत्यय होता है। यथासम्भव अर्थों के साथ सम्बन्ध होता है। उदा०—उत्करीयम्। [ उत्कर + छ=ईय, भ संज्ञा, अलोप ] शफरीयम् [ शफर + छ = ईय ]

उत्कर। सम्फल। शफर। पिप्पल। पिप्पलीमूल। अश्मन्। पर्ण। सुपर्ण। खलाजिन। इडा। अग्नि। तिक। कितव। आतप। अनेक। पलाश। तृणव। पिचुक। अश्वत्थ। शकाक्षुद्र। भस्त्रा। विशाला। अवरोहित। गर्त। शाल। अन्य। जन्या। अजिन। मञ्च। चर्मन्। उत्क्रोश। शान्त। खदिर। शूर्पणाय। श्यावनाय। नैव। बक। नितान्त। वृक्ष। इन्द्रवृक्ष। आर्द्रवृक्ष। अर्जुनवृक्ष। ये उत्करादिगण में पठित हैं ॥ ९० ॥

नड आदि से कुक् आगम होता है और चातुरर्थिक छ' प्रत्यय होता है। यथासम्भव अर्थ का सम्बन्ध होता है। उदा०—नडकीयम्। प्लक्षकीयम् [ नड + छ = ईय, कुक्=क् आगम ]।

---

१. 'संकर'-इति पाठा०।

नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस । तृण । इक्षु । काष्ठ । कपोत । ❀ क्रुञ्चाया ह्रस्वत्वं च ❀ ( ग० सू० ९२ ) । ❀ तक्षन्नलोपश्च ❀ ( ग० सू० ९३ ) ।

**१५२०. शेषे ॥ ९२ ॥ ( १३१२ )**

'शेषे' इत्यधिकारोऽयम् । यानित ऊर्ध्वं प्रत्ययाननुक्रमिष्यामः, शेषेऽर्थे ते वेदितव्याः ।

उपयुक्तादन्यः शेषः । अपत्यादिभ्यश्चतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः ( म० भा० ) । तस्येदंविशेषा ह्यपत्यसमूहादयः, तेषु घादयो मा भूवन्निति शेषाधिकारः क्रियते ।

किञ्च—सर्वेषु जातादिषु घादयो यथा स्युरनन्तरेणैवार्थादेशेन सम्बन्धित्वेन कृतार्थता मा ज्ञायीति साकल्यार्थं शेषवचनम् । वक्ष्यति—'राष्ट्रावारपाराद् घखौ' ( ४.२.९३ ) । राष्ट्रियः । अवारपारीणः । 'शेषे'

**न्यासः**

**शेषे ॥ उपयुक्तादन्यः शेष** इत्येतद् ग्रहणकवाक्यम् । तदेव **अपत्यादिभ्य** इत्यादिना विवृणोति । अपत्यादयो हि चातुरर्थ्यपर्यन्ता प्रत्ययविधौ विनियुक्ताः, तस्मात् तेभ्यो योऽन्यो जातादिरर्थः स शेषः । ननु च निवृत्ता अपत्यादयः, तेभ्यश्चान्तरेषु जातादिषु येषु घादयस्ततोऽपत्यादिषु नैव ते प्राप्नुवन्तीति तत्किं तन्निवृत्त्यर्थेन शेषाधिकारेण ? इत्यत आह—**तस्येदमित्यादि** । जातादिष्वर्थेषु तस्येदमित्येषोऽर्थः पठ्यते । तच्चापत्यादीनां सामान्यम् । सामान्ये च विधीयमानस्तद्विशेषेऽपि विधीयते । तदुपलक्षणत्वात् सामान्यस्य । अतस्तस्येदं विशेषत्वाज्जाताद्यन्तःपातिष्वपत्यादिषु घादयः प्राप्नुवन्ति । तस्मात् तेषु मा भूवन्निति शेषाधिकारः क्रियते ।

**पदमञ्जरी**

**शेषे ॥ उपयुक्तादन्यः शेष इति** । शब्दार्थकथनमेतत् । तस्यैव प्रकरणादागतं विशेषमाह—**अपत्यादिभ्य इति** । एते ह्यत्रोपयुक्ताः । **चतुरर्थपर्यन्तेभ्य इति** । चत्वारोऽर्थाः 'तदस्मिन्नस्ति' इत्यादयः पर्यन्तो येषामिति त्रिपदो बहुव्रीहिः । **चातुरर्थ्यपर्यन्तेभ्य इति** पाठे समाहारद्विगोश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । ये तु पठन्ति—**चातुरर्थपर्यन्तेभ्य इति**, ते प्रज्ञादेराकृतिगणत्वादणमिच्छन्ति । किमर्थं पुनः शेषवचनम् ? शेषे घादयो यथा स्युः, अपत्यादिषु मा भूवन् । चिरनिवृत्ता अपत्यादयः ? चतुर्ष्वर्थेषु तर्हि मा भूवन्; अन्यथा 'ओरञ्' इत्यादयः 'नडादीनां कुक् च' इत्येवमन्ता यथा चतुरर्थेषु भवन्ति, तथा घादयोऽपि 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्येवमन्तास्तत्रैव स्युः । न ह्यकस्मात्प्रकरणं विच्छिद्यते । निर्वर्तिष्यते तर्हि चतुरर्थाः ? अस्वरितत्वाल्लिङ्गाच्च, यदयमुत्करादिषु कांश्चिद् वृद्धान् शब्दान्पठति—आर्द्रका, शालेति; अन्यथा 'वृद्धाच्छः' इत्येव सिद्धः स्यात् । स्वार्थे तर्हि घादयो मा भूवन् ? अनिर्दिष्टार्थत्वाद्धि स्वार्थ एव स्युः, नामी अनिर्दिष्टार्थाः । जातादिष्वर्थेषु

**भावबोधिनी**

नड । प्लक्ष । बिल्व । वेणु । वेत्र । वेतस् । तृण । इक्षु । काष्ठ । कपोत । ❀ कुञ्चा का ह्रस्व भी होता है । ❀ ❀ तक्षन् के न् का लोप भी होता है । ❀ ॥ ९१ ॥

यह अधिकार [ सूत्र ] है । इससे आगे जिन प्रत्ययों को कहेंगे उन्हें शेष अर्थ में समझना चाहिये ।

उपयुक्त = जिसका पहले उपयोग किया जा चुका है उससे भिन्न शेष है । [ अभिप्राय यह है ] अपत्य आदि से लेकर चतुरर्थपर्यन्त से भिन्न जो अर्थ हैं वह शेष है । तस्येदम् [ उसका यह ] विशेष हैं—अपत्य, समूह आदि । इन अर्थों में भी 'घ' आदि न होने लग जायँ—इसके लिए 'शेषे' यह अधिकार किया जा रहा है । और भी, जात आदि सभी अर्थों में 'घ' आदि प्रत्यय जिस प्रकार हो सके, अव्यवहित अर्थों के आदेश से सम्बन्धितत्व रूप से कृतार्थता न मान ली जाय—इस प्रकार सभी का ज्ञान कराने के लिए 'शेषे' सूत्र है । [ यदि यह सूत्र नहीं होता तो 'घ' आदि प्रत्ययों का अव्यवहित पूर्ववर्ती प्रथम अर्थ के साथ ही सम्बन्ध होता और उसी अर्थ में उनका विधान हो जाता, अन्य अर्थों में नहीं हो पाता,

**इति लक्षणं चाधिकारश्च। चक्षुषा गृह्यते चाक्षुषं रूपम्। श्रावणः शब्दः[1]। दृषदि पिष्टाः दार्षदा सक्तवः। उलूखले क्षुण्णः औलूखलो यावकः। अश्वैरुह्यते आश्वो रथः। चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्ष इति॥**

**न्यासः**

**किञ्चेत्यादिना** प्रयोजनान्तरं दर्शयति। असति हि शेषाधिकारे घादीनां प्रथमार्थेनैव सम्बन्धमनुभवतां तत्रैव कृतार्थता विज्ञायेत। तत्र द्वितीयादिष्वर्थेषु प्राग्दीव्यतीया एवाणादयः स्युः, न तु घादयः। शेषशब्दस्तूपयुक्तादन्यतया जातादीनर्थानेकीकृत्य शक्नोत्यभिधातुम्—सर्वत्र घादयः। सिध्यन्तीति। अतः साकल्यार्थं वा शेषवचनम्। **लक्षणं चाधिकारश्चेति**। इह लक्षणस्य विधायकत्वाल्लक्ष्यतेऽनेनेति लक्षणमिति कृत्वा; उत्तरत्राधिकारः स्वरित्वात्। तत्र यदाऽस्य लक्षणम्, चाक्षुषादयः सिध्यन्ति। यदा त्वधिकारता, तदा

**पदमञ्जरी**

घादयोऽनुवर्तिष्यन्ते? यद्यनुवर्तन्ते या या परा प्रकृतिः तस्यास्तस्याः पूर्वः पूर्वः प्रत्ययः प्राप्नोति। नार्थनिर्देशं प्रति व्यग्रयोरन्योऽन्यमभिसम्बन्धो भवति। लिङ्गाच्च, यदयं क्वचिच्चकारेण प्रकृतं समुच्चिनोति 'रङ्कोरमनुष्येऽण् च' इति, तज्ज्ञापयति—न पूर्वः पूर्वः प्रत्ययः परस्याः परस्याः प्रकृतेर्भवतीति। अथ वा- लौकिकोऽधिकारोऽपेक्षा-लक्षणः। न च घादीनां प्रकृत्यन्तरापेक्षा, नापि ग्रामादीनां प्रत्ययान्तरापेक्षा, तस्मादप्रयोजनमेतत्स्वार्थे मा भूवन्निति। तदेव तर्हि प्रयोजनम्-अपत्यादिषु तर्हि मा भूवन्निति। ननु चोक्तम्—चिरनिवृत्ता अपत्यादयश्चातुरर्थी च नापेक्ष्यत इति? न ब्रूमोऽपत्यादीनामत्राभिसम्बन्ध इति, किं तर्हि? तस्येदमित्यनेनापत्यादिष्वपि प्राप्नुवन्ति। कथम्? इत्याह—**तस्येदंविशेषा ह्यपत्यसमूहादय इति**। 'तस्येदम्' इत्यनेन पाणिनीयाश्छात्रा इति छात्रादिषु विशेषेषु प्रत्ययो भवति, एवमपत्यादिष्वपि विशेषेषु घादयः स्युः; विशेषेषु सामान्यभावात्।

ननु च विशेषशब्दसंनिधौ सामान्यशब्द उपात्तः, तत्र विशेषे पर्यवस्यति—कौण्डिन्यो ब्राह्मण इति, विशेषान्तरे वा—दधि ब्राह्मणेभ्यस्तक्रं कौण्डिन्यायेति। तत्रापत्यादिविशेषसन्निधावुपात्तं तस्येदमिति सामान्यम्, यद्यपत्यादिष्वेव पर्यवस्येत् सामान्योपादानं व्यर्थं स्यादिति विशेषान्तर एव पर्यवसास्यति।

किञ्च यद्यपत्यादिष्वपि घादयः स्युः, 'प्राग्दीव्यतोऽण्' इत्यत्रैवाणादिभिः सह विधीयेरन्, लिङ्गाच्चापत्यादिषु घादयो न भविष्यन्ति, किं लिङ्गम्? 'फेश्छ च' इत्यत्र 'फेर्वा' इत्येव ठग्विधानार्थं वक्तव्यम्, ठका मुक्ते 'वृद्धाच्छः' इति तावच्छः सिद्धः, तदेव छविधानं ज्ञापनार्थम्—न ह्यपत्यादिषु घादयो भविष्यन्ति। तथा **गोत्रचरणाद्वुञिति** समूह इदमर्थान्तर्भूते वुञि सिद्धे 'गोत्रोक्षोष्ट्र' इति पुनर्विधानमपि लिङ्गमस्यार्थस्य;

**भावबोधिनी**

अतः **सर्वत्र** विधान करने के लिए प्रस्तुत सूत्र है। ] आगे कहा जायगा—'राष्ट्र और अवारपार शब्दों से क्रमशः 'घ' और 'ख' प्रत्यय होते हैं। उदा०—राष्ट्रियः [ राष्ट्र + घ = इय, भसंज्ञा, अलोप करने पर रूप सिद्ध होता है। ] अवारपारीणः [ अवारपार + ख = ईन, भसंज्ञा, अलोप, न का ण ] 'शेषे' यह सूत्र लक्षण = विधि और अधिकार दोनों है। [ यह अणादि का विधान करता है। अतः विधि है और आगे के सूत्रों से सम्बद्ध होता है अतः अधिकार है। ] उदा०—चक्षु से जो गृहीत होता है वह—'चाक्षुषं रूपम्' है। [ चक्षुष् + अण् आदिवृद्धि। ] श्रावणः शब्दः। [ श्रवण = कान द्वारा जो गृहीत होता है। श्रवण + अण्, आदिवृद्धि, भसंज्ञा, अलोप ] दृषत् = पत्थर में पीसे गये = दार्षदाः सक्तवः [ दृषद् + अण्, आदिवृद्धि, रपर, पत्थर की चक्की में पीसे गये सत्तू ] ऊखली में कूटे गये जौ—औलूखलः यावकः। [ उलूखल + अण्, आदिवृद्धि ] घोड़ों द्वारा जो खींचा जाता है वह—आश्वो रथः। [ अश्व + अण्, आदिवृद्धि। ] चार बैलों आदि के द्वारा ढोयी जाने वाली गाड़ी—चातुरं शकटम् [ चतुर् + अण् आदिवृद्धि ]। चतुर्दशी में दिखाई देने वाला राक्षस—चातुर्दशं रक्षः। [ चतुर्दशी + अण्, आदिवृद्धि, भसंज्ञ, इलोप ]।

**विमर्श**—प्रस्तुत सूत्र से पहले 'अपत्य' अर्थ में और 'तदस्मिन्नस्तीति देशे तन्नाम्नि' ( ४. २. ६७ ) 'तेन निर्वृ-

---

१. 'रासनो रसः, स्पार्शनः स्पर्शः'-इत्येकस्मिन्पुस्तकेऽधिकम्।

## १५२१. राष्ट्रावारपाराद् घखौ ॥ ९३ ॥ ( १३१३ )

'राष्ट्र' 'अवारपार'—इत्येताभ्यां यथासंख्यं घ-खावित्येतौ प्रत्ययौ भवतः। राष्ट्रियः। अवारपारीणः। **विगृहीतादपीष्यते ( म० भा० इ० )**—अवारीणः। पारीणः। **विपरीताच्च ( म० भा० इ० )**—पारावारीणः।

**न्यासः**

सर्वेषु जातादिष्वर्थेषु घादयो भवन्ति। यदि तर्हि शेष इति लक्षणमपीदमनेनैव यथा ग्रहणादिष्वर्थेषु शेषेष्वर्थेषु प्रत्ययो भवति, तथा जातादिष्वपि भविष्यतीति जाताद्यनुक्रमणमनर्थकम्? न अपवादविधानार्थत्वात्। यानि त्वनपवादार्थानि जातनिवृत्तलब्धक्रीतकुशलाः— इत्येवमादीनि तानि शेषग्रहणस्यैव प्रपञ्चो वेदितव्यः॥ ९२॥

राष्ट्रावारपाराद् घखौ॥ राष्ट्रशब्दाद् 'वृद्धाच्छः' इति च्छे प्राप्ते। अवारपारशब्दादणि घखौ विधीयेते। अवारस्य पारमवारपारमिति षष्ठीसमासः। राजदन्तादिषु दर्शनात् पारावारमित्यपि पक्षे भवति। विगृहीताद् विपरीताच्च लभ्यते। वक्तव्यमेवैतत्। अथ वा—एकशेषो विज्ञास्यते, तत्रैकः समुदायार्थः, अपरोऽवयवार्थो भविष्यति। विपरीतस्यापि 'एकार्थानां विरूपाणाम्' इत्येकशेषो न विरुध्यते, यथा—वक्रदण्डश्च कुटिलदण्डश्च कुटिलदण्डाविति, यथा च यङ्लुकाविति। ननु च तस्यैवं प्रकृतयो भवन्ति, पञ्च राष्ट्रादिशब्दाः, प्रत्ययौ तु द्वौ—इति वैषम्यात् संख्यातानुदेशो न सिध्यति? नैष दोषः; निर्देशापेक्षं हि यथासंख्यत्वम्। निर्देशश्च द्वयोरेव, तदपेक्षया प्रकृते यथासंख्यत्वम्। एवं पञ्चाद्यभेद उपजायते, न स यथासंख्यं बाधते। यथा वुञादीनाञ्च गणापेक्षया

**पदमञ्जरी**

तथा 'राजन्यादिभ्यो वुञ्' इति राजन्यादिषु दैवयातशब्दः पठ्यते, स च देवयातूनामपत्यानि दैवयातवा इति गोत्रप्रत्ययान्तः; तथाऽरीहणादिषु भास्त्रायणशब्दो गोत्रप्रत्ययान्तः पठ्यते, तत्रापि 'गोत्रचरणाद् वुञ्' इत्येव सिद्धः; तदेतैर्लिङ्गैरपत्यादिषु घादयो न भविष्यन्ति। तदेवमेतत्प्रयोजनं नोपपद्यत इति प्रयोजनान्तरमाह—**किञ्चेति**। असति हि शेषग्रहणे प्रथमेनैवार्थेन सम्बन्धमनुभवतां कृतार्थता विज्ञायेत, द्वितीयादिषु त्वर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः; शेषशब्दस्तूपयुक्तादन्यतमान् जातादीनर्थान्वशीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति। अतः साकल्यार्थमपि विशेषवचनं कर्तव्यम्। **लक्षणं चाधिकारश्चेति**। तत्र 'तस्येदम्' इत्येव चाक्षुषादयः सिध्यन्ति, पार्षदादयस्तु 'संस्कृतं भक्षाः' इति, तस्माल्लक्षणत्वं नातीवोपयुज्यते॥ ९२॥

**राष्ट्रावारपाराद्घखौ॥ विगृहीतादपीष्यते इति**। सूत्रे तु संघातस्यैव ग्रहणम्; अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात्। **विपरीताच्चेति**। इयमपीष्टिरेव॥ ९३॥

**भावबोधिनी**

तम्' ( ४. २. ६८ ) तस्य निवासः ( ४. २. ६९ ) और 'अदूरभवश्च' ( ४. २. ७० ) इन चार सूत्रों से चार अर्थों में प्रत्ययविधान किया जा चुका है। इनसे भिन्न अर्थों में प्रत्ययविधान के लिए यह सूत्र है। अधिकार और विधि दोनों सूत्रों के कार्य यह सूत्र करता है। यह 'तस्य विकारः' ( ४. ३. १३१ ) तक अधिकार चलता है। इसलिए मध्य में कथित बिभिन्न अर्थों में एक ही प्रत्यय होता है। जैसे—राष्ट्रियः। राष्ट्रे जातः, राष्ट्रे भवः, राष्ट्रस्य इदम् = अयम् इन अनेक अर्थों में एक ही प्रत्यय है।

अधिकार सूत्र मान लेने से आगे के सभी सूत्र शैषिक हो जाते हैं और विभिन्न अर्थों के लिये एक प्रत्यय पर्याप्त है। विधि सूत्र मान लेने से यह स्वतः भी अपेक्षित अर्थ में प्रत्यय करता है। अतः चाक्षुषं रूपम्, श्रावणः शब्दः—आदि अनेक शब्दों की सिद्धि होती है॥ ९२॥

राष्ट्र और अवार शब्दों से क्रमशः घ और ख ये दो प्रत्यय होते हैं। उदा०—राष्ट्रियः [ राष्ट्रे भवः, राष्ट्रे जातः आदि अर्थों में घ प्रत्यय करने पर राष्ट्र + घ = इय, भसंज्ञा, अलोप ] अवारपारीणः [ अवारपार + ख = ईन,

प्रकृतिविशेषोपादानमात्रेण तावत्प्रत्यया विधीयन्ते । तेषां तु जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते ।

**१५२२. ग्रामाद्यखञौ ॥ ९४ ॥ ( १३१४ )**

ग्रामशब्दाद्य, खञ्--इत्येतौ प्रत्ययौ भवतः । ग्राम्यः । ग्रामीणः ॥

**१५२३. कत्त्र्यादिभ्यो ढकञ् ॥ ९५ ॥ ( १३१५ )**

'कत्त्रि' इत्येवमादिभ्यो ढकञ् प्रत्ययो भवति । कात्त्रेयकः । औम्भेयकः ।

कत्त्रि । उम्भि । पुष्कर । पुष्कल । मोदन । कुम्भी । कुण्डिन । नगर । वञ्जी । भक्ति । माहिष्मती । चर्मण्वती[1] । ग्राम । उख्या । ❀ कुड्यायाः[2] यलोपश्च ❀ ( ग० सू० ९४ ) । कत्त्र्यादिः ॥

**न्यासः**

यथासंख्यं प्रवृत्ते तु यथासंख्येन प्रत्ययोत्पत्तिवेलायां गणेषु यद्यपि प्रातिपदिकरूपाण्यसमसंख्यानि भवन्ति, तथात्रापि यथासंख्यं न हीयते । कुतः पुनरवगतम्--एकशेषोऽयमिति ? व्याख्यानात् ।

**प्रकृतिविशेषोपादानमात्रेणे**ति । मात्रशब्दो जाताद्यर्थविभक्तिनिर्देशस्य च व्यवच्छेदाय ॥ ९३ ॥

**ग्रामाद् यखञौ** ॥ वृद्धलक्षणे छे प्राप्ते वचनम् ॥ ९४ ॥

**कत्त्र्यादिभ्यो ढकञ्** ॥ कत्त्र्यादिषु यद्वृद्धं पठ्यते ततश्छे प्राप्ते शेषेभ्यस्त्वणीति योगोऽयमारभ्यते । कत्त्रिशब्दश्च तत्पुरुषः--कुत्सितास्त्रयः, 'कोः कत्' इति योगविभागात् कद्भावः । अत एव निपातनाद् बहुव्रीहिर्वा--कुत्सितास्त्रयो यस्याः सा कत्त्रिः । **कुड्याया यलोपश्चेति** । कुड्याशब्दाड् ढञ् भवति यलोपश्च—कौडेयकः ।

ये तु **कुल्याया यलोपश्चेति** पठन्ति तेषां कौलेयकः ॥ ९५ ॥

**पदमञ्जरी**

**ग्रामाद्यखञौ** ॥ ग्रामशब्दः कत्र्यादिषु पठ्यते, तेन ढकञपि भवति ॥ ९४ ॥

**कत्त्र्यादिभ्यो ढकञ्** ॥ **कात्त्रेयक इति** । कुत्सितास्त्रयः कत्त्रय इति बहुव्रीहिर्वा । अस्मादेव निपातनात्कोः कद्भावः, तेन कद्भावे 'त्रौ उपसंख्यानम्' इति न वक्तव्यं भवति । **कुल्याया यलोपश्चेति** । केचित्तु तृतीयं वर्णं लकारं पठन्ति, अन्ये तु डकारम् ॥ ९५ ॥

**भावबोधिनी**

भसंज्ञा, अलोप ] अलग-अलग से भी होता है—अवारीणः [ अवार + ख = ईन, न का ण ] पारीणः [ पार + ख = ईन ] । और विपरीत से भी होता है—पारावारीणः [ पारावार + ख ईन ] ।

प्रकृति विशेष का केवल उपादान करके प्रत्ययों का विधान किया जा रहा है । इनके अर्थ जात, भव आदि और समर्थ विभक्तियाँ आगे कहीं जायेंगी ॥ ९३ ॥

ग्राम शब्द से य और खञ् ये दो प्रत्यय होते हैं । उदा०—ग्राम्यः [ग्राम + य, भसंज्ञा, अलोप] ग्रामीणः [ ग्राम + खञ् = ईन, भसंज्ञा, अलोप न का ण ] ॥ ९४ ॥

'कत्त्रि' आदि से ढकञ् प्रत्यय होता है । उदा०—कात्त्रेयः [ कत्त्रि + ढकञ् = ढ = एय, आदिवृद्धि, भसंज्ञा, इलोप ] औम्भेयकः । [ उम्भि + ढकञ्, ढ = एय, भसंज्ञा, ईलोप, आदिवृद्धि ] ।

---

१. 'चर्मती'--इति पाठा० ।

२. 'कुण्ड्यायाः'--इत्यपि केचित्पठन्ति, तेषां मते 'कौण्डेयकः' इति ।

**१५२४. कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ९६ ॥ ( १३१६ )**

**कुलकुक्षिग्रीवाशब्देभ्यो यथासंख्यं 'श्वन्', 'असि', 'अलङ्कार'—इत्येतेषु जातादिष्वर्थेषु ढकञ् प्रत्ययो भवति। कौलेयको भवति श्वा चेत्, कौलोऽन्यः। कौक्षेयको भवत्यसिश्चेत्, कौक्षोऽन्यः। ग्रैवेयको भवत्यलङ्कारश्चेत्, ग्रैवोऽन्यः॥**

**१५२५ नद्यादिभ्यो ढक् ॥ ९७ ॥ ( १३१७ )**

**'नदी'—इत्येवमादिभ्यो ढक् प्रत्ययो भवति। नादेयम्। माहेयम्। पूर्वनगरीशब्दोऽत्र पठ्यते। पौर्वनगरेयम्।**

**केचित्तु पूर्वनगिरीति पठन्ति, विच्छिद्य च प्रत्ययं कुर्वन्ति--पौरेयम्, वानेयम्, गैरेयमिति; तदुभयमपि दर्शनं प्रमाणम्।**

**नदी। मही। वाराणसी। श्रावस्ती। कौशाम्बी। नवकौशाम्बी। काशफरी। खादिरी। पूर्वनगरी। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। 'वडवायावृषे' ( ग० सू० ९५ )॥**

**न्यासः**

**कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** ॥ अणोऽपवादो योगः ॥ ९६ ॥

**नाद्यादिभ्यो ढक्** ॥ यान्यत्रावृद्धानि तेभ्योऽणि प्राप्ते, वृद्धेभ्यस्तु वाराणसीत्येवमादिभ्यश्छे प्राप्तेऽपवादः। केषाञ्चिद 'रोपधेतोः प्राचाम्' इति वुञि प्राप्ते ढगारभ्यते। **पौरेयमिति**। पुरि भवम्। वने भवं **वानेयम्**। **गैरेयमिति** गिरौ भवम्। **तदुभयमपि दर्शनं प्रमाणभूतमिति**। उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात्।

गणे नदीत्येतत् स्वरूपेण ग्रहणम्, न संज्ञाग्रहणार्थम्। संज्ञाग्रहणे हि मह्यादीनां पाठोऽनर्थकः स्यात् ॥ ९७ ॥

**पदमञ्जरी**

**कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु** ॥ अयं योगः शक्योऽवक्तुम्। कथम्? कौलेयकः श्वा, यदा कुलशब्दः श्वकुले वर्तते तदा तस्यापत्यमपि श्वैव भवति, तत्र 'अपूर्वपदादन्यतरस्याम्' इति ढकञा सिद्धम्; कुक्षिग्रीवाशब्दाभ्याम् 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' इति ढञि कृते अस्यलङ्कारयोस्स्वार्थिकः कन् भविष्यति ॥ ९६ ॥

**नद्यादिभ्यो ढक्** ॥ गणे नदीति स्वरूपग्रहणम्, न संज्ञा; न [illegible]ः मह्यादीनां पृथग्ग्रहणात्। **पौरेयमित्यादिषु** पुरि भवम्, वने भवम्, गिरौ भवमिति विग्रहः। **उभयमपि दर्शनं प्रमाणमिति**। उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥ ९७ ॥

**भावबोधिनी**

कत्त्रि। उम्भि। पुष्कर। पुष्कल। मोदन। कुम्भी। कुण्डिन। नगर। वञ्जी। माहिष्मती। चर्मण्वती। ग्राम। उख्या। ※ कुड्या के य का लोप भी होता है। ※ ये कत्त्रि आदि हैं ॥ ९५ ॥

कुल, कुक्षि और ग्रीवा शब्दों से क्रमशः श्वन्, असि और अलङ्कार अर्थों के वाच्य रहने पर जात आदि अर्थों में ढकञ् होता है। उदा० —कौलेयकः श्वा अन्यः कौलः। [ यदि कुत्ता अर्थ होता है तो कुल + ढकञ् ढ = एय, आदिवृद्धि, भसंज्ञा, अलोप --कौलेयकः। इससे भिन्न अर्थ में कुल + अण्, आदिवृद्धि ] यदि असि = तलवार अर्थ हो तो—कौक्षेयकः, अन्य अर्थ हो तो कौक्षः। [ कुक्षि + ढकञ्, ढ + एय, आदिवृद्धि, भसंज्ञा, इलोप ] कुक्षि + अण् = आदिवृद्धि, भसंज्ञा, इलोप ] यदि अलंकार अर्थ हो तो—ग्रैवेयकः यदि अन्य अर्थ है तो—ग्रैवः। [ ग्रीवा + ढकञ् आदिवृद्धि, भसंज्ञा, आलोप, ढ = एय। ग्रीवा + अण्, आदिवृद्धि, भसंज्ञा, आलोप ] ॥ ९६ ॥

नदी आदि से ढक् प्रत्यय होता है। उदा० नादेयम्। माहेयम् [नदी + ढक् = ढ एय, आदिवृद्धि, भसंज्ञा, ईलोप], [ मही + ढक्, शेष पूर्ववत् ]। इसमें पूर्वनगरी शब्द भी पठित है। पौर्वनगरेयम् [ पूर्वनगरी + ढक् = ढ = एय, आदिवृद्धि, भ संज्ञा ईलोप। ]

कुछ लोग--पूर्वनगिरि--ऐसा पढ़ते हैं और विच्छेद करके प्रत्यय विधान करते हैं—(१) पौरेयम् [ पुर् + ढक्

**१५२६. दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥ ( १३१८ )**

**दक्षिणा, पश्चात्, पुरस्—इत्येतेभ्यस्त्यक् प्रत्ययो भवति शैषिकः। दाक्षिणात्यः। पाश्चात्त्यः। पौरस्त्यः ॥**

**१५२७. कापिश्याः ष्फक् ॥ ९९ ॥ ( १३१९ )**

**कापिशीशब्दात् ष्फक् प्रत्ययो भवति शैषिकः। षकारो ङीषर्थः। कापिशायनं मधु। कापिशायनी द्राक्षा ॥**

**❀ बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् ❀ ( म० भा० ४.२.९९ )। बाह्लायनी। और्दायनी। पार्दायनी ॥**

**१५२८. रङ्कोरमनुष्येऽण् च ॥ १०० ॥ ( १३२० )**

**रङ्कुशब्दादण् प्रत्ययो भवति, चकारात्ष्फक् च शैषिकोऽमनुष्येऽभिधेये। राङ्कवो गौः। राङ्कवायणो गौः।**

**न्यासः**

**दक्षिणापश्चात्पुरसस्त्यक्** ॥ पश्चात्पुरसोरव्ययत्वात् साहचर्याद् दक्षिणाशब्दोऽपि 'दक्षिणादाच्' इत्याजन्तमव्ययमेव गृह्यते। एवञ्च 'अव्ययात्त्यप्' इत्यत्र परिगणनात् त्यपः प्राप्तिर्नास्तीत्यणोऽपवादोऽयं योगः ॥ ९८ ॥

**कापिश्याः ष्फक्** ॥ वृद्धादिति छे प्राप्ते कापिशीशब्दात् ष्फग्विधीयते।

**बाह्लीत्यादि**। बाह्लीत्यादिभ्यः ष्फग्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रादिह चकारः सिंहावलोकितन्यायेनानुवर्त्तते, तस्यानुक्तसमुच्चयार्थत्वाद् बाह्ल्यादिभ्योऽपि ष्फग्भवतीति ॥ ९९ ॥

**रङ्कोरमनुष्येऽण् च** ॥ 'ओर्देशे ठञ्' इति ठञि 'जनपदतदवध्योश्च' इति जनपदलक्षणे वुञि 'कोपधादण्' इत्यणि च प्राप्ते वचनम्।

**पदमञ्जरी**

**दक्षिणापश्चात्पुरसस्त्यक्** ॥ दक्षिणाशब्दः 'दक्षिणादाच्' इत्याजन्तोऽव्ययं गृह्यते; पश्चात्पुरोभ्यां साहचर्यात्। तेन न टाबन्तस्य प्रवीणवाचिनो ग्रहणम् ॥ ९८ ॥

**कापिश्याः ष्फक्** ॥ बहल्युर्दिपर्दीति। 'अवृद्धादपि' इति वुञि प्राप्ते वचनम् ॥ ९९ ॥

**रङ्कोरमनुष्येऽण्च** ॥ रङ्कवो नाम जनपदः, ततः 'प्राग्दीव्यतोऽण्' प्राप्तः, तस्य 'अवृद्धादपि' इति वुञ्

**भावबोधिनी**

= ढ = एय, आदि—वृद्धि ] वानेयम् [ वन + ढक् ], गैरेयम् [ गिरि + ढक् ]—ये दोनों मत प्रमाणिक हैं।

नदी। मही। वाराणसी। श्रावस्ती। कौशाम्बी। नवकौशाम्बी। काशफरी। खादिरी। पूर्वनगिरि। पावा। मावा। साल्वा। दार्वा। दाल्वा। वासेनकी। वृष अर्थ में वडवासे ढक् होता है ॥ ९७ ॥

दक्षिणा, पश्चात् और पुरस्—इन शब्दों से शैषिक त्यक् प्रत्यय होता है। उदा० दाक्षिणात्यः [ दक्षिणा यह आच् प्रत्ययान्त अव्यय है टाप् प्रत्ययान्त नहीं [ दक्षिणा + त्यक् आदिवृद्धि ]। पाश्चात्त्यः [ पश्चात् + त्यक् ]। पौरस्त्यः [ पुरस् + त्यक् आदिवृद्धि ] ॥ ९८ ॥

कापिशी शब्द से शैषिक ष्फक् प्रत्यय होता है। षकार [ 'षिदगौरादिभ्यश्च' से ] ङीष् करने के लिए। उदा० कापिशायनं मधु। [कापिशी + ष्फक् = फ = आयन भसंज्ञा, ईलोप ] कापिशायनी द्राक्षा [ कापिशी + ष्फक् = फ=आयन, षित् होने से ङीष् = ई। ]

❀ बाल्ही, उर्दि और पर्दि से भी कहना चाहिये। ❀ बाल्हायनी। [ बाल्ही + ष्फक् फ = आयन, ङीष् ] औदार्यनी [ उर्दि + ष्फक् ] पार्दायनी [ पर्दि + ष्फक् ] ९९ ॥

मनुष्यभिन्न अर्थ वाच्य रहने पर रङ्कु शब्द से शैषिक अण् प्रत्यय होता है और चकार के बल से ष्फक् भी

**अमनुष्य इति किम् ? राङ्कवको' मनुष्यः ( म० भा० ) ।**

**ननु च रङ्कुशब्दः कच्छादिषु पठ्यते, तत्र च 'मनुष्यतत्स्थयोर्वुञ्' ( ४ २.१३४ ) इति मनुष्ये परत्वाद्वुञैव भवितव्यम्, कच्छादिपाठादमनुष्येऽणपि सिद्धः, किमिह मनुष्यप्रतिषेधेनाण्ग्रहणेन च ? तदुच्यते;' नैवायं मनुष्यप्रतिषेधः, किं तर्हि ? नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते । तेन राङ्कवः कम्बल इति ष्फग्न भवति ।**

न्यासः

**कच्छादिपाठादणपि सिद्ध इति** । 'कच्छादिभ्यश्च' इत्यत्र 'कोपधादण्' इत्यण्ग्रहणानुवृत्तेः । **नञिवयुक्तन्यायेनेति** । नञ्युक्ते चेवयुक्ते च तत्सदृशसंप्रत्ययो भवति । इह च मनुष्यशब्दो नञ्युक्तः, तस्मान्नेह मनुष्यप्रतिषेधः क्रियते । अपि च मनुष्यसदृशे प्राणिन्येव प्रवृत्तिः, तेन मनुष्यसदृशे प्राणिनि ष्फगणौ भवतः । अप्राणिनि तु कच्छादिपाठादणेव भवति, न ष्फक् राङ्कवः, कम्बल इति । **विशेषविहितेनेत्यादि** । यदीहाप्यण्न

पदमञ्जरी

बाधकः, तस्य ओर्देशे ठञ्, ततः कोपधादण्, ततः 'कच्छादिभ्यश्च' इत्यण् प्राप्तः, ततः ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य कच्छादिषु पाठो 'मनुष्यतत्स्थयोर्वुञ्विधानार्थः । **मनुष्ये परत्वादिति** । उत्कृष्टत्वाद् अपवादत्वादित्यर्थः । **कच्छादिपाठादमनुष्येऽणपि सिद्ध इति** । ननु च 'मनुष्यतत्स्थयोर्वुञि'-विधानार्थस्तत्र पाठः स्यात्, ततश्च तद्व्यतिरिक्ते विषये ष्फगेव स्यात्, यत्राण् विधीयते ? नैतदस्ति; कच्छादि-पाठस्योभयार्थत्वे बाधकाभावात् । **नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियते इति** । यस्त्वमनुष्य-शब्दो रक्षःपिशाचादिषु रूढः, न तस्यैव ग्रहणम्; अनभिधानादिति मन्यते, अथैवं कस्मान्न विज्ञायते—परत्वादेव वुञि सिद्धे मनुष्यप्रतिषेधो ज्ञापयति—'मनुष्यतत्स्थयोः' इत्यस्याप्येतौ ष्फगणौ बाधकाविति, तेन तत्स्थे ष्फगणा-वेव भवतो न वुञिति ? तन्न; अनिष्टत्वात् । न हि तत्स्थे ष्फगणाविष्येते, किं तर्हि ? वुञेव । **राङ्कवः कम्बल इति ष्फग्न भवतीति** । यथा तु वार्त्तिकं भाष्यं च तथात्र ष्फगिष्यते, मनुष्यप्रतिषेधश्च प्रत्याख्यातः । यथाऽऽह—'रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्, तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वादण्ग्रहणानर्थक्यं

भावबोधिनी

होता है । उदा० राङ्कवो गौः । [ रङ्कु + अण्=अ, आदिवृद्धि, भ संज्ञा, उकार का गुण, अव् आदेश ] राङ्कवायणो गौः । [ रङ्कु + ष्फक् = फ = आयन, आदिवृद्धि, उकार का गुण अव् आदेश, न का ण । ]

मनुष्य-भिन्न—इसका क्या फल है ? राङ्कवकः मनुष्यः [ वहाँ वुञ् होने से वु = अक करने पर राङ्कवकः बना है । ]

प्रश्न—रङ्कु शब्द कच्छादिगण में पठित है और वहाँ 'मनुष्यतत्स्थयोर्वुञ्' ४. २.१३४ इससे मनुष्य अर्थ में परत्वात् वुञ् ही होना चाहिये । कच्छादिगण में पाठ होने से मनुष्य से भिन्न अर्थ में अण् भी सिद्ध है, अतः मनुष्य अर्थ के प्रतिषेध से और अण्-ग्रहण से क्या लाभ ? उत्तर दिया जाता है, यह मनुष्य का प्रतिषेध नहीं हैं; तो क्या है ? 'नञ् और इव से युक्त अपने सदृश का ग्रहण करता है'—इस न्याय से मनुष्य से भिन्न प्राणी अर्थ में ज्ञान किया जाता है; इस कारण 'राङ्कवः कम्बलः' इस प्रयोग में ष्फक् नहीं होता है । [ केबल अण् ही होता है । ]

---

१. क्वचित्तु राङ्कव इति पठ्यते; स तु लेखकप्रमादः । स्यादेतत्—अमनुष्यग्रहणमिह व्यर्थम् । अपवादेन वुञा तत्र ष्फगणौर्बाधेनामनुष्य एव पर्यवसानात् । अण्ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः । इति तत्त्वबोधिनीकारः ।

१. 'अत्राह काशिकाकृत्—नायं प्रसज्यप्रतिषेधः, किं तु पर्युदासः । तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयते इति राङ्कवः कम्बल इत्यत्र न ष्फक् । विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण् ग्रहणं क्रियत इति'—इति तत्त्व-बोधिनीकारः ज्ञानेन्द्रसरस्वती ।

**विशेषविहितेन च ष्फकाऽणो बाधा मा भूदित्यणग्रहणमपि क्रियते ॥**

## १५२९. द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥ ( १३२१ )

**दिव्, प्राच्, अपाच्, उदच् प्रत्यच्—इत्येतेभ्यो यत्प्रत्ययो भवति शैषिकः । दिव्यम् । प्राच्यम् । अवाच्यम्[1] । उदीच्यम् । प्रतीच्यम् ।**

**अव्ययात्तु कालवाचिनः परत्वात् टयुटयुलौ भवतः । प्राक्तनम् ॥**

## १५३०. कन्थायाष्ठक् ॥ १०२ ॥ ( १३२२ )

**कन्थाशब्दाट्ठक् प्रत्ययो भवति शैषिकः । कान्थिकः ॥**

### न्यासः

क्रियेत, तदा 'कच्छादिभ्योऽण्' इत्यणो राङ्कवः कम्बल इत्यत्र सावकाशत्वात् प्राणिनि विशेषविहितेन ष्फका तस्य बाधनं स्यात् । तस्मादेष दोषो मा भूदित्यणपि क्रियते ॥ १०० ॥

**द्युप्रागपागुदक्प्रतीचो यत्** ॥ अणि प्राप्ते यद् विधीयते । प्रागित्यादयः शब्दा अञ्चते 'ऋत्विग्' इत्यादिना क्विनि कृते सत्यात्मानं लभन्ते । ते च द्विविधाः—अव्ययसंज्ञकाः, अनव्ययसंज्ञकाश्च । यदा त्वस्तातिप्रत्ययान्ता भवन्ति तदा 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञाविधानादव्ययसंज्ञकाः, अन्यदा त्वनव्ययसंज्ञकाः । तेषामिह विशेषस्यानुपादानादुभयेषामपि ग्रहणम् । **प्राच्यम्, अवाच्यमिति** । 'अचः' इत्यकारलोपः, 'चौः' इति दीर्घः । **उदीच्यमिति** । 'उद ईत्' इतीकारः । **प्राक्तनमिति** । प्राक्शब्दाद् दिक्शब्देभ्यः 'सप्तमीपञ्चमीप्रथमाभ्यो दिक्' इत्यादिनाऽस्तातिः, तस्य 'अञ्चेर्लुक्, इति लुक् ततोऽनेन यति प्राप्ते 'सायञ्चिरम्' इत्यादिना टयुटयुलौ भवतः । यतस्तु—यश्च कालवाची सोऽवकाशः ॥ १०१ ॥

**कन्थायाष्ठक्** । अणपवादोऽयं योगः ॥ १०२ ॥

### पदमञ्जरी

च कच्छादिभ्योऽण्विधानात्' इति । **विशेषविहितेन च ष्फकेति** । अन्यथा कच्छादिपाठस्या प्राणिनि चरितार्थत्वात्प्राणिनि ष्फगेव स्यात् ॥ १०० ॥

**द्युप्रागपागुदक्प्रतीचो यत्** ॥ 'द्यु' इति दिव उत्त्वेन निर्देशः । द्युशब्दस्य तु ग्रहणं न भवति, व्याख्यानात् । **अवाच्यमिति** । अवाची = दक्षिणा दिक् ।

**अव्ययात्तु कालवाचिन इति** । यथाव्ययात्कालवाचिनः 'कालाट्ठञ्' इति ठञ्न भवति; न्यायस्य तुल्यत्वात् ॥ १०१ ॥ १०२ ॥

### भावबोधिनी

और विशेषविहित ष्फक् प्रत्यय से अण् का बाध न होने लग जाय, इसलिये अण् का भी ग्रहण किया जाता है ॥ १०० ॥

दिव्, प्राच्, अपाच्, उदच् और प्रत्यच्—इन शब्दों से शैषिक यत् प्रत्यय होता है । उदा० दिव्यम् [ दिव् + यत् ] स्वर्ग में होने वाला ] प्राच्यम् [ पूर्व में होने वाला ] अवाच्यम् [ दक्षिण में होने वाला ] उदीच्यम् [ उत्तर में वाले वाला ] प्रतीच्यम् [ पश्चिम में होने वाला ] । कालवाची अव्यय शब्दों से तो पर होने के कारण टयु और टयुल् होते हैं । उदा० प्राक्तनम् । [ प्राच् ] टयु = यु = अन, तुट् = त् आगम, च् का क् ] ॥ १०१ ॥

कन्था शब्द से शैषिक् ठक् प्रत्यय होता है । उदा० कान्थिकः [ कन्था + ठक् ठ = इक, आदिवृद्धि भसंज्ञा, आलोप ] । कन्था = कथरी = गुदड़ी में होने वाली जूं आदि ॥ १०२ ॥

---

१. 'अपाच्यम्' इत्येवोचितमिति नागेशभट्टः ।

**१५३१. वर्णौ वुक् ॥ १०३ ॥ ( १३२३ )**

**'कन्थायाः' इत्येव । वर्णौ या कन्था तस्या वुक् प्रत्ययो भवति शैषिकः । ठकोऽपवादः । वर्णुर्नाम नदस्तत्समीपो देशो वर्णुः । तद्विषयार्थवाचिनः कन्थाशब्दादयं प्रत्ययः । तथाहि—जातं हिमवत्सु कान्थकम् ॥**

**१५३२. अव्ययात्त्यप् ॥ १०४ ॥ ( १३२४ )**

**अव्ययात् त्यप् प्रत्ययो भवति शैषिकः ।**

**अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ।**
**निनिर्भ्यां ध्रुवगत्योश्च प्रवेशो नियमे तथा[1] ॥ ( म० भा० ४.२.१०४ )**

**(अमा) अमात्यः । (इह) इहत्यः । (क्व) क्वत्यः । (तसि) इतस्त्यः । (त्र) तत्रत्यः । यत्रत्यः ।**

**न्यासः**

**वर्णौ वुक् ॥ वर्णुरिति** । नदोऽभिधीयते । स्रोतसि च कन्था न सम्भवतीति सामीपिकमधिकरणं विज्ञायते, अत आह **तत्समीपो देशो वर्णुरिति** । वर्णुशब्दाद् 'अदूरभवश्च' इत्यत्रार्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुपि कृते वर्णुरिति भवति । ननु च प्रतिपदविधानात् प्रत्ययस्य लुब्न भवति ? **नैवम्**; सुवास्त्वादिपाठो हि जनपदादन्यस्मिन् प्रत्ययार्थे कृतार्थः— वार्णवो ग्रामो वार्णवं नगरमिति, न तु जनपदे । तत्र तु परत्वाल्लोपेन भवितव्यम् । **तद्विषयार्थेति** । विषयग्रहणेन वर्णाविति सप्तम्या विषयसप्तमीत्वं दर्शयति । स वर्णदेशो विषयो यस्य तद्विषयार्थः । सा पुनः कन्थैव ॥ १०३ ॥

**अव्ययात्त्यप् ॥ अमेहेत्यादि** । परिगणनम् । एतच्चोत्तरसूत्रस्थस्यान्यतरस्यांग्रहणस्योभयोर्योगयोः शेषभूतत्वाद्, व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । अमाशब्दः समीपवाची, स्वरादिपाठादव्ययत्वम् । इहेत्यादीनाम् 'तद्धितश्चासर्वविभक्तिः' इति । अमा भवोऽमात्यः ।

**औपरिष्ट इति** । उपरिष्टाद् भवतीत्यणि कृते 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इति टिलोपः । परतो

**पदमञ्जरी**

**वर्णौ वुक् ॥ तत्समीपो देशो वर्णुरिति** । 'अदूरभवश्च' इत्यर्थे 'सुवास्त्वादिभ्योऽण्' इत्यण्, तस्य 'जनपदे लुप्' इति लुप् । **तद्विषयार्थवाचिन इति** । स वर्णुर्देशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः । विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति ॥ १०३ ॥

**अव्ययात्त्यप् ॥ अमेहेति** । योऽव्ययात्त्यब्विहितः सोऽमादिभ्य एव स्मृत इत्यर्थः ।

अमाशब्दः समीपवाची स्वरादिः' अमा = समीपे भवोऽमात्यः । **औपरिष्ट इति** । उपरिष्टाद्भव इत्यणि कृते 'अव्ययानां भमात्रे टिलोपः' ( वा० ८४२ ) इति टिलोपः । परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः,

**भावबोधिनी**

"कन्थायाः" इसका अनुवृत्ति होती है । वर्णु अर्थ में जो कन्था उससे शैषिक वुक् प्रत्यय होता है । ठक् का अपवाद है । वर्णु = नद है, इसके समीप का देश भी वर्णु है । उस देशविषयक अर्थवाची कन्था शब्द से वुञ् प्रत्यय होता है । [ अर्थात् वर्णु नामक देश की कन्था में होनेवाले जूं आदि को कान्थक कहा जाता है । ] जैसा कि उदाहरण है—जातं हि भवत्सु कान्थकम् । [ जाड़े में कान्थक हो गया । कन्था + वुक् — वु = अक्, आदिवृद्धि, भसंज्ञा, आलोप ] ॥ १०३ ॥

अव्यय से शैषिक त्यप् प्रत्यय होता है ।

'अव्यय से जिस विधि = त्यप् का विधान है वह—अमा, इह, क्व, तस् प्रत्ययान्त, और त्रप्रत्ययान्त से ही होता है । 'नि' से ध्रुव अर्थ में और 'निस्' से गति अर्थ में जिस प्रकार नियम किया जाता है । [ मभा० ] उदा०—अमात्यः । [ अमा = साथ में होने वाला अमा + त्य ] इहत्यः [ इह + त्य ] क्वत्यः [ क्व + त्य ] इतस्त्यः [ तस्प्रत्ययान्त इतस् +

१, इदं पद्यार्थं क्वचिन्नास्ति ।

**परिगणनं किम् ? औपरिष्टः । पौरस्तः पारस्तः**[२] **। वृद्धात्तु छो भवति—आरातीयः ।**

**❀ त्यब्नेर्ध्रुवे ❀ ( म० भा० ) । नियतं ध्रुवम्—नित्यम् ।**

**❀ निसो गते ❀ ( म० भा० ) निर्गतो वर्णाश्रमेभ्यो निष्टयश्चाण्डालादिः ।**

**❀ आविसश्छन्दसि ❀ ( संग्रहवार्तिक० ) । आविस् शब्दाच्छन्दसि त्यप्प्रत्ययो भवति । 'आविष्टयो वर्द्धते चारुरासु' ( ऋ० १.९५.५ )**

**❀ अरण्याण्णो वक्तव्यः ❀ ( म० भा० ) । आरण्याः सुमनसः ।**

**❀ दूरादेत्यः ❀ ( म० भा० ) । दूरेत्यः पथिकः ।**

**❀ उत्तरादाहञ् ❀ ( म० भा० ) औत्तराहम् ॥**

**न्यासः**

भावः **पारस्तः** । परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः । **आरातीय इति** । अत्र टिलोपो न भवति; 'बहिषष्टिलोपश्च' इत्यत्रानित्यत्वस्य ज्ञापितत्वात् ।

**त्यब्नेर्ध्रुव इति** । निशब्दाद् ध्रुवे वाच्ये त्यब्भवति । नियते सर्वकाले भवो नित्यः ।

**निसो गत इति** । निःशब्दाद् गते वाच्ये त्यब्भवति । निष्ट्य इति । 'ह्रस्वात्तादौ तद्धिते' इति मूर्धन्यः । एवमाविष्ट्य इत्यत्रापि भवति ॥ १०४ ॥

**पदमञ्जरी**

तत्र भवः । **आरातीय इति** । 'बहिषष्टिलोपश्च' ( वा० ३७८ ) इत्यनित्यत्वज्ञापनादत्र टिलोपाभावः ।

**त्यब्नेर्ध्रुव इति** । निशब्दाद् ध्रुवे वाच्ये त्यब्भवति । नियतं सर्वकालं भवो नित्यः ।

**निसो गते इति** । निःशब्दाद् गते वाच्ये त्यब्भवति । **निष्टय इति** । 'ह्रस्वात्तादौ तद्धिते' इति षत्वम्, तकारस्य ष्टुत्वम् । एवमाविर्भूतमाविष्टयम् ।

**अरण्याण्ण इति** । अणि सति ङीप् स्यादिति णो विधीयते ।

**दूरेत्य इति** । 'तत आगतः' इत्यत्रार्थे एत्यः ।

**उत्तरादाहञिति** । आद्युदात्तार्थं वचनम् । **औत्तराहमिति** । 'उत्तराच्च' इत्याहिप्रत्ययः उत्तराहिशब्दात्परिगणनेन त्यपोऽभावादणि सति सिद्धम् ॥ १०४ ॥

**भावबोधिनी**

त्य [ तत्रत्यः [ तत्र + त्य ] । अत्रत्यः [ अत्र + त्य । सभी में 'उनमें होगे वाला'—अर्थ लेना चाहिये । ] परिगणन किस लिये है ? औपरिष्टः [ उपरिष्टात् भवः इस अर्थ में उपरिष्टात् + अण् आदिवृद्धि, टिलोप ] पौरस्तः [ पुरस्तात् भवः इह अर्थ में पुरस्तात् + अण् प्रक्रिया पूर्ववत् ] पारस्तः [ परस्तात् + अण्, शेष पूर्व प्रक्रिया । ये सभी अव्यय होने पर भी परिगणितों में नहीं हैं, अतः त्यप् नहीं होता है अण् होता है । ] परन्तु वृद्धसंज्ञक से तो 'छ' प्रत्यय होता है—आरातीयः [ आरात् + छ=ईय ] । ❀ ध्रुव अर्थ में 'नि' अव्यय से त्यप् प्रत्यय होता है । ❀ नियत = ध्रुव = नित्यम् [ नि + त्यप ] । ❀ निस् से गमन अर्थ में त्यप् होता है । ❀ वर्णों एवम् आश्रमों से निकाला गया चाण्डाल आदि — निष्टय. [ निस् + त्यप्, 'ह्रस्वात् तादौ तद्धिते; से षत्व और ष्टुत्व होता है । ]

❀ आविस् शब्द से वेद में त्यप् होता है । ❀ आविष्टयः वर्द्धते [ आविस् + त्यप्, प्रक्रिया पूर्ववत् ] ❀ अरण्य शब्द से 'ण' प्रत्यय करना चाहिये । * आरण्याः सुमनसः [ अरण्य + ण = अ, आदिवृद्धि भसंज्ञा, अलोप ।* दूर शब्द से एत्य प्रत्यय होता है ।* दूरेत्यः पथिकः [ दूर + एत्य, भसंज्ञा, अलोप ] * उत्तर शब्द से आहञ् प्रत्यय होता है ।* औत्तराहम् [ उत्तर + आहञ् आदिवृद्धि ] ।

---

२. अत्र 'अव्ययानां भमात्रे टिलोपः' इत्यधिकः पाठ कस्मिन्पुस्तके ।

**१५३३. ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥ ( १३२६ )**

**ऐषमस्, ह्यस्, श्वस्—इत्येतेभ्योऽन्यतरस्यां त्यप्प्रत्ययो भवति शैषिकः । ऐषमस्त्यम्, ऐषमस्तनम् । ह्यस्त्यम्, ह्यस्तनम् । श्वस्त्यम्, श्वस्तनम् । 'श्वसस्तुट् च' ( ४ ३.१५ ) इति ठञपि तृतीयो भवति—शौवस्तिकम् ॥**

**१५३४. तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥ ( १३२७ )**

**तीरोत्तरपदाद् रूप्योत्तरपदाच्च प्रातिपदिकाद् यथासंख्यमञ्, ञ—इत्येतौ प्रत्ययौ भवतः शैषिकौ । अणोऽपवादौ । काकतीरम् । पाल्वलतीरम् । रूप्योत्तरपदात्—वार्करूप्यम् । शैवरूप्यम् । तीररूप्यान्तादिति नोक्तम्, बहुच्प्रत्ययपूर्वाद् मा भूदिति । बाहुरूप्यम् । अणेव भवति[1] ॥**

**न्यासः**

**ऐषमोह्यःश्वसोऽन्यतरस्याम्** ॥ ऐषमःप्रभृतीनि कालवाचीनि प्रातिपदिकान्यव्ययानि । 'सायञ्चिरम्' इत्यादिना परत्वाट्ट्युटुलौः प्राप्तयोरिदं वचनम् । **शौवस्तिकमिति** । 'द्वारादीनाञ्च' इत्यैजागमः ॥ १०५ ॥

**तीररूप्योत्तरपदादञ्ञौ** ॥ अथ तीररूप्योत्तरादित्येवं कस्मान्नोक्तम्, एवं हि लघु सूत्रं भवतीति ? अत आह—**तीररूप्यान्तादित्यादि** । यदीह तीररूप्यान्तादित्युच्येत बहुच्पूर्वादपि स्यात्—बहुतीरे जात इति, भवति ह्येतत् तीरान्तम् । उत्तरपदग्रहणे ह्येषोऽतिप्रसङ्गो न भवति, न ह्येतत् तीरोत्तरपदम्, यस्मात् समासे सत्येतद्भवति पूर्वपदमुत्तरपदमिति न्यायेन नायं समासः ॥ १०६ ॥

**पदमञ्जरी**

**ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ ठञपि तृतीयो भवतीति** । विधिवाक्यापेक्षं तृतीयत्वम्, प्रत्ययापेक्षया तु ठञ् चतुर्थ, 'श्वसस्तुट् च' इत्यत्र विकल्पाधिकारात् ट्युट्युलावपि भवतः ॥ १०५ ॥

**तीररूप्योत्तरपदादञ्ञौ** ॥ अञ्ञयोः स्त्रियां विशेषः—काकतीरी, चाणाररूप्या । **बहुच्पूर्वान्मा भूदिति** । अन्यथा बहुतीरशब्दादपि स्यात्, उत्तरपदशब्दस्य तु समासविषये नियतत्वान्नास्ति बहुच्पूर्वात्प्रसङ्गः ॥ १०६ ॥

**भावबोधिनी**

**विमर्श**—काशिका में उद्धृत लोकवार्तिक का उत्तरार्ध महाभाष्य में नहीं उपलब्ध होता है । अन्य वचन भाष्य में हैं ॥ १०४ ॥

ऐषमस्, ह्यस्, श्वस्—इन शब्दों से विकल्प से शैषिक त्यप् प्रत्यय होता है । [ पक्ष में ट्यु, ट्युल् प्रत्यय और तुट् आगम होता है । ] उदा० ऐषमस्त्यम् ऐषमस्तनम् । [ एषमस् + त्यप्, त्यप् न होने पर ''सायं चिरं प्राह्णे०'' से ट्यु और ट्युल् = यु = अन प्रत्यय होते हैं और तुट् = त् आगम होता है । ] ह्यस्त्यम्, ह्यस्तनम् [ ह्यस् + त्यप् = त्य, पक्ष में पूर्ववत् ट्यु ट्युल् = यु = अन प्रत्यय और तुट् = त् आगम ] । श्वस्त्यम्, श्वस्तनम् [ प्रक्रिया पूर्ववत् ] । 'श्वस्' शब्द से तुट् और ठञ् = इक भी होता है —शौवस्तिकम् [ श्वस् + तुट् = त् + ठञ् + इक, व् से पूर्व ऐच् = औ का आगम श् औ वस् त् इक = शौवस्तिकम् । 'द्वारादीनाञ्च' ७.३.४ से ऐच् का आगम होता है ] ॥ १०५ ॥

तीर–जिसका उत्तरपद है और रूप्य–जिसका उत्तरपद है, ऐसे प्रातिपदिक से क्रमशः अञ् और ञ ये दो शैषिक प्रत्यय होते हैं । ये दोनों अण् के अपवाद हैं । उदा०—काकतीरम् [ काकतीर + अञ् ] पाल्वलतीरम् [ पल्वलतीर + अञ् ] रूप्य जिनके उत्तरपद हैं, उनसे —वार्करूप्यम् शैवरूप्यम् [ वार्करूप्य + ञ = अ ] । तीररूप्य अन्त में हो जिनके उनसे—ऐसा नहीं कहा गया है जिससे बहुच् प्रत्ययपूर्वक रूप्य से न हो सके । बाहुरूप्यम् । यहाँ [ बहुरूप्य से ] अण् ही होता है ॥ १०६ ॥

---

१. 'स्वरे विशेषः' इत्यधिकं पुस्तकान्तरे ।

## १५३५. दिक्पूर्ववदादसंज्ञायां ञः ॥ १०७ ॥ ( १३२८ )

**असंज्ञायामिति प्रकृतिविशेषणम् । दिक्पूर्वपदात्प्रातिपदिकादसंज्ञाविषयाद् ञः प्रत्ययो भवति शैषिकः । अणोऽपवादः । पौर्वशालः । दाक्षिणशालः । आपरशालः ।**

**असंज्ञायाति किम् ? पूर्वैषुकामशमः । अपरैषुकामशमः । 'दिक्संख्ये संज्ञायाम्' (२.१.५०) इति समासः । 'प्राचां ग्रामनगराणाम्' ( ७.३.१४ ) इत्युत्तरपदवृद्धिः । पदग्रहणं स्वरूपविधिनिरासार्थम् ॥**

## १५३६. मद्रेभ्योऽञ् ॥ १०८ ॥ ( १३२९ )

**'दिक्पूर्वपदात्' इत्येव । दिक्पूर्वपदान्मद्रशब्दादञ् प्रत्ययो भवति । शैषिकः । पौर्वमद्रः । आपरमद्रः । 'दिशोऽमद्राणाम्' ( ७ ३ १३ ) इति पर्युदासादादिवृद्धिरेव ॥**

**न्यासः**

**दिक्पूर्वपदादसंज्ञायां ञः । पौर्वशाल इति** । पूर्वस्यां शालायां भव; पौर्वशालः । 'तद्धितार्थ' इत्यादिना तद्धितार्थे समासः, ततः प्रत्ययः ।

अथ पदग्रहणं किमर्थम् ? न 'दिक्पूर्वाद्' इत्येवोच्येत ? इत्यत आह—**पदग्रहणमित्यादि** । असति हि पदग्रहणे स्वरूपग्रहणं स्यात् । तथा च दिग्गजः, दिङ्नागः, दिग्भागः, दिग्दाहः—इत्येवमादिः प्रकृतिर्विज्ञायते । पदग्रहणे तु सति दिग्विशेषो गृह्यते, कथम् ? पदग्रहणसामर्थ्याद् व्यधिकरणे बहुव्रीहिर्विज्ञायते—दिशः पूर्वपदं यस्य । दिश इति च वाचकापेक्षया षष्ठी विज्ञायते । तेनेह तदभिधायी पूर्वादिदिक्शब्दो गृह्यते ॥ १०७ ॥

**मद्रेभ्योऽञ् ॥ पौर्वमद्र इति** । पूर्ववत् तद्धितार्थे समासः, ततोऽणि प्राप्ते, 'अवृद्धादपि बहुवचनविषयाद्' इति च वुञि, 'मद्रवृज्योः कन्' इति कन्यञ् विधीयते ॥ १०८ ॥

**पदमञ्जरी**

**दिक्पूर्वपदादसंज्ञायां ञः ॥ असंज्ञायामिति** । न चैवमसंज्ञाया इति पञ्चम्या निर्देशः, विषयसप्तम्यापि तदर्थलाभादित्याह—**संज्ञाविषयादिति । पौर्वशाल इति** । पूर्वस्यां शालायां भव इति तद्धितार्थे समासः, ततः प्रत्ययः । **पदग्रहणमित्यादि** । 'दिक्पूर्वाद्' इत्युच्यमाने स्वरूपं स्यात्, ततश्च दिग्गज इत्यादेरेव स्यात् । पदग्रहणे तु सति दिग्विशेषवाचिनां ग्रहणं भवति, कथम् ? व्यधिकरणपदो बहुव्रीहिः—दिशः पूर्वपदमस्मिन्निति, 'दिशः' इति वाचकापेक्षया षष्ठी, दिशो वाचकं पूर्वपदमस्मिन्नित्यर्थः ॥ १०७ ॥

**मद्रेभ्योऽञ्** ॥ मद्रशब्दो जनपदवचनः, बहुवचननिर्देशो जनपदवाचिनः परिग्रहार्थः, तेन मद्रपर्यायो न गृह्यते । **पौर्वमद्र इति** । मद्रैकदेशे मद्रशब्दस्य वृत्तेर्दिक्शब्देन सामानाधिकरण्ये सति 'तद्धितार्थ' इति समासः ॥ १०८ ॥

**भावबोधिनी**

'असंज्ञा में' यह प्रकृति का विशेषण है । दिक्पूर्वपद [ दिशावाचक जिसका पूर्वपद है ] असंज्ञाविषयक प्रातिपदिक से शैषिक 'ञ' प्रत्यय होता है । यह अण् का अपवाद है । उदा०—पौर्वशालः [ पूर्वस्यां शालायां भवः, इस अर्थ में ''तद्धितार्थोत्तरपदसमहारे च' इससे तद्धितार्थ-विषय में समास करने के उपरान्त विभक्तिलोप हो जाने पर पूर्वशाला + ञ=अ, आदिवृद्धि, भसंज्ञा, आ का लोप करने पर पौर्वशालः बनता है । पूर्ववाली शाला=भवन में होने वाला ] दाक्षिणशालः [ दक्षिणस्यां शालायां भवः, प्रक्रिया पूर्ववत् ] आपरशालः [ अपरस्यां शलायां भवः, प्रक्रिया पूर्ववत् ] ।

असंज्ञा में—इसका क्या फल है ? पूर्वैषुकामशमः [ पूर्वः चासौ इषुकामशमः—यह स्थानविशेष की संज्ञा है । अतः प्रत्यय नहीं होता है । अपरैषुकामशमः । इनमें 'दिकसंख्ये संज्ञायाम्' से समास होता है । 'प्राचां ग्रामनगराणाम्' इससे उत्तरपद [ इषुकामशम ] की वृद्धि होती है । [ सूत्र में ] पद—इसका ग्रहण स्वरूप [ दिक् पूर्व—आनुपूर्वी ] का ग्रहण रोकने के लिए है ॥ १०७ ॥

'दिक्पूर्वपदात्' इसकी अनुवृत्ति होती है । दिशावाची जिसका पूर्वपद है, ऐसे मद्र शब्द से शैषिक 'अञ्' प्रत्यय होता है । उदा०—पौर्वमद्रः । आपरमद्रः । [ पूर्वेषु मद्रेषु भवः—इस विग्रह में पूर्ववत् समास करके अञ् प्रत्यय,

**१५३७. उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥ ( १३३० )**

**दिग्ग्रहणं निवृत्तम्। उदीच्यग्रामवाचिनः प्रातिपदिकाद् बह्वचोऽन्तोदात्ताद् अञ् प्रत्ययो भवति शैषिकः। अणोऽपवादः। शैवपुरम्। माण्डवपुरम्।**

**उदीच्यग्रामादिति किम्? माथुरम्[1]। बह्वच इति किम्? ध्वजी-ध्वाजम्। अन्तोदात्तादिति किम्? शार्करीधानम्। शर्करीधानशब्दे लित्स्वरेण धानशब्द उदात्तः॥**

**१५३८. प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ ११० ॥ ( १३३१ )**

**प्रस्थोत्तरपदात् पलद्यादिभ्यः ककारोपधाच्च प्रातिपदिकादण् प्रत्ययो भवति शैषिकः। उदीच्यग्रामलक्षणस्याञोऽपवादः। माद्रीप्रस्थः। माहकीप्रस्थः। पलद्यादिभ्यः—पालदः। पारिषदः। ककारोपधात्—**

**न्यासः**

**उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्॥ शैवपुरम्, माहानगरमिति।** शिवपुरमहानगरशब्दौ समासस्वरेणान्तोदात्तौ।

**माथुरमिति।** मथुराशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। मध्यदेशग्रामस्तु, [ नान्तोदात्तः। तेनाणेव भवति। **ध्वाजमिति**। ध्वजीशब्दः पिपल्यादित्वान् ङीषन्तः। गौरादिषु हि पिपल्यादयः पठ्यन्ते, तेनासौ प्रत्ययस्वरेणान्तोदात्तः। उदीच्यग्रामश्च बह्वजन्तो भवति। **धानशब्द उदात्त इति।** 'गतिकारकोपदाद्' इति धानशब्दस्य ल्युडन्तस्य प्रकृतिभावात्॥ १०९॥

**प्रस्थोत्तरपदपलद्यादिकोपधादण्॥ उदीच्यग्रामलक्षणस्याञोऽपवाद इति।** प्रस्थोत्तरपदादीनामुदीच्यग्रामत्वात्। **माद्रीप्रस्थः, माहकीप्रस्थ इति।** अत्र प्रकृतिः, समासस्वरेणान्तोदात्ता। अथोत्तरपदग्रहणं किमर्थम्, न प्रस्थान्तादित्येवोच्येत? नैवं शक्यम्; तदिहापि प्रसज्येत—उत्तमकर्णीप्रस्थः। तत्राप्युत्तरपदग्रहणान्न भवति।

**पदमञ्जरी**

**उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्॥ शैवपुरमिति।** 'प्रस्थपुरवहान्तात्' इति वुञ् न भवति; 'वृद्धात्' इति तत्र वर्तते॥ १०९॥

**प्रस्थोत्तरपदपलद्यादिकोपधादण्॥ उदीच्यग्रामलक्षणस्याञोऽपवाद इति।** ततोऽन्यत्र व्रीहिप्रस्थ-गिरिप्रस्थ-करिकादावौत्सर्गिक एवाण्, कैलाशप्रस्थ-काकशाकादिषु वृद्धेषु 'वृद्धाच्छः' भवति, देशवाचिनि तु माला-

**भावबोधिनी**

आदिवृद्धि, भसंज्ञा, अलोप ] 'दिशोऽमद्राणाम्' यहाँ पर्युदास के कारण आदिवृद्धि ही होती है॥ १०८॥

दिग्ग्रहण की अनुवृत्ति नहीं होती है। अन्तोदात्त, बहुत अचों वाले, उदीच्य [ उत्तर दिशा वाले ] ग्रामों के वाचक प्रातिपदिक से शैषिक अञ् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—शैवपुरम्। माण्डवपुरम्। [ शिवपुरे भवः, इस अर्थ में अञ् प्रत्यय, शेष प्रक्रिया पूर्ववत् ]।

उदीच्य ग्रामवाची से—इसका क्या फल है? माथुरम् [ मथुरायां भवम्—यहाँ अञ् न होकर अण् होता है। स्वर में भेद है। ] बहुत अचों वाले से—इसके ग्रहण का क्या लाभ है? ध्वजी। इसमें दो ही अच् हैं। अतः अञ् न होकर अण् ही होता है ] ध्वाजम्। अन्तोदात्त से—इसके ग्रहण का क्या लाभ? शार्करीधानम्। शर्करीधान शब्द में लित् स्वर के कारण धान शब्द उदात्त है। [ यहाँ मध्योदात्त है। अतः यह सूत्र नहीं लगता। कहीं-कहीं 'शर्कराधानम्' यह भी पाठ है। धानशब्द ल्युट् प्रत्ययान्त है ]॥ १०९॥

प्रस्थ जिनका उत्तरपद है उससे, पलदी आदि से और ककार जिनकी उपधा में है—ऐसे प्रातिपदिकों से शैषिक अण् प्रत्यय होता है। उदीच्य ग्राम को मानकर होने वाले अञ् का अपवाद है। उदा०—माद्रीप्रस्थः [ माद्रीप्रस्थे भवः

---

१. माधुरम्'—इति पाठा०।

**नैलीनकः । चैयातकः**[१]**। पलद्यादिषु यो बाहीकग्रामस्ततष्ठञ्ञिठयोः ( ४.१.११७ ) अपवादः, यथा—गौष्ठी, नैतकीति**[२]**।**

**गोमतीशब्दः पठ्यते, ततः 'रोपधेतोः प्राचाम्' ( ४.२.१२३ ) इति वुञोऽपवादः ।**
**बाहीकशब्दः कोपधोऽपि पुनः पठ्यते परं छं ( ४.२.११४ ) बाधितुम् ।**
**अण्ग्रहणं बाधकबाधनार्थम् ।**

**पलदी । परिषत् । यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । कलकीट । मलकीट । कमलकीट । कमलभिदा । कमलकीर । बाहुकीट । नैतकी । परिखा । शूरसेन । गोमती । उदयान**[३]**। पलद्यादिः ॥**

**न्यासः**

न ह्यत्र प्रस्थशब्द उत्तरपदम्, किं तर्हि ? कर्णीप्रस्थशब्दः । **ततष्ठञ्ञिठयोरपवाद इति ।** 'वाहीकग्रामेभ्यश्च' इति प्राप्तयोः । अथ वाहीकशब्दः किमर्थमिह पठ्यते, यावता कोपधत्वादेवाण् सिद्धः । अत्राह—**वाहीकशब्द इत्यादि ।** यदि वाहीकशब्द इह **न** पठ्यते, परत्वाद् 'वृद्धाच्छः' इति च्छः स्यात् । कोपधस्य तु निलीक इत्यत्रावृद्धमवकाशः । तस्मात् परमपि च्छं बाधित्वाऽण यथा स्यादिति कोपधोऽपि वाहीकशब्दः पठ्यते ।

अथाण्ग्रहणं किमर्थम्, न यावता यथाविहितमेवोच्येत ? न; पुनर्विधानादणेव भवतीति विज्ञायते । अपवादस्य विधाने पुनर्विधानमनर्थकमित्याह—**अण्ग्रहणमित्यादि** । यदत्र वृद्धं वाहीकग्रामः, तस्मात् 'प्राग्दीव्यतोऽण्' इत्यतोऽणि प्राप्ते 'वृद्धाच्छः' प्राप्नोति, तस्मिन् 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ, तौ परत्वात् बाधित्वा यद्यत्राण्ग्रहणं न क्रियेत तदा पुनर्विधानाच्छ एव स्यात् । अण्ग्रहणादणेव भवति—गोष्ठ्यां भवं **गौष्ठमिति** । तस्मात् बाधकमपि बाधित्वाऽणेव यथा स्यादित्येवमर्थमण्ग्रहणम् । कोपधग्रहणमिहाजनपदार्थम् ।

**पदमञ्जरी**

प्रस्थादौ 'प्रस्थपुरवहान्ताच्च' इति वुञ्, इक्ष्वाकुप्रभृतिषु जनपदवुञोऽपवादः 'कोपधादण्' इत्यण्वक्ष्यते, अरीहणकादौ च 'वृद्धादकेकान्त' इति छो भवति, तस्मादञोऽपवाद इति सुष्ठूक्तम् । उत्तरपदग्रहणादिह न भवति उत्तरो माहकिप्रस्थ उत्तरमाहकिप्रस्थः, तत्र भव इति । 'प्रस्थान्तात्' इति तूच्यमानेऽत्रापि स्यात् ।

**अण्ग्रहणं बाधकबाधनार्थमिति ।** यद्यण्ग्रहणं न क्रियेत, तदा यदत्र वृद्धं वाहीकग्रामवाचि तस्मात् 'प्राग्दीव्यतोऽण्' इत्यणि प्राप्ते 'वृद्धाच्छः' प्राप्तः, तस्मिन् 'बाहीकग्रामेभ्यश्च' इति ठञ्ञिठाभ्यां बाधिते पुनर्विधानाच्छ एव स्यात् । तस्माद् बाधकमपि तं छं बाधित्वा अण्ग्रहणादणेव भवति ।

**भावबोधिनी**

आदि अर्थ में अण् प्रत्यय होता है ] पलदी आदि से—पालदः । पारिषदः । ककार जिनकी उपधा में है, उनसे— नैलीनकः [ निलीनके भवः आदि अर्थ में अण् प्रत्यय आदिवृद्धि । ] चैयातकः [ चियातके भवः—आदि अर्थ में अण् होता है । ] पलदी आदि में जो बाहीक हैं, उनसे ठञ् और ञिठ का अपवाद यह अण् है । जैसे—गौष्ठी, नैतकी । [ यहाँ अण् होने पर ङीप् होता है । गोमती शब्द पठित है, उससे 'रोपधेतोः प्राचाम्' ४।२।१२३ इससे प्राप्त वुञ् का अपवाद अण् होता है । बाहीक शब्द ककारोपध होता हुआ भी पुनः इसलिए पढ़ा जाता है कि परवर्ती 'छ' प्रत्यय का बाध हो सके । अण् का ग्रहण बाधक प्रत्ययों का बाध करने के लिए है । [ पलद्यादि में पठित शब्द—] ।

पलदी । परिषत् । यकृल्लोमन् । रोमक । कालकूट । पटच्चर । वाहीक । कलकीट । मलकीट । कमलकीट ।

---

१. 'वैयतकः'—इति पाठा० ।

२. नैकेतीति' 'नैधिकीति'—इति पाठा० ।

३. अत्र—पक्ष, कललकीट, कललकीकटा, गोष्ठी, नैधिकी, नैकेती, सकृल्लोमन्—एतेऽधिकाः शब्दः क्वचित् ।

**१५३९. कण्वादिभ्यो गोत्रे ॥ १११ ॥ ( १३३२ )**

**गोत्रमिह न प्रत्ययार्थः, न च प्रकृतिविशेषणम् । तर्ह्येवं सम्बध्यते—कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्य एवाण् प्रत्ययो भवति शैषिकः । छस्यापवादः । काण्वाश्छात्राः । गौकक्षाः[1] ॥**

**१५४०. इञश्च ॥ ११२ ॥ ( १३३३ )**

**न्यासः**

जनपदतदवधिः 'कोपधादण्' इत्यनेन सिद्धः । यक्रुल्लोमशब्दः पल्यादिषु पठ्यते, तस्य नलोपो निपात्यते, अन्यथा 'अन्' इति प्रकृतिभावे सति यक्रुल्लोम्नि भवः याक्रुल्लोम इति न सिध्येत् ॥ ११० ॥

**कण्वादिभ्यो गोत्रे ॥ गोत्रग्रहणमिह न प्रत्ययार्थमिति** । शेषाधिकारात् । यदि हि प्रत्ययार्थः स्यात्, शेषाधिकारो बाध्येत । **न प्रकृतिविशेषणम्** । असम्भवात् । न हि कण्वादीनां परमप्रकृतिरूपाणामेव गोत्रार्थत्वं सम्भवति । तर्हि गोत्रग्रहणं सम्बध्येतेत्येवमर्थं पृच्छति । **एवमित्यादिना** प्रत्ययविधिविशेषणं गोत्रग्रहणमिति दर्शयित्वा तेन गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योण् भवतीति दर्शयति । **छस्यापवाद इति । गोत्रप्रत्ययान्तानां** कण्वादीनां वृद्धत्वात् । **काण्वाः, गौकक्षा इति** । कण्वगोकक्षशब्दाभ्यां गोत्रापत्ये गर्गादित्वाद् यञ् , तदन्तादण्, 'आपत्यस्य' इत्यादिना यलोपः । **काण्व इति** । 'सास्य देवता' इत्यण् ॥१११॥

**इञश्च** ॥ दाक्ष्यादिभ्यः 'अत इञ्' इतीञन्तेभ्योऽण् । **सौतङ्गमीयमिति** । सुतङ्गमेन निर्वृत्तमिति 'वुच्छण्'

**पदमञ्जरी**

यकुल्लोमशब्दः पठ्यते, यक्रुल्लोम्नि भवः याक्रुल्लोमः, 'अन्' इति प्रकृतिभावो न भवति, **गणे** नलोपनिपातनादित्याहुः ॥ ११० ॥

**कण्वादिभ्यो गोत्रे ॥ गोत्रमिह न प्रत्ययार्थ इति** । शेषाधिकारस्य बाधप्रसङ्गात् । **न च प्रकृति-विशेषणमिति** । कण्वादीनामगोत्रप्रत्ययान्तानां गोत्रे वृत्त्यसम्भवात् । **कण्वादिभ्यो गोत्रे यः प्रत्ययो विहित इति** । प्रतिपदविहितो यञेव गृह्यते । एवं च कृत्वा गोत्रमपि पारिभाषिकं गृह्यते, न त्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्यपत्यमात्रस्य ग्रहणम्—कण्वो देवताऽस्येति । ननु 'कण्वादिभ्यः' इत्युच्यमाने कथमणन्ता-त्प्रसङ्गः ? कथं वा यञन्तेभ्यः स्याद् येनेष्टं तात्रसिध्यति ? एवं मन्यते—केवलेभ्यः कण्वादिभ्य औत्सर्गिक एवाण् सिध्यति, छापवादत्वाद्योगस्य कण्वाद्यवयवे तद्धितान्ते कण्वादिशब्दो वर्तिष्यत इति ॥ १११ ॥

**इञश्च** ॥ **गोत्र इत्येवेति** । पूर्वत्र पारिभाषिकस्य गोत्रस्य ग्रहणमित्युक्तम्, इहापि तदेवानुवर्तते, तेनात्रापि

**भावबोधिनी**

कमलभिदा । कमलकीर । बाहुकीट । नैतकी । परिखा । शूरसेन । गोमती । उदयान । ये पल्यादिगण में पठित शब्द हैं ॥ ११० ॥

इस सूत्र में गोत्र न तो प्रत्यय का अर्थ है और न प्रकृति का विशेषण है । तो इस प्रकार सम्बद्ध होता है—कण्व आदि शब्दों से गोत्र में ही प्रत्यय किया गया है, उस प्रत्ययान्त से ही अण् शैषिक प्रत्यय होता है । यह 'छ' का अपवाद है । उदा०—काण्वाः छात्राः । गौकक्षाः । [ कण्व और गोकक्ष शब्दों से गोत्र अर्थ में 'गर्गादिभ्यो यञ्' ४।१ १०५ से यञ् करने के बाद प्रस्तुत सूत्र से अण् होता है और 'आपत्यस्य च तद्धितेऽनाति' से य का लोप होने पर रूप सिद्ध होते हैं । ] ॥ १११ ॥

'गोत्रे' इसकी अनुवृत्ति होती है । गोत्र अर्थ में जो इञ् किया गया है, तदन्त प्रातिपदिक से शैषिक अण् प्रत्यय होता है । यह 'छ' का अपवाद है । उदा०—दाक्षाः । प्लाक्षाः । माहकाः । [ दक्ष + इञ् = दाक्षि से अण् करने पर भसंज्ञा

---

१. 'गोत्र इति किम् ? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम् । कण्वादिर्गर्गाद्यन्तर्गणः'—इत्यधिकं पुस्तकान्तरे ।

**'गोत्रे' इत्येव। गोत्रे य इञ्विहितस्तदन्तात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः। छस्यापवादः। दाक्षाः। प्लाक्षाः। माहकाः।**

**गोत्र इत्येव—सौतङ्गमेरिदं सौतङ्गमीयम् ॥**

**१५४१. न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥ ( १३३४ )**

**द्व्यचः प्रातिपदिकात्प्राच्यभरतगोत्रादिञन्तादण् प्रत्ययो न भवति। पूर्वेण प्राप्तः प्रतिषिद्ध्यते। पैङ्गीयाः। प्रौष्ठीयाः। चैदीयाः[1]। पौष्कीयाः। काशीयाः। पाशीयाः।**

**द्व्यच इति किम्? पान्नागाराः। प्राच्यभरतेष्विति किम्? दाक्षाः।**

**काशीया इति कथमुदाहृतम्, यावता काश्यादिभ्यष्ठञ्ञिठाभ्यां ( ४. २. ११६ ) भवितव्यम्? नैतदस्ति; देशवाचिनः काशिशब्दस्य तत्र ग्रहणम्, चैदिशब्देन[2] साहचर्यात्। गोत्रात्तु वृद्धाच्छ (४. २. ११४) एव भवति। ज्ञापकादन्यत्र प्राच्यग्रहणेन भरतग्रहणं न भवतीति स्वशब्देन भरतानामुपादानं कृतम् ॥**

### न्यासः

इत्यादिना सुतङ्गमशब्दाच्चातुरर्थिक इञ् ॥ ११२ ॥

**न द्व्यचः प्राच्यभरतेषु ॥ पैङ्गीयाः, प्रौष्ठीया इति।** प्राच्यगोत्रोदाहरणम्। **काशीयाः, पाशीया इति।** भरतगोत्रोदाहरणम्। **कथमित्यादि** चोद्यम्। **नैतदस्तीति** परिहारः। उभयञ्चैतत् तदुदाहरणम्। उभयञ्चैतदनुगतार्थम्। ननु च भरताः प्राच्या एव, ततः प्राच्यग्रहणेनैव तेषां ग्रहणं भविष्यति; तत् किमर्थं तेषां स्वशब्देनोपादानम्? इत्यत आह—**ज्ञापकादन्यत्रेत्यादि**। क्वान्यत्र? 'बह्वच इञः प्राच्यभरतेषु' इत्यत्र ॥ ११३ ॥

### पदमञ्जरी

पारिभाषिकस्यैव ग्रहणादिह न भवति—पाणिनेर्यूनश्छात्राः पाणिनीया इति। **सौतङ्गमेरिदमिति।** सुतङ्गमशब्दाद् वुञ्छणादिसूत्रेण चातुरर्थिक इञ्। अत्रापत्यत्वमेव नास्तीति सुतरामगोत्रत्वाद्भवति प्रत्युदाहरणम् ॥ ११२ ॥

**न द्व्यचः प्राच्यभरतेषु ॥** ननु च भरताः प्राच्या एव, तत्किमर्थं तेषां स्वशब्देन ग्रहणम्? तत्राह—**ज्ञापकादन्यत्रेति।** 'बह्वच इञः प्राच्यभरतेषु' इत्यत्रायमर्थो ज्ञापितः—'अन्यत्र प्राच्यग्रहणे भरतानां ग्रहणं न भवति' इति।

### भावबोधिनी

इलोप होता है। यही प्रक्रिया अन्य में भी है। ] गोत्र अर्थ में ही इञन्त से—सौतङ्गमेः इदम्—सौतङ्गमीयम्। [ सुतगम शब्द से गोत्र में नहीं, अपितु चातुरर्थिक इञ् प्रत्यय है। अतः प्रस्तुत सूत्र लागू नहीं होता है। 'छ'=ईय होता है ] ॥ ११२ ॥

प्राच्य, भरत, गोत्रवाची, दो अचों वाले इञ् प्रत्ययान्त प्रातिपदिक से अण् प्रत्यय नहीं होता है। पूर्वसूत्र से प्राप्त अण् का प्रतिषेध किया जा रहा है। उदा०—पैङ्गीयाः [ पिङ्गस्यापत्यम् पैङ्गिः, तस्य छात्राः आदि अर्थों में अण् प्राप्त है, उसका निषेध हो जाने पर छ=ईय होता है। ] प्रौष्ठीयाः [ प्रौष्ठि के छात्र ]। चैदीयाः [चैदि के छात्र आदि] पौष्कीयाः [ पौष्क के छात्र आदि ] काशीयाः पाशीयाः [ काशि, पाशि के छात्र ]। दो अचों वाले से—इसका क्या लाभ है? पान्नागाराः [ पान्नागारि इसमें बहुत अच् हैं। अतः निषेध न होने से अण् होता है। ] प्राच्य भरत—इनमें इसका क्या लाभ है? दाक्षाः [ यह प्राच्य नहीं है। अतः निषेध नहीं होता है। ]

काशीयाः—यह प्रत्युदाहरण कैसे दिया गया, क्यों कि काशी आदि से ठञ् और ञिठ होने चाहिये? ऐसा नहीं है, उसमें देशवाचक काशी शब्द का ग्रहण है क्योंकि चैदि इस [ देशवाचक ] का साहचर्य है। परन्तु गोत्रवाचक काशी शब्द से तो वृद्ध होने के कारण "छ" प्रत्यय ही होता है।

---

१. 'वैदीयाः'—इति पाठा०। २. 'वैदि'—इति पाठा०।

## १५४२. वृद्धाच्छः ॥ ११४ ॥ ( १३३७ )

**'गोत्रे' इति नानुवर्त्तते । सामान्येन विधानम् । वृद्धात्प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । अणोऽपवादः । गार्गीयः । वात्सीयः । शालीयः । मालीयः ।**

**अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधीन् ( ४. २. १०४, १०६, १०९, ११० ) तु परत्वाद्बाधते ॥**

**न्यासः**

**वृद्धाच्छः ॥ अव्ययतीरेत्यादि ।** तत्राव्ययविधिं बाधते —आराद् भव आरातीयः । तीरोत्तर एव विधिः तं च--- वायसतीरे भवो वायसतीरीयः । रूपोत्तरपदात् तु छं बाधित्वा 'धन्वयोपधाद् वुञ्' इति योपधलक्षणो वुञ् भवति—मणिरूप्ये भवो माणिरूप्यक इति। उदीच्यग्रामविधिं बाधते— वाडवाक्षे भवो वाडवाक्षीयः, साडलपुरे भवः साडलपुरीयः । कोपधलक्षणम्—औदके भव औदकीयः, चौल्लुके भवः चौल्लुकीयः तेषां तु विधीनामवृद्धोऽवकाशः ॥ ११४ ॥

**पदमञ्जरी**

अपर आह—ज्ञापकादन्यत्रेत्यन्वयः, अन्यत्रास्यार्थस्य ज्ञापितत्वादित्यर्थः ॥ ११३ ॥

**वृद्धाच्छः ॥ अव्ययतीरेत्यादि ।** अव्ययात्त्यब् भवतीत्यस्यावकाशः—अमात्यः, छस्यावकाशः—शालीयो मालीयः, आराच्छब्दाच्छो भवति—आरातीयः । 'अमेहक्वतसित्रेभ्यः' ( म० भा० ४.२.१०४ ) इति परिगणनमनपेक्ष्यायं विप्रतिषेधः तीरोत्तरविधेरवकाशः—काश्यतीरः, छस्य स एव; वायसतीराच्छो भवति वायसतीरीयः । रूप्योत्तरविधेरवकाशः चाररूप्यः, छस्य स एव; माणिरूप्याच्छः प्राप्तः, तं चापि योपधलक्षणो वुञ् बाधते—माणिरूप्यकः । प्राप्तिमात्राश्रयेण तु छस्य रूप्योत्तरपदलक्षणस्य च ञस्य विप्रतिषेध उक्तः । उदीच्यग्रामलक्षणस्य विधेरवकाशः—शिवपुर—शैवपुरः, वाडवकर्षाच्छो भवति— वाडवकर्षीयः । कोपधविधिः—'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इत्ययं विवक्षितः, स तस्माद्धि परस्थस्तस्यावकाशः—निलीनक— नैलीनकम्, उलूका अस्मिन्सन्ति 'तदस्मिन्नस्ति' इत्यण्, औलूको नाम ग्रामस्तत्र भवः, तस्माच्छो भवति—औलूकीयः । यस्तु 'कोपधादण्' इत्यण्, स जनपदवुञोऽपवादः, तस्यापि 'वृद्धादकेकान्त' इत्यत्र 'कोपधग्रहणं सोसुकाद्यर्थम्' ( वा० ४४२ ) इति विहितश्छो बाधको भवति ॥ ११४ ॥

**भावबोधिनी**

ज्ञापक से भिन्न स्थल पर प्राच्य के ग्रहण से भरत का ग्रहण नहीं होता हैं—इसलिये स्वशब्द [ आनुपूर्वी ] से भरत का उपादान किया गया ॥

**विमर्श**—अभिप्राय यह है कि 'बह्वचः इञः प्राच्यभरतेषु' २.४.६६ इस सूत्र पर भाष्य में ज्ञापित किया गया है —'इससे भिन्न स्थलों पर प्राच्य के ग्रहण से भरत का ग्रहण नहीं होता है ।' इसलिये प्रस्तुत सूत्र में स्वतन्त्ररूप से 'भरत' का ग्रहण करना आवश्यक है ॥ ११३ ॥

'गोत्रे' इसकी अनुवृत्ति नहीं होती है । सामान्यरूप से यह विधान है । वृद्धसंज्ञक प्रातिपदिक से शैषिक 'छ' प्रत्यय होता है । यह अण् का अपवाद है— गार्गीयः [ गार्ग्य + छ = ईय, य लोप करने पर रूप सिद्ध होता है । ] वात्सीयः [ वात्स्य + छ = ईय ] शालीयः । मालीयः [ शाला + छ = ईय, भ संज्ञा, आलोप ] । यह परवर्त्ती विधि होने के कारण (१) अव्यय, (२) तीर, (३) रूप्योत्तर पद, (४) उदीच्य ग्राम और (५) कोपध —विधियों का बाध करता है अर्थात् इनमें 'छ' ही होता है ।

**विमर्श** -(१) आरात् इस अव्यय से छ ही होता है, त्यप् नहीं । २) वायसतीर शब्द से छ ही होता है वायसतीरीयः । (३) माणिरूप्यकः—इसमें माणिरूप्य से 'छ' प्राप्त है यही ध्यान में रखकर लिखा गया है वास्तव में वुञ् ही होता है । (४) वाडवकर्ष से छ ही होता है—वाडवकर्षीय । (५) औलूक से छ ही होता है—औलूकीयः ॥११४॥

**१५४३. भवतष्ठक्छसौ ॥ ११५ ॥ ( १३३९ )**

**'वृद्धात्' इत्येव । भवच्छब्दाद् वृद्धात् ठक्, छस्—इत्येतौ प्रत्ययौ भवतः शैषिकौ छस्यापवादौ । सकारः पदसंज्ञार्थः । भवतस्त्यदादित्वाद् वृद्धसंज्ञा । भावत्कः । भवदीयम् ।**

**अवृद्धात्तु भवतः शतुरणेव भवति—भावतः ॥**

**१५४४. काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥ ( १३४० )**

**'काशि'—इत्येवमादिभ्यः ठञ्, ञिठ—इत्येतौ प्रत्ययौ भवतः शैषिकौ । इकार उच्चारणार्थः । ञकार एवोभयत्र विपर्यस्तदेशोऽनुबन्धः । स्त्रीप्रत्यये विशेषः । काशिकी, काशिका । बैदिकी, बैदिका [ चैदिकी, चैदिका[१] ] ।**

**'वृद्धात्' इत्यत्रानुवर्त्तते । ये त्ववृद्धाः पठ्यन्ते, वचनप्रामाण्यात्तेभ्यः प्रत्ययविधिः ।**

**न्यासः**

**भवतष्ठक्छसौ ॥ सकारःपदसंज्ञार्थं इति ।** 'सति च' इति पदसंज्ञा यथा स्यात् । तस्याञ्च सत्यां **भवदीयमित्यत्र** 'झलां जशोऽन्ते' इति जश्त्वं भवति । **भावत्क इति ।** 'इसुसुक्तान्तात् कः' । **अवृद्धात्तु भवत इति ।** शत्रन्तादिति ॥ ११५ ॥

**काश्यादिभ्यष्ठञ्ञिठौ ॥** काशि-चेदिशब्दाभ्यां जनपदलक्षणे वृञि प्राप्ते सा[२]जातेः 'इ[२]ञश्च' इत्यणि सांवाहादिभ्यो वृद्धाच्छे हस्तिकर्षूशब्दाद् 'आर्देशे ठञ्' इति ठञि परिशिष्टेभ्यः 'प्राग्दीव्यतोऽण्' इत्यणीदमारभ्यते । कथं पुनर्ञकार एव विपर्यस्तदेशेऽनुबन्धे क्रियमाणे विशेष इत्यत आह—**स्त्रीप्रत्यये विशेष इति ।** अन्ते हि ञकारेऽनुबन्धे सति 'टिड्ढाणञ्' इति ङीब्भवति । आदौ हि सति टाबेव भवति ।

**पदमञ्जरी**

**भवतष्ठक्छसौ ॥ ठक्छस् इत्येताविति ।** सित्करणादवसीयते—छसोऽयं निर्देशः, न शस इति, शसि हि स्वादिपदत्वेनैव सिद्धम् । **सकारः पदसंज्ञार्थ इति ।** तेन भवदीय इत्यत्र जश्त्वं भवति । **भावत्क इति ।** 'इसुसुक्तान्तात्कः' । प्रक्रियालाघवार्थं ककि विधातव्ये ठग्विधानं स्त्रियां ङीबर्थम्- भावत्की ।

**अवृद्धात्तु भवत इति ।** शत्रन्तात् । **क्वचित्तु भवतः शतुरित्येव पाठः ॥ ११५ ॥**

**काश्यादिभ्यष्ठञ्ञिठौ ॥ वृद्धादित्येवेति ।** कथं तर्ह्यवृद्धेभ्यो युवराजादिभ्यः प्रत्यय इत्यत आह—**ये त्विति ।**

**भावबोधिनी**

'वृद्धात्' इसकी अनुवृत्ति होती है । वृद्धसंज्ञक भवत् शब्द से ठक् और छस् ये दो प्रत्यय शैषिक होते हैं, ये 'छ' के अपवाद हैं । सकार अनुबन्ध [ सित् मानकर 'सिति च' सूत्र द्वारा पद संज्ञा के विधान के लिए है । भवत् शब्द की त्यदादि के अन्तर्गत होने से [ त्यदादीनि च' सूत्र से ] वृद्ध संज्ञा होती है । उदा० भावत्कः [ भवत् + ठक् 'इसुसुक्तान्तात्कः' से 'क' आदेश, आदिवृद्धि ] भवदीयः [ भवत् + छस्, छ = ईय, पदसंज्ञा होने से जश्त्व— भवदीयः ] अवृद्ध शतृ प्रत्ययान्त भवत् से तो अण् ही होता है—भावतः [ भवत् + अण ] ॥ ११५ ॥

काशि आदि शब्दों से ठञ् और ञिठ ये दो शैषिक प्रत्यय होते हैं । [ ञिठ का ] इकार उच्चारण सुविधा के लिये है । दोनों में आगे पीछे स्थानों पर ञकार ही अनुबन्ध है । स्त्रीप्रत्यय में अन्तर है । [ ठञ् होने पर ङीप् होता है, ञिठ होने पर टाप् होता है । ] उदा० काशिकी—काशिका [ काशि + ठञ्, ठ = इक, भसंज्ञा इलोप, ङीप् = ई । पक्ष में ञिठ = ठ = इक, टाप् = आ ] बैदिकी—बैदिका [ बेदि + ठञ्, बेदि + ञिठ । वास्तव में चैदिकी चैदिका यह पाठ अधिक शुद्ध है क्योंकि गणपाठ में आगे चेदि शब्द का उल्लेख है । इसके अतिरिक्त 'न द्व्यचः प्राच्यभरतेषु' ४.२.११३ सूत्र काशिका वृत्ति में भी 'चेदि' इसी का उल्लेख है । ]

१. अधिकोऽयं पाठः क्वचित्पुस्तके ।　　२. अशुद्धमिदं प्रतिभाति ।

**देवदत्तशब्दः पठ्यते, तस्य 'एङ् प्राचां देशे'** ( १. १. ७५ ) इति **वृद्धसंज्ञा—दैवदत्तिकः । वाहीकग्रामस्य तु नास्ति वृद्धसंज्ञा**—दैवदत्तः । कथं भाष्य उदाहृतम्—'वा नामधेयस्य वृद्धसंज्ञा वेदितव्या; **देवदत्तीया, दैवदत्ताः' इति, यावता** वृद्धसंज्ञापक्षे काश्यादित्वाट्ठञ्ञिठाभ्यां भवितव्यम् ? तत्रैवं **वर्णयन्ति —'वा नामधेयस्येति व्यवस्थितविभाषेयम्, सा छे कर्त्तव्ये** भवति, ठञ्ञिठयोर्न भवति' इति ।

**काशि । चेदि**[1] **। संज्ञा । संवाह । अच्युत । मोहमान । शकुलाद । हस्तिकर्षू । कुदामन्**[2] **। हिरण्य । करण । गोधाशन । भौरिकि । भौलिङ्गि । अरिन्दम । सर्वमित्र । देवदत्त । साधुमित्र । दासमित्र । दासग्राम । सौधावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । * आपदादिपूर्वपदात्कालात् *** ( ग० सू० ९६ ) । आपत्कालिकी, आपत्कालिका । और्ध्वकालिकी, और्ध्वकालिका । तात्कालिकी, तात्कालिका ।

### न्यासः

**वृद्धादित्यनुवर्तत इति** । यद्येवम्, अत्र ये वृद्धाः पठ्यन्ते तेभ्यः प्रत्ययो न प्राप्नोति ? इत्याह — **ये त्ववृद्धा इत्यादि** ।

यदि तर्ह्यवृद्धेभ्योऽपि वचनप्रामाण्यात्प्रत्ययो भवति, वृद्धादित्यस्यानुवृत्तिरपार्थिकेत्यत आह— **देवदत्तशब्द इत्यादि** । देवदत्तशब्दस्य प्राग्देश एव हि वर्तमानेऽस्य वृद्धसंज्ञा, न वाहीकग्रामे । तत्र यदि वृद्धादिति नानुवर्तते, वाहीकग्रामवाचिनोऽपि ततष्ठञ्ञिठौ स्याताम् । तस्मात् तन्निवृत्त्यर्थं वृद्धाधिकारोऽर्थवान् भवतीति भावः । **कथमित्यादिना** वृद्धसंज्ञायां देवदत्तीया इति **भाष्यकारस्योपन्यासे** तदुदाहरणं विघटय्य **तत्रैवं वर्णयन्तीत्यादिना समर्थयते** ।

**आपदादिपूर्वपदात् कालादिति** । आपच्छब्द आदिर्येषां तान्यापदादीनि । तानि पूर्वपदं यस्य तदापदादिपूर्वपदम्, ततः कालाट् ठञ्ञिठौ भवतः । आदिशब्देनोर्ध्वादयः शब्दा गृह्यन्ते ॥ ११६ ॥

### पदमञ्जरी

यद्यवृद्धेभ्यो वचनप्रामाण्यात्प्रत्ययौ भवतः, किमर्थं तर्हि वृद्धाधिकारः ? इत्यत आह—**देवदत्तशब्द इत्यादि** । **कथं भाष्ये उदाहृतमिति** । यद्यपि तत्र स्वयमपि छप्रत्ययमुदाहरत्येव, तत्तु **भाष्यकारप्रामाण्येन**, 'न स्वातन्त्र्येणेति' भाष्ये इत्युक्तम् ।

**आपदादिपूर्वपदादिति** । आपदादिराकृतिगणः । **कालादिति** । कालशब्दान्तादित्यर्थः ॥ ११६ ॥

### भावबोधिनी

'वृद्धात्' इसकी अनुवृत्ति होती है । यहाँ गण में अवृद्ध जिन शब्दों का पाठ है उनसे वचनप्रामाण्य के आधार पर प्रत्ययविधान करना चाहिये ।

देवदत्त शब्द पठित है, 'एङ् प्राचां देशे' के अनुसार इसकी वृद्ध संज्ञा हो जाती है —दैवदत्तिकः । वाहीक ग्राम वाले की वृद्ध संज्ञा नहीं होती है— दैवदत्तः [ अण् ही होता है । ] भाष्य में यह कैसे उदाहरण किया गया है—"नाम की वृद्ध संज्ञा विकल्प से होती है' देवदत्तीयाः, दैवदत्ताः ; क्योंकि वृद्ध संज्ञा-पक्ष में काश्यादिगणीय होने से ठञ् और ञिठ होने चाहिये ? इसका समाधान यह करते हैं —'नाम की वृद्ध संज्ञा विकल्प से होती है—' यह व्यवस्थित विभाषा है, यह 'छ' प्रत्यय की कर्तव्यता में होती है, ठञ् और ञिठ की कर्तव्यता में वृद्ध संज्ञा नहीं होती है ।

[ काश्यादि गण में ] काशि । चेदि [बेदी] । संज्ञा । संवाह । अच्युत । मोहमान । शकुलाद । हस्तिकर्षु । कुदामन् । हिरण्य । करण । गोधाशन । भौरिकि । भौलिङ्गि । अरिन्दम । सर्वमित्र । देवदत्त । साधुमित्र । दासमित्र । सौधावतान । युवराज । उपराज । सिन्धुमित्र । देवराज । * आपत् आदि जिसके पूर्वपद हैं ऐसे काल शब्द से * आपत्कालिकी, आपत्कालिका [ आपत्काले भवा —इस अर्थ में ठञ् और ञिठ करने पर प्रथम में ङीप् और द्वितीय में टाप् होता है । ]

---

१. 'बैदि'—इति पाठा० २. 'कुनामन'—इति पाठा० ।

**१५४५. वाहीकग्रामेभ्यश्च ॥ ११७ ॥ ( १३४१ )**

**'वृद्धात्' इत्येव। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्टञ्ञिठौ प्रत्ययौ भवतः शैषिकौ छस्यापवादौ। शाकलिकी, शाकलिका। मान्थविकी, मान्थविका॥**

**१५४६. विभाषोशीनरेषु ॥ ११८ ॥ ( २३४२ )**

**'वृद्धात्' इति वर्तते, 'वाहीकग्रामेभ्यः' इति च। उशीनरेषु ये वाहीकग्रामास्तद्वाचिभ्यो वृद्धेभ्यः प्रातिपदिकेभ्यो विभाषा ठञ्ञिठौ प्रत्ययौ भवतः। आह्वजालिकी, आह्वजालिका, आह्वजालीया। सौदर्शनिकी, सौदर्शनिका, सौदर्शनीया॥**

**१५४७. ओर्देशे ठञ् ॥ ११९ ॥ ( १३४३ )**

**'वृद्धात्' इति नानुवर्त्तते उत्तरसूत्रे पुनर्वृद्धग्रहणात्। उवर्णान्ताद् देशवाचिनः प्रातिपदिकात्**

**न्यासः**

**वाहीकग्रामेभ्यश्च ॥ ११७ ॥ विभाषोशीनरेषु ॥ ११८ ॥ ओर्देशे ठञ् ॥ नैषादकर्षुकः। शाबरजम्बुक इति।** निषादकर्षू-शबरजम्बूशब्दाभ्यां ठञ्, 'इसुसुक्तान्तात् कः', 'केऽणः' इति ह्रस्वः। ननु च ठञ् प्रकृत एव, स एवेहानुकृष्यते, तत् किं ठञ्ग्रहणेन? इत्यत आह—ठञ्ञिठयोरिति। यथैव हि ठञ् प्रकृतः,

**पदमञ्जरी**

**वाहीकग्रामेभ्यश्च ॥ छस्यापवादौ इति।** एवं च ये छेनैव बाधिता अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविषयास्तद्विषयेऽप्येतावेव भवतः, न चेदन्येन बाधः, तद्यथा—आरान्नाम वाहीकग्रामः आरात्की, आरात्का, 'इसुक्तान्तात्कः'। तथा कास्तीरं नाम वाहीकग्रामः कास्तीरिकी, कास्तीरिका। इह तु दाशरूप्यं नाम वाहीकग्रामः, 'धन्वयोपधात्' इति वुञ् ठञ्ञिठौ बाधते दाशरूप्यकः। तथा शकलान्यस्मिन्सन्ति शाकलं नामोदीच्यग्रामः भूयो वाहीकग्रामः, ततष्ठञ्ञिठौ भवतः—शाकलिकी, शाकलिका। इह तु सौसुकं नाम वाहीकग्रामः प्रस्थोत्तरपदादिसूत्रेण प्राप्तं कोपधलक्षणमणं छो बाधते, परत्वात्तमप्यपवादत्वाद् 'वृद्धादकेकान्त' इत्यत्र 'कोपधग्रहणं सौसुकाद्यर्थम्' इति कोपधलक्षणश्छो बाधते, सौसुकीयः॥ ११७॥ ११८॥

**ओर्देशे ठञ्॥ नैषादकर्षुकः, शाबरजम्बुक इति।** निषादकर्षू-शबरजम्बूशब्दाभ्यां ठञ् 'इसुसुक्तान्तात्कः',

**भावबोधिनी**

**और्ध्वकालिनी और्ध्वकालिका** [ ऊर्ध्वकाले भवा— इस अर्थ में ] तात्कालिकी, तात्कालिका [ तत्काले भवा—इस अर्थ में ठञ्, ञिठ में आदिवृद्धि ठ का इक, भसंज्ञा, अलोप, ङीप् और टाप् करने पर दोनों रूप सिद्ध होते हैं ] ॥११६॥

'वृद्धात्' इसकी अनुवृत्ति होती है। बाहीक = बाहरी ग्रामों के वाचक, वृद्धसंज्ञक शब्दों से शैषिक ठञ् और ञिठ प्रत्यय होते हैं ये 'छ' के अपवाद हैं। उदा० शाकलिकी, शाकलिका। शकले भवा—इस अर्थ में ठञ् करने पर ङीप् और ञिठ करने पर टाप् होता है। ]मान्थविकी मान्थविका। [ मन्थवे भवा— यहा अर्थ है। ]॥ ११७॥

'वृद्धात्' और 'बाहीकग्रामेभ्यः' इनकी अनुवृत्ति होती है। उशीनर देश में जो बाहीक = बाहरी ग्राम हैं उनके वाचक वृद्ध संज्ञक प्रातिपदिकों से विकल्प से ठञ् और ञिठ प्रत्यय होते हैं [ अतः पक्ष में छ प्रत्यय भी होने से तीन रूप होते हैं। ] उदा० आह्वजालिकी, आह्वजालिका, आह्वजालीया। [ आह्वजाले भवा—इस अर्थ में ठञ् करने पर ङीप् होता है, ञिठ और 'छ' करने पर टाप् होता है। इस प्रकार तीन रूप होते हैं। ] सौदर्शिनिकी, सौदर्शिनिका, सौदर्शनीया। [ सुदर्शने भवा—इस अर्थ में ठञ् ञिठ, और छ प्रत्यय करने पर तीन रूप होते हैं ]॥ ११८॥

'वृद्धात्' इसकी अनुवृत्ति नहीं होती है। क्योंकि अग्रिम सूत्र में पुनः 'वृद्ध' का ग्रहण हैं। उकारान्त देशवाचक प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है। उदा० नैषादकर्षुकः। शाबरजम्बुकः। [ निषादकर्षूनामके ग्रामे भवः, शबरजम्बूनामके ग्रामे भवः—इन अर्थों में ठञ् प्रत्यय, आदिवृद्धि ठ का 'क' आदेश 'इसुसुक्तान्तात् कः' (७.३.५१) सूत्र से

ठञ् प्रत्ययो भवति शैषिकः । नैषादकर्षुकः । शाबरजम्बुकः[1] ।

देश इति किम् ? पटोश्छात्त्राः पाटवाः ।

ठञ्ञिठयोः प्रकरणे ठञः केवलस्यानुवृत्तिर्न लभ्यत इति ठञ्ग्रहणं कृतम् ॥

१५४८. वृद्धात् प्राचाम् ॥ १२० ॥ ( १३४४ )

'ओर्देशे' इत्येव । उवर्णान्ताद् वृद्धात्प्राग्देशवाचिनः प्रातिपदिकाट्ठञ् प्रत्ययो भवति शैषिकः । आढकजम्बुकः । शाकजम्बुकः[2] । नापितवास्तुकः ( म० भा० ) । पूर्वेणैव ठञि सिद्धे नियमार्थं वचनम्—वृद्धादेव प्राचामवृद्धान्न भवतीति । मल्लवास्तु—माल्लवास्तवः ॥

१५४९. धन्वयोपधाद् वुञ् ॥ १२१ ॥ ( १३४५ )

'वृद्धात्' इति वर्तते, देश इति च । धन्ववाचिनो यकारोपधाच्च देशाभिधायिनो वृद्धात्प्रातिपदिकाद्

न्यासः

एवं ञिठोऽपि । तत्र द्वयोरपि प्रकरणे ठञ् चानुवर्तिष्यते, नेतर इत्येतन्न लभ्यते । तस्माद् ञिठस्य निवृत्तये पुनष्ठञ्ग्रहणं कृतम् । ननु चास्वरितत्वादेव ञिठो नानुवर्तिष्यते ? सत्यमेतत्; तदेवास्वरितत्वं ज्ञापयितुं ञिठस्य ठञ्ग्रहणं कृतम् । तच्चास्वरितत्वमाख्यायते मन्दबुद्धीनामनुग्रहाय ॥ ११९ ॥

वृद्धात् प्राचाम् । आढकजम्बुक इति । पूर्ववत् कादेशो ह्रस्वत्वञ्च ॥ १२० ॥

धन्वयोपधाद् वुञ् ॥ धन्वनोऽर्थस्य ग्रहणम्, न स्वरूपस्य; वृद्धाधिकारात् । न हि धन्वशब्दो वृद्धः । पारे-

पदमञ्जरी

'केऽणः' इति ह्रस्वः ॥ ११९ ॥

वृद्धात्प्राचाम् ॥ वृद्धादेव प्राचामिति । विपरीतस्तु नियमो न भवति—प्राचामेव वृद्धादिति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावाद् यत्र पूर्वसूत्रस्यातिप्रसङ्गः स्यात् । आढकजम्बुक इति । पूर्ववत्कादेशह्रस्वत्वे ॥ १२० ॥

धन्वयोपधाद् वुञ् ॥ धन्ववाचिन इति । धन्वविशेषवाचिन ऐरावतादेरित्यर्थः । स्वरूपस्य पर्यायाणां च ग्रहणं न भवति, वृद्धाधिकारात् । पारेधन्वक इति । 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः, 'अनश्च'[3]

भावबोधिनी

और ह्रस्व ] । देश अर्थ में—इसका क्या फल है ? पटोः छात्राः पाटवाः [ यहाँ पटु शब्द देशवाची नहीं है, गुण या गुणी का वाचक है । अतः ठञ् न होकर अण् ही होता है । ] ठञ् और ञिठ के प्रकरण में केवल ठञ् की अनुवृत्ति नहीं प्राप्त होती है इसलिये ठञ् का ग्रहण किया गया है ॥ ११९ ॥

'ओर्देशे' इसकी अनुवृत्ति होती है । पूर्वदेशवाचक, उकारान्त, वृद्धसंज्ञक प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है । उदा० आढकजम्बुकः [ आढकजम्बूनामके ग्रामे भवः—इस अर्थ में ठञ्, आदिवृद्धि, ठ का 'क' आदेश ऊ का ह्रस्वादेश ] शाकजम्बुकः [ यहाँ भी पूर्ववत् प्रक्रिया है । ] नापितवास्तुकः [ प्रक्रिया पूर्ववत् ] पूर्ववर्त्ती सूत्र से ही ठञ् सिद्ध रहने पर यह वचन नियम करने के लिये है पूर्वदेश के वृद्धसंज्ञक शब्द से ही होता है, अवृद्ध से नहीं होता है । मल्लवास्तु नामक ग्राम में होने वाला—मल्लवास्तवः [ मल्लवास्तु यह वृद्ध नहीं है अतः अण् होता है, ठञ् नहीं । ] ॥ १२० ॥

'वृद्धात्' और 'देशे' इनकी अनुवृत्ति होती है । धन्व = मरुस्थल के वाचक, और यकारोपध, वृद्धसंज्ञक देशवाचक प्रातिपदिक से शैषिक वुञ् प्रत्यय होता है । धन्वशब्द मरुदेश का वाचक है । उदा० पारेधन्वकः [ पोरधन्वनि जातः—

---

१. अत्र—'केऽण इति ह्रस्वः'—इत्याधिकः पाठोऽपि क्वचित् ।

२. 'शालजम्बुकः'—इति पाठा० ।

३. 'अचश्च' इति मुद्रितः पाठः ।

**वुञ् प्रत्ययो भवति शैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्—साङ्काश्यकः ( म० भा० )। काम्पिल्यकः॥**

**१५५०. प्रस्थपुरवहान्ताच्च ॥ १२२ ॥ ( १३४६ )**

**'वृद्धात्' 'इत्येव', 'देशे' इति च; अन्तशब्दः प्रत्येकमभिसम्बद्ध्यते। प्रस्थ, पुर, वह—इत्येवमन्ताद्देशवाचिनः प्रातिपदिकाद् वृद्धाद् वुञ्प्रत्ययो भवति शैषिकः। छस्यापवादः। मालाप्रस्थकः। नान्दीपुरकः ( म० भा० )। कान्तीपुरकः। पैलुवहकः। फाल्गुनीवहकः।**

**पुरान्तो रोपधः, तत उत्तरसूत्रेणैव सिद्धमप्रागर्थमिह ग्रहणम्॥**

**न्यासः**

धन्वनि जातः पारेधन्वकः, 'नस्तद्धिते' इति टिलोपः। ऐरावते जात ऐरावतकः ॥ १२१ ॥

**प्रस्थपुरवहान्ताच्च ॥ वृद्धादित्येवेति।** यदि तर्हि वृद्धादित्यनुवर्तते वृद्धाधिकारादेव स्वरूपग्रहणाभावात् कथं तदन्तविधिर्भविष्यति, न हि प्रस्थादेः केवलस्य वृद्धत्वं सम्भवति, किं तर्हि? तदन्यस्य, तत् किमन्तग्रहणेन? नैवम्; सत्यपि वृद्धाधिकारे यथा धन्वेति वृद्धग्रहणं हि देशस्य विशेषणं तथेहापि स्यात्, तन्निवृत्त्यर्थमन्तग्रहणं कृतम् ॥ १२२ ॥

**पदमञ्जरी**

( ५.४.१०८ ) इति टच् समासान्तः, वुञि यस्येति लोपः। यदि तु धन्वशब्दो नपुंसकलिङ्गः, ततः 'नपुंसकादन्यतरस्याम्' इति टजभावपक्षे वुञि 'नस्तद्धिते' इति टिलोपः। साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ ॥ १२१ ॥

**प्रस्थपुरवहान्ताच्च॥ वृद्धादिति वर्तते इति।** यद्येवमन्तग्रहणमनर्थकं प्रस्थादीनामवृद्धत्वादेव तदन्तविधिर्भविष्यति? नैतदस्ति; 'वा नामधेयस्य' ( वा० १५ ) इति प्रस्थादीनामेव पदानां वृद्धत्वसम्भवात्। अथाप्येवंनाम्नो देशस्याभावः, तथापि यथा पूर्वसूत्रे धन्वविशेषग्रहणं तथेहापि सम्भाव्येत नादीपुरं नाम वाहीकेषु ग्रामः, तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ, अयमपि वुञ् छस्यापवादः। इह त्वपवादविप्रतिषेधाद् वुञ् भवति। एवं च पातनप्रस्थकः, कौञ्जीवहक इत्यत्रापि वुञेव भवति ॥ १२२ ॥

**भावबोधिनी**

इस अर्थ में वुञ्, वु=अक करने पर उक्त रूप सिद्ध होता है। ] ऐरावतकः। यकारोपध से—साङ्काश्यकः। काम्पिल्यकः। [ साङ्काश्ये जातः, काम्पिल्ये जातः—इन अर्थों में वुञ्=अक करने पर रूप सिद्ध होता है ]॥ १२१॥

'वृद्धात्' और 'देशे' इनकी अनुवृत्ति होती है; 'अन्त' शब्द का सम्बन्ध प्रत्येक के साथ होता है। प्रस्थ, पुर, और वह—ये जिसके अन्त में है, वृद्धसंज्ञक देशवाचक उस प्रातिपदिक से शैषिक वुञ् प्रत्यय होता है। यह छ का अपवाद है। उदा० मालप्रस्थकः [ मालाप्रस्थे जातः— इस अर्थ में मालाप्रस्थ + वुञ्, वु=अक करने पर रूप सिद्ध होता है। ] नान्दीपुरकः [ नान्दीपुरे जातः ]। कान्तीपुरकः [ कान्तीपुरे जातः ]। पैलुवहकः [ पीलुवहे जातः ]। फाल्गुनीवहकः। [ फाल्गुनीवहे जातः ]।

पुरशब्दान्त रोपध [ रेफ जिसकी उपधा में है ]—इससे तो अग्रिम सूत्र द्वारा ही प्रत्यय सिद्ध है अतः अप्राक्= पूर्वदेश से भिन्न के लिये प्रस्तुत सूत्र में ग्रहण है ॥ १२२ ॥

**१५७१. रोपधेतोः प्राचाम् ॥ १२३ ॥ ( १३४७ )**

'वृद्धात्' इत्येव, 'देशे' इति च। तद्विशेषणं प्राग्ग्रहणम्। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। पाटलिपुत्रकाः। ऐकचक्रकाः ईतः खल्वपि—काकन्दी—काकन्दकः। माकन्दी—माकन्दकः। प्राचामिति किम् ? दात्तामित्रीयः। तपरकरणं विस्पष्टार्थम् ॥

**१५७२. जनपदतदवध्योश्च ॥ १२४ ॥ ( १३४८ )**

'वृद्धात्' इत्येव, 'देशे' इति च। तद्विशेषणं जनपदतदवधी। वृद्धाज्जनपदवाचिनस्तदवधिवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति शैषिकः। छस्यापवादः। आभिसारकः। आदर्शकः। जनपदावधेः खल्वपि—

**न्यासः**

**रोपधेतोः प्राचाम् ॥ ईकारान्ताच्चेति।** कथं पुनर्ज्ञायते-दीर्घस्येदं ग्रहणम्; न ह्रस्वस्येति ? सामर्थ्यात्। प्राग्ग्रहणं हि देशस्य विशेषणम्। वृद्धादिति वर्तते, न च वृद्धमिकारान्तं प्राग्देशवाच्यस्ति, तस्माद् दीर्घस्येदं ग्रहणमिति विज्ञायते। एकचक्राशब्दस्य तु 'एङ् प्राचाम्' इति वृद्धसंज्ञा।

अथ तपरकरणं किमर्थम् नेह किञ्चित्तस्य व्यावर्त्यमस्तीत्यत आह—**तपरकरणं विस्पष्टार्थम्।** असति हि तस्मिन् रोपध इति स्थिते गुणे कृते विभक्तौ च रोपधयोरिति निर्देशः स्यात्। तत्रैवं सन्देहः स्यात्—किं रोपधस्येदं ग्रहणम् ? उत रोपधस्येकारान्तस्येति ? तपरकरणे तु सति सन्देहो न भवति। ईरोपधादिति नोक्तम्, वैचित्र्यार्थम् ॥ १२३ ॥

**जनपदतदवध्योश्च ॥ तदवधेरपीत्यादि।** 'जनपदतदवध्योश्च'इत्यत्र तच्छब्देन सन्निहितत्वाज्जनपद एव परामृश्यते। न चायं षष्ठी समासः। षष्ठी समासे ह्यजनपदोऽपि योऽवधिस्ततोऽपि वुञ् प्रसज्येत। छ एव तस्येष्यते-

**पदमञ्जरी**

**रोपधेतोः प्राचाम् ॥ ईकारान्ताच्चेति।** ह्रस्वस्य तु ग्रहणं न भवति, तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्। **ऐकचक्रकाः इति।** एकचक्रा नाम प्राग्देशे नगरी, तत्र 'एङ् प्राचां देशे' इति वृद्धसंज्ञा, ककन्देन निर्वृत्ता नगरी काकन्दी, स्त्रीषु 'सौवीरसाल्वप्राक्ष' इत्यञ्। **तपरकरणं विस्पष्टार्थमिति।** न तु ह्रस्वप्लुतयोर्निवृत्त्यर्थम्; तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्, ईकारस्यानण्त्वेन तयोरग्रहणाच्च। असति तु तकारे 'रोपधयोः' इत्युच्यमाने किमत्र गृहीतमिति विस्पष्टं न ज्ञायेत। तकारे तु सति वर्णनिर्देशो निश्चीयते, तत्रैव तस्य प्रसिद्धत्वात्। 'ईकाररोपधयोः' इति निर्देशे गौरवप्रसङ्गः ॥ १२३ ॥

**जनपदतदवध्योश्च ॥ तदवधिरपि जनपद एव गृह्यते इति।** स चासाववधिरिति कर्मधारय आश्रीयते, न तु तस्यावधिस्तदवधिरिति षष्ठीसमास इत्यर्थः। तथा हि सति मौञ्जी नामावधिभूतो ग्रामः, तत्र भवो मौञ्जीय

**भावबोधिनी**

'वृद्धात्' और 'देशे' इनकी अनुवृत्ति होती है। इनका विशेषण प्राक्ग्रहण है। रोपध [ रेफ जिसकी उपधा में है ] और ईकारान्त, प्राग्देशवाची, वृद्धसंज्ञक से शैषिक वुञ् प्रत्यय होता है। यह 'छ' का अपवाद है। उदा०—पाटलिपुत्रकाः। ऐकचक्रका [पाटलिपुत्रे जाताः, एकचक्रे जाताः—इन अर्थों में वुञ्, वु=अक, आदिवृद्धि।] ईकारान्त से भी—काकन्दी [ नामक नगर में जात ]—काकन्दकः। [ माकन्दीनगरे जातः ] माकन्दकः। पूर्वदेश का—इसका क्या लाभ है ? दात्तामित्रीयः [ यह पूर्वदेश का नहीं है। अतः वुञ् न होकर सामान्य 'छ' प्रत्यय होता है। ] ईत् में तपरकरण स्पष्टता के लिए है। [ तत्काल का ग्रहण कराने के लिए नहीं है। ] ॥ १२३ ॥

'वृद्धात्' और 'देशे' इनकी अनुवृत्ति होती है। इनके विशेषण हैं—जनपद और इनकी अवधि=सीमा। जनपद के और जनपद रूपी अवधि=सीमा के वाचक, वृद्धसंज्ञक प्रातिपदिक से शैषिक वुञ् प्रत्यय होता है। यह 'छ' का अपवाद है। उदा०—आभिसारकः [ अभिसारे जातः—वुञ्, वु=अक, आदिवृद्धि। ] आदर्शकः [ आदर्शे जातः ]। जनपद रूपी

औपुष्टकः । श्यामायनकः ।

**तदवधेरपि जनपद एव गृह्यते, न ग्रामः । किमर्थं तर्हि ग्रहणम् ? बाधकबाधनार्थम् । गर्तोत्तरपदाच्छं बाधित्वा वुञेव जनपदावधेर्भवति । त्रैगर्त्तकः ॥**

## १५९३. अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥ ( १३४९ )

**'जनपदतदवध्योः' इत्येव । अवृद्धाद् वृद्धाच्च जनपदात्तदवधिवाचिनश्च बहुवचनविषयात्प्रातिपदिकाद् वुञ्प्रत्ययो भवति शैषिकः । अण्छयोरपवादः । अवृद्धाज्जनपदात्तावत्—अङ्गाः । वङ्गाः । कलिङ्गाः । आङ्गकः ।**

**न्यासः**

मौञ्जी नाम वाहीकानामवधिर्ग्रामः, तत्र भवो मौञ्जीय इति । तस्मात् समानाधिकरण एवायं समासः—स एव जनपदोऽवधिर्मर्यादा तदवधिरिति । तेन जनपदावधिरेव जनपदा एव गृह्यन्ते, न ग्रामः ।

**किमर्थं तर्हि तदवधिग्रहणमिति** । यदि तदवधिरपि जनपद एव गृह्यते, निरर्थकं तर्हि तस्य ग्रहणम्, 'जनपदाच्च' इत्येतावदेव वक्तव्यमित्यभिप्रायः । **बाधकबाधनार्थमिति** । गर्तोत्तरपदाद् वक्ष्यमाणश्छ एव परत्वाद् विशेषविहितत्वाच्च बाधकः, तस्य बाधनार्थं तदवधिग्रहणम् । तेन हि त्रिगर्तेषु भवस्त्रैगर्तक इत्यत्रोत्तरसूत्रेण गर्तोत्तरपदाच्छं बाधित्वा वुञेव भवति ॥ १२४ ॥

**अवृद्धादपि बहुवचनविषयात् ॥ अण्छयोरपवाद इति** । अवृद्धादणोऽपवादः, वृद्धाच्छस्य । अथ विषयग्रहणं किमर्थम्, विनापि तेन विशेषो लभ्यत एव । कथम् ? इह जनपदतदवधिशब्दाभ्यां समानाधिकरणत्वाद् बहुवचनशब्दो न पारिभाषिको विज्ञायते, किं तर्हि ? अन्वर्थः—बहूनामर्थानां वचनो यो जनपदस्तदवधिश्चेति । यश्च

**पदमञ्जरी**

इत्यत्रापि स्यात् । कस्य पुनरसाववधिरिति चेत् ? सन्निधानाज्जनपदस्यैवेति विज्ञायते ।

**गर्तोत्तरपदाच्छं बाधित्वेति** । अन्यथा तु गर्तोत्तरपदाच्छो भवतीत्यस्यावकाशः—वृकगर्तीयः' जनपदवुञोऽवकाशः—आङ्गकः; त्रिगर्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात्, ततश्च गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् पूर्वप्रतिषिद्ध इति पूर्वविप्रतिषेधः पठितव्यो भवति । **त्रैगर्तक इति** । उत्तरसूत्रेण वुञ् । एतेनोत्तरत्र तदवधिग्रहणस्योपयोगं दर्शयति ॥ १२४ ॥

**अवृद्धादपि बहुवचनविषयात् ॥ अण्छयोरपवाद इति** । अवृद्धादणोऽपवादो वृद्धाच्छस्य । इहावृद्धादपि बहुवचनादित्येव सिद्धम्, यौगिको बहुवचनशब्दः—बहूनामर्थानां वचनो बहुवचन इति । यदि वा बहुवचनाद्

**भावबोधिनी**

अवधिवाचक से भी होता है—औपुष्टकः [ उपुष्टे जातः ] श्यामायनकः ।[ श्यामायने जातः। ]

जनपद की अवधि भी जनपद ही लिया जाता है, न कि गाँव । तब अवधिग्रहण का क्या फल है ? बाधक का बाध करना । गर्त जिनके उत्तरपद हैं, उनसे 'छ' का बाध करके जनपदरूपी अवधि से वुञ् ही होता है । उदा०—त्रैगर्तकः । [ त्रिगर्ते जातः—यहाँ वुञ् होता है । ]

**विमर्श**—'जनपद-तदवध्योश्च' ( पा० सूत्र ४।२।२४ ) यहाँ तदवधि शब्द में 'तस्य अवधिः' यह षष्ठीतत्पुरुष नहीं है, अपितु 'स चासौ अवधिः' यह कर्मधारय है । अतः जनपद और उसकी अवधि भी जनपद मानकर प्रत्यय किया जाता है ।। १२४ ।।

'जनपदतदवध्योश्च' इसकी अनुवृत्ति होती है । अवृद्ध और वृद्ध, जनपदवाचक और जनपदरूपी अवधिवाचक, बहुवचनविषयक प्रातिपदिक से शैषिक वुञ् प्रत्यय होता है । यह अण् और छ दोनों का अपवाद है । अवृद्ध जनपद—अङ्गाः, वङ्गाः, कालिङ्गाः । [ इनमें उत्पन्न होने वाला—इस अर्थ में—] आङ्गकः, वाङ्गकः, कालिङ्गकः । [ बङ्ग +

---

१. 'ऐकचक्रः' इति मुद्रितः पाठः मूले तु 'ऐकचक्रकाः' ।

**वाङ्गकः । कालिङ्गकः । अवृद्धाज्जनपदावधेः—अजमीढाः । अजक्रन्दाः । आजमीढकः । आजक्रन्दकः । वृद्धाज्जनपदात्—दार्वाः । जाम्ब्वाः । दार्वकः । जाम्ब्वकः । वृद्धाज्जनपदावधेः—कालञ्जराः । वैकुलिशाः । कालञ्जरकः । वैकुलिशकः ।**

**विषयग्रहणमनन्यत्र भावार्थम् । जनपदैकशेषबहुत्वे मा भूत् । वर्तन्यः । वार्तनः**[1] **।**

**अपिग्रहणं किम्, यावता वृद्धात्पूर्वेणैव सिद्धम् ? तक्रकौण्डिन्यन्यायेन बाधा मा विज्ञायीति समुच्चीयते ॥**

**न्यासः**

बहूनामर्थानां वचनः सोऽर्थान् बहून् ब्रुवन् सामर्थ्यादेव बहुवचन विषयो भवति ? इत्याह—**विषयग्रहणमित्यादि ।** अनन्यत्रभावः कथं नाम लभ्यत इत्येवमर्थं विषयग्रहणम् । अनन्यत्रभावः किमर्थमिष्यत इत्याह—जनपदैकदेशः क्रियते । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तद् बहूनां वाचको भवति । ततश्च यदि विषयग्रहणं न क्रियते ततो वर्तनीषु भव इति वुञ् स्यात् । विषयग्रहणे तु सति न भवति, अनन्यत्रभावो विषयः । तेनैवं विज्ञायते—बहुवचनं न यो व्यभिचरतीति । यश्चैकशेषः स बहुवचनं व्यभिचरति, तस्य हि विवक्षाभावे बहुत्वात् । द्वयोरपि च कदाचिद् वृत्तेः ।

**अपिग्रहणमिति ।** अपिग्रहणं हि वृद्धादपि यथा स्यादित्येवमर्थं क्रियते । वृद्धात् पूर्वेणैव सिद्धः प्रत्ययः, तत् किमपिग्रहणेन ? **तक्रकौण्डिन्यन्यायेनेति ।** यथा 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति सामान्येन वृत्तस्य दधिदानस्य बिशेषे वर्तमानेन तक्रदानेन बाधा क्रियते, तथेहापि बहुवचनविषये च सामान्येन प्रवृत्तस्य पूर्वयोगस्य बहुवचनविषये वर्तमानेनानेन योगेन बाधा विज्ञायते । तस्माद् वृद्धादपि यथा स्यादित्यपिशब्देन समुच्चीयते ॥ १२५ ॥

**पदमञ्जरी**

बहुवचनान्तादित्यर्थः, नार्थो विषयग्रहणेन ? तत्राह—**जनपदैकशेषबहुत्व इति ।** जनपदस्यैकशेषवशेन यद्बहुत्वं तत्रेत्यर्थः । **वर्तन्य इति ।** अवयवभेदेन भेदमाश्रित्य एकशेषः । नायं नित्यबहुवचनान्तः; द्वयेकयोरपि दर्शनात् । **तक्रकौण्डिन्यन्यायेनेति ।** पूर्वसूत्रे हि जनपदसामान्ये वृद्धाद् वुञ् विहितः, यथा—ब्राह्मणसामान्ये दधिदानम् । इह तु बहुवचनविषये विशेषेऽवृद्धाद् वुञ्, यथा—कौण्डिन्ये तक्रदानम्, ततश्च बहुवचनादपि वृद्धाद् वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद् वुञ् वृद्धाद् वुञो बाधकः स्यादित्यपिशब्देन समुच्चीयत इत्यर्थः । इह बहुवचनविषयादित्येतावता सिद्धमवृद्धार्थोऽयमारम्भः । वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम् ॥ १२५ ॥

**भावबोधिनी**

वुञ् = वु = अक, आदिवृद्धि । इसी प्रकार सर्वत्र होता है । ] अवृद्ध जनपदरूपी अवधिवाचक—अजमीढाः, अजक्रन्दाः । [ इनमें उत्पन्न होने वाला—इस अर्थ में वुञ् करने पर ] आजमीढकः आजक्रदकः । वृद्ध जनपद-वाचक—दार्वाः जाम्बाः, [ इनमें उत्पन्न होनेताला—इस अर्थ में—] दार्वकः, जाम्ब्वकः । वृद्ध जनपदरूपी अवधिवाचक—कालञ्जतराः वैकुलिशाः [ इनमें उत्पन्न होने वाला —इस अर्थ में—] कालञ्जरकः, वैकुलिशकः ।

विषय का ग्रहण अनन्यत्र [ उससे भिन्न में नहीं ] होने के लिये है । जनपदों का एकशेष करके बहुवचन में न हो । वर्तन्यः [ वर्तनी च वर्तनी च वर्तनी च—वर्तन्यः यह भी बहुत्व का वाचक हो जाता है । इसमें जात आदि अर्थ में वुञ् न हो —इसके लिये विषयग्रहण है । अतः वर्तनी से अण् ही होता है—] बार्तनः ।

'अपि' का ग्रहण किसलिये है क्योंकि वृद्ध से तो पहले वाला सूत्र ही प्रत्यय करता है ? तक्रकौण्डिन्यन्याय से बाध न हो—इसके लिये समुच्चय किया गया है ।

---

१. 'वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, वर्तनीषु भव इति वुञ् न भवति; सहविवक्षाया अभावे बहुवचनाभावात् । वर्तन्यः । वार्तनः'–इति पाठा० ।

**१५५४. कच्छाग्निवक्त्रगर्तोत्तरपदात् ॥ १२६ ॥ ( १३५० )**

'देशे' इत्येव । उत्तरपदशब्दः प्रत्येकमभिसम्बद्धचते । कच्छाद्युत्तरपदाद्देशवाचिनः प्रातिपदिकाच्च वृद्धादवृद्धाच्च वुञ् प्रत्ययो भवति शैषिकः । छाणोरपवादः । दारुकच्छकः । पैप्पलीकच्छकः । काण्डाग्नकः । वैभुजाग्नकः । ऐन्द्रवक्त्रकः । सैन्धुवक्त्रकः । बाहुगर्तकः । चाक्रगर्तकः ॥

**१५५५. धूमादिभ्यश्च ॥ १२७ ॥ ( १३५१ )**

**धूमादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति शैषिकः । अणादेरपवादः । धौमकः । खाण्डकः**[1] ।

**न्यासः**

**कच्छाग्निवक्त्रगर्तोत्तरपदात् ।** कच्छशब्दार्थमुत्तरपदग्रहणम्, स हि केवलोऽपि देशे वर्तते । इतरेषां तु केवलनां देशे वृत्त्यसम्भवात् सामर्थ्यादेव तदन्तविधिर्लभ्यत इतीतरान् प्रत्युत्तरपदग्रहणमनर्थकम् । 'कच्छाग्निवक्त्रगर्तान्तात्' इति नोक्तम्, बहुच्पूर्वान्मा भूत् । यदा हि कच्छदेशेन देशान्तरस्य गुणसाम्ये सतीषदसमाप्तः कच्छदेश इति कच्छशब्दाद् बहुच् क्रियते तदा बहुकच्छशब्दो देशवचन इति । अन्तग्रहणे तु सति ततोऽपि प्रत्ययः स्यात्, उत्तरपदग्रहणान्न भवति । **दारुकच्छक इति ।** कच्छशब्दस्योत्तरपदस्य वृद्धस्योदाहरणम् । **पैप्पलीकच्छक** इत्यवृद्धस्योदाहरणम् । एवमग्न्याद्युत्तरपदानामपि । एकमवृद्धस्योदाहरणम् । अपरं वृद्धस्य वेदितव्यम् ॥ १२६ ॥

**धूमादिभ्यश्च ॥ अणादेरपवाद इति ।** आदिशब्देन कच्छादीनां ग्रहणम् । तत्र देशवचना अवृद्धा ये धूमादयस्तेभ्योऽणोऽपवादः । ये तु वृद्धास्तेभ्यश्छस्य । य उदीच्यग्रामास्तेभ्योऽणः । ये वाहीकग्रामास्तेभ्यष्ठञ्ञिठयोः ।

**पदमञ्जरी**

**कच्छाग्निवक्त्रगर्तोत्तरपदात् ॥** कच्छशब्दार्थमुत्तरपदग्रहणम् । स हि केवलोऽपि कूलाख्ये देशे वर्तते, इतरेषां तु केवलानां देशवृत्त्यसम्भवादेव तदन्तविधिः सिद्धः । कच्छाद्यन्तादित्युच्यमाने बहुच्पूर्वादपि स्यादित्युत्तरपदग्रहणम् ॥ १२६ ॥

**धूमादिभ्यश्च ॥ अणादेरपवाद इति ।** अवृद्धेभ्यो धूमादिभ्योऽणोऽपवादः, वृद्धेभ्यश्छस्य, उदीच्यग्रामे-

**भावबोधिनी**

**विमर्श**—'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इसका अभिप्राय यह है प्रथम वाक्य द्वारा सभी ब्राह्मणों को दधिदान सिद्ध है । चूंकि कौण्डिन्य भी ब्राह्मण है अतः उसे भी दही मिलना सिद्ध है । उसे दधिदान रोकने के लिये द्वितीय वाक्य 'तक्रं कौण्डिन्याय' है । इससे दधिदान बाधित हो जाता है । इसी प्रकार यहाँ वृद्ध से बाध न होने लग जाय इस कारण पुनः वृद्ध का ग्रहण करके उसका समुच्चय किया गया है ॥ १२५ ॥

'देशे' इसकी अनुवृत्ति होती है । उत्तरपद शब्द का सम्बन्ध प्रत्येक के साथ होता है । कच्छ आदि जिसके उत्तरपद हैं ऐसे देशवाचक प्रातिपदिक से और वृद्धसंज्ञक एवम् अवृद्धसंज्ञक प्रातिपदिक से शैषिक वुञ् प्रत्यय होता है । छ और अण् का अपवाद है । उदा० दारुकच्छकः [ दारुकच्छे जातः—इस अर्थ में वुञ् = वु = अक करने पर रुप सिद्ध होता है । ] पैप्पलीकच्छकः [ पिप्पलीकच्छे जातः—इस अर्थ में पिप्पलीकच्छ + वुञ् ] काण्डाग्नकः । [ काँण्डाग्नौ जातः—इस अर्थ में वुञ् = वु = अक, भसंज्ञा, इलोप ] । वैभुजाग्नकः [ विभुजाग्नौ जातः—इस अर्थ में विभुजाग्नि से वुञ् ] ऐन्द्रवक्रकः [ इन्द्रवक्रे जातः—इस अर्थ में वुञ् ] सैन्धुवक्रकः [ सिन्धुवक्रे जातः ] । बाहुगर्तकः [ बहुगर्ते जातः ] । चाक्रगर्तकः [ चक्रगर्ते जातः ] इन सभी में वुञ् करने कर आदिवृद्धि और वु = अक होकर रुप सिद्ध होते हैं । ] ॥ १२६ ॥

देशवाची धूम आदि प्रातिपदिकों से शैषिक वुञ् प्रत्यय होता है । यह अण् आदि का अपवाद है । उदा०—धौमकः । खाण्डकः । [ धूमे जातः—इस अर्थ में वुञ् करके आदिवृद्धि वु का अक आदेश ] । इसमें पाथेय शब्द का भी पाठ है,

१. 'खाडण्डकः' इति पाठा० ।

पाथेयशब्दः पठ्यते, तस्य योपधत्वादेव वुञि सिद्धे सामर्थ्याददेशार्थं ग्रहणम् । तथा विदेहानर्तशब्द-योर्जनपदलक्षणे वुञि सिद्धेऽदेशार्थः पाठः । विदेहानां क्षत्रियाणां स्वं वैदेहकम् । आनर्तकम् । समुद्रशब्दः पठ्यते, तस्य नावि मनुष्ये च वुञिष्यते—सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र न भवति—सामुद्रं जलमिति ।

धूम । खण्ड[1] । शशादन । आर्जुनाद । दाण्डायनस्थली । माहकस्थली । घोषस्थली । माषस्थली । राजस्थली । राजगृह । सत्रासाह । भक्षास्थली । मद्रकूल । गर्त्तकूल । आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीय । बर्बर । वर्चगर्त । विदेह । आनर्त्त । माठर । पाथेय । घोष । शिष्य । मित्र । वल । आराज्ञी । धार्तराज्ञी । अवयात । तीर्थ । ❀ कूलात्सौवीरेषु ❀ ( ग० सू० ९७ ) । ❀ समुद्रान्नावि मनुष्ये च ❀ ( ग० सू० ९८ ) । कुक्षि । अन्तरीप । द्वीप । अरुण । उज्जयिनी । दक्षिणापथ । साकेत[2] ।

## १५५६. नगरात् कुत्सनप्रावीण्ययोः ॥ १२८ ॥ ( १३५२ )

नगरशब्दाद् वुञ् प्रत्ययो भवति शैषिकः कुत्सने प्रावीण्ये च गम्यमाने । प्रत्ययार्थविशेषणं चैतत्—कुत्सने प्रावीण्ये च जातादौ प्रत्ययार्थ इति । कुत्सनम् = निन्दनम् । प्रावीण्यम् = नैपुण्यम् ।

### न्यासः

**तस्य योपधत्वादेव वुञि सिद्ध इति** । 'धन्वोपधाद् वुञ्' इत्यनेन । **जनपदलक्षणे वुञि सिद्ध इति** । 'अवृद्धादपि' इत्यादिना । **कूलात् सौवीरेषु इति** । कुलशब्दाद् वुञ् भवति सौवीरेषु । कौलको भवति सौवीरश्चेत्, कौलोऽन्यत् ॥

**नगरात् कुत्सनप्रावीण्ययोः** ॥ **नागरा ब्राह्मणा इति** । अण् । ननु च 'नगर-माहिष्मती' इति नगरशब्दः कत्त्र्यादिषु पठ्यते, ततो ढकञा भवितव्यम्, तत् कथं नागरा इति प्रत्युदाह्रियत इत्याह—**कत्त्र्यादिष्वित्यादि** ।

### पदमञ्जरी

भ्यस्त्वञः, वाहीकग्रामेभ्यष्ठञ्ञिठयोः । **कूलात्सौवीरेष्विति** । कौलको भवति सौवीरेषु, कौलमन्यत्र ॥ १२७ ॥

**नगरात् कुत्सनप्रावीण्ययोः** ॥ केनेदं मुषितमिति प्रश्नः, इह **नगरे मनुष्येणेत्युत्तरम्** । **सम्भाव्यत**

### भावबोधिनी

यकारोपध होने के कारण उससे वुञ् प्रत्यय सिद्ध है, अतः सामर्थ्य से देशभिन्न अर्थ में वुञ् करने के लिए इसका ग्रहण है । इसी प्रकार विदेह और आनर्त शब्दों से जनपदलक्षण वुञ् प्रत्यय के सिद्ध रहने पर अदेश=देशभिन्न अर्थ के लिए पाठ है । [ उदा० ] विदेह क्षत्रियों का स्व = धन—वैदेहकम् । [ आनर्तानां क्षत्रियाणां स्वम् ] आनर्त्तकम् ।

समुद्र शब्द का पाठ है, इससे नौका और मनुष्य अर्थ में वुञ् इष्ट है—सामुद्रिका नौका, सामुद्रको मनुष्यः । इनसे भिन्न अर्थ में [ अण् ही होता है ] सामुद्रं जलम् ।

[ इस गण में पठित शब्द ] धूम । खण्ड । शशादन । आर्जुनाद । दाण्डायनस्थली । माहकस्थली । घोषस्थली । माषस्थली । राजस्थली । राजगृह । सत्रासाह । भक्षास्थली । मद्रकूल । गर्तकूल । आञ्जीकूल । द्व्याहाव । त्र्याहाव । संहीप । वर्बर । वर्चगर्त । विदेह । आनर्त । माठर । पाथेय । घोष । शिष्य । मित्र । बल । आराज्ञी । धार्तराज्ञी । अवयात । तीर्थ । ❀ कूल शब्द से सौवीर देश अर्थ में । ❀ ❀ समुद्र से नाव और मनुष्य अर्थ में । ❀ कुक्षि । अन्तरीप । द्वीप । अरुण । उज्जयिनी । दक्षिणापथ । साकेत ॥ १२७ ॥

कुत्सन और प्रावीण्य अर्थ गम्यमान रहने पर नगर शब्द से वुञ् शैषिक प्रत्यय होता है । यह प्रत्ययार्थ का विशेषण है—कुत्सन और प्रावीण्य में जात आदि अर्थों में प्रत्ययार्थ शक्त है । [ भाव यह है कि 'जात' आदि प्रत्ययार्थ हैं, उनमें कुत्सन और प्रवीणता की विशेषणतया प्रतीति होने पर यह प्रत्यय होता है । ] कुत्सन = निन्दा करना । प्राबीण्य = निपुण होना । ]

---

१. 'खडण्ड'—इति पाठा० ।

२. मानवल्ली, वल्ली, सुराज्ञी—एतेऽत्र गणेऽधिकाः शब्दाः कुत्रचित् ।

केनायं मुषितः पन्था गात्रे पक्ष्मालिधूसरः ।

इह नगरे मनुष्येण, सम्भाव्यत एतन्नागरकेण । चौरा हि नागरका भवन्ति ।

केनेदं लिखितं चित्रं मनोनेत्रविकाशि यत् ।

इह नगरे मनुष्येण, सम्भाव्यत एतन्नागरकेण । प्रवीणा हि नागरका भवन्ति ।

कुत्सनप्रावीण्ययोरिति किम् ? नागरा ब्राह्मणाः । कत्र्यादिषु तु संज्ञाशब्देन साहचर्यात्संज्ञानगरं पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम् ॥

**न्यासः**

द्विविधो नगरशब्दः—जातिवचनः, संज्ञाशब्दश्च । तयोः कत्र्यादिषु माहिष्मतीशब्देन साहचर्यात् संज्ञाशब्दः पठ्यते । तत्र जातिशब्दान्नागरा इति प्रत्युदाहृतम् । संज्ञाशब्दे तु नागरेयक इति प्रत्युदाहर्तव्यम् ॥ १२८ ॥

**पदमञ्जरी**

एतदित्यादि प्रष्टुर्वचनम् । संज्ञानगरं पठ्यत इति । माहिष्मतीशब्दसाहचर्यात् संज्ञानगरं संज्ञाभूतो नगरशब्द इत्यर्थः ॥ १२८ ॥

**भावबोधिनी**

गात्र ( शरीर ) में पुष्पपरागधूलि समूह से फल अर्थात् सर्वत्र पराग से भरा हुआ यह रास्ता किसने चुरा लिया ? [ यह प्रश्न है । ]

यहाँ नगर में मनुष्य ने [ चुरा लिया । यह उत्तर है । ] यह नागरक=नगर में कुत्सित पुरुष द्वारा सम्भव है । [ पूछने वाले का है ] क्योंकि चोर नागरक [ =कुत्सित नगरजन्मा ] होते हैं ।

जो मन और नेत्र दोनों को विकसित=आनन्दित करा देने वाला है, यह चित्र किसके द्वारा बनाया गया है ? [ यह प्रश्न है । ]

यहाँ नगर में मनुष्य द्वारा [ बनाया गया है— यह उत्तर है । ] नागरक=नगर में जन्मे प्रवीण पुरुष द्वारा यह बनाया जाना सम्भव है । [ यह पूछने वाले का कथन है । ] क्योंकि नागरक [ नगर में जन्मे लोग ] प्रवीण=निपुण होते हैं । कुत्सन और प्रवीणता में —इसका क्या प्रयोजन है ? नागराः ब्राह्मणाः [ नगर वाले ब्राह्मण । ब्राह्मण न तो कुत्सित हैं और न किसी कला कर्म में निपुण । अतः यह प्रत्यय न होकर सामान्य 'अण्' प्रत्यय ही होता है । ]

कत्र्यादि गण [ कत्र्यादिभ्यो ढकञ् ४।२।९५ ] में [ माहिष्मती–इस ] संज्ञावाचक शब्द के साहचर्य के कारण संज्ञाभूत 'नगर' शब्द पढ़ा गया है, उस संज्ञा शब्द के ग्रहण से तो 'नागरेयकम्' यह प्रत्युदाहरण देना चाहिये ।

**विमर्श**—जात=जात उत्पन्न होने वाला आदि अर्थों के रहने पर ही जब कुत्सन या प्रवीणता अर्थ की भी प्रतीति होती है, तब प्रस्तुत सूत्र 'नगर' शब्द से 'वुञ्'=अक प्रत्यय करता है । अतः विशिष्ट अर्थ में 'नागरक' और सामान्य में 'नागर' ये रूप होते हैं ।

इसके अतिरिक्त कत्र्यादिगण में भी 'नगर' शब्द पठित है । यह संज्ञावाची है, अतः इससे निष्पन्न 'नागरेयक' यह तीसरा रूप भी होता है । इसमें 'कत्र्यादिभ्यो ढकञ्' ४।२।९५ से ढकञ्=एय प्रत्यय होता है ।

नगर शब्द दो प्रकार का है—(१) जातिवाचक और (२) संज्ञावाचक । जातिवाचकता मात्र की प्रतीति में अण् प्रत्यय होकर (१) 'नागरः' । जातिवाचकता के साथ कुत्सन और प्रवीणता की प्रतीति में वुञ् होने पर 'नागरकः' ये दो रूप होते हैं । किसी की संज्ञा होने पर ढकञ् होने पर (३) 'नागरेयकः' यह तीसरा रूप होता है ॥ १२८ ॥

## १५५७. अरण्यान्मनुष्ये ॥ १२९ ॥ ( १३५३ )

**अरण्यशब्दाद् वुञ् प्रत्ययो भवति शैषिको मनुष्येऽभिधेये । औपसंख्यानिकस्य णस्यापवादः । आरण्यको मनुष्यः ।**

**❀ पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् ❀ ( म० भा० ४. २. १२९ भाष्य ) । आरण्यकः पन्थाः । आरण्यकोऽध्यायः । आरण्यको न्यायः । आरण्यको विहारः । आरण्यको मनुष्यः । आरण्यको हस्ती ।**

**❀ वा गोमयेषु ❀ ( म० भा० ) । आरण्याः, आरण्यका गोमयाः ।**

**एतेष्विति किम् ? आरण्याः पशवः ॥**

## १५५८. विभाषा कुरुयुगन्धराभ्याम् ॥ १३० ॥ ( १३५४ )

**न्यासः**

**अरण्यान् मनुष्ये ॥ औपसंख्यानिकस्य णस्यापवाद इति** । 'अरण्याण्णः' इत्युपसंख्यानात् प्राप्तस्य ।

**पथ्यध्यायन्यायेत्यादि** । एषु पथ्यादिषु वुञ्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्— 'धूमादिभ्यश्च' इत्यतश्चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन पथ्यादिषु वुञ्भवति ।

**वा गोमयेष्विति** । गोमयेषु वाच्येषु वा वुञ्भवतीति । स तु तस्यैव चकारस्यानुक्त-समुच्चयार्थस्यानुवृत्ते-र्वक्ष्यमाणस्य विभाषाग्रहणस्योभयोः शेषभूतत्वाल्लभ्यते । यदि तर्हि वक्ष्यमाणं विभाषाग्रहणमुभयोर्योगयोः शेषभूतं पथ्यादिष्वपि विकल्पेन विधिः स्यात् ? नैष दोषः, व्यवस्थितविभाषा हि सा, तेन गोमयाद् विकल्पेन विधिर्भवति, पथ्यादिषु नित्यमिति ॥ १२९ ॥

**विभाषा कुरुयुगन्धराभ्याम् ॥ सैवा युगन्धरार्था विभाषेति** । न कुरुशब्दार्था । तत्र कच्छादिपाठाद् विनापि

**पदमञ्जरी**

**अरण्यान्मनुष्ये ॥ औपसंख्यानिकस्येति** । 'अरण्याण्णो वक्तव्यः' ( वा० ४३७ ) इत्युपसंख्यानप्राप्तस्य ।

'मनुष्ये' इत्यल्पमिदमुच्यते, इत्याह—**पथ्यध्यायेति** । **आरण्यकोऽध्याय इति** । योऽरण्येऽधीयते उपनिषद्भागः स उच्यते । विहारः = क्रीडा ॥ १२९ ॥

**विभाषा कुरुयुगन्धराभ्याम् ॥ कुरुशब्दः कच्छादिषु पठ्यते इति** । कथं तर्हि कुरुशब्दाद् वुञः प्राप्तिरुक्ता,

**भावबोधिनी**

मनुष्य अर्थ की प्रतीति रहने पर 'अरण्य' शब्द से शैषिक 'वुञ्' प्रत्यय होता है । औपसंख्यानिक [ 'अरण्याण्णः' इस वचन से प्राप्त ] 'ण' का अपवाद यह वुञ् है । उदा० —आरण्यकः मनुष्यः । [ जंगली आदमी । ]

❀ पन्था, अध्याय, न्याय, विहार, मनुष्य और हाथी—इन अर्थों में 'अरण्य' शब्द से 'वुञ्' होता है । उदा०—आरण्यकः पन्थाः [ जंगली रास्ता ] । आरण्यकः अध्यायः [ जंगल में जो पढ़ा जाय । आरण्यकः न्यायः [ जंगली न्याय ] । आरण्यकः विहारः [ जंगली खेल ] । आरण्यकः मनुष्यः [ जंगली आदमी ] । आरण्यकः हस्ती [ जंगली हाथी ] ।

❀ गोमय = गाय के विकार वाच्य रहने पर वुञ् विकल्प से होता है । ❀ उदा०—आरण्याः आरण्यकाः गोमयाः । [ जब वुञ् = अक होता है तो 'आरण्यकः' और पक्ष में 'ण' होकर 'आरण्यः' ये दो रूप होते हैं । ]

उपर्युक्त में ही वुञ् हो—इसका क्या प्रयोजन है ? आरण्याः पशवः । [ जंगली जानवर । यहाँ केवल 'ण' ही होता है । ]

**विमर्श**—ये वार्तिक प्रस्तुत सूत्र पर भाष्य में नहीं उपलब्ध होते हैं ।। १२६ ॥

'कुरु' तथा 'युगन्धर' इन शब्दों से शैषिक 'वुञ्' प्रत्यय विकल्प से होता है । उदा०—कौरवकः, कौरवः [ कुरुदेश में होने वाला । यहाँ कुरु + वुञ = वु = अक, आदिवृद्धि करने पर कौरु + अक; 'ओर्गुणः' सूत्र से 'उ' का गुण

**कुरु, युगन्धर—इत्येताभ्यां विभाषा वुञ् प्रत्ययो भवति शैषिकः। कौरवकः, कौरवः। यौगन्धरकः, यौगन्धरः (म० भा०)। जनपदशब्दावेतौ, ताभ्याम् 'अवृद्धादपि' इति नित्ये वुञि प्राप्ते विकल्प उच्यते।**

**कुरुशब्दः कच्छादिष्वपि पठ्यते, तत्र वचनादणपि भविष्यति। सैषा युगन्धरार्था विभाषा[1]। मनुष्यतत्स्थयोः (४. २. १३४) तु कुरुशब्दान्नित्य एव वुञ्प्रत्ययो भवति। कौरवको मनुष्यः, कौरवकमस्य हसितम् (म० भा०) इति॥**

**१५५९. मद्रवृज्योः कन्॥ १३१॥ (१२६५)**

**मद्रवृजिशब्दाभ्यां कन् प्रत्ययो भवति शैषिकः। जनपदवुञोऽपवादः। मद्रेषु जातः मद्रकः। वृजिकः॥**

**न्यासः**

विभाषाग्रहणेनाणा भवितव्यम्। ननु युगन्धर-शब्दादप्यणि 'अवृद्धादपि बहुवचनविषयात्' इति नित्य एव वुञि प्राप्ते वचनमनित्यार्थं भविष्यति, नित्ये हि वुञि पुनरारम्भोऽनर्थकः स्यात्, तस्माद् युगन्धरार्थाऽपि विभाषा न प्रसज्येत? नैतत्, पुनरारम्भो विपर्ययेणापि शक्यते समर्थयितुम्। जनपदलक्षणो यो वुञ् स विभाषा, अयं तु नित्य इति। अस्मात् तु युगन्धारार्थं विभाषाग्रहणं कर्तव्यम्। मनुष्यतत्स्थयोस्तु कुरुशब्दान्नित्य एव वुञ्भवति, कच्छादिषु पाठसमर्थ्यात्। अन्यथानयैव विभाषया वुञणोः सिद्धत्वात् कच्छादि पाठोऽनर्थकः स्यात्, अनवकाशत्वात्॥ १३०॥

**मद्रवृज्योः कन्॥ जनपदवुञोऽपवाद इति।** 'अवृद्धादपि इत्यादिप्राप्तस्य। मद्रवृज्योः कन्निति घ्यन्तस्य

**पदमञ्जरी**

ताभ्यामवृद्धादपीति नित्यं वुञि प्राप्त इति? आद्यप्राप्त्यभिप्रायेण तदुक्तम्, न पुनर्योऽनेन विकल्पेन बाध्यते तदभिप्रायेण। येऽपि पठन्ति—वुञि सिद्ध इति, प्राप्त इत्यर्थः। यथा सिद्धे सत्यारम्भो नियमार्थ इति कुरुशब्दार्थं विभाषाग्रहणं न कर्तव्यमिति प्रतिपादयिष्यन्नाह—**कुरुशब्दः कच्छादिषु पठ्यत इति।** ततः किमित्यत्राह—**तत्रेति।** किमर्थं तर्हि विभाषाग्रहणमित्याह—**सैषेति।** ननु युगन्धरशब्दादपि 'अवृद्धादपि' इति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते? नैवं शक्यम्; विपर्ययोऽपि स्यात्। युगन्धरशब्दान्नित्यो वुञ् 'अवृद्धादपि' इत्यनेन तु विभाषित इति पुनरारभो ह्येवमप्युपपद्यते। **मनुष्यतत्स्थयोस्त्विति।** एतच्च कच्छादिषु पाठसामर्थ्यल्लिभ्यते, अन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात्॥ १३०॥

**मद्रवृज्योः कन्॥** मद्रशब्दः 'स्फायितञ्चि' (द० उ० ८.३१) इति रक्प्रत्ययान्तः, 'वृजी वर्जने'

**भावबोधिनी**

'ओ' तथा इस 'ओ' का 'अव्' आदेश करने पर कौरव्‌अक=कौरवकः। पक्ष में 'कच्छादिभ्यश्च' ४।२।१३३ से अण् होता है। प्रक्रिया पूर्ववत् ही है।] यौगन्धरकः, यौगन्धरः। [युगन्धर देश में पैदा होने वाला। वुञ्=अक, आदिवृद्धि। पक्ष में औत्सर्गिक अण् होता है।] ये दोनों शब्द जनपदवाची हैं, इसलिए इनसे 'अवृद्धादपि बहुवचनविषयात्' ४।२।१२४ सूत्र से नित्य वुञ् प्रत्यय के प्राप्त रहने पर विकल्प का विधान किया जा रहा है।

'कुरु' शब्द कच्छादिगण ४।२।१३३ में भी पढ़ा गया है, वहाँ पढ़ने से अण् भी होता है। [तब तो वुञ् और अण् सिद्ध हों थे। इस विकल्प का क्या लाभ? इस शंका का उत्तर दे रहे हैं—] यह विकल्प 'युगन्धर' शब्द के लिए है। मनुष्य और उनमें स्थित—इन अर्थों में तो 'कुरु' शब्द से नित्य ही वुञ् प्रत्यय होता है। उदा०—कौरवकः मनुष्यः [कुरु देश का आदमी।] कौरवकम् अस्य हसितम्=इसका हंसना कुरुदेश का है। [इसकी व्याख्या आगे ४।२।१३३ में देखें।] ॥ १३०॥

मद्र और वृजि—इन शब्दों से शैषिक 'कन्' प्रत्यय होता है। [अवृद्धादपि ४।२।१२५ से] जनपद अर्थ में प्राप्त

---

१. 'पारिशेष्याद्युगन्धरार्था विभाषा'—इति पाठा०।

१. 'इगुपधात्किः' इति किप्रत्ययान्तो वृजिशब्दः।

## १५६०. कोपधादण् ॥ १३२ ॥ ( १३५६ )

**'देशे' इत्येव । ककारोपधात्प्रातिपदिकादण्प्रत्ययो भवति शैषिकः । जनपदवुञोऽपवादः । अन्यत्र जनपदं मुक्त्वा पूर्वेणैव कोपधादणि सिद्धम् । ऋषिकेषु जातः आर्षिकः । माहिषिकः ।**

**अण्ग्रहणमुवर्णान्तादपि स्यात्—इक्ष्वाकुषु जातः ऐक्ष्वाकः ॥**

**न्यासः**

परनिपातः 'द्वन्द्वे घि' इत्यस्य विधेरनित्यत्वज्ञापनार्थम् । तेन धूमाग्नी इत्येवमादि सिद्धं भवति ॥ १३१ ॥

**कोपधादण् ॥ जनपदवुञोऽपवाद इति** । पूर्ववत् प्राप्तस्य । किं पुनर्देशादन्यत्र वर्तमानो नेष्यते, यो देशे न वर्तते ? इत्याह —**अन्यत्रेत्यादि** । **पूर्वेणेति** । 'प्रस्थोत्तरपदात्' इति सूत्रेण ।

अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमेवोच्येत, यथाविहितमुच्यमानेऽणपवादो वुञ् स्यादिति चेत् ? न; वुञ्विधाने हि वचनमनर्थकं स्यात्, तेन विना वुञः सिद्धत्वात् । तस्माद् वचनसामर्थ्याद् विहितोऽणेव प्राप्नोति । अन्येन बाधित्वा अतएवाण् भविष्यतीति । स हि 'प्राग्दीव्यतोऽण्' इति विहितो बाधितश्च वुञैवेत्यत आह—**अण्ग्रहणमित्यादि । इक्ष्वाकुषु जात इति** । इक्ष्वाकुशब्दादोर्देशे ठञ् प्राप्तः, तस्मिन् जनपदवुञा बाधिते यदीहाण्ग्रहणं न क्रियते तदा पुनर्वचनाद् वुञेव भवति, अण्ग्रहणादणेव भवति । **ऐक्ष्वाक इति** । 'दाण्डिनायन-हास्तिनायन' इत्यादाविक्ष्वाकुशब्दस्योकारस्य लोपो निपातितः ॥ १३२ ॥

**पदमञ्जरी**

( धा० पा० १८१२ ) 'इगुपधात्कित्' ( द० उ० १.४८ ) इति कित्प्रत्ययान्तो वृजिशब्दः । **जनपदवुञोऽपवाद इति** । 'अवृद्धादपि' इति ॥ १३१ ॥

**कोपधादण्** ॥ किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्तते ? इत्यत आह—**अन्यत्रेति** । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानुवृत्तिः न त्वदेशनिवृत्त्यर्था । नन्वदेशवाचिनः प्राग्दीव्यतीय एवाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थम्, तत्किमुच्यते--अन्यत्र पूर्वेणैवेति, सत्यम्; सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राण्विधिर्युक्तः, अथाण्ग्रहणं किमर्थम्, न कोपधाद्यथाविहितमित्येवोच्येत, आरम्भसामर्थ्याद्धि यो विहितो न च प्राप्नोति स एव भविष्यति ? इत्यत आह--**अण्ग्रहणमिति** । इक्ष्वाकुशब्दाद् 'ओर्देशे ठञ्' प्राप्तः, तस्मिन् जनपदवुञा बाधिते यद्यण्ग्रहणं न क्रियेत पुनर्वचनाद् वुञेव स्याद्, अण्ग्रहणे त्वणेव भवति । **ऐक्ष्वाक इति** । दाण्डिनायनादिसूत्रेण टिलोपः, एवं चाण्ग्रहणादेवायमोर्देशे ठञो बाधको न परत्वात् ॥ १३२ ॥

**भावबोधिनी**

होने वाले वुञ् का अपवाद है । उदा०—मद्रेषु जातः मद्रकः [ मद्रदेश में पैदा होने वाला 'मद्रकः' । मद्र + कन् । ] वृजिकः [ वृजिषु जातः—इस अर्थ में कन् होता है । ] ॥ १३१ ॥

'देश अर्थ में' इसका सम्बन्ध है । ककार उपधा वाले प्रातिपदिक से शैषिक अण् प्रत्यय होता है । जनपद अर्थ में प्राप्त वुञ् का अपवाद है । अन्यत्र जनपद को छोड़कर 'प्रस्थोत्तरपदात्' ४।२।११० इस पूर्ववर्ती सूत्र से ही ककारोपध से भी अण् प्रत्यय में रूप सिद्ध है । उदा० --ऋषिकेषु जातः आर्षिकः । [ ऋषिक देश में पैदा होने वाला । इस अर्थ में ऋषिक + अण् , आदिवृद्धि, रपर ] महिषिकेषु जातः — माहिषिकः । [ महिषिक देश में पैदा होने वाला —इस अर्थ में अण् प्रत्यय, आदिवृद्धि करने पर रूप बनता है । ]

अण् का ग्रहण इसलिए है कि उवर्णान्त [ कोपध ] से भी हो सके--इक्ष्वाकुषु जातः—ऐक्ष्वाकः । [ इक्ष्वाकु यह कोपध उकारान्त है । अण् प्रत्यय आदिवृद्धि, उकार [टि] का लोप होता है । ]

**विमर्श**—प्रस्तुत सूत्र में अण्ग्रहण की सार्थकता सिद्ध करते हुए काशिकाकार का भाव यह है कि 'इक्ष्वाकु' यह यह ककारोपध किन्तु उवर्णान्त शब्द है । अतः 'आर्देशे ठञ्' ४।२।११९ इस सूत्र से ठञ् प्राप्त होता है । किन्तु जनपद

## १५६१. कच्छादिभ्यश्च ॥ १३३॥ ( १३५१ )

**'देशे' इत्येव। 'कच्छ'—इत्येवमादिभ्यो देशवाचिभ्योऽण्प्रत्ययो भवति शैषिकः। वुञादेरपवादः। काच्छः। सैन्धवः। वार्णवः।**

**कच्छशब्दो न बहुवचनविषयः, तस्य मनुष्यतत्स्थयोर्वुञर्थः (४. २. १३४) पाठः। विजापकशब्दः पठ्यते, तस्य कोपधत्वादेवाण्सिद्धे इह ग्रहणमुत्तरार्थम्।**

**कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु[1]। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। कच्छादिः॥**

### न्यासः

**कच्छादिभ्यश्च ॥ वुञादेरपवाद इति।** आदिशब्देन ठञः। तत्र ये जनपदबहुवचनविषयास्तेभ्यो वुञः प्राप्तस्यापवादः। सिन्धुवर्णुशब्दाभ्यामोर्देशे ठञः, कच्छशब्दः न बहुवचनविषय इति। तेन 'अवृद्धादपि' इत्यादिना बाधकस्य वुञोऽप्राप्तावेव सामान्येनाण्सिद्ध एवेति दर्शयति। यद्येवम्, किमर्थं तस्य पाठः, ? इत्याह—**तस्येत्यादि**। उत्तरसूत्रेण वुञ् मनुष्यतत्स्थयोर्यथा स्यादित्येवमर्थः। कच्छस्येह पाठः, न त्वनर्थकः। **कोपधादेवाण् सिद्ध इति**। पूर्वसूत्रेणेति। इह **ग्रहणमुत्तरार्थमिति**। उत्तरसूत्रे वुञ् यथा स्यात् ॥ १३३ ॥

### पदमञ्जरी

**कच्छादिभ्यश्च ॥ वुञादेरपवाद इति।** ये जनपदवाचिनो बहुवचनविषयाः, तेभ्यो वुञोऽपवादः, सिन्धुवर्णशब्दाभ्यामोर्देशे ठञः। साल्वशब्दः पठचते—जनपदलक्षणो वुञ्मा भूदिति। 'अपदातौ साल्वात्'

### भावबोधिनी

अर्थवाले वुञ् [ ४।२।१२५ ] से इसका बाध हो जाता है। यदि यहाँ सूत्र में 'अण्' का ग्रहण नहीं होता तो 'कोपधात्' इस पुनर्वचन द्वारा वुञ् ही होने लगता है, किन्तु जब अण् का ग्रहण किया गया तो अण् ही होता है। अतः इक्ष्वाकु + अण् आदिवृद्धि। यहाँ यद्यपि उकार के गुण की प्राप्ति होती है, परन्तु 'दाण्डिनायन-हास्तिनायन..........ऐक्ष्वाकमैत्रेय हिरण्मयानि' ६।४।१७४ सूत्र से निपातनात् उकार का लोप होता है—ऐक्ष्वाक + अ = ऐक्ष्वाकः। इक्ष्वाकु देश में होने वाला ॥ १३२ ॥

'देश अर्थ में' इसकी अनुवृत्ति होती है। 'कच्छ' इत्यादि देशवाची शब्दों से शैषिक अण् प्रत्यय होता है। यह [ 'अवृद्धादपि बहुवचनविषयात्' ४।२।१२५ से विहित ] वुञ् आदि प्रत्ययों का अपवाद है। [ भाव यह है कि जनपदवाचक जो बहुवचनविषयक हैं, उनसे 'वुञ्' का तथा 'सिन्धु' 'वर्णु' इनसे 'आर्देशे' ४:२।९५ से विहित 'ठञ्' का अपवाद है। ] उदा० —काच्छः [ कच्छ देश में पैदा होने वाला। कच्छे जातः इस अर्थ में ४।२।१३४ से प्राप्त वुञ् का अपवाद अण् प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप करने पर 'काच्छः बनता है। ] सैन्धवः [ सिन्धुषु जातः। सिन्धु देश में पैदा होने वाला। ] वार्णवः। [ वर्णुषु जातः—वर्णु देश में पैदा होने वाला। सिन्धु + अण्, वर्णु + अण्, आदिवृद्धि, भसंज्ञा। 'उ' का गुण ओ, 'ओ' का 'अव्' आदेश करने पर रूप बनता है। ]

कच्छ शब्द बहुवचन विषय वाला नहीं है। उसका पाठ मनुष्य और मनुष्य में स्थित—इन अर्थों में वुञ् करने के लिए है। विजापक शब्द का पाठ है। यह कोपध है, अतः [ 'कोपधादण्' ४।२।१३२ इसी से ] अण् सिद्ध रहने पर इस सूत्र में ग्रहण उत्तर सूत्र में अनुवृत्ति के लिए है। [ अर्थात् अण् और अग्रिम सूत्र से मनुष्य और मनुष्य में स्थित अर्थों में वुञ् करने के लिए 'अजापक' शब्द पठित है। ]

[ कच्छादिगण में पठित शब्द—] कच्छ। सिन्धु। वर्णु। गन्धार। मधुमत्। कम्बोज। कश्मीर। साल्व। कुरु। रङ्कु। अणु। खण्ड। द्वीप। अनूप। अजवाह। विजापक। कुलून। ये कच्छादि हैं ॥ १३३ ॥

---

१. 'अण्ड' इति पाठा०।

## १५६२. मनुष्यतत्स्थयोर्वुञ् ।। १३४ ।। ( १३५८ )

'कच्छादिभ्यः' इत्येव। मनुष्ये मनुष्यस्थे च जातादौ प्रत्ययार्थे कच्छादिभ्यो वुञ् प्रत्ययो भवति। अणोऽपवादः। काच्छको मनुष्यः। काच्छकमस्य हसितं, जल्पितम्। काच्छिका चूडा। सैन्धवको मनुष्यः। सैन्धवकमस्य हसितं जल्पितम्। सैन्धविका चूडा।

मनुष्यतत्स्थयोरिति किम्? काच्छो गौः। सैन्धवो वार्णवः।।

## १५६३. अपदातौ साल्वात् ।। १३५ ।। ( १३५९ )

साल्वशब्दः कच्छादिषु पठ्यते, ततः पूर्वेणैव मनुष्यतत्स्थयोर्वुञि सिद्धे नियमार्थं वचनम्। अपदातावेव मनुष्ये मनुष्यस्थे च साल्वशब्दाद् वुञ्प्रत्ययो भवति। साल्वको मनुष्यः। साल्वकमस्य हसितं जल्पितम्।

अपदाताविति किम्? साल्वः पदातिर्व्रजति।।

**न्यासः**

मनुष्यतत्स्थयोर्वुञ् ।। १३४ ।। अवदातौ साल्वात् ।। साल्व इति। कच्छादिपाठादण् ।। १३५ ।।

**पदमञ्जरी**

'गोयवाग्वोश्च' इति नियमार्थं भविष्यति—अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ।। १३३ ।। १३४ ।।

**अपदातौ साल्वात्** ।। पादाभ्यामततीति 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः, न पदातिरपदातिः। अपदातिः=अश्वरोहादिः। **अपदातावेव मनुष्ये तत्स्थे चेति**। द्वन्द्वनिर्दिष्टत्वेन तत्स्थे चेत्युक्तम्, न तु तत्स्थ

**भावबोधिनी**

'कच्छ आदि से' इसकी अनुवृत्ति होती है। मनुष्य और मनुष्य में स्थित [ धर्म आदि ] में जात=पैदा होने वाला आदि प्रत्ययार्थ में कच्छ आदि शब्दों से वुञ् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—काच्छको मनुष्यः [ कच्छ देश का मनुष्य ]। काच्छकम् अस्य हसितम्, जल्पितम्। इसका कच्छ देश वाला हँसना, बोलना।

[ यहाँ 'अस्य' इसका अन्वय कुछ कठिन है, इसीलिये सिद्धान्तकौमुदी में 'काच्छकं हसितम्' यही उदाहरण है। आगे काशिकाकार ने भी 'अस्य' छोड़कर लिखा है। ] काच्छिका चूडा [ कच्छ देश वाले की चूडा=चोटी ]। सैन्धवकः मनुष्यः [ सिन्धु देश का आदमी। ] सैन्धवकम् अस्य हसितं जतिमतम् [इसका सिन्धु देश वाला हँसना-बोलना]। सैन्धविका चूडा। [ सिन्धुदेश वाले की चोटी। ]

मनुष्य और उसमें स्थित में— इसका क्या प्रयोजन है? काच्छो गौः [ कच्छ देश वाला बैल। ] सैन्धवः वार्णवः सिन्धु देश वाले वार्णव।

[ यहाँ मनुष्य अथवा उसमें स्थित न होने से वुञ् नहीं होता है। यथाप्राप्त अणादि होते हैं ] ।। १३४ ।।

'साल्व' यह शब्द कच्छादिगण [ ४.१.१३३ ] में पठित है, इस शब्द से मनुष्य और इसमें स्थित—इस अर्थ में पूर्ववर्ती सूत्र से ही वुञ् सिद्ध है इस स्थिति में नियम करने के लिये यह प्रस्तुत सूत्र है—''अपदाति=पैरों से निरन्तर न चलने वाला' अर्थ में ही [ यह प्रत्यय होता है, अन्य अर्थ में नहीं ]। मनुष्य और मनुष्य में स्थित धर्म के अभिधेय रहने पर 'साल्व' शब्द से [ अपदाति में ही ] वुञ् प्रत्यय होता है। उदा० साल्वको मनुष्यः। [ साल्व देश का आदमी। ] साल्वकम् अस्य हसितम्, जल्पितम् [ साल्व देश वाले का हँसना, बोलना। ] [ अपदाति=घुड़सवार आदि। ]

पदाति [ =निरन्तर पैदल चलने वाला ]—इसके ग्रहण का क्या फल है? साल्वः व्रजति। [ पैदल चलने वाला साल्व देश का आदमी जाता है। यहाँ पदाति अर्थ है अतः वुञ् न होकर अणादि होता है ] ।। १३५ ।।

**१५६४. गोयवाग्वोश्च ॥ १३६ ॥ ( १३६० )**

गवि यवाग्वां च जातादौ प्रत्ययार्थे साल्वशब्दाद् वुञ्प्रत्ययो भवति शैषिकः। कच्छाद्यणोऽपवादः। साल्वको गौः। साल्विका यवागूः। साल्वमन्यत् ॥

**१५६५. गर्त्तोत्तरपदाच्छः ॥ १३७ ॥ ( १३६१ )**

'देशे' इत्येव। गर्त्तोत्तरपदाद्देशवाचिनः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। वाहीकग्रामलक्षणं च प्रत्ययं परत्वाद् बाधते। वृकगर्त्तीयम्। शृगालगर्त्तीयम्। श्वाविद्गर्त्तीयम्।

उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम्—बाहुगर्तम् ॥

**न्यासः**

**गोयवाग्वोश्च ॥ १३६ ॥ गर्त्तोत्तरपदाच्छः** ॥ अवृद्धार्थं वचनम्। वृद्धात्तु 'वृद्धाच्छः' इत्यनेनैव सिद्धमिति। सति तु वृद्धादपि परत्वादनेनैव भवितव्यम्। **अणोऽपवाद इति**। नाप्राप्ते तस्मिन्नस्यारम्भात्। **वाहीकग्रामलक्षणञ्चेत्यादि**। यद् गर्तोत्तरपदं वाहीकवाचि ततो वाहीकग्रामलक्षणौ ठञ्ञिठौ बाधितत्वात् परत्वाच्छ एव भवति, तस्य गर्तोत्तरपदमवकाश इति। अथोत्तरपदग्रहणं किमर्थम्, न गर्तान्तादित्येवोच्येत ? इत्याह—**उत्तरपदग्रहणमित्यादि**। यदि गर्तान्तादित्युच्येत तदा बहुगर्तं इत्येतस्मादपि बहुच्पूर्वात् स्यात्, भवति ह्येतद् गर्त्तान्तम्। उत्तरपदग्रहणे तु सति न भवति, न ह्येतद् गर्तोत्तरपदम्। समासे हि सत्येतद् भवति–पूर्वपदमुत्तरपदमिति। १३७।

**पदमञ्जरी**

पदातेः सम्भवोऽस्ति। अपदातौ साल्वादेवेत्येष तु विपरीतनियमो न भवति; गोयवाग्वोश्च' इत्यारम्भात् ॥ १३५ ॥ १३६ ॥

**गर्तोत्तरपदाच्छः ॥ वाहीकग्रामलक्षणमिति।** यद्यपि 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ विहितौ, तथाप्युत्सृष्टानुबन्धयोस्तयोष्ठरूपाविशेषाद्वाहीकग्रामलक्षणमित्येकवचननिर्देशः। **श्वाविद्गर्तीयमिति**। श्वानं विध्यतीति व्यधेः क्विप्, सम्प्रसारणम्, 'नहिवृति' इति दीर्घः, श्वाविधां गर्तः श्वाविद्गर्तः ॥ १३७ ॥

**भावबोधिनी**

गो तथा यवागू [ हलुवा ] अर्थ अभिधेय रहने पर 'जात' आदि प्रत्ययार्थों में साल्व शब्द से वुञ् शैषिक प्रत्यय होता है। यह "कच्छादिभ्यश्च" ४.२.१३३ से प्राप्त अण का अपवाद है। उदा० साल्वकः गौः। [ साल्व देश में पैदा होने वाला बैल ] साल्विका यवागूः। [ साल्व देश का हलुवा। साल्व वुञ्=अक, टाप्, साल्वका। 'प्रत्ययस्थात् कात् पूर्वस्य" इस सूत्र से 'अ' का इत्व करके 'साल्विका' रूप बनता है। ] अन्य पदार्थ अभिधेय रहने पर 'साल्वम्' बनता है। [ अण् होता है। ]॥ १३६ ॥

देश अर्थ अभिधेय रहने पर ही यह होता है। 'गर्त्त' जिसका उत्तरपद है ऐसे देशवाची प्रातिपदिक से शैषिक 'छ' प्रत्यय होता है। यह अण् का अपवाद है। 'वाहीकग्रामेभ्यश्च' ( ४.२.११७ ) सूत्र से प्राप्त प्रत्यय का बाध तो परवर्ती होने से करता है। उदा०—वृकगर्त्तीयम्। [ वृकगर्ते देशे भवम् इस अर्थ में वृकगर्त्त+छ=ईय भसंज्ञा और अलोप करने पर 'वृकगर्त्तीयम्' वृकगर्त देश में होने वाला। ] शृगालगर्त्तीयम्', [ शृगालगर्त देश में होने वाला ] श्वाविद्गर्त्तीयम् [ श्वाविद्गर्त्त देश में होनेवाला ] [ 'गर्ताच्छः' इतना ही बना देने पर भी कार्यनिर्वाह संभव था क्योंकि केवल 'गर्त' शब्द देशवाची नहीं है अतः 'उत्तर पद' का ग्रहण किसलिये हैं ? इसका समाधान करते हैं—] बहुच्पूर्वक 'गर्त' से 'छ' प्रत्यय का निराकरण करने के लिये 'उत्तरपद' का ग्रहण है—बाहुगर्तम्। [ यहाँ बहुच् प्रत्यय है जो पूर्व में होता है अतः 'गर्त' यह उत्तरपद नहीं है। 'छ' प्रत्यय न होकर 'अण् होता है। ]॥ १३७ ॥

## १५६६. गहादिभ्यश्च ॥ १३८ ॥ ( १३६२ )

**'गह' इत्येवमादिभ्यः प्रातिपदिकेभ्यश्छः प्रत्ययो भवति शैषिकः। अणादेरपवादः[1]। गहीयः। अन्तःस्थीयः। देशाधिकारेऽपि सम्भवापेक्षं विशेषणम्, न सर्वेषाम्। 'मध्यमध्यमं चाण् चरणे' ( ग० सू० ९९ ) इति पठ्यते, तस्यायमर्थः मध्यशब्दः प्रत्ययसन्नियोगेन मध्यममापद्यते। मध्यमीयाः। चरणे तु प्रत्ययार्थेऽण् भवति—माध्यमा इति। तदेतद्विशेष एव स्मर्यते पृथिवीमध्यस्य मध्यमभावः। चरणसम्बन्धेन निवासलक्षणोऽणिति च ( म० भा० )।**

### न्यासः

**गहादिभ्यश्च ॥ अणादेरपवाद इति।** आदिशब्देन वुञः। तत्र कामप्रस्थशब्दात् 'प्रस्थपुरवहान्ताच्च' इति प्राप्तस्य वुञोऽपवादः, शेषेभ्यस्त्वौत्सर्गिकस्याणः। **सम्भवापेक्षं विशेषणमिति।** सम्भवमपेक्षत इति सम्भवापेक्षम्। येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेवेदं विशेषणमिति। एतदुभयमपि विशेषणमेवाचार्यैः स्मर्यते। **पृथिवीमध्यस्येत्यादिना** तद्विशेषं दर्शयति। **चरणसम्बन्धेनेत्यादि।** चरणेनार्थेन सम्बन्धश्चरणसम्बन्धः, तेन हेतुना करणेन वाण् भवति। किंविशिष्टः? निवासलक्षणः। निवासो लक्षणं यस्य स तथोक्तः। कथं निवासलक्षणः? यः पृथिवीमध्ये निवासभूते वर्तमानात् मध्यशब्दाद् भवति, स हि निवासेन लक्ष्यते। तदेतदुक्तं भवति–पृथिवीमध्यनिवासोऽस्य चरणस्येति। यदायमर्थो विज्ञायते तदाण्भवति, नान्यत्रेति। तेन यदा पृथिवीमध्याद् गतं चरणमिति विवक्ष्यते तदा च्छ एव भवति–मध्यमीय इति। कथं पुनः सामान्योक्तावेष विशेषो लभ्यत इति? सामान्याभिधानेऽपि विशेषोपस्थानदर्शनात्। घृतक्षरणवच्च स ह्यविशेषेणोपदिष्टो घृतादिष्वेवावतिष्ठते। तस्मात् सामान्योक्तावपि पृथिवीमध्य एव वर्तमानो मध्यशब्दो मध्यमभावमापद्यते। चरणे च प्रत्ययार्थे निवासलक्षण एवाण् भवति, न हि सर्वेषु जातादिष्वर्थेषु।

### पदमञ्जरी

**गहादिभ्यश्च ॥ अणादेरपवाद इति।** तत्र माहकिप्रस्थशब्दात् 'प्रस्थपुरवहान्ताच्च' इति वुञोऽपवादः, वाल्मीकिप्रभृतिभ्य इञन्तेभ्यः 'इञश्च' इत्यणः, शेषेभ्य औत्सर्गिकस्याणः। **सम्भवापेक्षमिति।** येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेव विशेषणम्, न त्वन्तस्थपूर्वपदादीनामित्यर्थः। **पृथिवीमध्यस्येति।** पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यः, न मध्यान्तरवाचीत्यर्थः। **चरणसम्बन्धेन निवासलक्षणोऽणिति।** चरणसम्बन्धेन योऽण्विधीयतेऽण् चरण इत्यनेन स निवासलक्षणो द्रष्टव्यः। 'सोऽस्य निवासः' इत्यत्रैवार्थे भवतीत्यर्थः, तेन पृथिवीमध्यं निवास एषां कठादीनां चरणानामित्यत्रार्थे मध्यमा इति भवति।

### भावबोधिनी

'गह' आदि प्रातिपदिकों से शैषिक 'छ' प्रत्यय होता है। यह अण् तथा अञ् दोनों का अपवाद है। उदा०—गहीयः। अन्तःस्थीयः [ गह + छ ईय ] 'देशे' इसका अधिकार रहने पर भी यह संभवापेक्ष विशेषण है, सभी का नहीं। [ अर्थात् जो देशवाची है उन्हीं में इसको विशेषण बनाना है, अतः अन्य अदेशवाची शब्दों से भी यह 'छ' होता है। ] 'मध्य' का मध्यम आदेश होता है, चरण अर्थ में अण् होता है, ऐसा [ गणपाठ में ] पढ़ा गया है, इस वचन का यह अर्थ है - प्रत्यय के सन्नियोग से मध्य शब्द मध्यम रूप प्राप्त करता है–-मध्यमीयाः [ मध्य + छ = मध्यम + ईय, भत्व अलोप, बहुवचन का रूप। मध्य देश में होने वाले। ] प्रत्यय का अर्थ 'चरण' होने पर अण् होता है—माध्यमाः। [मध्य + अण्=मध्यम + अण्आदिवृद्धि] यह विधान विशेष अर्थ में किया जाता है–पृथिवीमध्य का 'मध्यम होता है [ इससे देशवाची होने पर 'छ' होता है। ] चरण = वेदशास्त्र के सम्बन्ध से निवास अर्थवाला अण् होता है। [इस प्रकार पृथिवी मध्य देश में होने पर 'मध्यमीयः। तथा पृथिवीमध्य निवास है जिन कठादि चरणों का वे 'माध्यमाः'—ये भिन्न-भिन्न रूप होते हैं। देखें महाभाष्य ४।२।३८ ]

---

१. 'अणञोरपवादः'–इति पाठा०।

❀ मुखपार्श्वतसोर्लोपश्च ❀ (म० भा० ४. ३. ६० वा० ४ )। मुखतीयम्। पार्श्वतीयम्। ❀ कुग्जनस्य परस्य च ❀ ( वा० ५ )। जनकीयम्। परकीयम्। ❀ देवस्य चेति वक्तव्यम् ❀ ( ? )। देवकीयम्। ❀ वेणुकादिभ्यश्छण् वक्तव्यः ( ? )। आकृतिगणोऽयम्। वैणुकीयम्। वैत्रकीयम्। औत्तरपदकीयम्। प्रास्थकीयम्[1]। माध्यमकीयम्।

गह। अन्तःस्थ। सम। विषम। ❀ मध्यमध्यमं चाण्चरणे ❀ ( ग० सू० ९९ )। उत्तम। अङ्ग। वङ्ग। मगध। पूर्वपक्ष। अपरपक्ष। अधमशाख। उत्तमशाख। समानशाख। एकग्राम। एकवृक्ष। एकपलाश। इष्वग्र। इष्वनी[2]। अवस्यन्दी[3]। कामप्रस्थ। खाडायनि[4]। कावेरणि[5]। शैशिरि। शौङ्गि। आसुरि। आहिंसि।

**न्यासः**

**मुखपार्श्वतसोर्लोप इति।** मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति। स च 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य। लोपवचनम् 'अव्ययानां भमात्रे टिलोपः' इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इत्यत्र न भवति। मुखतीयम्, पार्श्वतीयम्। 'अपादाने चाहीयरुहोः' इति मुखपार्श्वशब्दाभ्यां तसिः। 'आद्यादिभ्य उपसंख्यानम्' इत्यौपसंख्यानिके सकारस्य लोपे कृतेऽकारस्यापि 'यस्येति च' इति लोपः।

**देवस्य चेति वक्तव्यमिति।।** देवशब्दस्य कुग् भवतीत्येदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम् –'कुग्जनस्य परस्य' इत्यत्र चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थः, तेन देवशब्दादपि भविष्यति ।।१३८।।१३९-१४०।।

**पदमञ्जरी**

**मुखपार्श्वतसोर्लोप इति।** मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति, स च 'अलोऽन्त्यस्य', तत्र कृते यस्येति लोपः, लोपवचनम्, 'अव्ययानां भमात्रे टिलोपः' ( वा० ८४२ ) इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय इति सिद्धं भवति ॥ १३८ ॥ १३९-१४० ॥

**भावबोधिनी**

❀ मुख तथा पार्श्व इन तस् प्रत्ययान्तों से 'छ' प्रत्यय होता है और अन्त्य=स् का लोप होता है। ❀ [ 'मुखपार्श्व' यह लुप्तषष्ठीकपद है। मुखे जातम्—आदि अर्थ में तसिल् प्रत्ययान्त मुखतः शब्द से 'छ' प्रत्यय होता है—] मुखतस्+छ=ईय, स् का लोप, भसंज्ञा, अलोप, मुखतीयम्, पार्श्वतीयम् [ पार्श्वे जातम् आदि अर्थ में तसिल् प्रत्ययान्त से 'छ' होता है—पार्श्वतस्+छ=ईय, स् 'लोप', भसंज्ञा, अलोप-पार्श्वतीयम्। यद्यपि अव्ययों की टि का लोप भसंज्ञा मात्र में होता है—यह वचन है। अतः उसी से टि=अस् का लोप करने पर रूप बन सकता था। परन्तु 'अव्ययानां भमात्रे टिलोपः' इस वचन की अनित्यता ज्ञापित करने के लिये यहाँ 'स्' का लोप स्वतन्त्ररूप से किया गया है। बाद में 'अ' का लोप होता है। ]

❀ जन और पर शब्दों से छ प्रत्यय होता है और कुक् आगम होता है। ❀ जनकीयम् [ जन+छ=ईय, कुक्=क् आगम ] परकीयम्। [ पर+छ=ईय, कुक् - क् आगम परकीयम्। लोगों में होने वाला, दूसरे में होनेवाला ]

❀ और देव शब्द से 'छ' प्रत्यय तथा कुक् आगम होता है। ❀ देवकीयम् [ देव+छ कुक् आगम देव क् छ=ईय = देवकीयम्। [ 'दैवानुग्रहः' इस भाष्यप्रयोग से 'दैवम्' यह भी शुद्ध है, प्रस्तुत सूत्र पर बालमनोरमा टीका ]

❀ वेणुक आदि शब्दों से छण् प्रत्यय होता है। ❀ यह आकृतिगण है। वैणुकीयम् [ वेणुक+छण्, आदिवृद्धि, छ=ईय ] वैत्रकीयम् [ वेत्रक+छण्. आदिवृद्धि, छ का ईय ] औत्तरपदकीयम् [ उत्तरपदक+छण् ] प्रास्थकीयम् [ प्रस्थक+छण् ]। माध्यमकीयम् [ मध्यमक+छण्। इनमें स्वार्थिक 'क' प्रत्यय है, क्योंकि कुक् आगम का समुच्चयबोधक 'च' यहाँ नहीं हैं। ]

---

१. 'प्रास्थीयम्'-इति वा पाठः।   २. 'इष्वनीक'-इति वा पाठः।   ३. 'अवस्कन्द'-इति वा पाठः।
४. 'खण्डायनी'-इति वा पाठः।   ५. 'कामवेरणि'-इति वा पाठः।

**आमित्रि। व्याडि। वैदजि। भौजि। आढ्यचशिव। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वाल्मीकि। क्षेमवृद्धिन्। उत्तर। अन्तर। ❀ मुखपार्श्वतसोर्लोपः ❀ ( ग० सू० १०० )। ❀ जनपरयोः कुक्च ❀ ( ग० सू० १०१ )। ❀ देवस्य च ❀ ( ग० सू० १०२ )। ❀ वेणुकादिभ्यश्छण् ❀ ( ग० सू० १०३ )। गहादिः॥**

**१५६७. प्राचां कटादेः॥ १३९॥ ( १३६३ )**

**'देशे' इत्येव। तद्विशेषणं प्राग्ग्रहणम्। प्राग्देशवाचिनः कटादेः प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। कटनगरीयम्। कटघोषीयम्। कटपल्वलीयम्॥**

**१५६८. राज्ञः क च॥ १४०॥ ( १३६४ )**

**असम्भवाद्देशाधिकारो न विशेषणम्। राज्ञः ककारश्चान्तादेशो भवति छश्च प्रत्ययः। राजकीयम्। आदेशमात्रमिह विधेयम्, प्रत्ययस्तु 'वृद्धाच्छः' ( ४. २. ११४ ) इत्येव सिद्धः॥**

**भावबोधिनी**

[ इस गण में पठित शब्द–] गह। अन्तस्थ [ मध्य में स्थित ]। सम [बराबर]। विषम [ ऊँचा-नीचा, असमतल ]। मध्य [ बीच में। ❀ मध्य का मध्यम होता है और चरण = वेदशाखा में अण् होता है। ❀ [ इसके विषय में विशेष विचार ऊपर किया जा चुका है। ] उत्तम। अङ्ग [ कर्ण की राजधानी ] वङ्ग [ बंगाल ]। मगध। पूर्वपक्ष। अपरपक्ष [ बादवाला पक्ष या दूसरा पक्ष ]। अधमशाख [ निकृष्टशाखावाला। ] समानसाख [ समान शाखावाला ] एकग्राम [ एक गाँववाला ] एकवृक्ष। एकपलाश। इष्वग्र [ वाण के आगे ] इष्वनीक [वाणों की सेना ]। अवस्यन्दी [ बहने वाली ]। कामप्रस्थ। खाडायनि। कावेरणि। शैशिरि। शौङ्गि। आसुरि। आहिंसि। आमित्रि। व्याडि। वैदजि। भौजि। आढ्यचशिव। आनृशंसि। सौवि। पारकि। अग्निशर्मन्। देवशर्मन्। श्रौति। आरटकि। वालमीकि। क्षेमवृद्धिन्। उत्तर। अन्तर। ❀ मुख और पार्श्व से छ प्रत्यय और तस् के 'स्' का लोप होता है। ❀ ❀ जन और पर से छ प्रत्यय और कुक् का आगम होता है। ❀ देव शब्द को कुक् आगम और छ प्रत्यय होता है। ❀ ❀ वेणुक आदि शब्दों से छण् प्रत्यय होता है। ❀ ये गह आदि हैं।

**विमर्श**——इस गण में पठित सभी शब्द देशवाची नहीं है। अतः अदेशवाची से भी यह प्रत्यय समझना चाहिये क्योंकि यह आकृतिगण माना गया है। भट्टोजिदीक्षित ने सिद्धान्तकौमुदी में 'स्वस्य च' यह पढ़कर स्वकीयम्' उदाहरण भी दिया है। परन्तु इसका उल्लेख कहीं नहीं मिलता है। व्याख्याकारों के अनुसार इसकी आवश्यकता नहीं है। क्योंकि स्वार्थिक कन् प्रत्ययान्त 'स्वक' से छ प्रत्यय तो आकृतिगण मानकर ही संभव है। न्यासकार के अनुसार 'स्वक' से हीं 'छ' होता है इसी लिये 'नहि स्वकीयस्यैव प्रत्याख्यानन्' यह भाष्यकथन संगत होता है। जब केवल 'स्व' शब्द है तब अण् और ऐजागम करके 'सौवम्' बनता है। 'स्वीयम्' यह प्रयोग तो 'प्राक्क्रीताच्छः' से छ करके होता है। 'अन्तर्' गहादि है। छ = ईय करके 'न' शब्द के साथ समास करके 'नान्तरीय' और स्वार्थिक कन् करने पर नान्तरीयकम् = 'अविनाभूत' यह अर्थ होता है। इस गण में पठित अधिकांश शब्द व्यावहारिक हैं॥ १३८॥

'देश' अर्थ में ही होता है। इसके विशेषण 'प्राक्' का ग्रहण है। प्राक् = पूर्व के देशवाची कट आदि प्रातिपदिकों से शैषिक 'छ' प्रत्यय होता है। यह अण् का अपवाद है। उदा० कटनगरीयम् [ कट नामक नगर में होने वाला। ] कटघोषीयम् [ कट नामक घोष = अहीरों को बस्ती में होने वाला ] कटपल्वलीयम् [ कट नामक तालाब में होनेवाला ]। [ यहाँ 'कट' यह किसी पूर्वदेश का नाम है। वह नगर, घोष और पल्वल लिया जाता है। ]॥ १३९॥

सम्भव न होने के कारण 'देशे' यह अधिकार विशेषण नहीं बनता है। राजन् शब्द को ककारान्त आदेश होता है और छ प्रत्यय होता है। उदा० राजकीयम् [ राजन् + छ = ईय, न् का क् आदेश। राजा से सम्बद्ध ]। यहाँ केवल ककार अन्तादेश ही विधेय है, प्रत्यय तो 'वृद्धाच्छः' इसी सूत्र से सिद्ध है॥ १४०॥

## १५६९. वृद्धादकेकान्तखोपधात् ॥ १४१ ॥ ( १३६९ )

'देशे' इत्येव । वृद्धाद्देशवाचिनोऽक, इक— इत्येवमन्तात् खकारोपधाच्च प्रातिपदिकाच्छः प्रत्ययो भवति शैषिकः । कोपधलक्षणस्याणोऽपवादः । वाहीकग्रामलक्षणस्य च प्रत्ययस्य, 'रोपधेतोः प्राचाम्' ( ४. २. १२३) इति च । अकान्तात्तावत्—आरीहणकीयम् । द्रौघणकीयम् । इकान्तात्—आश्वपथिकीयम् । शाल्मलिकीयम् । खोपधात्—कौटिशिखीयम् । आयोमुखीयम् ।

❀ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ❀ ( म० भा० ४. २. १४१ वा० ) । सौसुकीयम् । मौसुकीयम् । ऐन्द्रवेणुकीयम् ॥

**न्यासः**

प्राचां कटादेः ॥ १३९ ॥ राज्ञः क च ॥ १४० ॥ वृद्धादकेकान्तखोपधात् ॥ कोपधलक्षणस्य चेत्यादि । अकेकान्तात् 'कोपधादण्' इत्याणि प्राप्तेऽणोऽपवादः । कोपधादपि वाहीकग्रामलक्षणस्य ठञो ञिठस्य च । रोपधेतोः प्राचामिति ।

अकेकान्तग्रहणे कोपधग्रहणमिति । इह सूत्रेऽकेकान्तग्रहणमपनीय कोपधग्रहणं कर्तव्यम् । कोपधादित्येवं वक्तव्यमित्यर्थः ॥ १४१ ॥

**पदमञ्जरी**

वृद्धादकेकान्तखोपधात् ॥ आरीहणकीयम्, द्रौहणकीयमिति । 'तेन निर्वृत्तम्' इत्यत्रार्थे वुञ्छणादिसूत्रेण यो वुञ् तदन्ताभ्यां प्रत्ययः, उदाहरणदिक्चेयमकान्तस्य दर्शिता । 'वृद्धाच्छः' इत्येव ह्यत्र छः सिद्धः, न ह्येतौ जनपदवाचिनौ, येन कोपधादणः प्रसङ्गः स्यात् । इदं त्वत्रोदाहरणं द्रष्टव्यम्—ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनः 'ब्राह्मणकोष्णिके संज्ञायाम्' इति निपातनात् साधुः, तत्र जातो ब्राह्मणकीय इति । अकेकान्तग्रहणे कोपधग्रहणमिति । सूत्रेऽकेकान्तग्रहणमपनीय कोपधादिति वक्तव्यम्, व्यापकत्वाल्लघुत्वाच्चेत्यर्थः ॥ १४१ ॥

**भावबोधिनी**

'देशे' इस अर्थ में ही । वृद्धसंज्ञक देशवाची प्रातिपदिक जिसके अन्त में 'अक' अथवा 'इक' हैं उनसे और जिसकी उपधा में 'ख' है ऐसे प्रातिपदिक से शैषिक 'छ' प्रत्यय होताहै । [ अक, इक जिनके अन्त में उनमें ] कोपध मानकर [ कोपधाच्च ४।२।१३४ से ] होने वाले अण् का अपवाद है । और वाहीक ग्रामलक्षण मानकर [ 'बाहीकग्रामेभ्यश्च' ३।२।११७ से ] होनेवाले प्रत्यय का तथा 'रोपधेतोः प्राचाम्' से प्राप्त होने वाले प्रत्यय का अपवाद है । [ इस प्रकार यह सूत्र पूर्वोक्त तीन सूत्रों से प्राप्त प्रत्ययों का बाधकर 'छ' प्रत्यय करता है । ] ( १ ) अक जिसके अन्त में है, उसका उदा० आरीहणकीयम् [ आरीहणक + छ = ईय ], द्रौघणकीयम् [ द्रौघणक + छ = ईय ] । ( २ ) इकार जिसके अन्त में उसका उदा० आश्वपथिकीयम् [ आश्वपथिक + छ = ईय । इनमें कोपध मानकर अण् प्राप्त है उसका अपवाद यह 'छ' होता है । ] ( ३ ) खकार जिसकी उपधा में है उसका उदा०—कौटिशिखीयम् [ कौटिशिख + छ = ईय ], आयोमुखीयम् [ आयोमुख + छ = ईय । इनमें 'बाहीकग्रामेभ्यश्च' सूत्र से ठञ् और ञिठ प्राप्त हैं उनका अपवाद यह 'छ' होता है । ]

❀ अक या इक जिसके अन्त में उनके ग्रहण के प्रसंग में कोपध का ग्रहण करना चाहिये, यह सौसुक आदि का ग्रहण करने के लिये है । ❀उदा०—सौसुकीयम् [ सौसुक + छ = ईय ], मौसुकीयम् [ मौसुक + छ = ईय ], ऐन्द्रवैणुकीयम् [ ऐन्द्रवैणुक + छ = ईय ] ।

**विमर्श** - यहाँ ध्यान रखना चाहिये कि ये सभी उदाहरण देशवाची शब्दों से शैषिक अर्थ में प्रत्यय करने के लिये दिये गये हैं । अतः मूल प्रातिपदिक का यौगिक या रूढ देश अर्थ ही समझना चाहिये ॥ १४१ ॥

**१५७०. कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥ ( १३६६ )**

**'देशे'** इत्येव, **'वृद्धात्'** इति च। कन्थाद्युत्तरपदाद्देशवाचिनो वृद्धात्प्रातिपदिकाच् छः प्रत्ययो भवति शैषिकः। वाहीकग्रामादिलक्षणस्य प्रत्ययस्यापवादः। दाक्षिकन्थीयम्। माहकिकन्थीयम्। दाक्षिपलदीयम्। माहकिपलदीयम्। दाक्षिनगरीयम्। माहकिनगरीयम्। दाक्षिग्रामीयम्। माहकिग्रामीयम्। दाक्षिह्रदीयम्। माहकिह्रदीयम् ॥

**१५७१. पर्वताच्च ॥ १४३ ॥ ( १३६७ )**

पर्वतशब्दाच्छः प्रत्ययो भवति शैषिकः। अणोऽपवादः। पर्वतीयो राजा। पर्वतीयः पुरुषः ॥

**१५७२. विभाषाऽमनुष्ये ॥ १४४ ॥ ( १३६८ )**

पर्वतशब्दाच्छः प्रत्ययो भवति वा, अमनुष्ये वाच्ये[1]। पूर्वेण नित्ये प्राप्ते विकल्प उच्यते—पर्वतीयानि

**न्यासः**

कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ वाहीकग्रामलक्षणस्येति। ठञ्ञिठयोश्च। अन्तग्रहणेनैव सिद्धे सत्युत्तरपदग्रहणं वैचित्र्यार्थम् ॥ १४२ ॥

पर्वताच्च ॥ १४३ ॥ विभाषाऽमनुष्ये ॥ पर्वतीयानि फलानीति। ननु चामनुष्यशब्दो रक्षःपिशाचादिष्वेव रूढः, तथा हि 'सभाराजाऽमनुष्यपूर्वा' इत्यत्रेह कस्मान्न भवति—काष्ठसभेति, तत्रेदमुक्तम्—'अमनुष्यशब्दो रूढिरूपेण रक्षःपिशाचादिष्वेव वर्तते' इति, तत् कथम् 'अमनुष्ये' इत्युच्यमाने फलादिष्वभिधेयेषु भवति ? नैष

**पदमञ्जरी**

कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ अन्तग्रहणेनैव सिद्धम्, नार्थ उत्तरपदग्रहणेन। न च बह्वच्पूर्वे प्रसङ्गः, 'प्राचां देशे' इत्यधिकारात् ॥ १४२ ॥ १४३ ॥

विभाषाऽमनुष्ये ॥ यद्यत्र नञः प्रश्लेषो न स्यादसन्देहार्थम् 'मनुष्ये विभाषा' इत्येव ब्रूयात्, लाघवे विशेषाभावादिति मत्वाऽऽह —अमनुष्येऽभिधेय इति। अमनुष्यशब्दो यौगिकोऽत्र गृह्यते, न तु रक्षःपिशाचादिषु

**भावबोधिनी**

'देशे' तथा 'वृद्धात्' इनकी अनुवृत्ति होती है। कन्था आदि [=पलदी नगर, ग्राम तथा ह्रद ] जिसके उत्तरपद है, ऐसे वृद्धसंज्ञक देशवाचक प्रातिपदिक से शैषिक 'छ' प्रत्यय होता है। यह 'वाहीकग्रामेभ्यश्च' ४।२।११७ आदि से प्राप्त प्रत्ययों का अपवाद है। उदा०—( १ ) दाक्षिकन्थीयम् [ दाक्षिकन्था + छ = ईय, भसंज्ञा, आलोप ], माहिकिकन्थीयम् माहिकिकन्था + छ = ईय, आलोप ] ( २ ) दाक्षिपलदीयम् [ दाक्षिपलद + छ = ईय ], माहिकिपलदीयम् [ माहिकि-पलद + छ = ईय ], ( ३ ) दाक्षिनगरीयम् [ दाक्षिनगर + छ = ईय ], माहिकिनगरीयम् [ माहिकिनगर + छ = ईय ], ( ४ ) दाक्षिग्रामीयम् [ दाक्षिग्राम + छ = ईय ], माहिकिग्रामीयम् [ माहिकिग्राम + छ = ईय ], ( ५ ) दाक्षिह्रदीयम् [ दाक्षिह्रद + छ = ईय ], माहिकिह्रदीयम् [ माहिकिह्रद + छ = ईय ]।

**विमर्श**—ध्यान रखना चाहिये कि पाणिनि के समय मूल प्रातिपदिक शब्द देशविशेष के वाचक रहे होंगे। इनसे शैषिक अर्थ में यह प्रत्यय होता है। चूंकि वाहीकग्रामसमूह में ये शब्द हैं अतः इन शब्दों से ठञ् और ञिठ प्रत्यय प्राप्त होते हैं उनका अपवाद यह 'छ' प्रत्यय किया जाता है ॥ १४२ ॥

'पर्वत' शब्द से शैषिक 'छ' प्रत्यय होता है। यह अण् का अपवाद है। उदा० पर्वतीयः राजा [ पर्वत + छ = ईय ], पर्वतीयः पुरुषः [ पर्वत + छ = ईय। संभव न होने से इसमें 'देशे' का सम्बन्ध नहीं किया जाता है ] ॥ १४३ ॥

अमनुष्य = मनुष्यभिन्न अर्थ में 'पर्वत' शब्द से विकल्प से 'छ' प्रत्यय होता है। पूर्ववर्त्ती सूत्र से नित्य प्राप्त रहने पर यह विकल्प कहा जा रहा हैं। उदा० पर्वतीयानि फलानि [ पर्वत + छ = ईय ], [ 'छ' न होने पर अण् होने

**फलानि, पार्वतानि फलानि। पर्वतीयमुदकम्, पार्वतमुदकम्।**

**अमनुष्ये इति किम्? पर्वतीयो मनुष्यः॥**

**१५७३. कृकणपर्णाद्भारद्वाजे॥ १४५॥ (१३६९)**

**'देशे' इत्येव। भारद्वाजशब्दोऽपि देशवचन एव, न गोत्रशब्दः। प्रकृतिविशेषणं चैतन्न प्रत्ययार्थः। कृकण-पर्णशब्दाभ्यां भारद्वाजदेशवाचिभ्यां छः प्रत्ययो भवति शैषिकः[1]। कृकणीयम्। पर्णीयम्।**

**भारद्वाज इति किम्? कार्कणम्। पार्णम्॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः॥ २॥**

**न्यासः**

दोषः; द्वौ ह्यमनुष्यशब्दौ—रूढः, व्युत्पन्नश्च। तत्र 'सभाराजाऽमनुष्यपूर्वा' इत्यत्र रूढिशब्दस्य ग्रहणम्, इह त्वितरस्य मनुष्यादन्यत्र वर्तमानस्य॥ १४४॥

**कृकणपर्णाद् भारद्वाजे॥ भारद्वाजशब्दोऽपि देशवचन एव, न गोत्रशब्द इति।** देश एव भारद्वाजे कृकणपर्णशब्दवृत्तेः सम्भवात्॥ १४५॥

॥ बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः॥ २॥

**पदमञ्जरी**

रूढ इति दर्शयत्युदाहरणेन। **पर्वतीयानि फलानीति**॥ १४४॥

**कृकणपर्णाद् भारद्वाजे॥ न गोत्रशब्द इति।** कुत इत्याह—**प्रकृतिविशेषणं चैतदिति।** चशब्दो हिशब्दार्थे॥ १४५॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य द्वितीयः पादः॥ २॥

**भावबोधिनी**

पर आदिवृद्धि ] पार्वतानि फलानि। [ पर्वत + अण् ]। पार्वतीयम् उदकम्, पार्वतम् उदकम्। अमनुष्य अर्थ में—इसका क्या प्रयोजन है? पर्वतीयः मनुष्यः। [ यहाँ पूर्ववर्ती सूत्र से नित्य 'छ' होता है ]।

**विमर्श**—'पार्वती' इसमें अपत्यार्थक अण् प्रत्यय है। 'तत्र जन्यैरंघोर्घोरं पार्वतीयैर्गणैरभूत्' इस कालिदासीय प्रयोग में 'पर्वतीयस्य राज्ञः इमे' इस अर्थ में छ प्रत्ययान्त से अण् समझना चाहिये॥ १४४॥

'देशे' इसकी अनुवृत्ति है, देश अर्थ में ही होता है। यहाँ भारद्वाज शब्द भी देशवाची ही है गोत्रवाची नहीं। यह भारद्वाज [ देशरूपी ] प्रकृति का विशेषण है, प्रत्यय का अर्थ नहीं है। भारद्वाज देशवाची कृकण तथा पर्ण शब्दों से शैषिक 'छ' प्रत्यय होता है। उदा० कृकणीयम् [ कृकण + छ ईय ], पर्णीयम् [ पर्ण + छ = ईय ]। भारद्वाज देश वाले रहने पर—इसका क्या फल है? कार्कणम् [ कृकण + अण् ], पार्णम् [ पर्ण + अण् णित् होने से आदिवृद्धि होती है। यहाँ ये दोनों शब्द भारद्वाज देश अर्थवाची नहीं है। अतः छ न होकर अण् होता है ]॥

॥ इस प्रकार श्री जयादित्यविरचित 'काशिका' वृत्ति में चतुर्थ अध्याय का द्वितीय पाद समाप्त हुआ॥

**॥ इस प्रकार जयशङ्करलाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में 'काशिका' वृत्ति के चतुर्थ अध्याय का द्वितीय पाद समाप्त हुआ॥**

**॥ इति शम्॥**

—:०:—

१. अत्र 'अणोऽपवादः'—इत्यधिकं कुलचित्।

# अथ चतुर्थाध्याये तृतीयः पादः

**१६७४. युष्मदस्मदोरन्यतरस्यां खञ्च ॥ १ ॥ ( १३७० )**

**देशाधिकारो निवृत्तः। युष्मदस्मदोः खञ् प्रत्ययो भवति शैषिकः। चकाराच्छश्च। अन्यतरस्यांग्रहणाद् यथाप्राप्तम्। तदेते त्रयः प्रत्यया भवन्ति, तत्र वैषम्याद्यथासंख्यं न भवति। त्यदादित्वाद् वृद्धसंज्ञकयोर्युष्मदस्मदोश्छे ( ४. २. ११४ ) प्राप्ते प्रत्येकं प्रत्ययत्रयं विधीयते—यौष्माकीणः, आस्माकीनः। युष्मदीयः, अस्मदीयः। यौष्माकः, आस्माकः ॥**

**न्यासः**

**युष्मदस्मदोरन्यतरस्यां खञ्च ॥ तत्र वैषम्याद् यथासंख्यं न भवतीति।** द्वे हि प्रकृती, प्रत्ययाश्च त्रय इति वैषम्यम्। ननु च खञ्छावेवानेन विधीयेते, अण्प्रत्ययस्त्वन्यतरस्यांग्रहणेन यथाप्राप्तस्याभ्यनुज्ञाने कृते शास्त्रादेव भवति, तत् कुतो वैषम्यम्? छोऽपि तर्हि तेनैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव। सोऽपि स्वशास्त्रादेव 'वृद्धाच्छः' इत्येतस्माद् भवतीति? एवमपि वैषम्यम्। सर्वथा नास्ति यथासंख्यप्रसङ्गः ॥ १ ॥

**पदमञ्जरी**

**युष्मदस्मदोरन्यतरस्यां खञ्च ॥** षष्ठीनिर्देश उत्तरार्थः। **एते त्रयः प्रत्यया भवन्तीति।** ननु चान्यतरस्यांग्रहणेन खञ्छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते, तदनुत्पत्तावपवादाभावात्स्वशास्त्रेण 'प्राग्दीव्यतः' इत्यनेनैवाण् भवति, तत्कुतोऽनेन प्रत्ययत्रयस्य विधानम्, छोऽपि तर्हि नैवानेन विधीयते, तस्यापि हि चकारोऽभ्यनुज्ञापक एव—यद्यन्योऽपि कश्चित्प्राप्नोति सोऽपि भवतीति, ततश्छोऽपि स्वशास्त्रेण 'वृद्धाच्छः' इत्यनेनैव भवति, एक एव त्वपूर्वः खञ् विधीयते। अथ यस्य प्रवृत्तावस्य तात्पर्यं स सर्वोऽनेन विधीयत इति छस्यानेन विधानम्। यद्येवम्, अणोऽप्यनेनैव विधानम्, न खञ्छयोरनुत्पत्तिमात्रेऽन्यतरस्यांग्रहणस्य तात्पर्यम्, तस्य महाविभाषयैव सिद्धत्वात्, किं तर्हि? अणः प्रवृत्तावपि। तस्मात्तात्पर्यतस्त्रय एते प्रत्यया भवन्तीत्युक्तम्, प्रत्येकं प्रत्ययत्रयं विधीयत इति च। तत्र खञ्प्रत्ययो भवतीत्यनेन खञ एवापूर्वस्य विधानमिति दर्शितम्। अन्यतरस्यांग्रहणाद्यथाप्राप्तं चेत्यनेनाणोऽभ्यनुज्ञानम्। त्यदादित्वाद्युष्मदस्मदोश्छे प्राप्त इत्यनेनापि छस्याभ्यनुज्ञानम्। भाष्ये तु

**भावबोधिनी**

'देश अर्थ में' इस ( ४।२।११९ ) अधिकार की निवृत्ति हो जाती है। 'युष्मद्' और 'अस्मद्' इन शब्दों से शैषिक [ अर्थों में ] 'खञ्' प्रत्यय होता है। और 'च' कार के सामर्थ्य से [ पूर्व से अनुवृत्त ] 'छ' प्रत्यय भी होता है तथा 'अन्यतरस्याम्' इसके ग्रहण-सामर्थ्य से यथाप्राप्त [ अण् ] भी होता है। इस प्रकार ये तीन प्रत्यय होते हैं। इनमें वैषम्य के कारण यथासंख्य नहीं होता है।

**विमर्श** - प्रस्तुत सूत्र में अन्यतरस्याम्' के साथ 'खञ्' और 'च' ये हैं। अतः 'च' अनुवृत्त 'छ' का बोधक होता है। इन दोनों के विकल्प पक्ष में सामान्य प्रत्यय 'अण्' भी होता है। इस प्रकार यहाँ प्रत्ययों की संख्या तीन है और प्रकृति—'युष्मद्, अस्मद्' ये दो हैं। अतः "यथासंख्यमनुदेशः समानाम्" ( पा० सू० १।३।१० ) की प्रवृत्ति नहीं होती है।

[ अनु० ] त्यदादि के अन्तर्गत होने से [ "त्यदादीनि च" पा० सू० १७४ से ] वृद्धसंज्ञक होने के कारण 'युष्मद्' और 'अस्मद्' से [ "वृद्धाच्छः" पा० सू० ४।२।११४ से ] "छ' प्रत्यय के प्राप्त रहते इनमें प्रत्येक से तीन-तीन प्रत्ययों का विधान किया जा रहा है—उदा० यौष्माकीणः आस्माकीनः। युष्मदीय, अस्मदीयः। यौष्माकः, आस्माकः।

## १५७५. तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥ ( १३७१ )

**तस्मिन्निति साक्षाद्विहितः खञ् निर्दिश्यते, न चकारानुकृष्टश्छः । तस्मिन्खञि अणि च युष्मदस्मदोर्यथासंख्यं युष्माक, अस्माक—इत्येतावादेशौ भवतः ।**

**निमित्तयोरादेशौ प्रति यथासंख्यं कस्मान्न भवति ? योगविभागः करिष्यते—'तस्मिन्' खञि युष्मदस्मदोर्युष्माकास्माकौ भवतः । ततः 'अणि च' इति । यौष्माकीणः, आस्माकीनः । यौष्माकः, आस्माकः ।**

**न्यासः**

**तस्मिन्नणि च युष्माकास्माकौ ॥ तस्मिन्निति साक्षाद् विहितः खञ् निर्दिश्यत इति ।** तस्मिन्नियुक्ते प्रागेव तत्रैव प्रतीत्युत्पत्तेः । तत्र पुनः कारणं साक्षाद् विहितत्वम्, आनन्तर्याच्च खञः, तस्यैव निर्देशो युक्तः । ननु च पूर्वसूत्रे खञ्चेति चकारेण च्छोऽनुकृष्यते, वाचकदेशश्च वाच्य इति खञश्छ एवानन्तरो भवति । स्यादनन्तरो यदि चकारस्तस्य वाचकः स्यात्, न चासौ तस्य वाचकः, स हि समीपवर्तिनः पदार्थान्तरस्य सहायतामात्रमाचष्टे खञः सहायतामाख्याय निवृत्ते चकारे सा सहायता प्रकरणाच् छेनैव विज्ञायते । तस्माच्चकारश्छस्य वाचको न भवतीति नासौ तादृशः ।

तत्कृतयोस्तस्यानन्तर्यं**निमित्तयोरित्यादि** । द्वे हि निमित्ते- खञणौ, निमित्तिनावपि द्वावेवादेशौ, ततः समानत्वाद् यथासंख्येनात्र भवितव्यमिति मन्यमानस्य प्रश्नः, **योगविभाग इत्यादि** परिहारः ।

**पदमञ्जरी**

योगविभागेन यथासंख्याभावः प्रतिपादितः 'युष्मदस्मदोः' इत्येको योगः, अत्र 'गर्तोत्तरपदाच्छः' इत्यतश्छोऽनुवर्तते; ततः 'खञ्च' इति द्वितीयो योगः ॥ १ ॥

**तस्मिन्नणि च युष्माकास्माकौ ॥ साक्षादिति ।** प्रत्यक्षेण विहितः, स्वरूपोपादानेन विहित इत्यर्थः । हेतुगर्भं चेदं विशेषणम्- यतः साक्षाद्विहितः ततः खञेव निर्दिश्यत इति । तस्मिन्नियुक्ते तत्रैव झटिति प्रत्ययो भवति, न चानुकृष्टश्छ इति । चकारो हि समीपवर्तिनः खञः सहायतामात्रमभिधाय निवर्तते । तत्र सहायस्यानिर्देशात्प्रकृतान्वेषणम्, तत्र 'गर्तोत्तरपदाच्छः' इति यावदन्वेषणे छस्य प्रतीतिश्चिरेण भवति, तेन च नासौ प्रत्यवमर्शार्हः । यदा तु यथासंख्यनिरासाय पूर्वसूत्रे योगविभागस्तदा नैव चकारेण छस्यानुकर्षणमिति न तस्य परामर्शशङ्का ।

**निमित्तयोरित्यादि ।** द्वे हि निमित्ते—खञणौ, निमित्तिनावपि द्वावेव—आदेशौ, ततश्च साम्याद्यथासंख्येन भवितव्यमिति मत्वा प्रश्नः । **योगविभागः करिष्यत इति ।** 'खञणोर्युष्माकास्माकौ' इति वक्तव्ये 'तस्मिन्नणि च'

**भावबोधिनी**

[ युवयोः युष्माकं वा इदम्—इस अर्थ में इन से 'खञ्' प्रत्यय, ञ्लोय, ख = ईन आदेश "तस्मिन्नणि च युष्माकास्माकौ" पा० सू० ४।३।२ से 'युष्मद्' का 'युष्माक' और 'अस्मद्' का 'अस्माक' आदेश करके आदिवृद्धि, भसंज्ञा तथा अलोप करने पर—यौष्माक् ईन, आस्माक् ईन—बनते हैं । जब 'छ' प्रत्यय होता है तब 'छ' का 'ईय' आदेश— युष्मद् + ईय, अस्मद् + ईय । जब अण् होता है तब युष्मद् + अण्, अस्मद् + अण्, पूर्वोक्त सूत्र से युष्मद् का 'युष्माक' और अस्मद् का 'अस्माक' आदेश करने के बाद आदिवृद्धि, भसंज्ञा, अलोप—यौष्माक् + अ, आस्माक् + अ । प्रातिपदिकसंज्ञा, सु तथा इसका रुत्व विसर्ग करने पर रूप बनते हैं । ] ॥ १ ॥

'तस्मिन्' इस सर्वनाम द्वारा [ पूर्वसूत्र से ] साक्षात् विहित 'खञ्' प्रत्यय का निर्देश है । न कि 'च' द्वारा अनुकृष्ट 'छ' प्रत्यय का । उस 'खञ्' और अण् प्रत्यय के परे रहते 'युष्मद्' और 'अस्मद्' इनके क्रमशः 'युष्माक' और 'अस्माक' ये आदेश होते हैं ।

[ आदेश के ] निमित्तभूत खञ् तथा अण् इन दोनों का आदेश [ युष्माक और अस्माक—इन दोनों ] के प्रति यथासंख्य क्यों नहीं होता है ? [ अर्थात् यहाँ प्रत्यय खञ् और अण् ये दो हैं तथा आदेश 'युष्माक' और 'अस्माक' ये भी

**तस्मिन्नणि चेति किम् ? युष्मदीयः । अस्मदीयः ॥**

## १५७६. तवकममकावेकवचने ॥ ३ ॥ ( १३७२ )

**एकवचनपरयोर्युष्मदस्मदोस्तवक, ममक—इत्येतावादेशौ भवतो यथासंख्यं तस्मिन्खञि अणि च परतः । निमित्तयोस्तु यथासंख्यं पूर्ववदेव न भवति ।**

**ननु च 'न लुमताङ्गस्य, ( १. १. ६३ ) इति प्रत्ययलक्षणप्रतिषेधादेकवचनपरता युष्मदस्मदोर्न संभवति ?**

**न्यासः**

**युष्मदीयः, अस्मदीय इति ।** 'यदि तस्मिन्नणि च' इति नोच्यते ततो यथा पूर्वसूत्रविहितयोः खञणोरिमावादेशौ भवतस्तथा च्छेऽपि स्याताम् । तस्मिंस्तु सति न भवतः ॥ २ ॥

**तवकममकावेकवचने ॥** पूर्वेण युष्माकास्माकयोः प्राप्तयोः 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोरेकवचने, तवकममकावादेशौ विधीयेते । **एकवचनपरयोरिति ।** एकवचनं परं याभ्यां ते तथोक्ते । **निमित्तयोस्त्वित्यादि ।** यथा पूर्व एव सूत्रे योगविभागान्निमित्तियोरादेशौ प्रति यथासंख्यत्वं न भवति, तथेहापि न भविष्यति । तस्य च यथासंख्याभावस्य पूर्वसूत्र एव योगविभागो हेतुः । तेन हि पूर्वत्र निमित्ते निवृत्ते यथासंख्ये कृते तस्मादिहाप्यनुवर्तते । ते निवृत्ते यथासंख्ये एवानुवर्तेते; अजहद्धर्मत्वादधिकाराणाम् । तस्मादिहापि पूर्ववद्योगविभागाद यथासंख्याभावः ।

**पदमञ्जरी**

इति वचनाच्चकारेण वाक्यभेदस्य सूचनादादेशयोर्निमित्ताभ्यां प्रत्येकमनभिसम्बन्ध इत्यर्थः ॥ २ ॥

**तवकममकावेकवचने ॥** 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैकवचनस्य ग्रहणम्' ( व्या० परि० ६ ), तस्य च कृताकृतप्रसङ्गित्वेन 'सुपो धातुप्रातिपदिकयोः' इति लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलक्षणेन समर्थयितव्या । तदपि प्रत्ययलक्षणं विघटयन्नाह—**ननु चेति । वचनादिति ।** यदि पुनरेकवचन-

**भावबोधिनी**

दो हैं । तब यथासंख्य की प्रवृत्ति क्यों नहीं होती है ? ] इस सूत्र का योगविभाग किया जायगा—( १ ) "तस्मिन् = खञि युष्मदस्मदोर्युष्माकास्माकौ ।" इसके बाद "अणि च ।" [ ( १ ) खञ् के परे रहते युष्मद् अस्मद् के युष्माक और अस्माक आदेश होते हैं । ( २ ) और अण् परे रहते भी ये दोनों आदेश होते हैं । [ अब यथासंख्य की प्राप्ति नहीं है । ] उदा० यौष्माकीणः, आस्माकीनः । यौष्माकः, आस्माकः । [ युवयोः युष्माकं वा इदम्—इस अर्थ में ये रूप होते हैं । इनकी प्रक्रिया पहलेवाले सूत्र में दी गई है । ]

उस खञ् और अण् के परे ही ये आदेश होते हैं—इसका क्या प्रयोजन है ? युष्मदीयः, अस्मदीयः । [ यहाँ वृद्धसंज्ञक मानकर छ' प्रत्यय हुआ है । अतः ये आदेश नहीं होते हैं 'छ' का 'ईय' आदेश करके रूप बनते हैं । ] ॥ २ ॥

एकवचन जिनके बाद में हैं ऐसे युष्मद् और अस्मद् के स्थान पर 'तवक' और ममक' ये आदेश यथासंख्य होते हैं यदि बाद में वह खञ् या अण् प्रत्यय हो । यहाँ निमित्त = खञ् और अण् का आदेशों के साथ यथासंख्य पूर्वसूत्र के समान ही नहीं होता है । [ अर्थात् वहाँ जैसे योगविभाग करके युष्माक और अस्माक का खञ् और अण् के साथ यथासंख्य नहीं किया गया था उसी प्रकार यहाँ भी योगविभाग की कल्पना करके यथासंख्य का वारण करना चाहिये । ]

[ शंका—युष्मद् तथा अस्मद् से एकवचन परे मानने पर ये 'तवक' 'ममक' आदेश होते हैं; परन्तु एकवचन = प्रत्यय का लुक् तो प्रातिपदिक बन जाने के कारण "सुपो धातुप्रातिपदिकयोः" ( पा० सू० २।४।७१ ) से हो जाता है । अतः यहाँ पर एकवचनपरत्व का उपपादन 'प्रत्ययलोपे प्रत्ययलक्षणम्' ( पा० सू० १।१।६२ ) से करना पड़ेगा । किन्तु इसका प्रतिषेध "न लुमताङ्गस्य" ( या० सू० १।१।६३ ) से हो जाता है । ऐसी स्थिति में यहाँ एकवचनपरत्व

**वचनात् प्रत्ययलक्षणं भविष्यति**[1] ।

**अथ वा—नैवेदं प्रत्ययलक्षणम्, किं तर्हि ? अन्वर्थग्रहणम् । एकवचने युष्मदस्मदी एकस्यार्थस्य वाचके तवकममकावादेशौ प्रतिपद्येते इति सूत्रार्थः । तावकीनः, मामकीनः । तावकः, मामकः ।**

**तस्मिन्नणि च ( ४. ३. २ ) इत्येव—त्वदीयः, मदीयः ॥**

**न्यासः**

इह सर्वविधिभ्यो लुग्विधिर्बलवानित्येकवचनस्य लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलोपलक्षणेन समर्थयितव्या । तदपि प्रत्ययलोपलक्षणं प्रतिषेधयितुमाह—**ननु चेत्यादि । वचनादित्यादि** परिहारः । यदि हि प्रत्ययलोपलक्षणं न स्यादिदं वचनमपार्थकं स्यादित्यभिप्रायः । ननु च यस्यैकवचनपरता सम्भवति तस्य विशेषणार्थमेकवचनं स्यात्, कस्यैकवचनपरता सम्भवति ? निमित्तस्य खञादेः । निमित्ते त्वेकवचनपरत्वेन विशेष्यमाणे सतीहैव स्याताम्—यौष्माकः पुत्र; आस्माकः पुत्र; अत्र ह्येकवचनपरत्वम्, तद्धि तस्योपपद्यते; इह च न स्याताम्—तावकाः पुत्राः, मामकाः पुत्रा इति, न ह्यत्र निमित्तस्यैकवचनपरता सम्भवतीति ? नैतदस्ति; युष्मदस्मदी पूर्वसूत्रे विशेष्ये अभूताम् । तथा हि—खञ्यणि च परतो युष्मदस्मदोरिति खञण्परता तयोः, अत एव युष्मदस्मदी विशेष्येते । तदिहापि तथाभूते एवानुवर्तेते; अजहद्धर्मत्वादधिकाराणामिति तयोरेवैकवचनपरत्वं विशेषणं युक्तम् । अथ वा—तवकममकयोर्विधेयत्वेन प्राधान्यात् तयोरेवैतद् विशेषणं युक्तम् । तयोरेव तद् विशेषणं भवत् स्थानिद्वारकमेव भवति । यदि स्थानिनोरेकवचनपरता, एवमादेशौ स्थानिवत्त्वादेकवचनपरौ भवतः । तदनेनापि प्रकारेण युष्मदस्मदोरेकवचनविशेषणं युक्तम्, न तु कथञ्चिन्निमित्तस्य खञादेः ।

**अथ वेत्यादि ।** पूर्वं पारिभाषिकमेकवचनमाश्रित्य व्याख्यातम्, इदानीं त्वर्थमाश्रित्य व्याचष्टे—एकोऽर्थ उच्यते येन तदेकवचनम् । अत्र तु व्याख्याने 'एकवचने' इति नेदं सप्तम्येकवचनम् । किं तर्हि ? प्रथमाद्विवचनान्तम् ॥ ३ ॥

**पदमञ्जरी**

परत्वेनाण्खञौ विशेष्येयाताम्, को दोषः ? इह च स्याताम्—युष्माकं छात्रो यौष्माकीणः, आस्माकीन इति, इह च न स्याताम्—तव छात्रास्तावकीनाः, मामकीना इति । तस्मात्पूर्वसूत्रे खञण्परतया विशेष्येते—युष्मदस्मदी, एकवचनपरतयापि ते एवात्र विशेष्येते, ततश्च वचनाद् आस्माकीनः—प्रत्ययलक्षणं भवतीत्येषैव गतिः ।

**अन्वर्थग्रहणमिति ।** एकोऽर्थ उच्यते येन तदेकवचनम् । अत्र च पक्षे 'एकवचने' इति प्रथमाद्विवचनान्तम्, न सप्तम्यन्तम् ॥ ३ ॥

**भावबोधिनी**

मिलता नहीं, तब ये आदेश कैसे होगें ? समाधान—इस आदेश वचन के फलस्वरूप ही यहाँ प्रत्ययलक्षण का प्रतिषेध नहीं होता है । प्रत्ययलक्षण होता है । अतः एकवचनपरत्व मिल जाने से आदेश हो जाते हैं यही लिख रहे हैं—]

—"न लुमताङ्गस्य" इस सूत्र से प्रत्यलक्षण का प्रतिषेध हो जाने के कारण [ युष्मद् और अस्मद् के ] बाद में एकवचन सम्भव नहीं है ? इस आदेश-विधायक सूत्र के कारण ही यहाँ प्रत्ययलक्षण [ का प्रतिषेध नहीं ] होता है ।

अथवा—यह प्रत्यलक्षण नहीं है; तो क्या है ? अन्वर्थग्रहण है [ एकः अर्थः उच्येतऽनेन—तत् एकवचनम् । ] एकवचन = एक अर्थ के वचन युष्मद् तथा अस्मद् = एक अर्थ के वाचक ये दोनों शब्द 'तवक' और 'ममक' इन आदेशों को प्राप्त करते हैं—यह सूत्र का अर्थ है । [ 'वचन' शब्द में 'करण' अर्थ में ल्युट् है । अतः यह 'प्रतिपादक' अर्थ का वाचक बन जाता है । ] उदा०—तावकीनः, मामकीनः । [ तेरा, मेरा । ] तावकः, मामकः । [ तेरा, मेरा । युष्मद् + खञ् = ईन, अस्मद् = खञ् = ईन, इसी प्रकार—युष्मद् + अण्, अस्मद् + अण्—यहाँ एक अर्थवाचकता मानकर 'तवक' और 'ममक' आदेश करके आदिवृद्धि में ये रूप होते हैं । ]

---

१. 'वचनात्प्रत्यय लक्षणप्रतिषेधो न संभवति'—इति पाठा० ।

**१५७७. अर्धाद्यत् ॥ ४ ॥ ( १३७४ )**

अर्द्धशब्दाद् यत् प्रत्ययो भवति शैषिकः । अणोऽपवादः । अर्द्ध्यम् ।

❀ सपूर्वपदाट्ठञ्वक्तव्यः ❀ ( म० भा० ४. ३. ४ वा० १ ) । बालेयार्द्धिकम् । गौतमार्द्धिकम् ॥

**१५७८. परावराधमोत्तमपूर्वाच्च ॥ ५ ॥ ( १३७५ )**

पर, अवर, अधम, उत्तम—इत्येवम्पूर्वाच्चार्धाद्यत् प्रत्ययो भवति शैषिकः । परार्द्ध्यम् । अवरार्द्ध्यम् । अधमार्द्ध्यम् । उत्तमार्द्ध्यम् ।

पूर्वग्रहणं किम्, 'परावराधमोत्तमेभ्यः' इत्येवोच्यते, अर्धादिति वर्त्तते, तस्य तत्पूर्वता विज्ञास्यते ? परावरशब्दावदिग्ग्रहणावपि स्तः—परं सुखम्, अवरं सुखमिति । तत्र कृतार्थत्वाद् दिक्छब्दपक्षे परेण ठञ्यतौ स्याताम् । अस्मात्पूर्वग्रहणाद्यत्प्रत्ययो भवति—परार्द्ध्यम्, अवरार्द्ध्यमिति ॥

**न्यासः**

**अर्धाद् यत् । ४॥ परावराधमोत्तमपूर्वाच्च** ॥ 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तदन्तविधिप्रतिषेधात् पूर्वेणाप्राप्तावयमारम्भः । तत्राधमोत्तमशब्दौ निन्दाप्रशंसावचनौ, तत्पूर्वादणि प्राप्ते सत्ययमारम्भः । परावरशब्दौ यावदिक्छब्दौ तत्पूर्वादप्यण्येव । यौ तु दिक्शब्दौ तत्पूर्वादुत्तरसूत्रेण ठञि यति च । कथं पुनः 'परावराधमोत्तमेभ्यः' इत्युच्यमाने परावरादिपूर्वता शक्या विज्ञातुम् ? इत्याह—**अर्धादिति वर्तत इत्यादि** । इह हि पूर्वसूत्रादर्धादित्यनुवर्तते । तत्र परावराधमोत्तमेभ्यः परो योऽर्द्धशब्दः—इत्येवं विशेष्यमाणेऽर्द्धशब्दसामर्थ्यादेव तस्य परावरादिपूर्वता विज्ञास्यते, तत् किं पूर्वग्रहणेन । **तत्रेति** । परावरयोरदिक्शब्दयोः ।

**पदमञ्जरी**

**अर्द्धाद्यत्** ॥ बल्यर्थं वस्तु बालेयम्, तस्यार्धम् = एकदेशः, तत्र भवं बालेयार्द्धिकम् ॥ ४ ॥

**परावराधमोत्तमपूर्वाच्च** ॥ 'सपूर्वपदाट्ठञ् वक्तव्यः' ( वा० ४४३ ) इत्यौपसङ्ख्यानिके ठञि प्राप्ते वचनम् ।

**अर्द्धादिति वर्तते इति** । ततश्च परावराधमोत्तमेभ्यः परो योऽर्द्धशब्द इत्येवं विशेषणसामर्थ्यादेवार्द्धशब्दस्य परावरादिपूर्वता विज्ञास्यते, तत्किं पूर्वग्रहणेनेति ? एवमनन्तरोक्तस्य चोद्यस्यैवैतत्समर्थनं परिहरति—

**भावबोधिनी**

ये आदेश 'अण्' और 'खञ्' परे ही होते हैं—[ अतः छ = ईय परे नहीं होते हैं—] त्वदीयः, मदीयः । [युष्मद् + छ = ईय, अस्मद् + छ = ईय "प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७।२।९८ ) से मपर्यन्त = 'युष्म' और 'अस्म' के 'त्व' और 'म' आदेश करने पर 'द्' शेष रह जाता है । त्वद् ईय = त्वदीयः, म द् ईय = मदीयः । तेरा, मेरा ] ॥ ३ ॥

'अर्ध' शब्द से 'यत्' यह शैषिक प्रत्यय होता है । अण् का अपवाद है । उदा० —अर्ध्यम् । [ अर्ध = यत्, भसंज्ञा, अलोप, "अचो रहाभ्यां द्वे" सूत्र से होने वाला द्वित्व वैकल्पिक है । जब 'ध्' का द्वित्व होता है तब जश्त्व करने पर 'द्' हो जाता है । ]

❀ 'पूर्वपदविशिष्ट अर्ध से ठञ् प्रत्यय कहना चाहिए ।" ❀ उदा०—बालेयार्द्धिकम्, गौतमार्द्धिकम् । [ बलि के लिये जो वस्तु है वह—बालेय है । उसका आधा = बालेयार्द्ध । 'उसमें होने वाली वस्तु" = बालेयार्द्धिकम् । गौतम का आधा, एकदेश, 'उसमें होने वाला' यह अर्थ —गौतमार्द्धिकम् का है । ] ॥ ४ ॥

जिस 'अर्ध' से पहले 'पर, अवर, अधम और उत्तम'—ये शब्द हैं, उससे भी शैषिक 'यत्' प्रत्यय होता है । [ पूर्वोक्त वार्तिक द्वारा ठञ् की प्राप्ति है । उस प्रसङ्ग में यह यत् किया जा रहा है । ] उदा० —परार्द्ध्यम् [ = परार्ध में होनेवाला ], अवरार्द्ध्यम् [ अवरार्द्ध में होनेवाला ] अधमार्द्ध्यम् [ अधमार्ध में होनेवाला ] उत्तमार्द्ध्यम् । [ उत्तमार्ध में होनेवाला [ इन सभी में 'यत्' प्रत्यय करने पर भसंज्ञा और अलोप करने पर रूप बनते हैं । ]

## १५७९. दिक्पूर्वपदाट्ठञ्च ॥ ६ ॥ ( १३७६ )

**दिक्पूर्वपदादर्धान्तात्प्रातिपदिकात् ठञ् प्रत्ययो भवति, चकाराद्यच्च शैषिकः । अणोऽपवादः । पूर्वार्द्ध्यम्, पौर्वार्द्धिकम् । दक्षिणार्द्ध्यम्, दाक्षिणार्द्धिकम् ।**

**पदग्रहणं स्वरूपविधिनिवारणार्थम् ॥**

### न्यासः

**परेणेति** । उत्तरसूत्रेण ठञ्यतौ स्यातामिति । यदि पूर्वग्रहणं न क्रियेतेत्यभिप्रायः । **अस्मादित्यादि** । परावरादि-पूर्वादेव यथा स्यादित्येतदेव हि पूर्वग्रहणस्य प्रयोजनम् । तेन हि पूर्वं कार्यं भवति, न परमित्येषोऽर्थः सूच्यते । तस्मात् पूर्वग्रहणाद् दिक्शब्दपक्षेऽपि परावरपूर्वाद् यदेव भवति ॥ ५ ॥

**दिक्पूर्वपदात् ठञ्च ॥ पौर्वार्द्धिकमिति** । पूर्वस्मिन्नर्द्धे जातः । 'तद्धितार्थ' इत्यादिना समासः, ततस्तद्धितः ।

अथ पदग्रहणं किमर्थम्, दिक्पूर्वादित्येवोच्येत ? इत्याह—**पदग्रहणमित्यादि** । असति हि पदग्रहणे स्वरूपविधिः स्यात्, ततश्च दिगर्द्धे जात इत्यत्रैव स्यात् । पदग्रहणे तु सति यन्नाम किञ्चिद् दिक्सम्बन्धि पूर्वपदं तस्य ग्रहणमुपपन्नं भवति ॥ ६ ॥

### पदमञ्जरी

**परावरशब्दाविति । अस्मात्तु पूर्वग्रहणाद्यप्रत्यय एव भवतीति** । पूर्वविप्रतिषेधसूचनद्वारेणेति भावः ॥ ५ ॥

**दिक्पूर्वपदाट्ठञ्च ॥ अणोऽपवाद इति** । सौत्रीं प्राप्तिमभिप्रेत्यैतदुक्तम्, 'सपूर्वपदाट्ठञ् वक्तव्यः' (वा० ४४३) इत्युक्तत्वात् ।

**पदग्रहणमित्यादि** । 'दिक्पूर्वात्' इत्युच्यमाने स्वरूपविधिः स्यात्, ततश्च दिगर्धे जात इत्यत्रैव स्यात् । पदग्रहणे तु सति—पद्यतेऽनेनेति पदम्, दिशः पदं पूर्वमस्मादिति निपातनात्समासः ॥ ६ ॥

### भावबोधिनी

शङ्का—सूत्र में 'पूर्व' का ग्रहण किया गया है, 'परावराधमोत्तमेभ्यः' ऐसा ही कहना चाहिए, क्योंकि 'अर्धात्' इसकी अनुवृत्ति होती है, अतः इसके पूर्ववर्त्तित्व का ज्ञान हो जायगा, [ अर्थात् 'अर्ध' से पूर्व में 'अवर' आदि हों तो 'यत्' प्रत्यय होगा—यह ज्ञात हो जायगा । अतः सूत्र में 'पूर्व' इसके ग्रहण का क्या लाभ ] ? समाधान—'पर' तथा 'अवर' शब्द दिग्वाची से भिन्न भी हैं; जैसे—परं सुखम्, अवरं सुखम् [ पर सुख, अवर = हीन सुख । ] इन अर्थों में प्रस्तुत सूत्र से विहित 'यत्' प्रत्यय के चरितार्थ हो जाने के कारण 'दिग्वाची पूर्व तथा अवर शब्द हैं' इस पक्ष में परवर्ती सूत्र से ठञ् और यत् होने लगेंगे । जब इस 'पूर्व' का ग्रहण किया गया तब 'परार्द्ध और अवरार्द्ध' इनसे केवल यत् प्रत्यय ही होता है ।—परार्द्ध्यम्, अवरार्द्ध्यम् ।

[ इससे यह सूचित होता है यहाँ पूर्व का ही कार्य होता है, पर का नहीं । इस कारण दिग्वाचकता पक्ष में भी इन दोनों से केवल यत् ही होता है ] ॥ ५ ॥

दिशावाची शब्द जिसके पूर्व में और 'अर्ध' शब्द जिसके अन्त में हैं, ऐसे प्रातिपदिक शब्द से ठञ् प्रत्यय होता है और 'च' के बल से यत् यह भी शैषिक प्रत्यय होता है । उदा० पूर्वार्द्ध्यम्, पौर्वार्द्धिकम् [ पूर्वार्द्ध में होनेवाला ] दक्षिणार्द्ध्यम् दाक्षिणार्द्धिकम् । [ दक्षिणार्द्ध में होने वाला । यहाँ पूर्वा और दक्षिणा ये दिशावाची हैं । पूर्वस्मिन् अर्धे जातः—इसमें समास होता है—"तद्धितार्थोत्तर" ( पा० सू० २।१।५१ ) । अतः 'यत्' प्रत्यय में भसंज्ञा और 'अ' लोप, ठञ् में 'इक' आदेश, आदिवृद्धि, भसंज्ञा, अलोप करने पर रूप बनते हैं । ]

'पद' इसका ग्रहण स्वरूपविधि का निवारण करने के लिए है । [ भाव यह है कि यदि केवल 'दिक्पूर्वात्' ऐसा सूत्र होता तब तो 'दिगर्धे जातः' इसी में प्रत्यय होता । जब पदग्रहण किया गया तो दिशावाची कोई भी पद पूर्व में रहने पर प्रत्यय होता है । ] ॥ ६ ॥

## १५८०. ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥ ( १३७७ )

'दिक्पूर्वपदाद्' इत्येव । ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च प्रातिपदिकाद् दिक्पूर्वपदादर्द्धान्तादञ्ठञौ प्रत्ययौ भवतः शैषिकौ यतोऽपवादौ । इमे खल्वस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः, पौर्वार्धिकाः । दाक्षिणार्धाः, दाक्षिणार्धिकाः ॥

## १५८१. मध्यान्मः ॥ ८ ॥ ( १३७८ )

मध्यशब्दान्मः प्रत्ययो भवति शैषिकः । अणोऽपवादः । मध्यमः ॥

❀ आदेश्चेति वक्तव्यम् ❀ ( ? ) । आदिमः ।

❀ अवोऽधसोर्लोपश्च ❀ ( ? ) । अवमम् । अधमम् ॥

## १५८२ अ सांप्रतिके ॥ ९ ॥ ( १३७९ )

अकारः प्रत्ययो भवति मध्यशब्दात्सांप्रतिके जातादौ प्रत्ययार्थे । मस्यापवादः । सांप्रतिकम् = न्याय्यम्,

### न्यासः

ग्रामजनपदैकदेशादञ्ठञौ ॥ यतोऽपवादाविति । पूर्वेण प्राप्तस्य । पौर्वार्धा इति । पूर्ववत् समासः । नन्वत्र पूर्वस्मिन्नर्द्धे ग्रामस्येति ग्राममपेक्षमाणस्यार्धशब्दस्यासामर्थ्यात् समासो नोपपद्यते ? नैष दोष; प्रधानमत्रार्द्धं भवति । प्रधानस्य सापेक्षस्यापि समासः—इत्येतद् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्र ज्ञापितम् ॥ ७ ॥

मध्यान्मः ॥ मध्यशब्दोः यो गहादिषु पृथिवीमध्यवचनः 'मध्यमध्यमञ्चाण् चरणे' इति पठ्यते, ततस्तु तत एव विधिर्भवति । यस्त्वन्यस्तस्येह ग्रहणं वेदितव्यम् ॥ ८ ॥

अ साम्प्रतिके ॥ न्याय्यं युक्तमित्यादिभिः पर्यायैः साम्प्रतिकशब्दार्थमाचष्टे—साम्प्रतिकं न्याय्यमुच्यते ।

### पदमञ्जरी

ग्रामजनपदैकदेशाञ्ठञौ ॥ पौर्वार्द्धा इति । ग्रामस्य पूर्वस्मिन्नर्द्धे भव इति तद्धितार्थे समासः, ततः प्रत्ययः । यद्यप्यर्द्धशब्दो ग्राममपेक्षते, तथाप्यस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च वृत्तिद्वयमप्यविरुद्धम्— समासवृत्तिः, तद्धितवृत्तिश्च । ठञ्ग्रहणं किमर्थम्, नाञ्चेत्येवोच्येत ? न चैवमुच्यमाने यतोऽपि समुच्चयप्रसङ्गः; पूर्वसूत्रे चानुकृष्टत्वात् । तस्माद्विस्पष्टार्थं ठञ्ग्रहणम् ॥ ७ ॥ ८ ॥

अ साम्प्रतिके ॥ साम्प्रतिकं युक्तं न्याय्यमुचितं सममुच्यत इति । कस्यचित्कश्चित्प्रसिद्ध इत्यनेकशब्दोपादानम् । सम्प्रतिशब्द इदानीमित्यत्रार्थे प्रसिद्धोऽपि न्याय्येऽपि वर्तते । दृश्यते हि—'अनाप्तश्चतुरात्रोऽतिरिक्तः

### भावबोधिनी

[ दिक्पूर्वपदात्' इसकी अनुवृत्ति है । ] 'दिशावाची पूर्व में हो उससे'—इसकी अनुवृत्ति है । ग्राम के एक देश = भाग के वाचक और जनपद के एकदेश = भाग के वाचक, प्रातिपदिक जिसके पूर्व में दिशावाची शब्द है और अन्त में अर्ध शब्द है, उससे 'अञ्' और 'ठञ् ये 'यत्' के अपवाद शैषिक प्रत्यय होते हैं । उदा०—ये हमारे गाँव के या जनपद के 'पौर्वार्द्ध' या 'पौर्वार्द्धिक' दाक्षिणार्द्धाः, दाक्षिणार्द्धिकाः हैं । [ यहाँ पूर्वस्मिन् अर्धे जाता, दक्षिणस्मिन् अर्धे जाताः— इन अर्थों में "तद्धितार्थोत्तरपदसमाहारे च" ( पा० सू० २।१।५१ ) से समास करने पर प्रत्यय होता है ] ॥ ७ ॥

'मध्य' शब्द से 'म' यह शैषिक प्रत्यय होता है । यह अण् का अपवाद है । उदा०—मध्यमः । [ मध्य में होने वाला । ] ❀ 'आदि' शब्द से 'म' होता है' यह कहना चाहिए ।' ❀ उदा०—आदिमः । [ आदि में होने वाला ] ❀ 'अधस्' का 'अव' आदेश होता है और अन्त्यवर्ण का लोप होता है । ❀ उदा०—अवमम्, अधमम् । [ अधस् से 'म' प्रत्यय और 'अव' आदेश-अवम । स् का लोप—अधम । नीच होने वाला । ] ॥ ८ ॥

'मध्य' शब्द से साम्प्रतिक उत्पन्न हुआ आदि अर्थों में 'अ' प्रत्यय होता है । यह 'म' का अपवाद है । साम्प्रतिक = न्याय्य, युक्त, उचित, सम— यह कहा जाता है, अर्थात् ये अर्थ हैं । उदा०—न अतिदीर्घं न अतिह्रस्वम् = मध्यं

**युक्तम्, उचितम्, समयुच्यते । नातिदीर्घं नातिह्रस्वं मध्यं काष्ठम् । नात्युत्कृष्टो नात्यवकृष्टो मध्यो वैयाकरणः । मध्या स्त्री ॥**

## १५८३. द्वीपादनुसमुद्रं यञ् ॥ १० ॥ ( १३८० )

**समुद्रसमीपे यो द्वीपस्तस्माद् यञ् प्रत्ययो भवति शैषिकः । कच्छादिपाठाद् अणो ( ४. २. १३३ ) मनुष्यवुञश्चापवादः ( ४. २. १३४ ) । द्वैप्यम् । 'द्वैप्यं भवन्तोऽनुचरन्ति चक्रम् ।'**

**अनुसमुद्रमिति किम् ? द्वैपकम् । द्वैपमन्यत् ॥**

## १५८४. कालाट्ठञ् ॥ ११ ॥ ( १३८१ )

**कालविशेषवाचिनः प्रातिपदिकात् ठञ् प्रत्ययो भवति शैषिकः । अणोऽपवादः । वृद्धात् तु छं परत्वाद्बाधते । मासिकः । आर्द्धमासिकः । सांवत्सरिकः ।**

### न्यासः

तथा हि प्रयोगो दृश्यते न बाह्यं प्राप्तमित्येवं वर्तितव्यमसाम्प्रतमिति । अत्र न्याय्यः प्रतिषेधः प्रतीयते । साम्प्रतमेव साम्प्रतिकम्, विनयादेराकृतिगणत्वात् 'विनयादिभ्यश्च' इति ठक् ॥ ९ ॥

**द्वीपादनुसमुद्रं यञ्** ॥ अनुसमुद्रमिति । समुद्रं समयाऽनुसमुद्रम् । 'अनुर्यत्समया' इत्यव्ययीभावः । **अणो मनुष्यवुञश्चापवाद इति** । 'कच्छादिभ्यश्च' इति प्राप्तस्याणः । 'मनुष्यतत्स्थयोर्वुञ्' इति प्राप्तस्य वुञः ॥ १० ॥

**कालाट् ठञ्** ॥ **कालविशेषवाचिन इति** । अनेन कालादित्यर्थग्रहणम्, न स्वरूपस्येति । यदि हि स्वरूपग्रहणं स्यात् सन्धिवेलादिसूत्रेणाणो विधानमनर्थकं स्यात्; 'प्राग्दीव्यतोऽण्' इत्यनेनैव सिद्धत्वात् । इह त्वर्थग्रहणे ठञ्बाधनार्थत्वात् तस्यानर्थक्यं भवति । तस्मादर्थग्रहणमेतत् ।

### पदमञ्जरी

षड्रात्रोऽथ वा एष सम्प्रति यज्ञो यत्पञ्चरात्र इति', न न्यूनो नातिरिक्तः, सम इत्यर्थः । स च प्रज्ञादौ पठ्यते । तेन साम्प्रतम्, सम्प्रतीति च पर्यायौ ॥ ९ ॥

**द्वीपादनुसमुद्रं यञ्** ॥ **अनुसमुद्रमिति** । 'अनुर्यत्समया' इत्यव्ययीभावः । सप्तम्यन्तं चैतद्, तद् द्वीपस्य विशेषणम्, तदाह—**समुद्रसमीपे यो द्वीप इति** ॥ १० ॥

**कालट्ठञ्** ॥ **कालविशेषवाचिन इति** । स्वरूपस्य च पर्यायाणां च ग्रहणं न भवति; सन्धिवेलादिसूत्रेण सन्धिवेलात्रयोदशीप्रभृतिभ्योऽवृद्धेभ्योऽण्विधानात् । तद्धि ठञो बाधनार्थः, अर्थग्रहणे च तेभ्यष्ठञः प्रसङ्गः ।

### भावबोधिनी

काष्ठम्—। [ न बहुत बड़ी और न बहु छोटी लकड़ी । अर्थात् ठीक लकड़ी । ] न अत्युत्कृष्टः, न अत्यवकृष्टः मध्यः वैयाकरणः । [ न तो बहुत ऊँचा और न बहुत नीचा वैयाकरण अर्थात् ठीक वैयाकरग । ] मध्या स्त्री । [ न अत्यधिक अच्छी और न अत्यधिक खराब स्त्री । इसे 'कामचलाऊ' का वाचक समझना चाहिए । ] ॥ ९ ॥

समुद्र के समीप में जो द्वीप हैं, उसके वाचक प्रातिपदिक से यञ् शैषिक प्रत्यय होता है । कच्छादिगण में पाठ होने से अण् का और ''मनुष्यतत्स्थयोः'' ( पा० सू० ४।२।१०४ ) से प्राप्त वुञ् का अपवाद यह प्रत्यय है । उदा०—द्वैप्यम् । [ द्वीपे भवम्—इस अर्थ में यञ्=य प्रत्यय आदिवृद्धि । द्वीप में उत्पन्न । ] 'द्वैप्यं भवन्तोऽनुचरन्ति चक्रम् ।' [ द्वैप्यं चक्रं भवन्तः अनुचरन्ति । द्वीप में उत्पन्न चक्र के पीछे-पीछे आप लोग चल रहे हैं । यह वाक्य काशिकाकार ने कहाँ से लिये, स्पष्ट प्रतीत नहीं होता है । ]

अनुसमुद्र=समुद्र के समीप में—इसका क्या लाभ है ? द्वैपकम्, द्वैपम् अन्यत् । [ समुद्र के समीप से भिन्न जो द्वीप है, उसमें उत्पन्न वस्तु के लिये यह प्रत्यय न होकर अण् तथा वुञ् ये पूर्वोक्त प्रत्यय ही होते हैं ] ॥ १० ॥

कालविशेष के वाचक प्रातिपदिक से शैषिक ठञ् प्रत्यय होता है । यह अण् का अपवाद है । वृद्धसंज्ञक से प्राप्त होनेवाले 'छ' का तो पर होने से बाध कर लेता है । उदा०—मासिकः, आर्द्धमासिकः, सांवत्सरिकः । [ मास, अर्धमास

**यथाकथञ्चिद् गुणवृत्त्यापि काले वर्त्तमानात्प्रत्यय इष्यते। कादम्बपुष्पिकम्। व्रैहिपलालिकम्। 'तत्र जातः' ( ४. ३. २५ ) इति प्रागतः कालाधिकारः॥**

**१५८५. श्राद्धे शरदः॥ १२॥ ( १३८२ )**

**न्यासः**

इह केचिच्छब्दा मुख्यया वृत्त्या काले वर्तन्ते— मासोऽर्द्धमास इति, केचिद् गौण्या वृत्त्या— कदम्बपुष्पसाहचर्यात् कालः कदम्बपुष्पः, व्रीहिपलालेन साहचर्यात् कालो व्रीहिपलाल इति; तेषामिहोभयेषामपि ग्रहणम्। अत एवाह— **यथा कथञ्चिदिति**। येन केनचित् प्रकारेणेत्यर्थः। **गुणवृत्त्यापीति**। अनेन यथा-कथञ्चिदित्यस्यार्थं विस्पष्टीकरोति। औपचारिकी वृत्तिः, अप्रधानभूता वृत्तिरित्यर्थः। अपिशब्दान्मुख्ययापि वृत्त्या। ननु च मुख्ये सति गौणस्य ग्रहणमयुक्तम्, गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययात्? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति— गौणस्यापि कालस्य ग्रहणमिति, यदयं सन्धिवेलादिसूत्रे प्रकृतेन कालग्रहणेन नक्षत्राणि विशिनष्टि। न हि मुख्यार्थः कालो नक्षत्राणां विशेषणनुपपद्यते; तेषु मुख्यस्य कालत्वस्यासम्भवात्॥ ११॥

**श्राद्धे शरदः॥ ऋत्वणोऽपवाद इति**। सन्धिवेलादिसूत्रे प्राप्तस्य श्राद्ध इति न कर्म गृह्यत इति।

**पदमञ्जरी**

इह 'गौणमुख्ययोर्मुख्ये सम्प्रत्ययः' ( व्या० परि० ४ ) इति न्यायान्मुख्यया वृत्त्या ये काले वर्तन्ते मासोऽर्द्धमास इति, तत एवायं प्रत्ययः स्याद; न तु गौणवृत्त्या कालवृत्तेः, कदम्बपुष्पसाहचर्यात्कदम्ब कालः, व्रीहिपलालसाहचर्याद् व्रीहिपलालं काल इत्यादेरित्यशङ्क्याह— **यथाकथञ्चिदिति**। येन केनचित्प्रकारेण। एतदेव स्पष्टयति— **गुणवृत्त्यापीति**। परत्र परशब्दप्रवृत्तेर्यन्निबन्धनं स गुणः, तन्निबन्धना वृत्तिर्गुणवृत्तिः। एतच्च सन्धिवेलादिसूत्रेऽनेन कालग्रहणेन नक्षत्राणि यद्विशिनष्टि ततो लभ्यते। न हि मुख्यार्थः कालशब्दोऽस्ति नक्षत्राणां सम्भवति। पुष्यादिसमीपस्थेन हि चन्द्रमसा योगाल्लक्षितलक्षणया पुष्यादिशब्दानां काले वृत्तिः। सैव च 'लुबविशेषे' इति लुब्विधानेनाप्यन्वाख्यायते पौषादिनिवृत्त्यर्थम्, न त्वेतावता कालस्तेषां मुख्योऽर्थः॥ ११॥

**श्राद्धे शरदः॥ श्राद्ध इति कर्म गृह्यते इति**। श्रद्धास्मिन्विद्यत इति 'प्रज्ञाश्रद्धार्चा' इति मत्वर्थीयोऽण्,

**भावबोधिनी**

और संवत्सर— ये कालविशेष के वाचक हैं। अतः ठञ् प्रत्यय, आदिवृद्धि, ठ=इक आदेश, भसंज्ञा, अलोप करने पर रूप बनते हैं। महीने में होनेवाला। आधे महीने में होने वाला। वर्ष में होने वाला। ]

जिस किसी प्रकार गौणवृत्ति से भी काल अर्थ में वर्तमान = वाचक से यह प्रत्यय इष्ट है। उदा०—कादम्ब-पुष्पिकम्। व्रैहिपलालिकम्। [ कदम्बपुष्प जिस समय होते हैं, उस समय होनेवाला। व्रीहि और पलाल जब होते हैं तब होने वाला। ] यहाँ से लेकर 'तत्र जातः' ( या० सू० ४।३।२५ ) से पहले तक काल का अधिकार है।

**विमर्श**—इस सूत्र में गौणीवृत्ति अर्थात् लक्षणा द्वारा भी जो कालवाचक बनता है, उसका भी ग्रहण है। इस कथन में प्रमाण है—"सिन्धुवेलाद्यृतुनक्षत्रेभ्यः" ( ४।३।१६ ) इस सूत्र में काल से नक्षत्र को विशेषित करना। नक्षत्रों का मुख्य अर्थ काल नहीं माना जा सकता। पुष्यादि नक्षत्र के समीपस्थ चन्द्रमा द्वारा योग के कारण पुष्यादि नक्षत्र वाचक भी काल अर्थ में हो जाते हैं। अतः यह स्पष्ट है कि यहाँ गौणमुख्य न्याय नहीं माना जाता है। इस लिये कदम्बपुष्प के साहचर्य से कदम्बपुष्पवाला काल और व्रीहिपलाल के साहचर्य से व्रीहिपलाल वाला काल। उस काल में जो होता है उसे 'कादम्बपुष्पिकम्' व्रैहिपलालिकम्' कहा जाता है। अतः यहाँ 'कालात्=कालप्रतिपादकात्' यह अर्थ करना चाहिए॥ ११॥

'श्राद्ध' अर्थ रहने पर शरद् शब्द से ठञ् शैषिक प्रत्यय होता है। ऋतुवाचक होने से प्राप्त अण् का यह अपवाद है। श्राद्ध' यह कर्म लिया जाता है, श्रद्धावान् पुरुष अर्थ नहीं लिया जाता है, क्योंकि वैसा अभिधान नहीं है।

**शरच्छब्दात् ठञ् प्रत्ययो भवति श्राद्धेऽभिधेये शैषिकः। ऋत्वणोऽपवादः (४. ३. १६)। 'श्राद्धे' इति च कर्म गृह्यते, न श्रद्धावान्पुरुषः; अनभिधानात्। शारदिकं श्राद्धम्। शारदमन्यत्॥**

## १५८६. विभाषा रोगातपयोः॥ १३॥ (१३८३)

**'शरदः' इत्येव। रोगे, आतपे चाभिधेये शरच्छब्दाट्ठञ् प्रत्ययो वा भवति शैषिकः। ऋत्वणोऽपवादः। शारदिको रोगः। शारदिक आतपः। शारदो रोगः। शारद आतपः।**

**रोगातपयोरिति किम्? शारदं दधि॥**

## १५८७. निशाप्रदोषाभ्यां च॥ १४॥ (१३८४)

**निशाप्रदोषशब्दाभ्यां विभाषा ठञ् प्रत्ययो भवति शैषिकः। 'कालाट्ठञ्' (४. ३. ११) इति नित्ये ठञि प्राप्ते विकल्प उच्यते। नैशम्, नैशिकम्। प्रादोषम्, प्रादोषिकम्॥**

## १५८८. श्वसस्तुट् च॥ १५॥ (१३८५)

**न्यासः**

क्रियाविशेषः कश्चित् शास्त्रोक्तेन विधिना साध्यः श्राद्धग्रहणेन गृह्यते, न तु श्रद्धावान् पुरुषः। कुत एतत्? तस्य प्रत्ययेनानभिधानात्। शारदिकशब्देन ह्यभिधानशक्तिस्वाभाव्यात् कर्मण एवाभिधानम्, न पुरुषस्य॥ १२॥

**विभाषा रोगातपयोः॥ १३॥ निशाप्रदोषाभ्याञ्च॥ १४॥ श्वसस्तुट् च॥ तस्य वेति। ठञः। कुत** एतत्? तस्य विधीयमानतया प्राधान्यात्, प्रधाने च कार्यसम्प्रत्ययात्। स च तुडागम इकादेशे कृते भवतीति वेदितव्यम्। ननु सन्नियोगशिष्टत्वात् तुटस्तेनैव तावद् भवितव्यम्, पश्चादङ्गसंज्ञायामभिनिर्वृत्तायामिकादेशेन?

**पदमञ्जरी**

श्रद्धया सम्पाद्यं पित्र्यं कर्म श्राद्धशब्देन उच्यत इत्यर्थः। **न श्रद्धावान् पुरुष इति**। यदा स एव णः षष्ठ्यर्थे भवति तदा पुरुषवृत्तिः श्राद्धशब्दः। कथं पुनः शब्दसाधारण्येऽप्ययं विशेषो लभ्यते? इत्याह—**अनभिधानादिति। शारदिकं श्राद्धमिति**। यद्यत्र विहितं तत्तत्र भवमिति भवे प्रत्ययः॥ १२॥ १३॥ १४॥

**श्वसस्तुट् च॥ तस्य चेति**। ठञः, न तु श्वःशब्दस्य। कुत एतत्? ठञो विधेयत्वेन प्राधान्यात्। स च तुडागम इकादेशे कृते भवतीति वेदितव्यम्। ननु चान्तरङ्गत्वादिकादेशात्प्राक् ठञस्तुट् प्राप्नोति,

**भावबोधिनी**

उदा०—शारदिकं श्राद्धम्। शारदम् अन्यत्। [शरद् ऋतु में होनेवाला श्राद्ध = 'शारदिक' है। अन्य वस्तु 'शारद' कही जाती है। जब ठञ् होता है तब आदिवृद्धि और इक आदेश होता है। श्राद्ध से भिन्न वस्तु अर्थ में 'सन्धिवेला-द्यृतु०' (या* सू० ४।३।१६) से अण् प्रत्यय होता है]॥ १२॥

'शरद्' से ही। रोग और आतप अर्थ अभिधेय रहने पर 'शरद्' से शैषिक ठञ् विकल्प से होता है। यह ऋतुवाचक से प्राप्त अण् का अपवाद है। उदा०—शारदिकः रोगः शारदिक आतपः। [शरद्ऋतु में होने वाला रोग और आतप = धूप। पक्ष में अण् होने पर] शारदो रोगः, शारद आतपः। [ये रूप भी होते हैं।]

रोग और आतप—इन्हीं अर्थों में क्यों—इसका क्या लाभ है? शारदं दधि। [शरद ऋतु में होनेवाला दही। यहाँ केवल अण् होता है]॥ १३॥

'निशा' और 'प्रदोष' इन शब्दों से शैषिक ठञ् प्रत्यय विकल्प से होता है। "कालाट्ठञ्" इस पूर्ववर्त्ती से नित्य ठञ् के प्राप्त रहते यह विकल्प कहा जा रहा है। उदा०—नैशिकम्, नैशम्। प्रादोषिकम्, प्रादोषम्। [निशायां भवम् तथा प्रदोषे भवम्—इन अर्थों में ठञ् = इक और अण् होते हैं]॥ १४॥

'विभाषा' = विकल्प से। 'श्वस्' शब्द से विकल्प से ठञ् प्रत्यय होता है और इसका तुट् का आगम भी होता है। "ऐषमोह्यःश्वसोऽन्यतरस्याम्" (पा० सू० ४।२।१०५) सूत्र द्वारा इस श्वस् शब्द से त्यप् प्रत्यय भी किया गया है।

'विभाषा' इत्येव। श्वःशब्दाद्विभाषा ठञ् प्रत्ययो भवति, तस्य च तुडागमो भवति। त्यप्प्रत्ययोऽप्यतो विहितः 'ऐषमोह्यःश्वसोऽन्यतरस्याम्' ( ४. २. १०५ ) इति; एताभ्यां मुक्ते ट्युट्युलावपि भवतः—शौवस्तिकः, श्वस्त्यः, श्वस्तनः ॥

## १५८९. सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥ १६ ॥ ( १३८७ )

'कालात्' इत्येव सन्धिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण्प्रत्ययो भवति शैषिकः। ठञोऽपवादः। अण्ग्रहणं वृद्धाच्छस्य ( ४. २. ११४ ) बाधनार्थम्। सन्धिवेलादिभ्यस्तावत्—सान्धिवेलम्। सान्ध्यम्। ऋतुभ्यः—ग्रैष्मम्। शैशिरम्। नक्षत्रेभ्यः—तैषम्। पौषम्।

### न्यासः

नैतदस्ति; उपदेशावस्थायामेव हीकादेशे कृते न भवितव्यम्, ज्ञापकात्। यदयम् 'वुच्छण्कठच्' इति प्रत्ययस्वरार्थमनुबन्धं चकारं करोति। प्रत्ययसंज्ञायाः सन्नियोगाद्धि प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वम्, किञ्चित्करणेन ? तस्माच्चित्करणाद् विज्ञायते—सन्नियोगशिष्टेभ्योऽपि पूर्वमिकादेशो भवति। तेन ठग्ग्रहणान्यङ्गसंज्ञाभूतानीकमेव बोधयन्तीति तुडपि तस्यैव भविष्यतीति विज्ञायते। **एताभ्यामित्यादि**। श्वःशब्दोऽयमव्ययं कालवाची। तेन यदा ठञ्त्यपौ न भवतः, तदा 'सायञ्चिरम्' इत्यादिना ट्युट्युलौ अपि भवतः ॥ १५ ॥

**सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** ॥ **ठञोऽपवाद इति**। 'कालाट्ठञ्' इति प्राप्तस्य। अथाण्ग्रहणं किमर्थम्, यथाविहितमेवोच्येत, तेनैवमुच्यमाने न प्राप्नोतीत्याशङ्कनीयम्, यदि ठञ् स्यात् पुनर्वचनमनर्थकं स्यात्, तस्माद् वचनप्रामाण्याद् यो विहितो न स प्राप्नोति, ठञ्प्रत्ययेन बाधितत्वात् स एव भविष्यति, स चाण्च ? इत्यत

### पदमञ्जरी

इकादेशस्त्वङ्गाधिकारे विधानादङ्गसंज्ञायामभिनिर्वृत्तायां पश्चाद् भवन्बहिरङ्गः, तुटि च कृते प्रत्ययादेष्ठस्येकादेशविधानाद्यथा कर्मठ इत्यत्र न भवति एवमत्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते; नैवं शक्यम्, 'इसुसुक्तान्तात्कः' इति कादेशः स्यात्, तस्मादस्तु परादिरेव। कथमिकादेशः ? ज्ञापकात्सिद्धम्, यदयं वुञ्छणादिषु ठचश्चित्करणं करोति, तज्ज्ञापयति—अन्तरङ्गेभ्योऽपि पूर्वमिकादेश एव भवतीति। यदि न स्यात्, प्रत्ययसंज्ञासन्नियोगशिष्टे प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वं स्यात्। **ट्युट्युलावपि भवत इति**। 'सायंचिरम्' इत्यादिना श्वःशब्दोऽव्ययम्, कालवाची चेति कृत्वा। **शौवस्तिकमिति**। द्वारादित्वाद् वृद्धिप्रतिषेधः, ऐजागमश्च ॥ १५ ॥

**सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** ॥ **अण्ग्रहणं वृद्धाच्छस्य बाधनार्थमिति**। असत्यण्ग्रहणे सन्धिवेलादिभ्यो यथाविहितमित्युच्यमाने यद्यप्यारम्भसामर्थ्यात्कालाट्ठञ् न भवति; तथापि सन्धिवेलादिषु पठितात्पौर्णमासीशब्दात्स्वात्यादेश्च वृद्धाच्छः स्याद्, वचनं तु कालाट्ठञो बाधनार्थं स्यात्। तस्मादण्ग्रहणं कर्तव्यं वृद्धाच्छस्य

### भावबोधिनी

इन दोनों प्रत्ययों के न होने पर [ "सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यः" ( पा० सू० ४।४।२३ ) इससे ट्यु तथा ट्युल् प्रत्यय भी होते हैं—शौवस्तिकः, श्वस्त्यः, श्वस्तनः। [ श्वः भवः आदि अर्थों में जब प्रस्तुत सूत्र से ठञ् = इक प्रत्यय और उसे तुट् त् आगम होता है— श्वस् त् इक। ऐच् = औ का आगम करने पर—शौवस्तिकम्। त्यप् करने पर—श्वस् + त्य। जब ये नहीं होते हैं तब ट्यु और ट्युल् = यु प्रत्यय, तुट आगम—श्वस् त् + यु, यु का 'अन' आदेश करने पर—श्वस्तनः रूप बनता है ] ॥ १५ ॥

'कालात्' ( कालवाची से )—इसकी अनुवृत्ति है। सन्धिवेला आदि, ऋतुओं और नक्षत्रों से जो कि काल अर्थ में विद्यमान हैं, [ कालार्थ के प्रतिपादक हैं ] उनसे शैषिक अण् प्रत्यय होता है। यह ठञ् का अपवाद है। अण् का ग्रहण वृद्धसंज्ञक से होने वाले छ का बाध करने के लिए है। उदा०—( क )—सन्धिवेला आदि से—सान्धिवेलम्।

**सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पौर्णमासी । प्रतिपत् ॥**

**॥ संवत्सरात्फलपर्वणोः ॥ ( ग० सू० १०४ ) । सांवत्सरं फलम् । सांवत्सरं पर्व ॥**

**१९९०. प्रावृष एण्यः ॥ १७ ॥ ( १३८८ )**

**प्रावृष्शब्दादेण्यः प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । प्रावृषेण्यो बलाहकः ॥**

**न्यासः**

आह **अण्ग्रहणमित्यादि** । सन्धिवेलादिषु पौर्णमासीशब्दो वृद्धः पठ्यते । स्वातिरिति नक्षत्रशब्दो वृद्धोऽस्ति । तत्र यद्यण्ग्रहणं न क्रियेत, ताभ्यां परत्वात् ठञा छे बाधिते पुनर्वचनाच्छ एव स्यात् । तस्मात् तमपि बाधित्वा वृद्धादणेव यथा स्यादित्येवमर्थं पुनरण्ग्रहणम् । **तैषम्, पौषमिति** । तिष्यपुष्यशब्दाभ्यां 'नक्षत्रेण युक्तः कालः' इत्यण्, तस्याणो 'लुबविशेषे' इति लुप्, ततोऽनेनाण्, 'तिष्यपुष्ययोर्नक्षत्राणि' इति यलोपः ।

**संवत्सरात्फलपर्वणोरिति** । संवत्सरशब्दादण्भवति फले पर्वणि चाभिधेये । सांवत्सरं फलम्, सांवत्सरं पर्व वा । सांवत्सरिकमन्यत् ॥ १६ ॥

**प्रावृष एण्यः** ॥ अथ किमर्थं प्रत्यये मूर्धन्यः पठ्यते, न 'रषाभ्याम्' इत्यनेनैव णत्वं भविष्यति ? नैवं शक्यम्, इह हि न स्यात्—प्रावृषेणिति, पदान्तत्वात् ॥ १७ ॥

**पदमञ्जरी**

बाधनार्थम् । **सौवातमिति**[1] । 'अत सातत्यगमने' ( धा० पा० ३८ ) सुपूर्वात् 'अज्यतिभ्यां च' इतीण् प्रत्ययः, स्वात्या युक्तः काल इत्यण्, तस्य 'लुबविशेषे' इति लुप्, ततो भवादावर्थेऽनेनाण्, 'न य्वाभ्याम्' इति वृद्धिप्रतिषेधः, ऐजागमश्च । जातार्थे तु 'श्रविष्ठाफल्गुनी' इति लुकि स्वातिरिति भवति । **तैषमिति** । अत्रापि जातार्थे पूर्ववल्लुका भवितव्यमिति भवादौ प्रत्ययः, 'तिष्यपुष्ययोर्नक्षत्राणि यलोपः' ( वा० ८०८ ) इति यलोपः । **संवत्सरात्फलपर्वणोरिति** । सांवत्सरं फलं पर्व वा, सांवत्सरिकमन्यत् ॥ १६ ॥

**प्रावृष एण्यः** ॥ प्रवर्षतीति प्रावृट्, क्विपि 'नहिवृति' इत्यादिना दीर्घः । **प्रावृषेण्य इति** । भवार्थे प्रत्ययः, जाते तु प्रावृषष्ठपं वक्ष्यति । 'रषाभ्याम्' इत्येव सिद्धे प्रत्यये णकारोच्चारणम् प्रावृषेण्यमाचष्टे प्रावृषेण्ययतेः क्विप्, णिलोपः, 'लोपो व्योर्वलि' इति यलोपः, प्रावृषेणित्यत्र णत्वार्थम्; अन्यथा 'पदान्तस्य' इति प्रतिषेधः स्यात् ॥ १७ ॥

**भावबोधिनी**

[ सन्धिवेलायां भवम्—आदि अर्थ में 'अण्' प्रत्यय आदिवृद्धि, भसंज्ञा आलोप । सन्धिवेला में होने वाला । ] सान्ध्यम् [ सन्ध्यायां भवम्—इस अर्थ में अण् प्रत्यय ] ( ख )—ऋतुवाची से—ग्रैष्मम्, शैशिरम् । [ ग्रीष्म + अण्, शिशिर + अण्, आदिवृद्धि । ] ( ग )—नक्षत्रवाची से—तैषम्, पौषम् । तिष्ये भवम्, पुष्ये भवम्—इन विग्रहों में पहले 'तिष्येण युक्तः कालः', पुष्येण युक्तः कालः—इस अर्थ में 'नक्षत्रेण युक्तः कालः' ( पा० सू० ४।२।३ ) से अण् प्रत्यय होता है । इसका लोप "लुबविशेषे" ( पा० सू० ४।२।४ ) से हो जाता है । इसके बाद भवादि अर्थों में यह अण् होता है । "तिष्यपुष्ययोर्नक्षत्राणि" ( पा० सू० १।२।६३ ) से 'य' का लोप हो जाने पर रूप बनते हैं । पुष्य और तिष्य पर्याय हैं—"पुष्ये तु सिध्यतिष्यौ" अमर० १।३।२२ । ]

सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पञ्चदशी । पूर्णमासी । प्रतिपत् । [ ये सन्धिवेलादि हैं । ]

॥ संवत्सर शब्द से फल और पर्व अर्थों में अञ् होता है । ॥ उदा०—सांवत्सरं फलम्, सांवत्सरं पर्व । [ संवत्सर में होने वाला फल, और पर्व ] ॥ १६ ॥

प्रावृष् शब्द से शैषिक एण्य प्रत्यय होता है । यह ऋतुवाची से प्राप्त अण् का अपवाद है । उदा०—प्रावृषेण्यः बलाहकः । [ प्रावृषि भवः—आदि अर्थ में प्रावृष् + एण्य = प्रावृषेण्यः बनता है ] ॥ १७ ]

---

१. मूले नदमुपलभ्यते ।

**१५९१. वर्षाभ्यष्ठक् ॥ १८ ॥ ( १३८९ )**

**वर्षाशब्दाट्ठक् प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । वार्षिकं वासः । वार्षिकमनुलेपनम् ॥**

**१५९२. छन्दसि ठञ् ॥ १९ ॥ ( ३४५० )**

**वर्षाशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः । ठकोऽपवादः । स्वरे भेदः । नभंश्च नभुस्यंश्च वार्षिकाव_तू' ( तै० सं० ४. ४. ११. १ ) ॥**

**१५९३. वसन्ताच्च ॥ २० ॥ ( ३४५१ )**

**'छन्दसि' इत्येव । वसन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । मधु'श्च माधंवश्च वासंन्तिकाव_तू' ( तै० सं० ४. ४. ११. १ ) ॥**

**१५९४. हेमन्ताच्च ॥ २१ ॥ ( ३४५२ )**

**'छन्दसि' इत्येव । हेमन्तशब्दाच् छन्दसि विषये ठञ् प्रत्ययो भवति शैषिकः । ऋत्वणोऽपवादः । सहंश्च सहस्यंश्च हैमंन्तिकाव_तू' ( तै० सं० ४. ४. ११. १ ) ।**

**योगविभाग उत्तरार्थः ॥**

**न्यासः**

**वर्षाभ्यष्ठक्** ॥ अथ किमर्थं ठञ्विधानत्, कालाट् ठञैव सिद्धत्वात् उभयत्रापि तदेव रूपमिति ? **नैवम्;** ठकि सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात्, ठञि तु सति 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् ॥ १८ ॥

छन्दसि ठञ् ॥ १९ ॥ **वसन्ताच्च** ॥ २० ॥ हेमन्ताच्च ॥ **योगविभाग उत्तरार्थ इति** । 'सर्वत्राण् च तलोपश्च' इति वक्ष्यति, स हेमन्तशब्दस्यैव यथा स्यात्, वसन्तस्य मा भूत् । यदि 'हेमन्तवसन्ताभ्याम्' इत्येकयोगः क्रियेत, ततो वसन्तस्यापि स्यात्; तस्य ह्युत्तरत्रानुवृत्तेः ॥ २१ ॥

**पदमञ्जरी**

**वर्षाभ्यष्ठक्** ॥ **वार्षिकं वास इति** । 'कालात्साधुपुष्यत्पच्यमानेषु' इति साध्वर्थे ठक् ॥ १८ ॥

**छन्दसि ठञ् ॥ नभश्च नभस्यश्च वार्षिकावृतू इति** । 'तस्येदम्' इत्यत्रार्थे प्रत्ययः, ऋतुशब्दश्च ऋत्ववयवयोर्मासयोर्वर्तते, वर्षर्तोरेतौ मासाववयवावित्यर्थः ॥ १९–२१ ॥

**भावबोधिनी**

वर्षा शब्द से शैषिक ठक् प्रत्यय होता है । यह ऋतुवाची से प्राप्त अण् का अपवाद है । उदा०—वार्षिकं वासः । वार्षिकम् अनुलेपनम् । [ वर्षा + ठक्, ठ = इक, आदिवृद्धि ] ॥ १८ ॥

वेदविषय में 'वर्षा' शब्द से शैषिक ठञ् प्रत्यय होता है । यह ठक् का अपवाद है । दोनों में केवल स्वर का भेद है । [ ञित् होने से आद्युदात्त होता है । ] उदा०—नभश्च नभस्यश्च वार्षिकावृतू । [ वर्षा + ठञ् = ठ = इक, आदिवृद्धि । द्विवचन का रूप है । ] ॥ १९ ॥

"छन्दसि = वेद में" इसकी अनुवृत्ति होती है । वेदविषयमें 'वसन्त' शब्द से शैषिक ठञ् प्रत्यय होता है । उदा०—मधुश्च माधवश्च वासन्तिकावृतू । [ वसन्त + ठञ् = ठ = इक, आदिवृद्धि, द्विवचन में—'वासन्तिकौ' रूप होता है ] ॥ २० ॥

'छन्दः = वेद में' इसकी अनुवृत्ति होती है । वेदविषय में 'हेमन्त' शब्द से शैषिक ठञ् प्रत्यय होता है । ऋतुवाचक से प्राप्त अण् का अपवाद है । उदा०—सहश्च सहस्यश्च हैमन्तिकावृतू । [ हेमन्त + ठञ् = ठ = इक, आदिवृद्धि, भसंज्ञा, अलोप, द्विवचन में 'हैमन्तिकौ' रूप है । ]

[ 'वसन्ताच्च' में ही 'हेमन्त' को भी मिलाकर एक सूत्र बनाया जा सकता था, इसे अलग सूत्र बनाने का क्या प्रयोजन ? ] योगविभाग = अलग सूत्र बनाना उत्तरवर्ती सूत्र में अनुवृत्ति के लिए है ॥ २१ ॥

## १५९८. सर्वत्राण् च तलोपश्च ॥ २२ ॥ ( १३९० )

**हेमन्तशब्दादण् प्रत्ययो भवति, तत्सन्नियोगेन चास्य तकारलोपः । हैमनं वासः । हैमनमुपलेपनम् । सर्वत्रग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम् । छन्दसि भाषायां च सर्वत्रैतद्भवति ।**

**ननु च छन्दसीति नानुवर्तिष्यते ? सैवाननुवृत्तिः शब्देनाख्यायते प्रयत्नाधिक्येन पूर्वसूत्रेऽपि सम्बन्धार्थम् । हैमन्तिकमिति हि भाषायामपि ठञं स्मरन्ति ।**

**न्यासः**

**सर्वत्राण् च तलोपश्च** ॥ छन्दसि पूर्वेण ठञि प्राप्ते भाषायामपि ऋत्वणि चैतदुच्यते । **सर्वत्रग्रहणमित्यादिना** सर्वत्रग्रहणस्य प्रयोजनमाचष्टे । **छन्दसि भाषायाञ्चेत्यादिना** छन्दोऽधिकारनिवृत्तेः फलं दर्शयति । **ननु चेत्यादि** । अस्वरितत्वादेव च्छन्दसीति नानुवर्तिष्यते, ततो नार्थश्छन्दोऽधिकारनिवृत्त्यर्थेन सर्वत्रग्रहणेनेत्यभिप्रायः । **सैवेत्यादिना** यासावस्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते । किमर्थमित्याह—**प्रयत्नाधिक्येनेत्यादि** । प्रयत्नाधिक्यमेतदेव शब्देनाख्यातम् । तेन हेतुना पूर्वसूत्रेऽपि सर्वत्रशब्दस्य सम्बन्धो यथा स्यादित्येवमर्थः शब्देनाख्यायते । कस्मात् पुनः पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्ध इष्यते ? इत्याह—**हैमन्तिकमिति हीत्यादि** । हिशब्दो हेतौ । आचार्या हि हैमन्तिकमिति भाषायां ठञं स्मरन्ति । स चैवं भाषायामपि सिध्यति,

**पदमञ्जरी**

**सर्वत्राण् च तलोपश्च ॥ हैमनमिति** । यदा तशब्दस्य समुदायस्य लोपस्तदा 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न भवति । यदा तु तकारस्यानेन लोपोऽकारस्य तु यस्येति लोपः, तदा तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वात्स्थानिवद्भावाच्च टिलोपाभावः ।

**ननु च छन्दसीति नानुवर्तिष्यत इति** । अस्वरितत्वात् । **सैवेत्यादि** । यासावस्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते, किमर्थम् ? इत्याह—**प्रयत्नाधिक्येनेति** । ननु च तत एवास्वरितत्वात्पूर्वसूत्रेऽपि छन्दसीति नानुवर्तिष्यते, तस्माद्विस्पष्टार्थमेव सर्वत्रग्रहणम् । **भाषायामपि ठञं स्मरन्तीति** । **भाष्ये तु** नैतदिष्यते, तथा हि—सूत्रमिदं प्रत्याख्यातम्, कथम् ? हेमन्तपर्यायो हेमन्शब्दोऽस्ति—'हेमन् हेमन्नागनीगन्ति कर्णौ, तस्मादेतौ हेमन्नशुष्यतः', यदि हेमन् प्रमीयते 'हेमन्तो भवति' इति दर्शनात्, तत्र भाषायां हेमन्-हेमन्तशब्दयोर्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम्, छन्दसि तु हेम्नो हैमनम्, हेमन्तस्य 'हेमन्ताच्च' इति ठञि हैमन्तिकम्, 'सर्वे

**भावबोधिनी**

'हेमन्त' शब्द से अण् प्रत्यय होता है और इस प्रत्यय के सन्नियोग से इस हेमन्त के तकार का लोप होता है । उदा०—हैमनं वासः । हैमनम् अनुलेपनम् । [ हेमन्त + अण् तलोप, आदिवृद्धि । हेमन्त ऋतु का वस्त्र, हेमन्त ऋतु का उबटन । ]

'सर्वत्र' का ग्रहण 'छन्दः = वेद' के अधिकार की निवृत्ति के लिए है । वेद और भाषा ( लौकिक संस्कृत ) सभी में यह प्रत्यय और तलोप होता है ।

शंका— छन्दसि = वेद में —इसकी अनुवृत्ति नहीं की जायगी ? यही अननुवृत्ति 'सर्वत्र इस शब्द से कही जाती है, 'सर्वत्र' शब्दग्रहणरूप प्रयत्नाधिक्य के कारण पूर्ववर्ती सूत्र में भी 'सर्वत्र' शब्द का सम्बन्ध करने के लिये हैं । [ भाव यह है कि इस सूत्र में 'सर्वत्र' इस शब्द का ग्रहण करके 'छन्दसि' इसकी अनुवृत्ति का अभाव सूचित किया है । इसे केवल इसी सूत्र तक नहीं अपितु पूर्ववर्ती सूत्र में भी समझना चाहिए, अर्थात् दोनो सूत्रों में 'वेदविषय' इसका सम्बन्ध नहीं है । ] इसलिये भाषा = लौकिक संस्कृत में भी 'हैमन्तिक' इस प्रयोग में ठञ् प्रत्यय का स्मरण ( विधान ) किया जाता है । [ अतः वेद और लोक दोनों में 'हैमन्तिक' रूप बनता हैं । विशेष विवेचन पदमञ्जरी में देखें । ]

अथ 'अण्च' इति चकारः किमर्थः ? अण्, यथाप्राप्तं च ऋत्वणिति। कः पुनरनयोरणोर्विशेषः ? ऋत्वणि हि तकारलोपो नास्ति—हैमन्ती पङ्क्तिः (पै० सं० १७. १९. ११) इति, तदेवं त्रीणि रूपाणि भवन्ति—हैमन्तिकम् ( तै० सं० ४. ४. ११. १ ) हैमन्तम् (पै० सं० १७. १९. ११) हैमनमिति ( अथर्व० १५. ४. १४) ॥

## १५९६. सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥ ( १३९१ )

'कालाद्' इत्येव। सायम्, चिरम्, प्राह्णे, प्रगे—इत्येवमादिभ्योऽव्ययेभ्यश्च ट्युट्युलौ प्रत्ययौ भवतः, तयोश्चादिष्टयोस्तुडागमो भवति। सायन्तनम्। चिरन्तनम्। प्राह्णेतनम्। [प्रगेतनम्] अव्ययेभ्यः—दोषातनम्।

### न्यासः

यदि पूर्वसूत्रेऽपि सर्वत्रग्रहणस्य सम्बन्धो भवति। तत्रहि सति पूर्वसूत्रस्यायमर्थो भवति—हेमन्ताच्च सर्वत्र च्छन्दसि भाषायामपि ठञ् भवतीति। **कः पुनरनयोरणोर्विशेष इति**। न कश्चिदिति भावः। **ऋत्वणि हीत्यादिना** विशेषं दर्शयति। **हैमन्तीति**। 'टिड्ढाणञ्' इति ङीप्। **तदेवमित्यादि**। यत एव पूर्वसूत्रेण ठञ् भवत्यनेनाण् तलोपसहितः, तेन त्रीणि रूपाणि भवन्ति ॥ २२ ॥

**सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥** 'कालाट् ठञ्' इति ठञि प्राप्ते सायमादिभ्यः ट्युट्युलौ विधीयेते, तयोश्च तुडागमः। ठञपवादत्वाच्च ट्युट्युलोः। ठञैव च्छस्य बाधितत्वादेताभ्यां पुनश्छस्य सम्प्रधारणैव नास्ति। तेन वृद्धादपि ट्युट्युलावेव भवतः—प्राक्तनमिति। **तयोश्चेत्यादि**। यद्यनादिष्टयोस्तुट् स्यात् तदा युरूपौ प्रत्ययौ न भवत इत्यनादेशो न स्यात्। तस्मादादिष्टयोस्तयोः कृतादेशयोस्तुडागमः। एतच्च

### पदमञ्जरी

विधयश्छन्दसि विकल्प्यन्ते' ( पुरु० प० ५६ ) इति हेमन्तशब्दादेवाणि हैमन्तमिति रूपत्रयं सिद्धमिति। **सूत्रकारेण** तु भाषायामेतद्वृत्तिविषयादन्यत्रर्तुवाचिनो हेमन्तशब्दस्य प्रयोगाभावात् नलोपो विहितः, यथाप्राप्तं च ऋत्वणिति, अनन्तरस्तु ठञ् सर्वत्रग्रहणस्य पूर्वात्रान्वयेनैव सर्वत्र सिद्धिरिति नासौ समुच्चीयते। **कः पुनरनयोर्विशेष इति**। न कश्चिदिति भावः। **त्रीणि रूपाणि भवन्तीति**। पूर्वेण ठञि एकम्; अनेनाण्तलोपयोर्द्वितीयम्, ऋत्वणि यस्येति लोपे परमिति त्रीणि रूपाणि ॥ २२ ॥

**सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥** इह 'युवोरनाकौ' इत्यङ्गाधिकारे विहितत्वादनादेशो बहिरङ्गः, तुडागमस्तु प्रत्ययसन्नियोगेन विधानादन्तरङ्ग इति तेनैव तावद्भवितव्यम्, तत्र कृतेऽनादेशो न प्राप्नोति, किं कारणम् ? अङ्गस्य निमित्तं यो युस्तस्यानादेशः, तुटि त्वत्र सति त्युशब्दोऽङ्गस्य निमित्तं, न युशब्दमात्रम्, ततश्च यथा मृत्युरित्यत्रानादेशो न भवति, तथात्रापि न स्यात्। यदि पुनरयं तुक् पूर्वान्तः

### भावबोधिनी

शंका—'अण् च' यह चकार किस लिए है ? अण् और "सन्धिवेलाद्यृतु०" सूत्र से प्राप्त अण् दोनों हो सकें, इसके लिए 'च' है। तो फिर इन दोनों अण् प्रत्ययों में क्या विशेष ( भेद ) है ? ऋतुवाचक मानकर होने वाले अण् में 'त'कार का लोप नहीं होता है—हैमन्ती पंक्तिः। [ हेमन्त + अण्, आदिवृद्धि, अण् प्रत्ययान्त मान कर ङीप् होता है। ] इस प्रकार तीन रूप होते हैं—( १ ) हैमन्तिकम्, ( २ ) हैमन्तम्, ( ३ ) हैमनम्। [ पूर्वसूत्र से ठञ्—हेमन्त + ठञ् = इक, आदिवृद्धि,—हैमन्तिकम्। जब प्रस्तुत सूत्र अण् करता है तब तलोप भी होता है—हेमन्त + अण्, तलोप, आदिवृद्धि—हैमनम्। जब ऋतुवाची मानकर अण् होता है, तब तलोप नहीं होता है—हेमन्त + अण्, आदिवृद्धि, भसंज्ञा, अलोप—हैमन्तम्। हेमन्तऋतु में होने वाला—यह अर्थ है ]॥ २२ ॥

'कालात्' ( कालवाचक से ) इसकी अनुवृत्ति होती है। सायम्, चिरम्, प्राह्णे, प्रगे—इन शब्दों से और अव्ययों से ट्यु तथा ट्युल् ये प्रत्यय होते हैं और आदिष्ट = कृतादेश यु = अन के पूर्व तुट् का आगम होता है। उदा०—सायन्तनम्। [ सायंकाल होने वाला ] चिरन्तनम् [ प्राचीनकाल में होनेवाला ] प्राह्णेतनम् [ प्रातःकाल में होने वाला ]

**दिवातनम्।** **सायमिति मकारान्तं पदमव्ययम्, ततोऽव्ययत्वादेव सिद्धः प्रत्ययः। यस्तु स्यतेरन्तकर्मणो घञि सायशब्दः, तस्येदं मकारान्तत्वं प्रत्ययसन्नियोगेन निपात्यते। दिवसावसानम् = सायः। चिरशब्दस्यापि मकारान्तत्वं निपात्यते। प्राह्णे, प्रगे—इत्येकारान्तत्वम्।**

### न्यासः

'घकालतनेषु कालनाम्नः' इति निर्देशाल्लभ्यते। न ह्यनादिष्टयोस्तुड्विधानेन तनशब्द उपपद्यते। अथ प्रत्यययोष्टित्करणं किमर्थम्, न तुट एव टित्त्वेन प्रत्यययोरपि टित्त्वं विज्ञास्यत इति, यतस्तद्ग्रहणेन ग्रहणादागमानाम्? नैतदस्ति; युक्तं यत् प्रत्ययधर्मा आगमे भवन्ति तस्य प्रत्ययभक्तत्वात्, न त्यागमधर्मा प्रत्यये। तस्माट्टित्कार्यार्थं प्रत्यययोरपि टित्त्वमासज्यते। **स्यतेरन्तकर्मण इति।** 'षोऽन्तकर्मणि' इत्यस्य। **प्राह्णे प्रगे इत्येकारान्तत्वमिति।** निपात्यत इति सम्बन्धः। ननु च 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुकैव सिद्धम्, तदपार्थकं निपातनम्? यत्र तर्हि सप्तम्यर्थो नास्ति तदर्थं निपातनम्—प्राह्णः सोढोऽस्य प्राह्णेतनः, प्रगः सोढोऽस्य प्रगेतन इति। अत्र हि 'तदस्य सोढम्' इति प्रथमासमर्थात्प्रत्ययविधानात्सप्तम्यर्थो नास्ति। तदभावात्सप्तम्यपि नास्त्येव।

### पदमञ्जरी

क्रियते? नैवं शक्यम्; प्रातस्तनमित्यत्र हि विसर्जनीयो न स्यात्, अपदान्तत्वात्। तस्मात्परादिरेवायं कर्तव्यः, तत्र चानादेशो न प्राप्नोति? तत्राह—**तयोश्चादिष्टयोस्तुडागमो भवतीति।** आदिष्टयोरिति कृतादेशयोरित्यर्थः। एष चार्थ आदिष्टशब्दस्य अर्शआद्यच्प्रत्ययान्तत्वेन लभ्यते, आदिश्यत इत्यादिष्टः, स ययोरस्ति तावादिष्टौ, तयोरादिष्टयोरिति। एतच्च 'घकालतनेषु' इति निर्देशाल्लभ्यते, न ह्यनादिष्टयोस्तुड्विधाने तनशब्द उपपद्यते। प्रातस्तनमित्यत्र वृद्धाच्छं परत्वाद्बाधत इति नोक्तम्; छस्य बाधकमपि ठञं बाधमानयोष्ट्युट्युलोरुत्कृष्ट-बलयोर्दुर्बलेन छेन सह सम्प्रधारणाभावात्। **मकारान्तं पदमव्ययमिति।** स्वरादिषु पठितम्। **अन्तकर्मण इति।** अन्तक्रियस्य, 'षोऽन्तकर्मणि' इत्यस्येत्यर्थः। यद्यप्यसाववसानमात्रवाची, घञन्तस्तु सायशब्दो दिवसान्तवचन इति न कालाधिकारस्य बाधशङ्का। **प्रत्ययसन्नियोगेनेति।** अन्यत्र त्वकारान्त एव, यथा—सायाह्नः, सायतर इति। आह च—संख्याविसायपूर्वस्याह्नस्येति। **एकारान्तत्वमिति।** निपात्यत इत्यनुषङ्गः। यत्र सप्तम्यर्थो नास्ति—प्राह्णः सोढोऽस्येत्यादौ, तदर्थं निपातनम्। जातादिके त्वर्थे 'घकालतनेषु' इत्यलुका सिद्धम्।

### भावबोधिनी

प्रगेतनम्। [ प्रातःकाल में होने वाला। सायम् + ट्यु या ट्युल् = यु, "युवोरनाकौ" ( पा० सू० ७।१।१ ) से 'यु' का 'अन' आदेश, प्रस्तुत सूत्र से उसे तुट् = त् का आगम—सायम् + त् अन, म् का अनुस्वार, परसवर्ण करने पर सायन्तनम्। इसी प्रकार सब में प्रत्यय और तुट् का आगम करना चाहिए। 'प्राह्ण' और 'प्रग' में एदन्तत्व निपातित किया जाता है। ] अव्ययों से प्रत्यय के उदा०—दोषातनम् [ रात में होने वाला ]। दिवातनम् [ दिन में होने वाला ]। सायम् – यह मकारान्त पद अव्यय है, अतः इससे अव्यय मान कर ही ये प्रत्यय सिद्ध हैं। "षोऽन्तकर्मणि" इस धातु से घञ् करके जो 'साय' शब्द बनता है। [ षो = सो, ष का स आदेश, ओ का आत्व करने पर सा + घञ् = अ, "आतो युक् चिण् कृतोः" ( पा० सू० ७।३।३३ ) से युक् = य् आगम करने पर 'साय् अ' बना है। ] इस शब्द का प्रस्तुत प्रत्यय के सन्नियोग से मकारान्तत्व निपातित किया जाता है। [ इसलिये अन्यत्र यह अकारान्त ही रहता है—सायाह्नः, सायतरः आदि ] दिवावसान = सायः ( दिन की समाप्ति। ) [ इसके अर्थ के लिए—"सायं साये प्रगे प्रातः प्रभाते…।" अमर० ३।४।१९ देखना चाहिए। ] 'चिर' शब्द का भी मकारान्तत्व निपातित किया जाता है। [ चिर + ट्यु, ट्युल् = यु = अन, तुट् आगम, मकारान्त निपातन, म् का अनुस्वार परसवर्ण करने पर—चिरन्तनम्। ] 'प्राह्णे' तथा 'प्रगे'—इनका एकारान्तत्व [ निपातित ] है।

❀ चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ❀ ( म० भा० ४. ३. २३. श्लो. वा० ), चिरत्नम् । परुत्नम् । परारित्नम् ।

❀ प्रगस्य छन्दसि गलोपश्च ❀ ( म० भा० श्लो० वा० ) । प्रत्नम् ( ऋ० १. ३६. ४ ) ।

❀ अग्रपश्चाड्डिमच् ❀ ( श्लो० वा० ) अग्रिमम् । पश्चिमम् ।

❀ अन्ताच्चेति वक्तव्यम् ❀ ( श्लो० वा० ) अन्तिमम् ॥

## १५९७. विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥ ( १३९२ )

पूर्वाह्णापराह्णशब्दाभ्यां विभाषा ट्युट्युलौ प्रत्ययौ भवतस्तुट् च तयोरागमः। 'कालाट्ठञ्' (४. ३. ११)

### न्यासः

**चिरपरुत्परारिभ्यस्त्नो वक्तव्य इति**। व्याख्येय इत्यर्थः। व्याख्यानं तु—'तद्धिताः' इत्यत्रैव कृतम्। एवमुत्तरत्रापि वेदितव्यम्। चिरशब्दस्य सूत्रे चोपादानात् ट्युट्युलावपि भवतः।

**प्रगस्य च्छन्दसि गलोपश्चेति**। वक्तव्य इति सम्बन्धः। वक्तव्यशब्दस्य स एवार्थः। व्याख्यानात् त्विहापि 'प्रत्नपूर्वविश्वेमात् थाल् च्छन्दसि' इति निपातनमाश्रित्य कर्तव्यम्।

**अन्ताच्चेति वक्तव्यम्**। अन्तशब्दाड्डिमज् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु कृतमेव। डिमचो डित्करणं पश्चादित्यस्य टिलोपार्थम्। ननु च 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' इत्यनेनैव सिद्धम्? न सिध्यति; अनित्यत्वात् तस्य। यथा आरातीय इत्यत्र न भवति, तथेहापि न भवतीति कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निरासार्थं डित्करणम् ॥ २३ ॥

**विभाषा पूर्वाह्णापराह्णाभ्याम्** ॥ **पूर्वाह्णेतन इति**। अह्नः पूर्वो भाग इति पूर्वादिसूत्रेणैकदेशिसमासः। 'राजाहःसखिभ्यष्टच्' इति टच् समासान्तः, 'अह्नोऽह्नः' एतेभ्य इत्यह्नादेशः, 'अह्नोऽदन्तात्' इति णत्वम्।

### पदमञ्जरी

**चिरपरुत्परारिभ्य इति**। चिरशब्दस्य सूत्र उपादानात् ट्युट्युलावपि भवतः, न तु 'किंयत्तद्बहुषु कृञोऽज्विधानात्' इतिवत्सूत्रस्य बाधः। परुत् = पूर्वस्मिन् संवत्सरे, परारि = पूर्वतरे। प्रत्नशब्दः पुराणवचनः।

**अग्रपश्चाड्डिमजिति**। केचिदत्रादिशब्दमपि पठन्ति—अग्रादिपश्चादिति, ते 'मध्यान्मः' इत्यत्रादेश्चेति वक्तव्यमिति न पठन्ति। डित्करणं पश्चादित्यत्र टिलोपार्थम्। 'अव्ययानां भमात्रे टिलोपः' ( रा० ८४२ ) इत्यस्यैवायं प्रपञ्चार्थः ॥ २३ ॥

**विभाषा पूर्वाह्णापराह्णाभ्याम्** ॥ **सप्तम्या अलुगिति**। 'ङ्याप्प्रातिपदिकात्' इत्यत्र निरणायि—सुबन्ता-

### भावबोधिनी

❀ चिर, परुत् तथा परारि—इन शब्दों से 'त्न' प्रत्यय कहना चाहिये ।❀ उदा०—चिरत्नम्, [=प्राचीन काल में होने वाला । ] परुत्नम् [=पूर्व वर्ष में होने वाला । ] परारित्नम् । [=पूर्वतर वर्ष में होने वाला । ]

❀ वेद में 'प्रग' शब्द के अन्त्य 'ग' का लोप भी करना चाहिए । ❀ उदा०—प्रत्नम् । [ प्रग+त्न, गलोप करने पर रूप बना हैं । प्रातःकालीन—यह अर्थ है ।] ❀ अग्र तथा पश्चात् शब्दों से डिमच् प्रत्यय होता है । ❀ उदा०—अग्रिमम् । [ आगे होने वाला । अग्र+डिमच्=इम, टि=अ का लोप । ] पश्चिमम् । [ बाद में होने वाला । पश्चात्+डिमच्=इम, टि=आत् का लोप । ] ❀ और अन्त शब्द से भी डिमच् कहना चाहिए । ❀ अन्तिमम् । [ अन्त में होने वाला । अन्त+डिमच्=इम, टिलोप ] ॥ २३ ॥

'पूर्वाह्ण' तथा 'अपराह्ण' इन शब्दों से ट्यु और ट्युल् प्रत्यय होते हैं और इन प्रत्ययों से पूर्व में तुट् का आगम होता है । "कालाट्ठञ्" ( पा० सू० ४।३।११ ) से ठञ् की प्राप्ति रहते यह सूत्र बनाया गया है अतः पक्ष में वह प्रत्यय भी होता है । उदा०—पूर्वाह्णेतनम्, अपराह्णेतनम् । [ अह्नः पूर्वो भागः—इस अर्थ में 'पूर्वाह्णः' और

**इति ठञि प्राप्ते वचनम्, पक्षे सोऽपि भवति। पूर्वाह्णेतनम्। अपराह्णेतनम्। पौर्वाह्णिकम्। आपराह्णिकम्। 'घकालतनेषु कालनाम्नः' (६. ३. १७) इति सप्तम्या अलुक्। यदा तु न सप्तमी समर्थविभक्तिः—पूर्वाह्णः सोढोऽस्येति, तदा पूर्वाह्णतन इति भवितव्यम्॥**

**१५९८. तत्र जातः॥ २५॥ (१३९३)**

**अणादयो घादयश्च प्रत्ययाः प्रकृताः, तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते। तत्रेति सप्तमीसमर्थात् 'जातः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। स्रुघ्ने जातः स्रौघ्नः। माथुरः (४. १. ८३)। औत्सः। औदपानः (४. १. ८६)। राष्ट्रियः। अवारपारीणः (४. २. ९३)। शाकलिकः। माकलिकः**

**न्यासः**

यदाऽसप्तम्यन्तात् प्रत्ययस्तदा पूर्वाह्णतन इति भवितव्यमिति; सप्तम्यभावात्। सप्तम्यभावस्तु प्रथमासमर्थात् तद्धितोत्पत्तेः॥ २४॥

**तत्र जातः॥ अणादयो घादयश्चेति।** एकेनादिशब्देनाणादीनामिहोत्सर्गाणां ग्रहणम्, द्वितीयेन घादीनां शेषाधिकारविहितानाम्। **स्रौघ्नः, माथुर इति।** 'प्राग्दीव्यतोऽण्'। **औत्सः, औदपान इति।** 'उत्सादिभ्योऽञ्'।

**पदमञ्जरी**

त्तद्धितोत्पत्तिरिति, तत्तत्रैव द्रष्टव्यम्। यदि सुबन्तात्तद्धित उत्पद्यते, कथं पूर्वाह्णतन इत्यत्र भवति? तत्राह—**यदा त्विति॥** २४॥

**तत्र जातः॥ तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्त इति।** तदिदमुभयमनिर्देश्यम्, कथम्? 'शेष इति लक्षणं चाधिकारश्च' इत्युक्तम्, तत्र लक्षणतया चाक्षुषं रूपमित्यादाविव जातादिष्वप्यर्थेष्वणादयः सिद्धाः, अधिकारतया च घादय इत्यर्थास्तावन्न निर्देश्याः प्रत्ययार्थेन चाभिधानस्वाभाव्येन समर्थविभक्तयोऽपि लभ्यन्ते इति तन्निर्देशोऽपि न कर्तव्य एव। नियमार्थमिति चेन्न; अनिष्टत्वात्। तत्रैतत्स्यात्—जातादिष्वेव तद्धिता यथा स्युः, तत्रास्ते तत्र शेत इत्यादौ मा भूवन्निति जातादयोऽर्था अनुक्रम्यन्त इति? तच्च नैवम्; अनिष्टत्वात्। अन्यत्रापि हि तद्धिता इष्यन्ते—चाक्षुषं रूपम्, श्रावणः शब्दः, चातुर्दशं रक्षः, दार्षदाः सक्तव इति।

**भावबोधिनी**

और 'अपरः भागः अह्नः' इस अर्थ में 'अपराह्णः' ये बने हैं। इनसे भवादि अर्थों मे ट्यु तथा ट्युल् = यु = अन प्रत्यय और तुट् = त् का आगमन करने पर रूप बनता है।] इन शब्दों में 'घ-कालतनेषु कालनाम्नः' (पा० सू० ६।३।१७) सूत्र से सप्तमी का अलुक् हो जाता है। जब सप्तमी समर्थ विभक्ति नहीं होती है जैसे—पूर्वाह्णः सोढो अस्य—तब तो सप्तमी का लुक् होता ही है—पूर्वाह्णतनः—यही रूप होता है। [भाव यह है कि बाद वाले रूप में सप्तमी विभक्ति नहीं है अपि तु प्रथमा है। अतः उसका लुक् होता ही है।]॥ २४॥

अण् आदि और घ आदि प्रत्ययों का प्रकरण है, यहाँ से लेकर उन प्रत्ययों के अर्थ तथा समर्थ विभक्तियों का निर्देश किया जा रहा है। [प्रस्तुत सूत्र में] 'तत्र' इस सप्तमीसमर्थ से 'जातः' इस अर्थ में यथाविहित प्रत्यय होते हैं। उदा०—स्रुघ्ने जातः—स्रौघ्नः। [प्राचीनकाल में पटना से काफी दूरी पर स्थित स्थान का नाम है। सम्भवतः आगरा का पासवर्ती क्षेत्र है। वहाँ होने वाला पुरुष।] माथुरः। [मथुरायां जातः—इस अर्थ में अण् प्रत्यय, तद्धितसंज्ञा, प्रातिपदिक संज्ञा और सप्तमी का लुक् करने पर—मथुरा + अ, भसंज्ञा, आलोप, णित् होने से आदिवृद्धि—माथुरः। मथुरा में उत्पन्न होनेवाला।] औत्सः। [उत्स गोत्र में उत्पन्न होने वाला।] औदपानः [उदपान में उत्पन्न होने वाला। इनमें "उत्सादिभ्योऽञ्" सूत्र से अञ् प्रत्यय होता है] राष्ट्रियः। राष्ट्रे भवः—इस अर्थ में "राष्ट्रावारपाराद्घखौ" सूत्र से 'घ' प्रत्यय और 'घ' का 'इय' आदेश, भसंज्ञा, अलोप करने पर रूप बनता है—राष्ट्रियः। आज कल प्रयुक्त—राष्ट्रीय' शब्द इस दृष्टि से अशुद्ध है।] अवारपारीणः। [अवारपारे भवः—इस अर्थ में ख = ईन प्रत्यय,

( ४. २. ११७ ) । ग्राम्यः । ग्रामीणः ( ४. २. ९४ ) । कात्त्रेयकः । औम्भेयकः ( ४. २. ९३ ) ।

**१५९९. प्रावृषष्ठप् ॥ २६ ॥ ( १३९४ )**

**प्रावृट्शब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे ठप् प्रत्ययो भवति । एण्यस्य ( ४. ३. १७ ) अपवादः । पकारः स्वरार्थः । प्रावृषि जातः प्रावृषिकः ।**

**१६००. संज्ञायां शरदो वुञ् ॥ २७ ॥ ( १३९९ )**

**शरच्छब्दात्सप्तमीसमर्थाज्जात इत्येतस्मिन्नर्थे वुञ् प्रत्ययो भवति, ऋत्वणः ( ४. ३. १६ ) अपवादः, समुदायेन चेत्संज्ञा गम्यते । शारदका दर्भाः । शारदका मुद्गाः । दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा ।**

**न्यासः**

**राष्ट्रियः, अवारपारीण इति ।** 'राष्ट्रवारापाराद् घखौ' । **शाकलिकः, माकलिक इति ।** 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ । **कात्त्रेयकः, औम्भेयक इति ।** 'कत्त्र्यादिभ्यो ढकञ्' ॥ २५ ॥

**प्रावृषष्ठप् ॥ एण्यस्यापवाद इति ।** 'प्रावृष एण्यः' इत्यनेन प्राप्तस्य ॥ २६ ॥

**संज्ञायां शरदो वुञ् ॥ समुदायेन चेत् संज्ञा गम्यत इति ।** अनेन समुदायोपाधित्वं संज्ञाया दर्शयति । प्रकृतिप्रत्ययसमुदायेन चेत् संज्ञा इत्यर्थः । यद्येवम्, शारदका दर्भा इति दर्भशब्दस्य प्रयोगो न प्राप्नोति, प्रत्ययान्तेनाभिहितत्वात् ? नैष दोषः; यथैव हि शारदकशब्दो दर्भविशेषस्य नामधेयं तथा मुद्गविशेषस्यापि ।

**पदमञ्जरी**

यत्र तु नेष्यन्ते, तत्रास्त इत्यादौ—तत्रानभिधानान्न भविष्यन्ति, यथा—अङ्गुल्या खनतीत्यादौ । तस्मान्नार्थो जाताद्यनुक्रमणेन ।

अपवादविधानार्थं तु, प्रावृषष्ठबादीनपवादाँस्तत्र तत्रासङ्करेण वक्ष्यामिति आवश्यानुक्रमितव्या अर्थाः, तेऽन्यार्थाः सन्तो योगविभागेनाणादीनामप्यर्था निर्दिश्यन्ते ।

विस्पष्टार्थम्, यानि पुनरनपवादान्यर्थादर्शनानि, यथा—'कृतलब्धक्रीतकुशलाः' इति, तानि शक्यान्यवक्तुम् ॥ २५ ॥ २६ ॥

**भावबोधिनी**

भसंज्ञा, अलोप, णत्व करने पर रूप बनता है । ] शाकलिकः, माकलिकः । [ शकल और मकल नामक बाहीक ग्रामों में उत्पन्न होने वाला—इस अर्थ में "बाहीकग्रामेभ्यश्च ४।२।११७ से ठञ् और ञिठ प्रत्यय, आदिवृद्धि, ठ = इक आदेश करने पर रूप बनते हैं । ] ग्राम्यः, ग्रामीणः । [ ग्रामे भवः—इस अर्थ में —ग्राम शब्द से "ग्रामाद् यखञौ" सूत्र से 'य' तथा खञ् = ख = इन प्रत्यय करने पर ये रूप बनते हैं । ] कात्त्रेयकः आम्भेयकः । [ 'कत्त्रि' तथा 'उम्भि' इनसे 'कत्त्र्यादिभ्यो ढकञ्" ( ४।२।९५ ) से ढकञ् = ढ = एय प्रत्यय, आदिवृद्धि, भसंज्ञा, इलोप करने पर रूप बने हैं । ]

**विमर्श**—यह सूत्र विधान न करके नियम व निर्देश करने वाला है कि अमुक अर्थ में अमुक विभक्त्यन्त से ये ये प्रत्यय करने चाहिए ।। २५ ।।

सप्तमीसमर्थ 'प्रावृष्' शब्द से 'जात' इस अर्थ में ठप् प्रत्यय होता है । [ "प्रावृष एण्यः" ( पा० सू० ४।३।१७ ) से प्राप्त ] एण्य प्रत्यय का अपवाद है । पकार अनुदात्त स्वर [ 'अनुदात्तौ सुप्पितौ' से ] करने के लिए हैं । उदा०—प्रावृषि जातः—इस अर्थ में प्रावृषिकः । [ वर्षा में उत्पन्न होने वाला । प्रावृष् + ठप् = ठ = इक ] ॥ २६ ॥

सप्तमी समर्थ 'शरद' इस शब्द से 'जातः' इस अर्थ में वुञ् प्रत्यय होता है. यदि समुदाय से संज्ञा की प्रतीति हो रही हो तो । "सन्धिवेलाद्यृतु०" ( ४।३।१६ ) से प्राप्त अण् का अपवाद है । उदा०—शारदकाः दर्भाः, शारदकाः मुद्गाः । [ शरदि जाताः—इस अर्थ में वुञ् = अक प्रत्यय, आदिवृद्धि करने पर ये रूप बने हैं । ] कुशविशेष और

**संज्ञायामिति किम् ? शारदं सस्यम् ।**

**संज्ञाधिकारं केचित् 'कृतलब्धक्रीतकुशलाः ( ४. ३. ३८ ) इति यावदनुवर्त्तयन्ति ॥**

## १६०१. पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् ॥ २८ ॥ ( १४०१ )

**पूर्वाह्णादिभ्यः शब्देभ्यो वुन् प्रत्ययो भवति 'तत्र जातः' ( ४. ३. २५ ) इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम् । पूर्वाह्णकः । अपराह्णकः । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' ( ४. ३. २४ ) इत्यस्यापवादः । आर्द्रकः । मूलकः । नक्षत्राणः ( ४. २. ३ ) अपवादः । प्रदोषकः । 'निशाप्रदोषाभ्यां च' ( ४. ३. १४ ) इत्यस्यापवादः । अवस्करकः । औत्सर्गिकस्याण ( ४. १. ८३ ) अपवादः । असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति ॥**

**न्यासः**

तत्रासति दर्भशब्दप्रयोगेऽनेकार्थसाधारणत्वात् कस्य नामधेयमिति सन्देहः स्यात्—कोऽर्थः शारदकशब्देन विवक्षित इति । तस्मादसन्देहार्थो दर्भशब्द उपादीयते । **संज्ञाधिकारमित्यादि । केचिदिति** वचनात् केचिन्नानुवर्तयन्तीत्युक्तं भवति ॥ २७ ॥

**पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् ॥ पूर्वाह्णकः, अपराह्णकः इति ।** पूर्ववदेकदेशिसमासादिकं कार्यं विधेयम्—'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति, तत्र ट्युट्युल्विधिश्च । **आर्द्रकः, मूलक इति ।** 'नक्षत्रेण युक्तः कालः' इत्यागतस्याणः 'लुबविशेषे' इति लुप्, ततो वुन् । **निशाप्रदोषाभ्यामिति ।** ठञ्विधेः । **ठञादय एवेति ।** आदिशब्देन ट्युट्युलादयो गृह्यन्ते ॥ २८ ॥

**पदमञ्जरी**

**संज्ञायां शरदो वुञ् ॥ समुदायेन चेदिति ।** प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा भवतीत्यर्थः । **कृतलब्धक्रीतकुशला**

**भावबोधिनी**

मूँगविशेष की संज्ञायें हैं । संज्ञा की प्रतीति में—इसका क्या प्रयोजन है ? शारदं सस्यम् । [ यह सामान्य कथन है । अतः वुञ् न होकर अण् होता है । ]

कुछ विद्वान्—'संज्ञा' इस अधिकार को "कृतलब्धक्रीतकुशलाः" ( पा० सू० ३।३।३८ ) इस सूत्र तक अनुवृत्ति करते हैं ॥ २७ ॥

पूर्वाह्ण, अपराह्ण, आर्द्रा, मूल, प्रदोष तथा अवस्कर—इन शब्दों से 'तत्र जातः' । ( वहाँ उत्पन्न हुआ ) इस विषय में संज्ञा की प्रतीति रहने पर वुन् प्रत्यय होता है । उदा०—पूर्वाह्णकः, अपराह्णकः । [ पूर्वाह्ण + वुन् = अक, अपराह्ण + वुन् = अक ] यह "विभाषा पूर्वाह्णापराह्णाभ्याम् ४।३।२४ से प्राप्त वुञ् का अपवाद है । आर्द्रकः, मूलकः । [ आर्द्रायां जातः, मूले जातः—इन अर्थों में आर्द्रा + वुन् = अक, मूल + वुन् = अक । भसंज्ञा, आ आदि का लोप । ] यहाँ "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" ४।३।१६ से प्राप्त अण् का अपवाद है । प्रदोषकः [ प्रदोषे जातः—इस अर्थ में—प्रदोष + वुन् = अक ] यहाँ "निशाप्रदोषाभ्यां च" ४।३।१४ से प्राप्त ठञ् का अपवाद है । अवस्करकः—यहाँ औत्सर्गिक = सामान्य अण् का अपवाद वुन् होता है । [ यह ध्यान रखना चाहिये कि प्रस्तुत शब्द रूप संज्ञाविषय में ही बनते हैं ।] यदि संज्ञा अर्थ नहीं होता हैं तो यथाप्राप्त ठञ् आदि ही होते हैं । [ अतः पूर्ववर्ती सूत्रों के अनुसार ही रूप होते हैं । अवस्कर शब्द विष्ठा अर्थ का वाचक है—"उच्चारावस्करौ शमलं शकृत् । पुरीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ॥ अमर० २।६।६७-६८ । अतः 'विष्ठा में उत्पन्न होने वाला कीड़ा' इसका अर्थ होना चाहिये । ] ॥ २८ ॥

**१६०२. पथः पन्थ च ॥ २९ ॥ ( १४०२ )**

पथिशब्दाद्वुन् प्रत्ययो भवति 'तत्र जातः ( ४. ३. २५ ) इत्येतस्मिन्विषये । अणोऽपवादः । प्रत्ययसन्नियोगेन च पथः 'पन्थ' इत्ययमादेशो भवति । पथि जातः पन्थकः ॥

**१६०३. अमावास्या वा ॥ ३० ॥ ( १४०३ )**

अमावास्याशब्दाद् वुन् प्रत्ययो भवति वा 'तत्र जातः' इत्येतस्मिन्विषये । सन्धिवेलादिषु ( ४. ३. १६ ) पाठादणोऽपवादः । अमावास्यकः, आमावास्यः ।

एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि भवति । अमावस्यकः । आमावस्यः ।

**१६०४. अ च ॥ ३१ ॥ ( १४०४ )**

अमावास्याशब्दादकारः प्रत्ययो भवति 'तत्र जातः' ( ४. ३. २५ ) इत्येतस्मिन् विषये । पूर्वेण वुन्नणोः

**न्यासः**

**पथः पन्थ च ॥ २९ ॥ अमावास्याया वा ॥** एकदेशविकृतस्येत्यादि । 'अमावस्यदन्यतरस्याम्' इत्यत्र ण्यत्यवृद्धिरेव निपात्यते । अवृद्धिस्तु वृद्धेरेकादेशभूततया विकारो भवतीत्येकदेशविकृतत्वममावस्याशब्दस्योपपद्यते । ये तु सन्धिवेलादिषु ह्रस्वोपधमधीयते, तेषां वृद्ध्युपधस्य ग्रहणं न प्राप्नोति, न हि विकृतिः प्रकृतिं गृह्णाति । तस्माद् दीर्घ एव पाठो युक्तः ॥ ३० ॥

**अ च ॥** अथ योगविभागः किमर्थः, न 'अमावास्याया अ च वा' इत्येवोच्येत, चकारो वुनोऽनुकर्षणार्थो भविष्यति, वावचनञ्चोभयोर्विकल्पार्थम्, तेन ताभ्यां मुक्तेऽणपि भविष्यति ? अस्त्येतत्; किन्त्वेकयोगे सति

**पदमञ्जरी**

**इति यावदिति ।** यावच्छब्दोऽवधिद्योतको निपातः ॥ २७ ॥ २८ ॥ २९ ॥

**अमावास्याया वा ॥** एकदेशविकृतस्यानन्यत्वादिति । 'अमावस्यदन्यतरस्याम्' इत्यत्र 'अमापूर्वस्य वसेर्ण्यति पक्षे वृद्ध्यभावो निपात्यते' इत्युक्तम् । ण्यति च 'अत उपाधायाः' इति सामान्येन वृद्धिविधानात्, अमावास्याशब्दस्य न्याय्यत्वादवृद्ध्युपधस्तस्यैवैकदेशविकार इति भावः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधमधीयते, तेषां दीर्घोपधस्य न स्यात्; अतद्विकारत्वात् ॥ ३० ॥

**अ च ॥** किमर्थो योगविभागः, न च 'अमावास्याया वा' इत्युच्येत, चकाराद्वुञ्, वावचनादुभयोरभावेऽणपि भविष्यति ? सत्यम्; उत्तरत्र तु विकल्पानुवृत्तिः शङ्क्येत । योगविभागे तु सन्धिवेलाद्यणोऽभ्यनुज्ञानाय पूर्वसूत्रे

**भावबोधिनी**

'तत्र जातः' ( वहाँ उत्पन्न हुआ ) इस विषय में पथिन् शब्द से वुन् प्रत्यय होता है । यह अण् का अपवाद है । प्रत्यय के सन्नियोग से पथिन् का 'पन्थ' यह आदेश हो जाता है । उदा०—पथि जातः—पन्थकः । [ मार्ग में उत्पन्न होने वाला । पथिन् + वुन् = अक, 'पन्थ' आदेश, टिलोप—पन्थकः यह बनता है । ] ॥ २९ ॥

'अमावास्या' शब्द से 'तत्र जातः' ( वहाँ पैदा हुआ ) इस विषय में विकल्प से वुन् प्रत्यय होता है । सन्धिवेलादिगण में पाठ होने से उससे प्राप्त अण् का अपवाद है । उदा०—अमावास्यकः, आमावास्यः । [ अमावास्यायां भवः—इस अर्थ में अमावास्या + वुन् = अक, आलोप । जब वुन् नहीं होता है तब ''सन्धिवेलाद्यृतु०'' सूत्र से अण्—अमावास्या + अण्, आदिवृद्धि, आलोप करने पर—आमावास्यः बनता है । ]

'एक अवयव के विकृत होने से दूसरा नहीं होता है, उसी के समान रहता है' इस नियम के आधार पर 'अमावस्य' शब्द से भी [ वुन् तथा पक्ष में अण् ] प्रत्यय होते हैं —अमावस्यकः, आमावस्यः ॥ ३० ॥

''तत्र जातः'' ( उसमें उत्पन्न हुआ ) इस विषय में अमावास्या शब्द से 'अ' प्रत्यय भी होता है । पूर्ववर्त्ती सूत्रों से वुन् तथा अण् इन प्रत्ययों की प्राप्ति रहते यह तीसरा प्रत्यय किया जा रहा है । अतः तीन रूप होते हैं—( १ )

**प्राप्तयोरयं तृतीयः प्रत्ययो विधीयते। अमावास्यः। अमावास्यकः। आमावास्यः। अमावस्यः। अमावस्यकः। आमावस्यः।**

**१६०५. सिन्ध्वपकाराभ्यां कन् ॥ ३२ ॥ ( १४०५ )**

**सिन्धुशब्दादपकरशब्दाच्च कन् प्रत्ययो भवति 'तत्र जातः (४. ३. २५) इत्येतस्मिन् विषये। सिन्धुशब्दः कच्छादिः, ततोऽणि मनुष्यवुञि च (४. ३. १३३, १३४) प्राप्ते विधानम्, अपकरशब्दादप्यौत्सर्गिकेऽणि। सिन्धुकः। अपकरकः।**

**१६०६. अणञौ च ॥ ३३ ॥ ( १४०६ )**

**सिन्ध्वपकरशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'तत्र जातः' (४. ३. २५) इत्येतस्मिन्विषये। पूर्वेण कनि प्राप्ते वचनम्। सैन्धवः। आपकरः॥**

**न्यासः**

'सिन्ध्वपकराभ्यां कन्' इति कन्नेव विकल्पेन भवतीति कस्यचिद् भ्रान्तिः स्यात्, अतस्तन्निवृत्त्यर्थं योगविभागे हि सति व्यवधानतया विकल्पस्य कन् नित्यो विज्ञायते ॥ ३१ ॥

**सिन्ध्वपकराभ्यां कन्** ॥ अपकरशब्दादौत्सर्गिकेऽणीति। प्राप्ते विधानमिति सम्बन्धः ॥ ३२ ॥

**अणञौ च** ॥ यथासंख्यार्थो योगविभागः यदि 'सिन्ध्वपकराभ्याञ्च कन्नणञः' इत्येकयोगः क्रियेत, ततो वैषम्यादेकस्याः प्रकृतेः प्रत्ययास्त्रयः स्युः ॥ ३३ ॥

**पदमञ्जरी**

वाग्रहणसामर्थ्यादस्यापि विकल्पसिद्धेरिह वाग्रहणं नानुवर्त्यमिति व्यवधानादुत्तरत्र विकल्पस्य निवृत्तिः सिद्धा भवति ॥ ३१ ॥ ३२ ॥

**अणञौ च** ॥ योगविभागो यथासंख्यार्थः ॥ ३३ ॥

**भावबोधिनी**

अमावास्यः [ अमावास्या + अ ] ( २ ) अमावास्यकः [—अमावास्या + वुन्=अक ] ( ३ ) आमावास्यः। [अमावास्या + अण् आदिवृद्धि ]। [ 'एक अवयव के विकृत होने से दूसरा नहीं होता है'—इसके अनुसार अमावस्या' से भी तीन प्रत्यय होकर तीन रूप बनते हैं—] अमावस्यः [ अमावस्या + अ ], अमावस्यकः [ अमावस्या + वुन् = अक ] आमावस्यः। [ अमावस्या + अण्, आदिवृद्धि ]॥ ३१ ॥

'तत्र जातः' ( वहाँ उत्पन्न हुआ ) इस विषय में 'सिन्धु' शब्द और 'अपकर' शब्द से 'कन्' प्रत्यय होता है। सिन्धु शब्द कच्छादिगण में पठित है, इसलिये "कच्छादिभ्यश्च ( ४।२।१३२ )" से अण् तथा "मनुष्य-तत्स्थयोर्वुञ्" ( ४।२।१३३ ) इनसे वुञ् के प्राप्त रहते यह विधान किया गया है। और 'अवकर' शब्द से औत्सर्गिक अण् की प्राप्ति रहते यह विधान किया गया है। उदा०—सिन्धुकः, अपकरकः [ 'अपकर' यह किसी स्थान का नाम है। ] ॥३२॥

'तत्र जातः' ( वहाँ पैदा हुआ ) इस अर्थ से 'सिन्धु' तथा 'अपकर' से क्रमशः अण् तथा अञ् प्रत्यय होते हैं। पूर्वसूत्र से कन् प्राप्त रहते ये प्रत्यय किये जा रहे हैं। उदा—सैन्धवः, आपकरः। [ सिन्धु + अण्, आदिवृद्धि, उ का गुण, अव् आदेश। अपकर + अण् आदिवृद्धि। ञित् और णित् प्रत्यय स्वरभेद के लिये है और यह सूत्र अलग से बनाना—इन दो शब्दों से यथासंख्येन अण् तथा अञ् प्रत्यय करने के लिये हैं। ]॥ ३३ ॥

**१६०७. श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढा-बहुलाल्लुक् ॥ ३४ ॥ ( १४०७ )**

**श्रविष्ठादिभ्यः शब्देभ्यो नक्षत्रेभ्य आगतस्य ( ४. २. ३ ) जातार्थे लुग्भवति । तस्मिंस्त्रीप्रत्ययस्यापि 'लुक्तद्धितलुकि' (१. २. ४९) इति भवति । श्रविष्ठासु जातः श्रविष्ठः । फल्गुनः । अनुराधः । स्वातिः[1] । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः ।**

**❀ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ❀ ( म० भा० ४. ३. ३४ वा० १ ) चित्रायां जाता चित्रा । रेवती । रोहिणी । स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वात् ( ४. १. ४१ ) ङीष् ।**

**न्यासः**

**श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** ॥ नक्षत्राणः श्रवणे प्राप्ते लुगुच्यते । ननु च 'नक्षत्रेभ्यो बहुलम्' इत्यनेनैव लुग् भविष्यति ? सत्यमेतत्; तस्यैवायं प्रपञ्चः । उत्तरावपि योगौ प्रपञ्चौ तस्यैव वेदितव्यौ । श्रविष्ठादयश्चैते 'नक्षत्रेण युक्तः कालः' इत्यनेनागतस्याणः 'लुबविशेषे' इति कृते लुबन्ता वेदितव्याः । **स्त्रीप्रत्ययस्यापि 'लुक् तद्धितलुकि' इति लुग् भवतीति** । ये स्त्रीप्रत्ययान्तास्तेषामुपसंख्यानमिति प्रतिपादनमित्यर्थः । तच्चोपरिष्टात् करिष्यते । चित्रायाष्टापो लुकि कृते पुनष्टाप् क्रियते ।

**गौरादित्वान् ङीषिति** । रेवतीरोहिणीत्यत्र ।

**पदमञ्जरी**

**श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्** ॥ कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः, न बह्वर्थादाननिमित्तस्य बहुलाशब्दस्य; श्रविष्ठादिभिः साहचर्यात् । **चित्रेति** । 'लुक्तद्धितलुकि' इति लुकि कृते पुनष्टाप् ।

**गौरादिपाठान् ङीषिति** । 'रेवती नक्षत्रे, रोहिणी नक्षत्रे' इति तत्र पठ्यते, न चेमौ नक्षत्रवाचिनौ; जातार्थवृत्तित्वात् । तस्माद् 'गौरादिषु पिप्पल्यादयश्च' इति पाठात्तेषां चावृत्कृतत्वादत्र ङीषित्यर्थः ।

**भावबोधिनी**

श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विशाखा अषाढा और बहुल—इन शब्दों से 'जातः'—उत्पन्न हुआ—इस अर्थ में किये गए प्रत्यय का लुक् हो जाता है । इसमें स्त्री प्रत्यय का भी "लुक् तद्धितलुकि" ( १।२।४९ ) सूत्र से लुक् हो जाता है । उदा०—श्रविष्ठः । [ श्रविष्ठायां जातः—इस अर्थ में "तत्र जातः" के अनुसार अण् होता है और प्रस्तुत सूत्र से इसका लुक् हो जाता है । तद्धित का लुक् होने पर स्त्रीप्रत्यय टाप् का भी लुक् हो जाता है । ] फल्गुनः । [ फल्गुन्यां जातः—इस अर्थ में अण् और उसका लुक्, स्त्रीप्रत्यय ङीप् का लुक् होता है । ] अनुराधः । [ अनुराधायां जातः— इस अर्थ में पूर्ववत् प्रत्यय, लुक् और टाप् का लुक् ] स्वातिः । [ स्वात्यां जातः—यह अर्थ है ] तिष्यः । [ तिष्ये = पुष्ये जातः, पुष्य में उत्पन्न ] पुनर्वसुः । [ पुनर्वसौ जातः ] हस्तः । [ हस्ते जातः ] विशाखः । [ विशाखां जातः ] अषाढः । [ अषाढायां जातः ] बहुलः । [ बहुलायां = कृतिकायां जातः—यह अर्थ है । तद्धित का लुक् और स्त्रीप्रत्यय टाप् का लुक् करने पर रूप बनता है । ]

❀ लुक् के प्रकरण में चित्रा, रेवती और रोहिणी—इनसे स्त्रीलिङ्ग में तद्धितलुक् कहना चाहिए । ❀ उदा०—चित्रायां जाता स्त्री—चित्रा । [ जातार्थक अण् का लुक् होता है । ] रेवती । [ रेवत्यां जाता ] रोहिणी । [ रोहिण्यां

---

१. इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति । किन्तु 'दीर्घान्तः' इति 'अत सातत्यगमने'-इति धातावाह माधवः । एवं चात्र स्वातीतिष्येति ङीषन्तग्रहणादङीषन्तस्य सौवात इति रूपं भवार्थ इव जातार्थेऽपि माधवमते सिध्यत्येव । कैयटादिमते तु जातार्थे न सिध्यति । लुग्विधायकेऽस्मिन् ङीषन्तग्रहणेऽपि लिङ्गविशिष्ट-परिभाषया ङीषन्तादपिअणो लुकः प्रवृत्तेः ।

❀ फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ❀ ( वा० २ ) । फल्गुनी ( तै० सं० २. १. २. २ ) अषाढा ( तै० सं० ४. ४. १०. २ ) ।

❀ श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः ❀ ( वा० ३ ) । श्राविष्ठीयः । आषाढीयः ॥

१६०८. स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥ ( १४१० )

**स्थानान्ताद् प्रातिपदिकाद् गोशालशब्दात् खरशालशब्दाज्जातार्थे प्रत्ययस्य लुग्भवति । गोस्थाने जातः गोस्थानः । अश्वस्थानः । गोशालः । खरशालः ॥**

**न्यासः**

**फल्गुन्यषाढाभ्यां टानौ वक्तव्याविति** । स्त्रियामित्यपेक्ष्यते । तयोस्तु विधानसामर्थ्यान्न लुग् भवति । टस्य टकारो ङीबर्थः अनो नकार आद्युदात्तार्थः । वक्तव्यशब्दो व्याख्येये वर्तते । व्याख्यानं तु कृतमेव च ।

**श्रविष्ठाषाढाभ्यां छणपि वक्तव्य इति** । अत्र स्त्रियामिति नोपपद्यते । णकारो वृद्धयर्थः । वक्तव्यशब्दस्य स एवार्थः । व्याख्यानमपि करिष्यते च । कृतमेव ॥ ३४ ॥

**स्थानान्तगोशालखरशालाच्च** ॥ गोशालखरशालयोर्ह्रस्वान्तयोः पाठान्नपुंसकयोर्ग्रहणं विज्ञायते । नपुंसकलिङ्गता तु 'विभाषा सेनासुरा' इत्यादिना । यद्यपि नपुंसकयोर्ग्रहणम्, तथापि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भविष्यति इति स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव । उदाहरणेऽप्यौत्सर्गिकस्याणो लुक् ॥ ३५ ॥

**पदमञ्जरी**

**टानौ वक्तव्याविति** । स्त्रियामित्यपेक्ष्यते, टकारो ङीबर्थः, नकारः स्वरार्थः, विधानसामर्थ्याच्चानयोर्लुग्न भवति ।

**छणपि वक्तव्य इति** । अत्र च 'स्त्रियाम्' इति नापेक्ष्यते ॥ ३४ ॥

**स्थानान्तगोशालखरशालाच्च** ॥ **गोशालेति** । 'विभाषा सेना' इति नपुंसकत्वे ह्रस्वत्वम् । तत्साहचर्यात्खरशालस्यापि नपुंसकस्य ग्रहणम्, न तु द्वन्द्वैकवद्भावेन ह्रस्वत्वम् । एकादेशस्य पूर्वं प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गाभ्यामपि लुग्भवत्येव । यद्यपि टाबन्तयोरपि पाठे एकदेशविकृतस्यानन्यत्वान्नपुंसकाभ्यामपि लुक् सिद्धयति, लाघवार्थं तु ह्रस्वस्य पाठः ॥ ३५ ॥

**भावबोधिनी**

जाता । ] स्त्रीप्रत्यय का लुक् करने के बाद गौरादिगण में पाठ होने से पुनः ङीप् = ई होने से ये रूप बनते हैं । ]

❀ फल्गुनी तथा अषाढा—इन शब्दों से ट तथा अन् प्रत्यय कहने चाहिए । ❀ उदा० – फल्गुनी । [ फल्गुन्यां जाता स्त्री इस अर्थ में ट = अ प्रत्यय, विधान के कारण इसका लुक् नहीं होता है । टित् होने से "टिड्ढाणञ्०" सूत्र से ङीप् होता है । ] अषाढा । [ अषाढायां जाता—] इस अर्थ में अन् प्रत्यय, स्त्रीप्रत्यय टाप् = आ करने पर रूप बना है । ] ❀ श्रविष्ठा और अषाढा इन शब्दों से छण् प्रत्यय भी कहना चाहिए । ❀ उदा०—श्राविष्ठीयः । श्रविष्ठायां = धनिष्ठायां जातः—इस अर्थ में छण् प्रत्यय, आदिवृद्धि, छ=ईय आदेश, भसंज्ञा, आलोप करने पर रूप बनता है । ] आषाढीयः [ अषाढायां जातः—इस अर्थ में छण् प्रत्यय, आदिवृद्धि, छ = ईय्, आदेश ] [ यहाँ 'स्त्री' अर्थ की अपेक्षा नहीं है । अत एव विग्रह पुल्लिंग में लिखा गया है । ] ॥ ३४ ॥

जिनके अन्त में 'स्थान' शब्द है, ऐसे प्रातिपदिक से और 'गोशाल' तथा 'खरशाल' शब्दों से 'जात' अर्थ में उत्पन्न प्रत्यय का लुक् होता है । उदा०—गोस्थाने जातः —गोस्थानः । [ यहाँ उत्पन्न अण् प्रत्यय का लुक् हो जाता है । ] अश्वस्थानः [ अश्वस्थाने जातः —इस अर्थ में प्रत्यय और उसका लुक् होता है । गोशालः, खरशालः । [ गोशाल यह षष्ठीतत्पुरुष करने पर "विभाषा सेनासुराच्छाया-शाला-निशानाम्" २।४।२५ से विकल्प से नपुंसकलिङ्ग होने से ह्रस्वान्त रूप बनता है । अतः—गोशाले जातः, खरशाले जातः—ये विग्रह हैं । जातार्थक प्रत्यय का लुक् करने पर रूप बनता है । ] ॥ ३५ ॥

**१६०९. वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥ ( १४११ )**

**वत्सशालादिभ्यः परस्य जातार्थे प्रत्ययस्य लुग् वा भवति । वत्सशालायां जातः वत्सशालः, वात्सशालः । अभिजित्, आभिजितः । अश्वयुक्, आश्वयुजः । शतभिषक्, शातभिषजः ।**

**बहुलग्रहणस्यायं प्रपञ्चः ॥**

**१६१०. नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥ ( १४१२ )**

**नक्षत्रेभ्य उत्तरस्य जातार्थे प्रत्ययस्य बहुलं लुग्भवति । रोहिणः, रौहिणः । मृगशिराः, मार्गशीर्षः ॥**

**न्यासः**

**वत्सशालाभिजिदश्वयुक्शतभिषजो वा** ॥ वत्सशालशब्दो नपुंसकलिङ्गो गृह्यते । कुत एतद् ? व्याप्तेर्न्यायात्; नपुंसकलिङ्गस्य हि ग्रहणे लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुग्न सिध्यति; न तु स्त्रीलिङ्गस्य ग्रहणे नपुंसकात् ।

**बहुलग्रहणस्यायं प्रपञ्च इति** । वत्सशालशब्दो यद्यपि नक्षत्रवचनो न भवति, तथापि बहुलवचनात् ततोऽपि लुग्भविष्यतीत्यभिप्रायः ॥ ३६ ॥

**नक्षत्रेभ्यो बहुलम्** ॥ **रोहिण इत्यादौ** नक्षत्राणः पक्षे लुक् । **मृगशिरा इति** । 'अत्वसन्तस्य चाधातोः' इति दीर्घः । **मार्गशीर्ष इति** । 'ये च तद्धिते' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाच शिरसः शीर्षभावः । अथ बहुलग्रहणं किमर्थम् ? न पूर्वसूत्रादेव वाग्रहणमनुवर्तिष्यते ? इदं प्रयोजनम् न क्वचिदन्यदेव यथा स्यात्, तेन फल्गुन्यषाढाभ्यां टानौ सिद्धौ भवतः । श्रविष्ठाषाढाभ्याञ्छणपीति ॥ ३७ ॥

**पदमञ्जरी**

**वत्सशालाभिजिदश्वयुक्छतभिषजो वा** ॥ **वत्सशालेति** । ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम् । **बहुलग्रहणस्यैवायं प्रपञ्च इति** । अश्वयुक्शतभिषक्शब्दावभिप्रेत्यैतदुक्तम्; अन्ययोरनक्षत्रवाचित्वात् । **अभिजिदिति** । यद्यपि नक्षत्रमप्यस्ति—'अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामिति', मुहूर्तमप्यस्ति ॥ ३६ ॥

**नक्षत्रेभ्यो बहुलम्** ॥ वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लुग्व्यवस्थायां सिद्धायाम्, बहुलवचनं क्वचिदन्यदेवेत्येतदर्थम्, तेन टानौ वक्तव्यावित्यादि सिद्धं भवति । **रोहिण इति** । 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम्' ( वा० ४५० ) इत्येतत्तु स्त्रियां नियमेन लुगर्थे, न तु स्त्रियामेव लुगर्थम् ॥ ३७ ॥

**भावबोधिनी**

वत्सशाल, अभिजित्, अश्वयुज् तथा शतभिषज्—इनके बाद आने वाले जातार्थक प्रत्यय का लुक् विकल्प से होता है । उदा० वत्सशालायां जातः—इस अर्थ में जब अण् का लुक् होता है तब ( १ ) वत्सशालः । [ अण् का लुक् करने पर स्त्रीप्रत्यय का भी लुक् हो जाता है । ] लुक् न होने पर वात्सशालः । [ वत्सशाला + अण् आदिवृद्धि, भसंज्ञा, आलोप ] [ यहाँ 'वत्सशाल' यह नपुंसकलिङ्ग ह्रस्वान्त भी लिया जा सकता है । ] अभिजित्, आभिजितः । [ लुक् करने पर मूल शब्द और अण् करने पर आदिवृद्धि होती है । ] अश्वयुक्, आश्वयुजः । [ अश्वयुज् में अण् का लुक्, पक्ष में अण् और आदिवृद्धि ] शतभिषक्, शातभिषजः । [ यहाँ भी लुक् और लुगभाव में अलग-अलग रूप होते हैं । ]

[ अग्रिम सूत्र में ] 'बहुलम्' का ग्रहण किया गया है उसी का यह प्रपञ्च है । [ अतः नक्षत्रवाची से और अनक्षत्रवाची से प्रत्यय का लुक् होता है और नहीं भी होता है । इष्टसिद्धि हो जाती है । अतः अनेक वचनों की आवश्यकता नहीं होती है । ] ॥ ३६ ॥

नक्षत्रवाची प्रातिपदिकों से 'जात' अर्थ में किये गए प्रत्यय का बहुलरूप से लुक् होता है । उदा०—रोहिणः, रौहिणः । [ रोहिण्यां जातः—इस अर्थ में विहित अण् का लुक् करने पर स्त्रीप्रत्यय का भी लुक् हो जाता है । जब अण् का लुक् नहीं होता है तब भसंज्ञा, ईलोप, आदिवृद्धि करने पर दूसरा रूप बनता है । ] मृगशिराः, मार्गशीर्षः । [ मृगशिरसि जातः—इस अर्थ में अण् प्रत्यय का लुक् करने के बाद 'मृगशिरस्' के प्रथमा एकवचन में "अत्वसन्तस्य

## १६११. कृतलब्धक्रीतकुशलाः ।। ३८ ।। ( १४१३ )

**'तत्र' इत्येव। सप्तमीसमर्थात् कृतादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। स्रुघ्ने कृतो वा लब्धो वा क्रीतो वा कुशलो वा स्रौघ्नः। माथुरः। राष्ट्रियः।**

**ननु च यद्यत्र कृतं जातमपि तत्तत्र भवति, यच्च यत्र क्रीतं लब्धमपि तत्तत्रैव भवति, किमर्थं**

**न्यासः**

**कृतलब्धक्रीतकुशलाः ।। ननु चेत्यादि।** जन्मवद्वस्तु जातशब्दस्यार्थः, कृतस्यापि जन्मास्त्येव, तस्माद् यद् यत्र कृतं जातमपि तत् तत्र भवति। **यच्च क्रीतमित्यादि।** प्राप्तं लब्धमप्युच्यते। यदपि क्रीतं प्राप्तमपि तद् भवत्येव, तस्मात् क्रीतं लब्धमपि भवति। **शब्दस्यार्थस्याभिन्नत्वादिति। स्वजन्मन्यनुभूतकर्तृभावो जात-**शब्दस्यार्थः। जातशब्दस्यैव विशेषोपलक्षितपरव्यापारो स्वजन्मनिष्पत्तौ कृतशब्दस्यार्थः। प्राप्तिसामान्यं लब्धशब्दस्यार्थः। प्राप्तिविशेषो यस्य मूल्यहेतुका प्राप्तिः स क्रीतशब्दस्यार्थः। न च सामान्यविषयोरेकार्थता

**पदमञ्जरी**

**कृतलब्धक्रीतकुशलाः ।। यद्यत्र कृतं जातमपि तत्तत्र भवतीति।** यद्यपि जातं सर्वं कृतं न भवति, स्वयं जातस्यापि भावात्; कृतं तु सर्वं जातं भवति, न ह्यजननस्वभावं क्रियते, यथा—व्योमेति भावः। **यच्च क्रीतं लब्धमपि तत्तत्र भवतीति।** अत्रापि लब्धं सर्वं क्रीतं न भवति; दानादिनापि लाभसम्भवात्। क्रीतं तु लब्धमेव; क्रयस्यापि लाभहेतुत्वादित्यर्थः। **तत्किमर्थं भेदेनोपादानं क्रियत इति।** जातलब्धाभ्यामेव गतमिति प्रश्नः। **शब्दार्थस्याभिन्नत्वादिति।** परव्यापारोपहितं रूपं कृतमित्युच्यते, तद्रहितं तु जातमिति; तथा मूल्यप्रदानरूपो यः स्वीकर्तुर्व्यापारस्तदुपहितं रूपं क्रीतमित्युच्यते, तद्रहितं तु लब्धमिति। तत्र यथा—विक्लिन्न ओदनः, पक्व ओदन इति शब्दार्थभेदः, तथात्रापीत्यर्थः। एतदेव स्पष्टयति—**वस्तुमात्रेणेति।** वस्तुत इत्यर्थः। एतदुक्तं

**भावबोधिनी**

चाधातोः'' ६।४।१४ सूत्र से उपधा का दीर्घ होता है। जब अण् का लुक् नहीं होता है तक "ये च तद्धिते" ( ६।१।६१ ) सूत्र ये 'शिरस्' का 'शीर्ष' आदेश, ऋ की आदिवृद्धि रपर—मार्गशीर्षः यह रूप बनता है। ] ।। ३७ ।।

'तत्र' [ वहाँ ] इसकी अनुवृत्ति होती है। सप्तमी समर्थ से कृत, लब्ध, क्रीत और कुशल—इस अर्थों में यथा-विहित प्रत्यय होते है। उदा०—स्रुघ्ने कृतः, लब्धः, क्रीतः, कुशलः वा—इन अर्थों में स्रौघ्नः। [ स्रुघ्न नामक स्थान पर किया गया, पाया गया, खरीदा गया, कुशल—पदार्थ विशेष स्रौघ्न कहा जाता है। ] माथुरः। [ मथुरायां कृतः, लब्धः, कुशलः वा—इन अर्थों में अण् प्रत्यय आदिवृद्धि, भसंज्ञा, आ का लोप—माथुरः। ] राष्ट्रियः। [ राष्ट्रे कृतः, लब्धः, क्रीतः, कुशलः वा—इन अर्थों में राष्ट्र + घ = इय करने पर रूप बनता है। ]

शंका—जों जहाँ किया गया है वह वहाँ उत्पन्न भी है और जो जहाँ खरीदा गया है वह वहाँ लब्ध भी है [ अर्थात् कृत यह जात का व्यापक है और क्रीत यह लब्ध का व्यापक है, अतः दो में से किसी एक का ही ग्रहण करना चाहिये था ] दोनों के ग्रहण का क्या प्रयोजन है ? शब्दार्थ तो अभिन्न है। वस्तुतः खरीदा गया लब्ध है, किन्तु शब्दार्थ तो भिन्न ही है।

**विमर्श**—इस सूत्र में शंका का आशय यह है जहाँ जो वस्तु की = बनाई जाती है वहाँ वह उत्पन्न भी होती है इसी प्रकार जहां जो खरीदी जाती है वहाँ वह प्राप्त ( लब्ध ) भी होती है। अतः कृत और जात में किसी एक का तथा क्रीत और लब्ध में किसी एक का ग्रहण करना चाहिए ? इसके उत्तर में "शब्दार्थस्याभिन्नत्वात्।" इत्यादि पाठ प्राप्त होता है। किन्तु यह संगत नहीं प्रतीत होता है क्योंकि एक अंश से 'अभिन्नत्वात्' यह लिखा है और आगे "शब्दार्थस्तु भिद्यते एव" यह लिखा है। परन्तु न्यास तथा पदञ्जरी दोनों में उपर्युक्त पाठ ही है।

मैं यहाँ "शब्दार्थस्य भिन्नत्वात्।" ऐसा पाठ उचित समझता हूँ। कारण यह है कि कृत और जात में कुछ

भेदेनोपादानं क्रियते ? शब्दार्थस्याभिन्नत्वात् । वस्तुमात्रेण क्रीतं लब्धं भवति, शब्दार्थस्तु भिद्यत एव ॥

**१६१२. प्रायभवः ॥ ३९ ॥ ( १४१४ )**

'तत्र' इत्येव । सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'प्रायभवः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति । प्रायशब्दः साकल्यस्य किञ्चिन्न्यूनतामाह । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः । माथुरः । राष्ट्रियः ।

**न्यासः**

युक्ता । मा भूत्पर्यायप्रसङ्ग इति भिद्यते शब्दार्थः । **वस्तुमात्रेणेति** । क्रीतलब्धयोर्यदाधारभूतं वस्तुमात्रं तस्याभिन्नरूपत्वात् क्रीतं लब्धं भवति । मात्रग्रहणं शब्दार्थव्यवच्छेदार्थम् । अत एवाह—**शब्दार्थस्तु भिद्यत एव** । न हि येन रूपेण क्रीतशब्देन तत्प्रत्याय्यते तेनैव लब्धशब्देन । एवं जातकृतशब्दयोर्वस्तुत्वेनाभिन्नत्वम् । शब्दार्थद्वारेण तु भिन्नार्थत्वमेव । अन्येनैव हि रूपेण जातशब्देन तद्वस्तु प्रत्याय्यते, अन्येन कृतशब्देन ॥ ३८ ॥

**प्रायभवः ॥ प्रायभवग्रहणमनर्थकमिति** । वैचित्र्यादन्यस्यार्थस्याभावादनर्थकमित्युच्यते । वैचित्र्येण तु सार्थकमेव । कस्मात् पुनरनर्थकमिति ? **तत्र भवेन कृतार्थत्वादिति** । यत् 'प्रायभवः' इत्यस्य साध्यम्, तस्य 'तत्र भवः' इत्यनेनैव साधितत्वादिति भावः । यो हि राज्ये प्रायेण भवति तत्रासौ भवत्येव । ततश्च तत्र भवे तस्यान्तर्भावात् 'तत्र भवः' इत्यनेनैव कृतं सम्पादनमिति किं प्रायभवग्रहणेन ? **अनित्यभव** इत्यादिना परस्योत्तरमाशङ्कते । स्यादेतत्—अनित्यभवः प्रायभवो नित्यभवस्तत्र भव इति, तस्मात् तत्र भवेन

**पदमञ्जरी**

भवति—क्रीतं वस्तुतो लब्धं भवतीत्येतावत्, शब्देन तु रूपान्तरमभिधीयते । एवं कृतमपि वस्तुतो जातं भवति, शब्देन तु रूपान्तरमभिधीयत इति द्रष्टव्यम् । उपसंहरति—**शब्दार्थस्तु भिद्यत एवेति** । तत्राक्रियमाणे कृतक्रीतयोरुपादाने यथा—क्वायं घटः कृतः, क्रीतो वा इति पृष्टे स्रुघ्ने जातो लब्ध इति चोत्तरं न प्रयुज्यते; तथा तद्धितोऽपि न स्यात् । तस्मात्कृतक्रीतयोस्तद्धितेनाभिधानाय भेदेनोपादानमिति ॥ ३८ ॥

**प्रायभवः** ॥ प्रायेण भवः, 'कर्तृकरणे कृता बहुलम्' इति समासः ।

**तत्र भवेन कृतत्वादिति** । यत्प्रायभव इत्यस्य साध्यम्, तस्य 'तत्र भवः' इत्यनेनैव साधितत्वादित्यर्थः । यो हि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति 'तत्र भवः' इत्येव सिद्धम् । शङ्कते—**अनित्यभवः प्रायभव इति चेदिति** । यस्तत्र कदाचिद्भवति कदाचिन्न स प्रायभवः, यस्य तु नियत आधाराधेयभावः स 'तत्र भवः' इति पृथगुपादानसामर्थ्याद्भेद आश्रीयत इति यद्युच्येतेत्यर्थः । निराकरोति—**मुक्तसंशयेन तुल्यमिति** । यं भवान्मुक्तसंशयं न्याय्यं तत्रभव उदाहरणं मन्यते—स्रौघ्नो देवदत्त इति, तेनैव तुल्यम् । सोऽपि हि कदाचित्त-

**भावबोधिनी**

सूक्ष्म भेद है । इसी प्रकार खरीदने के लिए कुछ देना पड़ता है किन्तु लब्धता तो दानादि से भी होती है । अतः इन सभी शब्दों के अर्थों में कुछ न कुछ भेद अनुभवसिद्ध है । इस लिये इनका स्वतन्त्र उल्लेख ठीक है ।

यहाँ की पाठसंगति में न्यासकार और पदमञ्जरीकार का मतभेद भी है । न्यासकार 'वस्तुमात्रेण' यहाँ "मात्रग्रहणं शब्दार्थव्यवच्छेदार्थम्" ऐसा लिखते हैं और पदमञ्जरीकार 'वस्तुमात्रेणेति । वस्तुत इत्यर्थः ।" लिखते हैं ।

तत्त्वबोधिनीकार ने एक और विशेष बात लिखी है—"ननु कृतक्रीतत्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन ? सत्यम्, कृतत्व-क्रीतत्व-प्रकारकबोधेऽपि प्रत्ययार्थं तद्ग्रहणम् । अतएव जाते लुग्भाजामपि कृते न लुक् ।" ( प्रस्तुतसूत्र पर तत्त्वबोधिनी ) ॥ ३८ ॥

'तत्र' ( वहाँ ) इसकी अनुवृत्ति होती है । सप्तमीसमर्थ ङ्यन्त, आबन्त और प्रातिपदिक से 'प्रायभवः' ( प्रायः होता है ) इस अर्थ में यथाविहित प्रत्यय होते हैं । 'प्रायः' शब्द साकल्य = सम्पूर्णता की कुछ कमी को कहता है । उदा०—स्रुघ्ने प्रायेण = बाहुल्येन भवति—( स्रुघ्न में अधिकतर होता है— ) स्रौघ्नः । [ स्रुघ्न + अण् ] माथुरः [ मथुरायां बाहुल्येन भवति—इस अर्थ में अण् आदिवृद्धि, भसंज्ञा, आ का लोप ] राष्ट्रियः । [ राष्ट्रे बाहुल्येन भवति—

**प्रायभवग्रहणमनर्थकम्, तत्रभवेन कृतत्वात् ( म० भा० ४. ३. ३९ श्लोकवा० )।**

**अनित्यभवः प्रायभव इति चेद् ? मुक्तसंशयेन तुल्यम् ॥**

**१६१३. उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥ ( १४१५ )**

**उपजान्वादिभ्यः शब्देभ्यः सप्तमीसमर्थेभ्यः 'प्रायभवः' इत्येतस्मिन् विषये ठक् प्रत्ययो भवति। अणोऽपवादः। औपजानुकः। औपकर्णिकः। औपनीविकः ॥**

**न्यासः**

प्रायभवस्यासंग्रहान्न सिध्यति ? इत्याशङ्क्याह—**मुक्तसंशयेन तुल्यमिति**। मुक्तस्त्यक्तः संशयो येन तत् मुक्तसंशयम्। न्याय्यस्तत्र भवोऽयमिति यो निश्चितस्तेन तुल्यं भवति। तथा हि—स्रुघ्ने भवो रेवदत्तः स्रौघ्न इत्युच्यते, स्रुघ्ने सदा भवति, अवश्यं कदाचिदुदग्देशादीनपक्रामति, अथ च तत्रभवप्रत्ययो भवति। यदि च नित्यभवस्तत्र भवः ? जिह्वामूले भवो वर्णः जिह्वामूलीय इत्यत्र 'तत्र भवः' इत्यधिकारे 'जिह्वामूलाङ्गुलेश्छः' इति च्छो न स्यात्, न हि वर्णो नित्यं जिह्वामूले भवति। तस्मात् प्रायभवस्य तत्रभवान्तर्भावात् ततो न व्यतिरिच्यत इत्यनर्थकं प्रायभवग्रहणम् ॥ ३९ ॥

**उपजानूपकर्णोपनीवेष्ठक्** ॥ जानुनः समीपम्, कर्णस्य समीपम्, नीव्याः समीपमिति—'अव्ययं विभक्ति' इत्यादिनाऽव्ययीभावः। **उपजानुक इति**। 'इसुसुक्तान्तात् कः' ॥ ४० ॥

**पदमञ्जरी**

स्मादुदक्देशादभिनिष्क्रामति। तत्र चेद्युक्ता तत्र भवता, इहापि युक्ता दृश्यताम्। अथैतदपि प्रायभवस्योदाहरणम्—स्रौघ्नो देवदत्त इति। तत्रभवनस्य किमुदाहरणम् ? तत्र नित्यभवः स्रौघ्नः प्राकार इति। यद्येवम्, 'तत्र भवः' इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन्दृष्टापचारे न स्यात्, दृश्यते च—

वानरोऽहं महाभागे दूतो रामस्य धर्मतः [ धीमतः ]।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ ( वा० रा०, सु० कां० ३६.२ ) इति।

तस्मात्तत्रभवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावादनर्थकं प्रायग्रहणम् ? इदं तर्हि **प्रयोजनम्**—'उपजानूपकर्णोपनीवेष्ठक्' प्रायभवे यथा स्यान्नित्यभवे मा भूत् – उपजानु भवं गड्विति। अथेदानीं जानुसमीपस्थशरीरावयववाचिन उपजानुशब्दात्तत्र भव इति प्रकृत्य 'शरीरावयवाद्यत्' इति यत्कस्मान्न भवति ? अनभिधानात्। ठगपि तर्ह्यनभिधानादेव न भविष्यति ? तदेवं स्थितम्—एतत्प्रायग्रहणमनर्थकम्, तत्र भवेन कृतत्वादिति ॥ ३९ ॥

**उपजानूपकर्णोपनीवेष्ठक्** ॥ उपजान्वादयः सामीप्येऽव्ययीभावाः, समाहारद्वन्द्वस्य सौत्रः पुंल्लिङ्गनिर्देशः ॥ ४० ॥

**भावबोधिनी**

इस अर्थ में राष्ट्र + घ = इय ] प्रायभव = प्रायः होती है—इसका ग्रहण अनर्थक है, क्योंकि 'तत्र भवः' ( वहाँ होता है ) इसी सूत्र से इसका निर्वाह हो जाता है।

अनित्यभव = प्रायभव है, ऐसा यदि कहो तब तो भी मूल संशय वाले के समान ही है। [ भाव यह है कि स्रुघ्न में होने वाला देवदत्त 'स्रौघ्नः' कहा जाता है किन्तु वह सदैव स्रुघ्न में ही होता है बाहर नहीं जाता, ऐसा नहीं है अपितु वह बाहर भी निकलता है। अतः 'तत्र भवः' के अन्तर्गत 'प्रायभवः' आ जाता है। अतः इसे स्वतन्त्ररूप से मानने की कोई आवश्यकता नहीं है। ] ॥ ३९ ॥

सप्तमी समर्थ उपजानु आदि शब्दों से 'प्रायभवः' ( प्रायः होता है ) इस अर्थ में ठक् प्रत्यय होता है। यह अण् का अपवाद है। उदा०--औपजानुकः। [ जानुनः समीपम्—इस विग्रह में अव्ययीभाव समास करके 'उपजानु' इस सप्तम्यन्त से ठक् प्रत्यय, "इसुसुक्तान्तात् कः" ( पा० सू० ८।१।५१ ) से 'ठ' का 'क' करने पर रूप बनता है –

**१६१४. सम्भूते ॥ ४१ ॥ ( १४१६ )**

**'तत्र' इत्येव । सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'सम्भूते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । अवक्लृप्तिः प्रमाणानतिरेकश्च सम्भवत्यर्थ इह गृह्यते, नोत्पत्तिः, सत्ता वा; जातभवाभ्यां, गतत्वात् । स्रुघ्ने सम्भवति स्रौघ्नः । माथुरः । राष्ट्रियः ।**

**१६१५. कोशाड्ढञ् ॥ ४२ ॥ ( १४१७ )**

**कोशशब्दाद् ढञ् प्रत्ययो भवति तत्र 'सम्भूते' इत्यस्मिन्विषये । अणोऽपवादः । कोशे सम्भूतं कौशेयं**

**न्यासः**

**सम्भूते ॥ अवक्लृप्तिरित्यादि** । अवक्लृप्तिः = सम्भावना । प्रमाणानतिरेकः = आधारप्रमाणादाधेयप्रमाणस्यानतिरिक्तता, यस्यां सत्यां सर्वमाधेयमाधारमनुप्रविशति । स्रुघ्ने सम्भवति । यस्तु स्रुघ्ने सम्भाव्यते, स्रुघ्नप्रमाणान्नातिरिच्यते, तदनुप्रवेशात् स सेनादिकोऽर्थ एवमुच्यते ॥ ४१ ॥

**कोशाड्ढञ् ॥ कौशेयं वस्त्रमिति** । ननु च वस्त्रं कौशेयं न सम्भवति, किन्तु कृमिः, ततश्च कृमावेव स्यात्, न वस्त्रे; अपि च विशेषानभिधानात् खड्गसम्बन्धिनोऽपि कोशात् प्रत्ययः प्रसज्येतेत्याह—**रूढिरेषेत्यादि** । **रूढिशब्दो** हि यथाकथञ्चिद्व्युत्पाद्यते, न तत्रावश्यमवयवार्थोऽपेक्ष्यः; क्वचिदवयवार्थसम्भवात् । तथा हि तैलं पिबतीत्येवं तैलपायिकाशब्दो व्युत्पाद्यते, स च तैलपानक्रियारहित एव क्वचित् प्राणिविशेषे वर्तते । तस्माद् यद्यपि कोशे सम्भूतमित्येवं विगृह्य कोशशब्दात् प्रत्यय उत्पाद्यते, तथापि वस्त्रे सूत्रे वा कौशेयशब्दः साधुभावमनुभवति,

**पदमञ्जरी**

**सम्भूते । अवक्लृप्तिः प्रमाणानतिरेकश्चेति** । सकृत्प्रयुक्तस्याप्यनेकार्थत्वमविरुद्धम्, तन्त्राद्याश्रयणादिति भावः । तत्रावक्लृप्तिः=सम्भावना, इदमेवं भवेदिति बुद्धिः; प्रमाणानतिरेकः = आधारपरिमाणादाधेयपरिमाणास्यानतिरेकता, यस्यां सत्यां सर्वमाधेयमाधारेऽनुप्रविशति । **स्रौघ्न इति** । देवदत्त इदानीं स्रुघ्ने सम्भाव्यत इत्यर्थः, स्रुघ्नप्रमाणाद्वाऽनतिरिच्यते सेनादिकोऽर्थ इत्यर्थः ॥ ४१ ॥

**कोशाड् ढञ् ॥ कौशेयं वस्त्रमिति** । ननु च न वस्त्रं कोशे सम्भवति, वस्त्रदशायां तत्कारणस्य कोशस्य परावृत्तत्वात्; न च कोशान्तरे वस्त्रस्य सम्भवः, न च तत्रेष्यते, तस्माद्धिकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति वार्त्तिकमेव शरणम् । 'तस्य विकारः' इत्यत्र प्रकरणे 'एण्या ढञ् इत्यस्यानन्तरम् 'कोशाच्चेति

**भावबोधिनी**

उपजानुकः । जानु के समीप प्रायः होने वाला ] उपकर्णकः [ कर्णस्य समीपम् —उपकर्णम्, तत्र प्रायभवः—इस विग्रह में 'ठक्' और इसका 'इक' आदेश आदिवृद्धि भसंज्ञा अलोप करने पर रूप बनता है । ] औपनीविकः । [ नीव्याः समीपम्—इसमें समास के बाद पूर्ववत् ठक् प्रत्यय और 'ठ' का 'क' आदेश करने पर आदिवृद्धि के बाद यह रूप बनता है ।] ॥४०॥

'तत्र' इसकी अनुवृत्ति है । सप्तमीसमर्थ ङ्यन्त, आबन्त और प्रातिपदिक से 'सम्भूत' इस अर्थ में यथाविहित प्रत्यय होते हैं । अवक्लृप्ति = सम्भावना ( यह ऐसा होगा—ऐसा ज्ञान ) और प्रमाणानतिरेक ( = आधार परिमाण से आधेय परिमाण का अतिरेक न होना, आधार में ही आधेय का समावेश हो जाना )—ये 'सम्भवति' के अर्थ यहाँ लिये जाते हैं । उत्पत्ति अथवा सत्ता अर्थ नहीं लिया जाता है, क्योंकि 'जात' तथा 'भव' इन्हीं से ये अर्थ गतार्थ हो जाते हैं । उदा०—स्रुघ्ने सम्भवति—इस अर्थ में—स्रौघ्नः । [ स्रुघ्न में सम्भव होने वाला ] माथुरः । [ मथुरायां सम्भवति ] राष्ट्रियः । [ राष्ट्रे सम्भवति—इस अर्थ में "राष्ट्रावारपाराद् घखौ" ( पा० सू० ४।२।९३ ) से 'घ' = इय करने पर रूप बनता है ] ॥ ४१ ॥

'तत्र सम्भूतः' ( वहाँ हो सकता है )—इस विषय में 'कोश' शब्द से ढञ् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—कोशे सम्भूतम् ( कोश में सम्भव होने वाला ) वस्त्रम्—कौशेयम् । [ कोश + ढञ्, आदिवृद्धि,

**वस्त्रम् । रूढिरेषा, तेन क्रमौ न भवति, खड्गकोशाच्च ॥**

**१६१६. कालात्साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥ ( १४१८ )**

**'तत्र' इत्येव । कालविशेषवाचिभ्यः सप्तमीसमर्थेभ्यः साध्वादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । हेमन्ते साधुः हैमनः प्राकारः । शैशिरमनुलेपनम् । वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः । ग्रैष्म्यः पाटलाः । शरदि पच्यन्ते शारदाः शालयः । ग्रैष्मा यवाः ॥**

**न्यासः**

न क्रमौ । अथ खड्गकोशादुत्पत्तौ को दोषः, येन ततः प्रत्ययो नेष्यते ? खड्गस्याभिधानं प्राप्नोति । स हि तत्र सम्भवतीति चेत् ? इतरस्मादपि तर्हि कोशात् प्रत्ययोत्पत्तौ च क्रमेरभिधानं प्राप्नोति, स हि तत्र सम्भवति । अथ तत्रापि रूढिवशाद् वस्त्रस्याभिधानम्, न क्रमेः । इतरस्मादपि तर्हि कोशादुत्पत्तौ वस्त्रस्याभिधानं न खड्गस्य ? एवं मन्यते—यद्यपि सम्भूताधिकारे कोशाड् ढञ् विधीयते, तथापि कौशेयशब्दान्न सम्भवोऽर्थः प्रतीयते, अपि तु विकारोऽर्थः; रूढिवशात् । कौशेयं वस्त्रमिति कोशविकारो वस्त्रमित्यर्थः । **तथा च वार्त्तिककारेणोक्तम्**—'विकारे कोशाड् ढञ् सम्भूतार्थानुपपत्तेः' इति । विकारश्च कौशेयशब्दात् क्रमिकोशस्य प्रतीयते, न खड्गकोशस्य; रूढिवशात् । तस्माद् यस्य विकारः प्रतीयते तदभिधायिन एव कोशशब्दाद् युक्तः प्रत्ययः नेतरस्मात् ॥ ४२ ॥

**कालात् साधुपुष्प्यत्पच्यमानेषु ॥** कालादिति स्वर्यते, प्रकृतीरुत्तरा विशेषयितुम् । न च स्वरूपग्रहणे सत्युत्तराः प्रकृतयः शक्या विशेषयितुम्; स्वरूपस्यासाधारणत्वात् । तस्मादर्थग्रहणमेवैतत् । तेन कालविशेषवाचिभ्यः प्रत्ययो विज्ञायत इत्याह—**कालविशेषवाचिभ्य इत्यादि । हैमन इति** 'सर्वत्राण् च तलोपश्च' । **शैशिर** इत्यादौ सन्धिवेलादिसूत्रेण ऋत्वण् ॥ ४३ ॥

**पदमञ्जरी**

वक्तव्यम्' इत्यर्थः । **अर्थानुपपत्तिरिति** । कौशेयशब्दस्य योऽर्थो लौकिकः सूत्रवस्त्रलक्षणस्तस्यानुपपत्तिः स्यात्, लौकिकोऽर्थः शास्त्रेण नानुसृतः स्यात् । क्रमिरेव तत्राभिधेयः प्राप्नोति स हि कोशे सम्भवति । किञ्चाविशेषाभिधानात्खड्गकोशादपि प्रत्ययः प्रसज्येत, इत्यत आह **रूढिरेषेति** । रूढिशब्देषु नावश्यमवयवार्थोऽन्वेष्यः, यथा तैलपायिकादिष्विति मन्यते । **सूत्रकारेण** तु सत्कार्यवादाश्रयेण सम्भूते प्रत्ययो विहितः तत्र हि कारणदशायामपि कार्यस्य सत्त्वात् तत्र तत्सम्भवति तदनुपपन्नम् । कार्यकारणयोर्हि तादात्म्यमभिसम्बन्धः, न त्वाधाराधेयभावः ॥ ४२ ॥

**कालात्साधुपुष्प्यत्पच्यमानेषु ॥ कालविशेषवाचिभ्य इति** । स्वरूपग्रहणं तु न भवति; उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात् ॥ ४३ ॥

**भावबोधिनी**

ढ - एय करने पर रूप बनता है । ] यह रूढि है, इस कारण क्रमि अर्थ में नहीं होता है और खड्गकोश से भी नहीं होता है । [ भाव यह है कि कोश में क्रमि=कीड़ा होता है, उसमें रेशमी वस्त्र बनता है । परन्तु यहाँ रूढि मानकर 'कोश में होने वाला' अर्थ लिया गया है । साथ ही विकार अर्थ भी प्रतीत होना चाहिए । अतः 'खड्गकोश' से भी नहीं होता है । ] ॥ ४२ ॥

'तत्र' इसकी अनुवृत्ति होती है । कालविशेषवाची सप्तमीसमर्थ शब्दों से साधु, पुष्प्यत्, पच्यमान—इन अर्थों में यथाविहित प्रत्यय होते हैं । उदा०—हेमन्ते साधुः—इस अर्थ में—हैमनः प्राकारः । [ हेमन्त शब्द से "सर्वत्राण् च तलोपश्च" ( पा० सू० ४।३।२२ ) से अण् प्रत्यय तलोप, आदिवृद्धि करने पर—हैमनः प्राकारः । हेमन्त ऋतु में अच्छा लगने वाला या उपकारक प्राकार ] शैशिरम् अनुलेपनम् । [ शिशिरे साधु—इस अर्थ में अण् आदिवृद्धि, शिशिर में उपकारक उबटन ] वसन्ते पुष्प्यन्ति—वासन्त्यः कुन्दलताः । [ वसन्त में फूलने वाली कुन्दलतायें—इस अर्थ में वसन्त + अण्, आदिवृद्धि, ङीप्, बहुवचन का रूप है । ] ग्रैष्म्यः पाटलाः । [ ग्रीष्मे पुष्प्यन्ति—इस अर्थ में ऋतुवाची मानकर अण्, आदिवृद्धि, ङीप् करके प्रथमा बहुवचन का रूप है । पाटला=पाढर नामक वृक्ष या लता का नाम है ।

**१६१७. उप्ते च ॥ ४४ ॥ ( १४१९ )**

**'तत्र' इत्येव, 'कालात्' इति च। सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकादुप्ते यथाविहितं प्रत्ययो भवति। हेमन्ते उप्यन्ते हैमन्ता यवाः। ग्रैष्मा व्रीहयः। योगविभाग उत्तरार्थः॥**

**१६१८. आश्वयुज्या वुञ् ॥ ४५ ॥ ( १४२० )**

**आश्वयुजीशब्दाद् वुञ् प्रत्ययो भवति उप्तेऽर्थे। ठञोऽपवादः। आश्वयुज्यामुप्ता आश्वयुजका माषाः। अश्विनीभ्यां युक्ता पौर्णमासी आश्वयुजी। अश्विनीपर्यायोऽश्वयुक्शब्दः॥**

**१६१९. ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥ ( १४२१ )**

**ग्रीष्मवसन्तशब्दाभ्यामन्यतरस्यां वुञ् प्रत्ययो भवति उप्तेऽर्थे। ऋत्वणोऽपवादः। ग्रैष्मं सस्यम्, ग्रैष्मकम्। वासन्तकम्, वासन्तम्॥**

**न्यासः**

**उप्ते च॥ योगविभाग उत्तरार्थ इति।** उत्तरत्र वुञ् उप्त एव यथा स्यात्; साध्वादिषु मा भूत्॥ ४४॥

**आश्वयुज्या वुञ्॥ ठञोऽपवाद इति।** 'कालाट् ठञ्' इति प्राप्तस्य। ननु च कालाट् ठञ् विहितः। न चाश्वयुजीशब्दः कालवाची, ततः कुतष्ठञ्? इत्याशङ्क्य कालवाचित्वमाश्वयुजीशब्दस्य प्रतिपादयितुमाह— **अश्विनीभ्यां युक्तेत्यादि॥ ४५॥**

**पदमञ्जरी**

**उप्ते च॥** सूत्रे भूतकालस्याविवक्षां दर्शयति— **हेमन्ते उप्यन्ते इति। योगविभाग उत्तरार्थ इति।** उत्तरयोगयोरुक्त एव प्रत्ययो यथा स्यात्, साध्वादिषु मा भूत्॥ ४४॥

**आश्वयुज्या वुञ्॥** वुञो ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च, अश्वयुग्भ्यां युक्तेति पाठः, अश्वयुजोर्द्वित्वात् 'नमोऽश्विभ्यामश्वयुग्भ्याम्' ( तै० ब्रा० ३.१.११ ) इति दर्शनात्। **अश्विनीपर्याय** इति पाठः। 'तारा

**भावबोधिनी**

यहाँ गुलाब का वाचक नहीं हैं। इसी लिये स्त्रीलिङ्ग है। ] शरदि पच्यन्ते=शरद् ऋतु में पक कर तैयार होते हैं, इस अर्थ में—शारदाः शालयः। [ शरद्+अण्, आदिवृद्धि ] ग्रैष्माः यवाः [ ग्रीष्म + अण्, आदिवृद्धि। ग्रीष्म में पक कर तैयार होने वाले जौं। ]॥ ४३॥

'तत्र' इसकी और 'कालात्' इनकी अनुवृत्ति होती है। सप्तमी समर्थ कालवाची प्रातिपदिक से "उप्त=बोया जाता है"—इस अर्थ में यथाविहित प्रत्यय होते हैं। उदा०—हेमन्ते उप्यन्ते—हैमन्ताः यवाः [ हेमन्त में बोये जाने वाले जौं ] ग्रैष्माः व्रीहयः। [ ग्रीष्मे उप्यन्ते—इस अर्थ में ऋतुवाची मानकर अण् होता है। ] योग विभाग=अलग सूत्र बनाना उत्तर सूत्र में अनुवृत्ति के लिये है। [ अतः आगे केवल 'उप्त' की अनुवृत्ति होती है—साधु, पुष्यत् आदि की नहीं। ]॥ ४४॥

उप्त=बोया हुआ—इस अर्थ में 'आश्वयुजी' शब्द से वुञ् प्रत्यय होता है। यह 'कालाट्ठञ्' का अपवाद है। उदा०—आश्वयुज्याम् उप्ताः—इस अर्थ में आश्वयुजकाः माषाः। [ आश्वयुजी + वुञ्=वु=अक, ङाप् का लोप करने पर रूप बनता है। यह शब्द कालवाची कैसे है—इसका उपपादन करते हैं—] अश्विनी से युक्त पौर्णमासी—आश्वयुजी है—अश्विनी का पर्याय शब्द अश्वयुक् है। [ अतः अश्वयुक् भी नक्षत्रवाचक होने से तद्युक्त काल का वाचक हो जाता है। [ "दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी।" अमर० १।३।२१ ]॥ ४५॥

उप्त=बोया हुआ—इस अर्थ में ग्रीष्म और वसन्त शब्दों से विकल्प से वुञ् प्रत्यय होता है। यह ऋतुवाचक मानकर प्राप्त होने वाले अण् का अपवाद है। उदा०—ग्रैष्मं ग्रैष्मकं सस्यम्। [ ग्रीष्मे उप्तम्—इस अर्थ में वुञ् करने पर 'अक' आदेश और आदिवृद्धि—ग्रैष्मकम्। जब "सन्धिवेलाद्यृतु०" से अण् होता है तब—ग्रैष्मम्। **वासन्तकम्,**

**१६२०. देयमृणे ॥ ४७ ॥ ( १४२२ )**

**'तत्र' इत्येव, 'कालात्' इति च। सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद्देयमित्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यद् देयमृणं चेत्तद्भवति। मासे देयमृणं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्।**

**ऋण इति किम्? मासे देया भिक्षा॥**

**१६२१. कलाप्यश्वत्थयवबुसाद् वुन् ॥ ४८ ॥ ( १४२३ )**

**'कालात्' इत्येव। कलापि, अश्वत्थ, यवबुस – इत्येतेभ्यः कालवाचिभ्यः सप्तमीसमर्थेभ्यः 'देयमृणम्' इत्येतस्मिन्नर्थे वुन्प्रत्ययो भवति।**

**कलाप्यादयः शब्दाः साहचर्यात्काले वर्त्तन्ते। यस्मिन्काले मयूराः कलापिनो भवन्ति स कलापी। यस्मिन्नश्वत्थाः फलन्ति सोऽश्वत्थः। यस्मिन्यवबुसं सम्पद्यते स यवबुसशब्देनोच्यते।**

**कलापिनि काले देयमृणं कलापकम्। अश्वत्थकम्। यवबुसकम्॥**

**न्यासः**

**ग्रीष्मवसन्तादन्यतरस्याम्** ॥ ४६ ॥ **देयमृणे** ॥ ४७ ॥ **कलाप्यश्वत्थयवबुसाद् वुन्** ॥ कथं पुनः कलापादयः शब्दाः काले वर्तन्ते, यावता मयूरादिषु तेषां वृत्तिः प्रसिद्धेत्यत आह—**कलाप्यादयः शब्दा इत्यादि**। एतदेव विषयं स्पष्टीकरोति—**यस्मिन् काल इत्यादि**। अश्वत्थशब्दोऽत्र वृक्षविशेषे रूढः तेन सर्व एव कालः सम्बध्यत इति तद्द्वारेण कालविशेषो न संज्ञायते। तस्मादश्वत्थफलसहचारिणि कालेऽश्वत्थशब्दो वर्तत इति दर्शयितुमाह—**यस्मिन्नश्वत्थाः फलन्तीत्यादि**। अश्वत्थशब्दो यद्यपि वृक्षे वर्तते, तथापि फले वर्तत एव ॥ ४८ ॥

**पदमञ्जरी**

अश्वयुगश्विनी" इत्यमरसिंहः ( १.२ २२ )। **अश्वनीपर्याय** इति प्रसिद्धः पाठः, तत्राशुपूर्वादनेरौणादिक इन्प्रत्ययः, पृषोदरादित्वादादेर्ह्रस्वः ॥ ४५ ॥ ४६ ॥ ४७ ॥

**कलाप्यश्वत्थयवबुसाद् वुन्** ॥ मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तिर्न सम्भवति, तत्कथम् 'कालविशेषवाचिभ्यः' इत्युक्तम्? अत आह—**कलाप्यादयः शब्दा इति**। अश्वत्थेन वृक्षेण कालस्य सम्बन्धोऽव्यभिचारादविशेषणमिति 'फले लुक्' इति लुगन्तोऽश्वत्थशब्द इत्याह—**यस्मिन्नश्वत्थाः फलन्तीति**। अपकृष्टो यवो यवबुसं जात्यन्तरं वा यवादिवत्, यवानामेव वा बुसं यवबुसम् ॥ ४८ ॥

**भावबोधिनी**

वासन्तम्। [ वसन्ते उप्यते--इस अर्थ में वुञ् = वु = अक और पक्ष में अण् करने पर दो रूप होते हैं। गरमी में बोया जाने वाला धान्य। वसन्त में बोया गया धान्य। ] ॥ ४६ ॥

'तत्र' इसकी और 'कालात्' इसकी अनुवृत्ति होती है। सप्तमी समर्थ कालवाची प्रातिपदिक से 'देय' ( देने योग्य )—इस अर्थ में यथाविहित प्रत्यय होते हैं, यदि जो देय है वह ऋण हो तो। उदा०—मासे देयम् ऋणम्—मासिकम्, आर्धमासिकम् [ अर्धमासे देयम् ऋणम् ] सांवत्सरिकम् [ संवत्सरे देयम् ऋणम्। इन सभी से "कालाट्ठञ्" ४।३।१४ से ठञ्, आदिवृद्धि, ठ = इक आदेश करने पर रूप बनते हैं। ]

ऋण हो—इसका क्या फल है? मासे देया भिक्षा। [यहाँ ऋण अर्थ न होनेसे यह प्रत्यय नहीं होताहै।] ॥४७॥

'कालात्' इसकी अनुवृत्ति होती है। कलापिन्, अश्वत्थ और यवबुस—इन कालवाचक सप्तमीसमर्थ शब्दों से 'देय ऋण = देने योग्य ऋण' इस अर्थ में वुन् प्रत्यय होता है। [ कलापी आदि शब्दों की कालवाचकता का उपपादन करते हैं—] कलापी आदि शब्द साहचर्यवश काल अर्थ में वर्तमान हैं। जिस काल में मयूर कलापी ( कलाप = मोर का पंख उससे युक्त ) होते हैं वह काल कलापी है। जिस काल में अश्वत्थ ( पीपल ) फलयुक्त होता है वह काल अश्वत्थ है। जब यवों = जौं का भूसा तैयार होता है वह काल यवबुस शब्द से कहा जाता है। [ इस प्रकार ये सभी शब्द कालवाची हो जाते हैं। ]

**१६२२. ग्रीष्मावरसमाद् वुञ् ॥ ४९ ॥ ( १४२४ )**

**ग्रीष्मावरसमशब्दाभ्यां वुञ् प्रत्ययो भवति 'देयमृणम्' इत्येतस्मिन्नर्थे । अणठञोरपवादः । ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् ।**

**प्रत्ययान्तरकरणं वृद्धयर्थम् । समाशब्दो वर्षपर्यायः ।**

**१६२३. संवत्सराग्रहायणीभ्यां ठञ् च ॥ ५० ॥ ( १४२५ )**

**संवत्सराग्रहायणीशब्दाभ्यां ठञ् प्रत्ययो भवति, चकाराद् वुञ्च 'देयमृणम्' इत्येतस्मिन्नर्थे । संवत्सरे देयमृणं सांवत्सरिकम्, सांवत्सरकम् । आग्रहायणिकम्, आग्रहायणकम् ।**

**वेति वक्तव्ये ठञ्ग्रहणं सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोः' इति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति ।**

**न्यासः**

**ग्रीष्मावरसमाद् वुञ् ॥ अण्ठञोरपवाद इति ।** ग्रीष्मशब्दादृत्वणोरपवादः अवरसमाशब्दात् कलाट् ठञः । अवरा चासौ समा चेत्यवरसमा ॥ ४९ ॥

**संवत्सराग्रहायणीभ्यां ठञ् च ॥** कालाट् ठञि प्राप्ते वचनम् । तेन ठञ् न वक्तव्य इति । वुञि विकल्पिते विनापि ठञ्ग्रहणेन पक्षे यथाप्राप्तं ठञेव भवतीत्यभिप्रायः । **ठञ्ग्रहणमित्यादि ।** तत्र यद्यत्र ठञ्ग्रहणं न क्रियेत 'सन्धिवेला' इत्यादिषु 'संवत्सरात्फलपर्वणः' इति पाठात् सन्धिवेलाद्यणष्ठञपवादत्वादण्त्वेन काले विवक्षिते वुञा मुक्तेऽणेव स्यात् । ठञ्ग्रहणादणमपि बाधित्वाट्ठञेव भवति ॥ ५० ॥

**पदमञ्जरी**

**ग्रीष्मावरसमाद्वुञ् ॥ अवरसममिति** विशेषणसमासः । न चावरशब्दो दिग्वाची, येन 'दिक्सङ्ख्ये संज्ञायाम्' इति नियमात्समासो न स्यात् । **आवरसमकमिति ।** आगामिनां संवत्सराणामाद्यवत्सरे देयमित्यर्थः । अपर आह—अतीते वत्सरे देयं यदद्यापि न दत्तं तदावरसमकमिति ॥ ४९ ॥

**संवत्सराग्रहायणीभ्यां ठञ्च ॥ वेति वक्तव्ये इति ।** वुञि विकल्पिते पक्षे यथाप्राप्तष्ठञेव भविष्यतीति मन्यते । **ठञ्ग्रहणमित्यादि ।** असति ठञ्ग्रहणे सन्धिवेलादिषु 'संवत्सरात्फलपर्वणोः' ( ग० सू० १०४ ) इति पाठात्फले ऋणत्वेन विवक्षिते वुञा मुक्तेऽणेव स्यात्, ठञ्ग्रहणात्तु ठञेव भवति ॥ ५० ॥

**भावबोधिनी**

उदा०—कलापिनि देयम् ऋणम् [ जब मयूर पंखों से युक्त होता है उस समय देने योग्य ऋण ]—इस अर्थ में—कलापकम् । [ कलापि + वुन् = वु अक, इलोप । ] अश्वत्थकम् [ जब पीपल फलयुक्त होता है उस समय देने योग्य ऋण ] यवबुसकम् । [ जब जौं का भूसा तैयार हो जाता है तब देने योग्य ऋण । ] ॥ ४८ ॥

ग्रीष्म तथा अवर—इन शब्दों से 'देयम् ऋण' इस अर्थ में वुञ् प्रत्यय होता है । यह [ ऋतुवाची मानकर प्राप्त होने वाले ] अण् का [ और कालवाची मानकर प्राप्त होने वाले ] ठञ् का अपवाद है । उदा०—ग्रीष्मे देयम् ऋणम्—ग्रैष्मकम्, अवरसमायां देयम् ऋणम्—आवरसमकम् [ आगामी वर्षों के आद्य वर्ष में देने योग्य ऋण । कुछ यह कहते हैं—बीते वर्ष में जो देय था वह अभी तक नहीं दिया गया उसे 'आवरसमकम् ऋणम्' कहा जाता है । वुञ् = वु = अक, आदिवृद्धि करने पर रूप बनते हैं । ]

वुन् न करके वुञ् यह दूसरा प्रत्यय [ञित् मानकर] वृद्धि करने के लिए है । समा—यह वर्ष का पर्याय है ॥४९॥

संवत्सर और आग्रहायणी—इन शब्दों से ठञ् प्रत्यय होता है और 'च' के कारण वुञ् भी होता है । यदि 'देयम् ऋणम्', इस अर्थ की प्रतीति रहे । उदा०—संवत्सरे देयम् ऋणम्—सांवत्सरिकम् । [ संवत्सर + ठञ् = इक आदिवृद्धि वर्ष में देने योग्य कर्जा । ] सांवत्सरकम् । [ जब वुञ् होता है तब संवत्सर + वुञ् = वु – अक,

**१६२४. व्याहरति मृगः ॥ ५१ ॥ ( १४२६ )**

**'तत्र' इत्येव, 'कालात्' इति च। कालवाचिनः सप्तमीसमर्थात् प्रातिपदिकाद् 'व्याहरति मृगः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। निशायां व्याहरति मृगः नैशः, नैशिकः। प्रादोषः, प्रादोषिकः।**

**मृग इति किम्? निशायां व्याहरत्युलूकः।**

**१६२५. तदस्य सोढम् ॥ ५२ ॥ ( १४२७ )**

**'कालात्' इत्येव। तदिति प्रथमासमर्थात्कालवाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थम् 'सोढं' चेत्तद्भवति। सोढम्=जितम्, अभ्यस्तमित्यर्थः। निशासहचरितमध्ययनं निशा, तत्सोढमस्य छात्त्रस्य नैशः, नैशिकः। प्रादोषः, प्रादोषिकः।**

**न्यासः**

**व्याहरति मृगः ॥ नैशिकः, नैशः। प्रादोषिकः, प्रादोष इति।** निशाप्रदोषाभ्यां ठञ्। तेन मुक्ते पक्षे ऋत्वणेव भवति ॥ ५१ ॥

**तदस्य सोढम् ॥** कालादिति वर्तते, न च कालो जीयते, तस्मान्निशासहचरितमिहाध्ययनं गौण्या वृत्त्या निशेत्येवमादिभिरभिधीयत इति विज्ञायते। अत एवाह--**निशासहचरितमध्ययनं निशेति** ॥ ५२ ॥

**पदमञ्जरी**

**व्याहरति मृगः ॥ व्याहरति** =शब्दायते ॥ ५१ ॥

**तदस्य सोढम् ॥ अस्येति।** नेयं सोढापेक्षया कर्त्तरि षष्ठी, 'न लोकाव्यय' इति प्रतिषेधात्, किं तर्हि? कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी। **निशासहचरितमध्ययनमिति।** कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ॥ ५२ ॥

**भावबोधिनी**

आदिवृद्धि करने पर यह रूप होता है। ] आग्रहायणिकम् आग्रहायणकम्। [ अग्रहायणे देयम् ऋणम्—इस अर्थ में ठञ् और वुञ् करने पर रूप बनते हैं। ]

'वा' यह कहना चाहिए था किन्तु 'ठञ्' का ग्रहण किया गया यह 'सन्धिवेलादि' गण में 'संवत्सर से फल और पर्व अर्थों में' यह पढ़ा गया है, यहाँ फल के ऋणत्व रूप से विवक्षित रहने पर अण् का बाध करके ठञ् ही जिस प्रकार हो सके [ अण् न हो सके ]—इसके लिए ठञ् का ग्रहण है ॥ ५० ॥

'तत्र' इसकी और 'कालात्' इसकी अनुवृत्ति होती है। कालवाचक सप्तमी समर्थ प्रातिपदिक से 'व्याहरति मृगः' ( मृग शब्द करता है )—इस विषय में यथाविहित प्रत्यय होते हैं। उदा०—निशायां व्याहरति मृगः--नैशः, नैशिकः। [ रात में आवाज करने वाला मृग। ] [ यहाँ "निशाप्रदोषाभ्यां च" ४।३।१४ से विकल्प से ठञ् होता है पक्ष में अण् होता है। ठ=इक, आदिवृद्धि करने पर दोनों रूप बनते हैं। ] प्रादोषः, प्रादोषिकः। [ प्रदोष व्याहरति मृगः—इस अर्थ में पूर्ववत् ठञ् और अण् करने पर दो रूप होते हैं। ]

मृग—इसका क्या फल है? निशायां व्याहरति उलूकः। [ रात में उल्लू बोलता है। यहाँ पर ये प्रत्यय नहीं होते हैं। 'मृग' शब्द हिरणमात्र का वाचक न मानकर जंगली पशुमात्र का वाचक मानना चाहिए। ]॥ ५१ ॥

"कालात्' इसकी अनुवृत्ति होती है। 'तत्' इस प्रथमासमर्थ कालवाची प्रातिपदिक से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं यदि जो प्रथमासमर्थ है वह 'सोढ' हो तो। सोढ=जित, अभ्यस्त—यह अर्थ है। उदा०—निशा का सहचरित अध्ययन=निशा है, वह सोढ है इस छात्र का—नैशः, नैशिकः, इसी प्रकार प्रदोष-सहचरित अध्यध्यन=प्रदोष है, वह सोढ है इस छात्र का—प्रादोषः, प्रदोषकः। [ निशा और प्रदोष के साथ-साथ जो अध्ययन हुआ अर्थात् रात्रिकालिक और प्रदोषकालिक अध्ययन भी 'निशा' और 'प्रदोष' कहा जाता है उस अध्ययन

१६२६. तत्र भवः ॥ ५३ ॥ ( १४२८ )

'कालात्' इति निवृत्तम् । तत्रेति सप्तमीसमर्थाद् ङ्याप्प्रातिपदिकाद् 'भवः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सत्ता भवत्यर्थो गृह्यते, न जन्म; 'तत्र जातः' ( ४· ३· २५ ) इति गतार्थत्वात् । स्रुघ्ने भवः स्रौघ्नः । माथुरः । राष्ट्रियः । पुनस्तत्रग्रहणम् 'तदस्य' इति निवृत्त्यर्थम् ॥

१६२७. दिगादिभ्यो यत् ॥ ५४ ॥ ( १४२९ )

'दिश्' इत्येवमादिभ्यः प्रातिपदिकेभ्यो यत्प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणश्छस्य चापवादः । दिशि भवं दिश्यम् । वर्ग्यम् ।

मुख-जघनशब्दयोरशरीरावयवार्थः पाठः—सेनामुख्यम्, सेनाजघन्यमिति[1] ।

दिश् । वर्ग । पूग । गण । पक्ष । धाय्या । मित्र । मेधा । अन्तर । पथिन् । रहस् । अलीक । उखा । साक्षिन् । आदि । अन्त । मुख । जघन । मेघ । यूथ । ❀ उदकात्संज्ञायाम्[2] ❀ ( ग० सू० १०५ ) ॥ न्याय । वंश । अनुवंश । विश । काल । अप् । आकाश । दिगादिः ।

न्यासः

तत्र भवः ॥ ५३ ॥ दिगादिभ्यो यत् ॥ अणश्छस्य चापवाद इति । यद् दिगादिषु वृद्धं वाप्यादि ततश्छस्यापवादः शेषेभ्यस्त्वणः प्राग्दीव्यतीयस्य ।

अथ मुखजघनयोश्च किमर्थः पाठो दिगादिषु, यवता शरीरावयवात् ताभ्यामुत्तरसूत्रेणैव भविष्यति ? इत्याह—मुखजघनयोरिति । सेनावयववाचिनौ हि यौ मुखजघनशब्दौ तौ शरीरावयववाचिनो न भवतः । पाणिपादाद्यवयवस्वभावं हि शरीरम, न चैवमात्मिका सेना; किं तर्हि ? रथादिसमुदायात्मिका ।

उदकात्संज्ञायामिति । उदकशब्दात् संज्ञायां गम्यमानायां यद्भवति—उदक्या स्त्री, रजस्वलोच्यते । न

पदमञ्जरी

तत्र भवः ॥ कालादिति निवृत्तमिति । 'तत्र जातः' इति प्रकृतं तत्रग्रहणं कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतम् 'सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहि' इत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितम् ? नेत्याह, शक्यं हि तदन्यत्रापि पठितुम् ॥ ५३ ॥

दिगादिभ्यो यत् ॥ सेनामुख्यमिति । यदन्तस्य सेनाशब्देन षष्ठीसमासः, न तु सेनामुखशब्दात्प्रत्ययः; तदन्तविध्यभावात् ॥ ५४ ॥

भावबोधिनी

को जीतनेवाला, कर लेने वाला छात्र—नैशः और नैशिकः, प्रादोषः और प्रादोषिकः कहा जाता है । "निशाप्रदोषाभ्यां च ४।३।१४ से अण् और ठञ् प्रत्यय होते है ] ॥ ५२ ॥

'कालात्' इसकी निवृत्ति हो जाती है । 'तत्र' इस सप्तमी समर्थ ङ्यन्त, आबन्त और प्रातिपदिक से 'भवः' इस अर्थ में यथाविहित प्रत्यय होते हैं । यहाँ 'भव' का अर्थ 'सत्ता' लिया जाता है जन्म = उत्पत्ति नहीं; क्योंकि यह तो "तत्र जातः" इसी सूत्र से गतार्थ है । उदा०—स्रुघ्ने भवः—स्रौघ्नः । [ स्रुघ्न + अण्, आदिवृद्धि, भसंज्ञा, अलोप । ] माथुरः । [ मथुरायां भवः ] राष्ट्रियः । [ राष्ट्रे भवः । 'तत्र' इसकी अनुवृत्ति सम्भव रहने पर भी पुनः 'तत्र' इसका ग्रहण 'तदस्य' इसकी अनुवृत्ति को रोकने के लिए है ॥ ५३ ॥

'दिश् आदि प्रातिपदिकों से 'तत्र भवः' ( वहाँ होने वाला ) इस अर्थ में 'यत्' प्रत्यय होता है । यह [ औत्सर्गिक ] अण् का और [ वृद्धसंज्ञकों से प्राप्त ] 'छ' का अपवाद है । उदा०—दिशि भवम्—दिश्यम् । [ दिश् + यत् दिशा में होने वाला ] वर्ग्यम् । [ वर्गे भवम्—इस अर्थ में यत्, भसंज्ञा, अलोप, वर्ग में होने वाला । ] मुख तथा जघन का पाठ शरीरावयव से भिन्न से प्रत्यय करने के लिए है —सेनामुख्यम्, सेनाजघन्यम् । [ यहाँ मुख और जघन शब्द से पहले 'यत्' करके 'मुख्य' और 'जघन्य' का षष्ठीसमास 'सेना' के साथ करना चाहिए, क्योंकि तदन्तविधि नहीं होती है । ]

## १६२८. शरीरावयवाच्च ॥ ५५ ॥ ( १४३० )

शरीरम् = प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद् यत्प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । दन्तेषु भवं दन्त्यम् । कर्ण्यम् । ओष्ठ्यम् ।

## १६२९. दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥ ( १४३३ )

दृत्यादिभ्यः प्रातिपदिकेभ्यो ढञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । दृतौ भवं दार्तेयम् । कौक्षेयम् । कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयमजरं विषम् ।

### न्यासः

चात्र प्रकृत्यर्थः प्रत्ययार्थो वा विद्यते । सा च तयोरविद्यमानता संज्ञाग्रहणेन विज्ञायते । संज्ञायामन्यत्र—औदको मत्स्य इति, अत्राणेव भवति ॥ ५४ ॥

**शरीरावयवाच्च ॥ अणोऽपवाद इति ।** नाप्राप्ते तस्मिन्नस्यारम्भात् । यस्तु पादादिर्वृद्धस्ततः परत्वाद् यत् छं बाधते ॥ ५५ ॥

**दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥** दृतिकुक्षिभ्यां शरीरावयवत्वाद् यति प्राप्ते; कुक्षिशब्दो धूमादिष्वपि पठ्यते, तस्माद् 'धूमादिभ्यश्च' इति वुञि प्राप्ते; शेषेभ्यस्त्वणि ढञ् विधीयते ।

### पदमञ्जरी

**शरीरावयवाच्च ॥ शरीरं प्राणिकाय इति ।** 'व्याकरणस्य शरीरम्' इत्यादिकस्तु प्रयोगो गौणः । **अणोऽपवाद इति ।** वृद्धात्तु छं परत्वाद्बाधते, पादे भवं पद्यम्, 'पद्यत्यतदर्थे' इति पद्भावः । नासिकायां भवं नस्यम्, 'नस् नासिकाया यत्तस्क्षुद्रेषु' ( वा० ६६९ ) इति नस्भावः । कथम् 'वेगो जङ्घोरस्यः' इति ? कथं च न स्यात्, न शरीरावयवसमुदायः शरीरावयवग्रहणेन गृह्यते । न च तदन्तविधिरस्ति ? निरङ्कुशाः कवयः ॥ ५५ ॥

**दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥** दृतिश्चर्मविकारः, शरीरावयवश्च । कुक्षिशब्दो धूमादिः, वस्तिर्नाभेरधः शरीरावयवः । **आहेयम्** विषादि ।

### भावबोधिनी

इस गण में पठित शब्द—दिश् ( दिशा ) । वर्ग । पूग ( सुपाड़ी का समूह ) । गण ( समूह ) । पक्ष । धाय्या ( अग्नि में समिधा जलाते समय पठने योग्य ऋचा ) । मित्र ( साथी, सूर्य ) । मेधा । अन्तर ( व्यवधान ) । पथिन् ( मार्ग ) । रहस् ( एकान्त ) । अलीक ( झूठ ) । उखा ( ओखली ) । साक्षिन् ( गवाह ) । आदि । अन्त । मुख । जघन । यूथ ( समूह ) ।* उदक से संज्ञा अर्थ में यत् कहना चाहिये ।* न्याय । वंश । अनुवंश । विश । काल । अप् ( जल ) । आकाश । ये दिगादि हैं । [ विश इसके स्थान पर 'वेश' यह भी पाठ है । उसका अर्थ 'वेश्यालय' है । अकारान्त 'विश' का अर्थ सन्दिग्ध है । अतः 'विश्' यह अथवा 'वेश' यह पाठ मानना उचित है । ] ॥ ५४ ॥

शरीर = प्राणी का शरीर । शरीर के अवयव के वाचक प्रातिपदिक से 'तत्र भवः' ( वहाँ होने वाला ) इस अर्थ में यत् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—दन्तेषु भवम्—दन्त्यम् । [ दन्त + यत्, भसंज्ञा, अलोप ] कर्ण्यम् । [ कर्णे भवम् कर्ण + यत् ] ओष्ठ्यम् । [ ओष्ठे भवम्—इस अर्थ में यत् ] ॥ ५५ ॥

दृति, कुक्षि, कलशि, वस्ति, अस्ति, अहि—इन प्रतिपादिकों से 'तत्र भवः' ( वहाँ होने वाला ) इस विषय में ढञ् प्रत्यय होता है । उदा०—दृतौ भवम्—दार्तेयम् । [ दृति + ढञ् आदिवृद्धि, रपर, ढ = एय भसंज्ञा, इलोप—दार्तेयम् । चमड़े की मसक में होने वाला ] कौक्षेयम् ( कुक्षौ भवम् ) । कालशेयम् ( कलशौ भवम् । पिठवन नामक वृक्षविशेष में होने वाला ) वास्तेयम् ( नाभि के नीचे भाग में होने वाला ) । आस्तेयम् ( धन में होने वाला ) । आहेयम् ( अहि में होने वाला ) अजर विष है ।

**अस्तिशब्दः प्रातिपदिकम्, न तिङन्तः ।**

**१६३०. ग्रीवाभ्योऽण् च ॥ ५७ ॥ ( १४३४ )**

**ग्रीवाशब्दादण्प्रत्ययो भवति, चकाराड्ढञ्च, 'तत्र भवः' इत्येतस्मिन्विषये, शरीरावयवाद्यतोऽपवादः । ग्रीवासु भवं ग्रैवम्, ग्रैवेयम् ।**

**ग्रीवाशब्दो धमनीवचनः, तासां बहुत्वाद्बहुवचनं कृतम् ॥**

**१६३१. गम्भीराञ्ञ्यः ॥ ५८ ॥ ( १४३५ )**

**गम्भीरशब्दाद् ञ्यः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । गम्भीरे भवं गाम्भीर्यम् ।**

**❀ बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम् ❀ ( म० भा० ४. ३. ६० श्लो० वा० १० ) । बाह्यम् । दैव्यम् । पाञ्चजन्यम्[1] ॥**

**न्यासः**

अस्तिवदस्तिङन्तो मा विज्ञायीत्यत आह—**अस्तिशब्द इत्यादि** । 'विभक्तिस्वरप्रतिरूपकाश्चेति निपाता भवन्ति' इपि निपातसंज्ञकं तिङन्तसदृशं प्रातिपदिकमेतत्, न तिङन्तः । एतच्च तिङन्तेन समानार्थम्' यथा—अस्तिक्षीरा ब्राह्मणीति । भिन्नार्थञ्च, यथा धने वर्तते, यथा—अस्तिमानिति । धनवानिति गम्यते । तदिह विशेषस्यानभिधानादुभयस्यापि ग्रहणम् ॥ ५६ ॥

**ग्रीवाभ्योऽण् च** ॥ बहुवचननिर्देशाद् बहुवचनान्तात् प्रत्ययेन भवितव्यम्, अन्यथा ह्येकवचनेनैव निर्देशं कुर्यादिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**ग्रीवाशब्द इत्यादि** । अर्थविशेषाद् बहुवचननिर्देशः, कृतः, न तु बहुवचनान्तादेव यथा स्यादिति दर्शयति ॥ ५७ ॥

**गम्भीराञ्ञ्यः** ॥ **बहिर्देवेत्यादि** । बहिर्देवपञ्चजनेभ्यश्च ञ्यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—चकारोऽत्र वर्तते, तेन बहिरादिभ्योऽपि ञ्यो भविष्यतीति ॥ ५८ ॥

**पदमञ्जरी**

**अस्तिशब्दः प्रातिपदिकमिति** । विभक्तिप्रतिरूपं निपातसंज्ञकम्, तच्च तिङन्तेन समानार्थम्—अस्तिक्षीरा गौरिति, धनवचनं च अस्तिमानिति ॥ ५६ ॥

**ग्रीवाभ्योऽण्च ॥ धमनीवचन इति** । धमनीसङ्घातवचन इत्यर्थः । स च यदोद्भूतावयवभेदे वर्त्तते तदा बहुवचनम्, यदा तु तिरोहितावयवभेदे सङ्घाते वर्त्तते तदैकवचनान्तः प्रयोगः ॥ ५७ ॥

**गम्भीराञ्ञ्यः** ॥ **बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यमिति** । 'प्राग्दीव्यतः' इत्यत्रोक्तम्—'देवस्य यञञौ,

**भावबोधिनी**

'अस्ति' यह प्रातिपदिक शब्द है, तिङन्त नहीं है । [ यह विभक्तिप्रतिरूपक निपात है और तिङन्त का समानार्थक है, अतः—अस्तिक्षीरा आदि शब्द बनते हैं । साथ ही यह 'धन' का वाचक भी है, अतः प्रातिपदिक होने में बाधा नहीं है । ] ॥ ५६ ॥

'तत्र भवः' ( वहाँ होने वाला ) इस विषय में 'ग्रीवा' शब्द से अण् प्रत्यय और 'च' के बल से ढञ् प्रत्यय होता है । शरीरावयव मानकर प्राप्त होने वाले यत् का अपवाद है । उदा० —ग्रीवासु भवम्—ग्रैवम्, ग्रैवेयकम् । [ ग्रीवा + अण्, ग्रीवा + ढञ् = ढ = एय, आदिवृद्धि, भसंज्ञा आ का लोप ] ।

यहाँ ग्रीवा शब्द धमनी का वाचक है और वे बहुत होती हैं, अतः बहुवचन में विग्रह लिखा गया है ॥ ५७ ॥

'तत्र भवः' ( वहाँ होने वाला ) इस विषय में 'गम्भीर' शब्द से ञ्य प्रत्यय होता है । यह अण् का अपवाद है । उदा०—गम्भीरे भवम्—गाम्भीर्यम् [ गम्भीर + ञ्य = य, आदिवृद्धि । ] ❀ बहिः, देव और पञ्चजन—इन

---

१. '❀ चतुर्मासाद्यज्ञे ञ्यो वक्तव्यः ❀ । चातुर्मास्यानि व्रतानि । चातुर्मास्यो यज्ञः । चातुर्मासोऽन्यत्र' इत्यधिकं बहुषु पुस्तकेषु ।

## १६३२. अव्ययीभावाच्च ॥ ५९ ॥ ( १४३६ )

**अव्ययीभावसंज्ञकात्प्रातिपदिकाच्च ञ्यः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । न च सर्वस्मादव्ययीभावाद्भवति, किं तर्हि ? परिमुखादेः । परिमुखादीनां च गणपाठस्यैतदेव प्रयोजनम्—तेषां विशेषणमव्ययीभावग्रहणम् । परिमुखं भवं पारिमुख्यम् । पारिहनव्यम् । परिमुखादेरन्यत्र न भवति—औपकूलम् ।**

**परिमुख । परिहनु । पर्योष्ठ । पर्युलूखल । [ औपमूल ] परिसीर । अनुसीर । उपसीर । उपस्थल ।**

**न्यासः**

**अव्ययीभावाच्च ॥ किं तर्हीत्यादि ।** कथं पुनरव्ययीभावादिति सामान्येनोच्यमानः प्रत्ययः परिमुखादेरेव ? इत्यत आह—**परिमुखादीनाञ्चेत्यादि ।** चशब्दो हेतौ । न ह्यन्यत् कार्यमस्ति परिमुखादिगणपाठस्य । तत्र यद्यप्येतदपि न स्याद्, विध्यर्थमेव तस्य स्यात्, तस्मात् परिमुखादेरेव भवति, न सर्वस्मादव्ययीभावात् । यद्येवम्, परिमुखादेरित्येवं वक्तव्यमित्याह—**तेषामित्यादि ।** यदि हि परिमुखादेरित्युच्यते, ततोऽसत्यव्ययीभावग्रहणे तत्पुरुषेभ्योऽपि परिमुखादिभ्यः प्रत्ययः स्यात्, तस्मिंस्तु सति न भवति—परिगतं मुखं परिमुखमिति प्रादिसमासः, तत्र भवः पारिमुखः; अणेव भवति । अपि च—उत्तरार्थमव्ययीभावग्रहणमवश्यमेव कर्तव्यम्—'अन्तःपूर्वपदाट्ठञ्' । 'ग्रामात्पर्यनुपूर्वात्' इत्यव्ययीभावाद् यथा स्यात् । **पारिहनव्यमिति ।** 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः । **औपकूलमिति ।** 'अव्ययं विभक्ति' इत्यादिनाव्ययीभावः । एष च परिमुखादि न पठ्यत इत्यणेव भवति । अत्र परिमुखमिति कथमव्ययीभावः, यावता अपपरिबहिरञ्चवः पञ्चम्या समस्यन्ते, पञ्चमी च परिणा कर्मप्रवचनीयेन योगे भवति, कर्मप्रवचनीयसंज्ञा तु 'अपपरी वर्जने' इत्यनेन; न च परिमुखे वर्जनं गम्यते, किं तर्हि ? सर्वतोभावः ? एवं तर्हि 'अव्ययम्' इति योगविभागादव्ययीभावो भविष्यति ।

**पदमञ्जरी**

बहिषष्टिलोपश्च' इति । तच्चावश्यं वक्तव्यम्—अर्थान्तरेष्वपि यथा स्यादिति । तस्यैव प्रपञ्चार्थम्, इह तु बहिर्देवयोर्ग्रहणम् ॥ ५८ ॥

**अव्ययीभावाच्च ॥ किं तर्हि परिमुखादेरिति ।** कथं पुनः सामान्योक्तावयं विशेषो लभ्यत इत्याह—**परिमुखादीनां चेति ।** चशब्दो हेतौ । दिगादेरनन्तरं परिमुखादिगणः पठ्यते, तस्य नान्यत्प्रयोजनं सम्भवति अव्ययीभावग्रहणस्य, परिमुखादिविशेषणतयाऽन्वयसम्भवात्, तस्मात्परिमुखादेरेव भविष्यति, न सर्वस्मादव्ययीभावात् । यद्येवम्, परिमुखादेरित्येव वक्तव्यमत आह—**तेषामेवेति ।** 'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यप्रत्ययः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवति । उत्तरार्थं चावश्यमव्ययीभावग्रहणं कर्त्तव्यम्, तत्र ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततः 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । अथ सर्वतो भावः,

**भावबोधिनी**

शब्दों से भी ञ्य कहना चाहिये । ❀ उदा०—बाह्यम् [ बहिर्भवम्—इस अर्थ में बहिष् + ञ्य = य आदिवृद्धि, "बहिषष्टिलोपश्च' इससे टि = इष् का लोप कर देने पर बाह्यम् । ] दैव्यम् [ देवे भवम् ] । [ पञ्चजने भवम्—] पाञ्चजन्यम् [ यह अर्जुन के शंख का नाम है । ] ॥ ५८ ॥

'तत्र भवः' ( वहाँ होने वाला ) इस विषय में अव्ययीभाव—संज्ञक प्रातिपदिक से ञ्य प्रत्यय होता है । यह अण् का अपवाद है । यह सभी अव्ययीभावों से नहीं होता है, तो फिर ? 'परिमुख' आदि से । और परिमुख आदि के गणपाठ का यह प्रयोजन है—उनके विशेषण अव्ययीभाव का ग्रहण है । उदा०—परिमुखं भवम्—पारिमुख्यम् । परिहनुभवम्—पारिहनव्यम् । [ परिहनु + ञ्य = य, आदिवृद्धि, उ का गुण अव् आदेश—पारिहन् अव् य ] परिमुखादि से भिन्न अव्ययीभाव से नहीं होता है—औपकूलम् । [ उपकुल + अण् ही होता है । ]

इस गण में पठित शब्द—परिमुख । परिहनु । पर्योष्ठ । पर्यूलूखल । परिसीर । अनुसीर । उपसीर । उपस्थल ।

**उपकलाप । अनुपथ । अनुखड्ग । अनुतिल । अनुशीत । अनुयव । अनुमाष । अनुयूप । अनुवंश[1] ॥**

## १६३३. अन्तःपूर्वपदाट्ठञ् ॥ ६० ॥ ( १४३७ )

**'अव्ययीभावात्' इत्येव । अन्तःशब्दो विभक्त्यर्थे समस्यते, तत्पूर्वपदादव्ययीभावाट्ठञ् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । आन्तर्वेश्मिकम् । आन्तर्गेहिकम्[2] ।**

**❀ समानशब्दाट्ठञ् वक्तव्यः ❀ ( म० भा० ४.३.६० वा० १ ) । समाने भवं सामानिकम् ।**

**❀ तदादेश्च ❀ ( वा० १ ) । सामानग्रामिकम् । सामानदेशिकम् ।**

**❀ अध्यात्मादिभ्यश्च ❀ ( वा० १ ) । आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम्[3] । अध्यात्मादिराकृतिगणः ।**

### न्यासः

अन्ये तु येऽत्र परिहनुप्रभृतयोऽव्ययीभावाः, ते 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेनैव भवन्ति । अत्र येष्वपि वर्जनं न गम्यते, ततस्तेष्वपि 'अव्ययम्' इति योगविभागेनैव । ये तूपसीरादय उपपूर्वाः, ते सामीप्ये 'अव्ययम्' इत्यादिना । **अनुगङ्गमिति** । 'यस्य चायामः' इत्यव्ययीभावः । अन्ये तु येऽनुसीरादयोऽनुपूर्वास्ते पश्चादर्थेऽव्ययमित्यादिना ॥ ५९ ॥

**अन्तःपूर्वपदाट्ठञ् ॥ अन्तःशब्दो विभक्त्यर्थे समस्यत इति** । 'अव्ययं विभक्ति' इत्यादिना । विभक्त्यर्थस्त्वधिकरणम्, अन्तःशब्दस्याधिकरणप्रधानत्वात् ।

**समानशब्दाट्ठञ्वक्तव्य इति** । वक्तव्यशब्दो व्याख्येये । तत्रेदं व्याख्यानम्—इहान्तःपूर्वादित्येवं सिद्धे यदधिकं पदग्रहणं तदधिकमिह कार्यं भवतीत्येवमर्थं क्रियते, तेन समानशब्दादपि ठञ् भवतीति । एतेन शब्दान्तरादेव ।

### पदमञ्जरी

ततोऽस्मादेव निपातनादव्ययीभावः उपपूर्वेषु सामीप्येऽनुपूर्वेषु 'अनुर्यत्समया' 'यस्य चायामः' 'पश्चादर्थे यदव्ययम्' इति च यथाभिधानं समासः ॥ ५९ ॥

**अन्तःपूर्वपदाट्ठञ् ॥ आध्यात्मिकमिति** । 'अनश्च' इति टच् समासन्तः । **आधिविदैकम्, आधिभौतिकमिति** ।

### भावबोधिनी

उपकलाप । अनुपथ । अनुखङ्ग । अनुतिल । अनुशीत । अनुवशीत । अनुमाष । अनुयव । अनुयूप । अनुवंश ।

**विमर्श**—प्रकाशित अधिकांश संस्करणों में प्रस्तुत गण के शब्द भ्रामक हैं । "पर्यूलु" । औपमूल । खल ।" ऐसा पाठ मिलता है, जो ठीक नहीं है, क्योंकि इसमें अव्ययीभाव समास वाले शब्द ही पठित हैं । अतः मैं डा० कपिलदेव द्विवेदी के पाठ का समर्थन करते हुए ऐसा पाठ ही शुद्ध मानता हूँ—"पर्युंलूखल ।" प्रकाशित उपर्युक्त तीन शब्द नहीं हैं । दो मिलाकर एक अव्ययीभाव है और मध्यवर्ती—'औपमूल' प्रमादपठित है । इसी प्रकार 'अनुखङ्ग' के स्थान पर 'अनुगङ्ग' यह भी कुछ उचित और न्याससंमत प्रतीत होता है ॥ ५९ ॥

'अव्ययीभावात्' इसकी अनुवृत्ति होती है । 'अन्तः' शब्द [ सप्तमी ] विभक्ति के अर्थ में विद्यमान है । अन्तः शब्द जिसके पूर्व में है, ऐसे अव्ययीभाव से ठञ् प्रत्यय 'तत्र भवः ( वहाँ होना ) इस विषय में होता है । यह अण् का अपवाद है । उदा०—आन्तर्वेश्मिकम्, आन्तर्गेहिकम् । [ अन्तर्वेश्म + ठञ्, आदिवृद्धि, ठ = इक आदि । वेश्मनि इस सप्तमी-विभक्त्यर्थ में 'अन्तः' के साथ अव्ययीभाव है । अतः अन्तर्वेश्म = घर के भीतर होने वाला । अन्तर्गेह + ठञ् शेष पूर्ववत् । अर्थ भी वहीहै—घर में होने वाला । ]

❀ समान शब्द से ठञ् कहना चाहिये । ❀ उदा०—समाने भवम् = सामानिकम् । [ समान में होने वाला । ]

---

१. 'अनुखड्ग'—इति पुस्तकान्तरेऽधिकः ।

२. 'आन्तरगारिकम्'—इत्यधिकं पुस्तकान्तरे । ३. 'अनुशतिकादीनां चेत्युभयपदवृद्धिः' इत्यधिकं कुत्रचित् ।

**❀ ऊर्ध्वन्दमाच्च ठञ् वक्तव्यः ❀ ( वा० २ ) । और्ध्वन्दमिकः । ऊर्ध्वशब्देन समानार्थ ऊर्ध्वन्दमशब्दः ।**

**❀ ऊर्ध्वदेहाच्च ❀ ( वा० २ ) । और्ध्वदेहिकम् ।**

**❀ लोकोत्तरपदाच्च ❀ ( वा० ३ ) । ऐहलौकिकम् । पारलौकिकम् ।**

**❀ मुखपार्श्वशब्दाभ्यां तसन्ताभ्यामीयः प्रत्ययो वक्तव्यः ❀ ( वा० ४ ) । मुखतीयम् । पार्श्वतीयम् ।**

**न्यासः**

अध्यात्मादिभ्य ऊर्ध्वन्दमादूर्ध्वदेहाल्लोकोत्तरपदाच्च ठञ् भवतीति वेदितव्यम् । **आध्यात्मिकमिति ।** आत्मन्यधि अध्यात्मम्, विभक्त्यर्थेऽव्ययीभावः । [ आधिदैविकमिति ] 'अनुशतिकादीनाञ्च' इत्युभयपदवृद्धिः । **अध्यात्मादिराकृतिगणश्चायमिति ।** यद्येवम्, 'समानशब्दाट्ठञ् वक्तव्यः, इत्याद्यनर्थकम्, अध्यात्मादिभ्यश्चेत्यनेनैव सिद्धत्वात् ? नानर्थकम्; अस्यैव प्रपञ्चार्थत्वात् । अध्यात्मादिरेव तत् प्रपञ्च्यते । ननु चाकारान्त ऊर्ध्वशब्दः, तत् कुत् इह मकारान्तत्वमायातम् इत्याह—**ऊर्ध्वशब्देनेत्यादि ।**

**ऐहलौकिकः, पारलौकिक इति ।** पूर्ववदुभयपदवृद्धिः ।

**मुखतीयम्, पार्श्वतीयमिति ।** 'अपादाने चाहीयरुहोः' इति तसिः । 'आद्यादिभ्य उपसंख्यानम्' इत्यौपसंख्यानिको वा । 'अव्ययानां भमात्रे टिलोपः' इत्यनेन टिलोपः ।

**पदमञ्जरी**

अनुशतिकादित्वादुभयपदवृद्धिः । **अध्यात्मादिराकृतिगण इति ।** एवं च समानशब्दादित्यादिरस्यैव प्रपञ्चः ।

**ऊर्ध्वशब्देन समानार्थ ऊर्ध्वंदमशब्द[1] इति ।** स चैतद्वृत्तिविषय एव । अपर आह—'ठञ्सन्नियोगेन दम शब्द उत्तरे ऊर्ध्वशब्दस्यैव मान्तत्वं निपात्यते' इति ।

**ऊर्ध्वदेहाच्चेति ।** नात्र मान्तत्वम् ।

**ऐहलौकिकमिति ।** पूर्ववदुभयपदवृद्धिः ।

**मुखतीयम्, पार्श्वतीयमिति ।** मुख-पार्श्व-शब्दाभ्यां सप्तम्यान्ताभ्यामाद्यादित्वात्तसिः, तत ईयः, अव्ययत्वाट्टिलोपः । अयं गहादिपाठस्यैव प्रपञ्चः । एतेन परं व्याख्यातम् ।

**भावबोधिनी**

❀ तत् = समान है आदि में जिसके ऐसे शब्द से भी ठञ् कहना चाहिये । ❀ सामानग्रामिकम् । [ समानग्रामे भवम् ] । सामानदेशिकम् । [ समानदेशे भवम् ] । ❀ अध्यात्म आदि शब्दों से भी ठञ् कहना चाहिये । ❀ उदा०—आध्यात्मिकम् [ अध्यात्मं भवम्—इस अर्थ से ठञ् = ठ = इक, आदिवृद्धि करने पर रूप बनता है । ] आधिदैविकम् । [ आधिदेवं भवम्—इस अर्थ में ठञ् = इक, "अनुशतिकादीनां च" ( पा० सू० ७।३।२० ) इस सूत्र से उभयपदवृद्धि होती है । इसी प्रकार ] आधिभौतिकम् । [ अधिभूत + ठञ् = इक, पूर्ववत् उभयपदवृद्धि । ] अध्यात्मादिगण आकृतिगण है । [ अतः अन्य शब्दों से भी यह ठञ् होता है । ] ❀ ऊर्ध्वन्दम शब्द से भी ठञ् कहना चाहिये । ❀ और्ध्वन्दमिकः । [ ऊर्ध्वन्दम + ठञ्, आदिवृद्धि, ठ = इक । ] ऊर्ध्व शब्द के समान अर्थवाला ऊर्ध्वन्दम शब्द है । ]

❀ ऊर्ध्वदेह शब्द से भी ठञ् कहना चाहिये । ❀ और्ध्वदेहिकम् । [ ऊर्ध्वदेह + ठञ् ] ❀ 'लोक' शब्द जिसका उत्तर पद है, उससे भी ठञ् कहना चाहिवे । ❀ उदा०—ऐहलौकिकम्, पारलौकिकम् । [ इहलोके भवम्, परलोके भवम्—इसमें ठञ् = ठ = इक, "अनुशतिकादीनां च" सूत्र से उभयपदवृद्धि । ]

❀ तसन्त मुख तथा पार्श्व शब्दों से ईय प्रत्यय होता है । ❀ उदा०—मुखतीयम्, पार्श्वतीयम् । [ मुख और पार्श्व को सप्तम्यन्त मानकर "आद्यादिभ्य उपसंख्यानम्" इस वचन से तस् प्रत्यय होता है । अतः मुखतस् और पार्श्वतस् ये सप्तम्यर्थ में हैं, इसलिए प्रत्यय करके टि=अस् का लोप करने पर उक्त रूप बनते हैं । ]

---

१, 'ऊर्ध्वशब्द' इति मुद्रितपाठः ।

❀ **जनपरयोः कुक्च** ❀ ( वा० ५ ) । **जनकीयम् । परकीयम् ।**

❀ **मध्यशब्दादीयः** ❀ ( वा० ६ ) । **मध्यीयः ।**

❀ **मण्मीयौ च प्रत्ययौ वक्तव्यौ** ❀ ( वा० ७ ) । **माध्यमम् । मध्यमीयम् ।**

❀ **मध्यो मध्यं दिनण् चास्मात्** ❀ ( वा० ८ ) । **मध्ये भवं माध्यन्दिनम् ।**

❀ **स्थाम्नो लुग्वक्तव्यः** ❀ ( वा० ९ ) । **अश्वत्थामा ।**

❀ **अजिनान्ताच्च** ❀ ( वा० ९ ) । **वृकाजिनः । सिंहाजिनः ॥**

### न्यासः

**मण्मीयौ च प्रत्ययौ वक्तव्याविति** । मध्यशब्दादित्यपेक्षते ।

**मध्यो मध्यं दिनण् चास्मादिति** । मध्यशब्दो मध्यम्भावमापद्यते, दिनण् चास्मात् प्रत्ययो भवति ।

**स्थाम्न इति** । स्थामशब्दान्तात् प्रातिपदिकात् । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात् सकारस्य तकारः । अश्वत्थाम्नि भव इत्यण्, तस्य लुक् ।

### पदमञ्जरी

**मण्मीयाविति** । गहादिषु 'मध्यमध्यमं चाण् चरणे' ( ग० सू० ९९ ) इति यत्पठितं तत्र 'पृथिवी-मध्यवाची मध्यशब्दो गृह्यते' इत्युक्तम्, भवार्थे तु ततोऽन्यत्रापि मध्यमीयमिति यथा स्मादिति मीयप्रत्ययवचनम् । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति भवति, न मध्यान्तरवाचिनः । तथा महादिपाठेन पृथिवीमध्यं निवास एषामित्यस्मिन्नेवार्थे माध्यमा इति सिध्यति, मध्यान्तरवाचिनो भवार्थेऽपि यथा स्यादिति मण् प्रत्यय उक्तः ।

**मध्यो मध्यंदिनण् चास्मादिति** । मध्यशब्दो मध्यभावमापद्यते दिनण्चास्मात् प्रत्ययो भवतीत्यर्थः ।

**स्थाम्न इति** । स्थामन्शब्दान्तादित्यर्थः । **अश्वत्थामेति** । अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे 'स्थाम्नोऽकारः' ( वा० ३८१ ) इत्यकारः, तस्यानेन लुक् ।

### भावबोधिनी

❀ जन और पर शब्दों से 'ईय' प्रत्यय तथा कुक्=क् का आगम कहना चाहिये । ❀ उदा०—जनकीयम्, परकीयम् [ जन + कुक्=क् + ईय, पर + कुक्=क् + ईय ] ❀ मध्य शब्द से ईय प्रत्यय होता है । ❀ **मध्यीयः** । [ मध्य + ईय, टि=अलोप ] ❀ मण् और मीय प्रत्यय भी कहने चाहिए । ❀ माध्यमम्, मध्यमीयम् [ मध्ये भवम्—इस अर्थ में जब मण् होता है, तब णित् मानकर आदिवृद्धि होती है । ]

❀ मध्य का मध्यम् आदेश और इससे दिनण् प्रत्यय होता है । ❀ मध्ये भवम्—इस अर्थ में—माध्यन्दिनम् । [ मध्य = मध्यम दिनण् प्रत्यय णित् है, अतः आदिवृद्धि करने पर रूप बनता है । ]

❀ स्थामन् शब्द के प्रत्यय का लुक् कहना चाहिये । ❀ अश्वत्थामा । [ अश्वस्य इव स्थाम=बलम् अस्य—इस अर्थ में बहुब्रीहि करने पर "पृषोदरादीनि यथोपदिष्टम्" ( पा० सू० ६।३।१०९ ) से स्थामन् के 'स्' का 'त्' आदेश । इसके बाद 'अश्वत्थाम्नि भवः—इस अर्थ में "स्थाम्नोऽकारः" इससे 'अकार' प्रत्यय होता है । इसका लुक् इस वचन से होता है । ]

**विमर्श**—अश्व के समान स्थामन्=बल जिसका है, वह—अश्वत्थामा=द्रोणपुत्र है । इसमें स् का त् निपातनात् होता है । जब 'अश्वथाम्नः अपत्यम्—यह अर्थ होता है, तब "स्थाम्नोऽकारः" इस वार्त्तिक से 'अकार' प्रत्यय, टिलोप करने पर 'अश्वत्थामः' यह रूप होता है । ( देखिये काशिका ४।१।८५ ) किन्तु जब अश्वत्थाम्नि भवः यह अर्थ होता है, तब उस अकार का लुक् हो जाता है । अतः मूल शब्द ही रहता है—अश्वत्थामा । इसलिए इस शब्द के ही दो अर्थ होते हैं ।

**समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।**
**ऊर्ध्वन्दमाच्च देहाच्च लोकोत्तरपदस्य च ॥**
**मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।**
**ईयः कार्योऽथ मध्यस्य मण्मीयौ प्रत्ययौ तथा ॥**
**मध्यो मध्यं दिनण्चास्मात्स्थाम्नो लुगजिनात्तथा ॥ ( म० भा० ४.३.६० )**

## १६३४. ग्रामात् पर्यनुपूर्वात् ॥ ६१ ॥ ( १४४० )

**'अव्ययीभावात्' इत्येव । ग्रामशब्दान्तादव्ययीभावात् परि, अनु—इत्येवम्पूर्वाट्ठञ् प्रत्ययो भवति**

**न्यासः**

**अजिनान्ताच्चेति ।** लुगिति सम्बध्यते । **वृकाजिन इति ।** अणो लुक् ।

**समानस्येति ।** आनन्तर्यलक्षणा षष्ठी । समानशब्दादनन्तरष्ठञिष्यत इत्यर्थः । **अध्यात्मादिष्विति ।** वैषयिकेऽधिकरणे सप्तमी । अध्यात्मादिविषये ठञिष्यत इत्यर्थः । **कुग्जनस्य परस्य चेति ।** चकारादीयश्च प्रत्ययः । **ऊर्ध्वन्दमाच्च देहाच्चेति ।** ऊर्ध्वशब्दात् परस्मात् दमशब्दादूर्ध्वशब्दाद् देहशब्दाच्च ठगिष्यत इत्यर्थः । **ईयः कार्योऽथ मध्यस्येति ।** अथशब्दः समुच्चये । मध्यशब्दस्यानन्तर ईयः कार्य इत्यर्थः । **मण्मीयौ प्रत्ययौ तथेति ।** मध्यशब्दादित्यपेक्ष्यते । मण्मीयौ मध्यशब्दस्यानन्तरौ कर्तव्यौ । **अजिनात् तथेति ।** अजिनान्तात् लुग्वक्तव्य इत्यर्थः ॥ ६० ॥

**ग्रामात् पर्यनुपूर्वात् ॥ पारिग्रामिकमिति । ग्रामात् परीति ।** 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः ।

**पदमञ्जरी**

**वृकाजिन इति ।** अणो लुक् ।

**समानस्य तदादेश्चेति ।** आनन्तर्यत्वलक्षणा षष्ठी । **अध्यात्मादितिष्विति ।** विषयसप्तमी । **ऊर्ध्वंन्दमाच्च देवाच्चेति ।** ऊर्ध्वंशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् ऊर्ध्वदेहाच्च, और्ध्वदेहिकम्' इति । **स्थाम्नो लुगजिनात्तथेति** पाठे उभयत्रापि तदन्तविधिः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

**भावबोधिनी**

❀ अजिनशब्दान्त से भी लुक् कहना चाहिये । वृकाजिनः, सिंहाजिनः । [ वृकाजिने भवः, सिंहाजिने भवः—इस अर्थ में औत्सर्गिक अण् होता है । उसका लुक् होता है । भेड़िये के चमड़े में होने वाला । सिंह के चमड़े में होने वाला ] [ महाभाष्य में उपर्युक्त सभी वचनों की पृथक् व्याख्या करने के बाद श्लोक रूप में संगृहीत किया गया है, यही शैली काशिकाकार ने भी अपनायी है । अतः यहाँ संक्षेप में अनुवाद है । इसकी व्याख्या पहले की जा चुकी है—]

"समान और समानादि ( समान जिसके आदि में है, ऐसे ) तथा अध्यात्मादिगण में पठित शब्दों से ठञ् प्रत्यय इष्ट है । ऊर्ध्वन्दम और ऊर्ध्वदेह से भी ठञ् इष्ट है । लोक जिसका उत्तरपद है, उससे भी ठञ् इष्ट है । तसन्त मुख और पार्श्व—मुखतस्, पार्श्वतस्—इनसे ईय प्रत्यय होता है । जन और पर से कुक् आगम तथा ईय प्रत्यय होता है । मध्य शब्द से ईय प्रत्यय होता है तथा मध्य शब्द से मण् और मीय प्रत्यय होते हैं । मध्य का 'मध्यम्' आदेश और इससे दिनण् प्रत्यय होता है । स्थामन् से और अजिन जिनके अन्त में है, उनसे भवार्थक प्रत्यय का लुक् कहना चाहिये ।"

[ "बाह्यो दैव्यः पाञ्चजन्यो गांमीयं च ञ्य इष्यते ।" यह भी प्रस्तुत सूत्र पर सबसे अन्त में है । किन्तु काशिकाकार ने "गम्भीराञ्ञ्यः" ( पा० सू० ४।३।५८ ) इस सूत्र पर पढ़ा है और यही ठीक है, क्योंकि ञ्य प्रत्यय-विधायक वही सूत्र है । यह तो ठञ् प्रत्यय विधायक है] ॥ ६० ॥

'अव्ययीभावात्' इसकी अनुवृत्ति होती है । जिस अव्ययीभाव के अन्त में 'ग्राम' शब्द है और पूर्व ( आदि ) में 'परि' अथवा 'अनु' शब्द है, उससे ठञ् प्रत्यय 'तत्र भवः' ( वहाँ होना ) इस विषय में होता है । यह अण् का

'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । पारिग्रामिकः । आनुग्रामिकः ॥

१६३५. जिह्वामूलाङ्गुलेश्छः ॥ ६२ ॥ ( १४४१ )

जिह्वामूलशब्दादङ्गुलिशब्दाच्च छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥

१३३६. वर्गान्ताच्च ॥ ६३ ॥ ( १४४२ )

वर्गशब्दान्ताच्च प्रातिपदिकाच् छः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अणोऽपवादः । कवर्गीयम् । चवर्गीयम् ॥

१६३७. अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥ ( १४४३ )

'वर्गान्तात्' इत्येव । शब्दादन्यस्मिन्प्रत्ययार्थे वर्गान्तात्प्रातिपदिकादन्यतरस्यां यत्खौ प्रत्ययौ भवतः 'तत्र भवः' इत्येतस्मिन्विषये । छे प्राप्ते वचनम्, पक्षे सोऽपि भवति । वासुदेववर्ग्यः । वासुदेववर्गीणः । वासुदेववर्गीयः[1] । युधिष्ठिरवर्ग्यः । युधिष्ठिरवर्गीणः । युधिष्ठिरवर्गीयः ।

अशब्द इति किम् ? कवर्गीयो वर्णः ॥

न्यासः

आनुग्रामिकमिति । अत्रापि 'अनुर्यत्समया' इति ॥ ६१ ॥

जिह्वामूलाङ्गुलेश्छः ॥ यतोऽपवाद इति । 'शरीरावयवाच्च' इति प्राप्तस्य ॥ ६२ ॥

वर्गान्ताच्च ॥ ६३ ॥ अशब्दे यत्खावन्यतरस्याम् ॥ छे प्राप्त इति । पूर्वसूत्रेण ॥ ६४ ॥

पदमञ्जरी

अशब्दे यत्खावन्यतरस्याम् ॥ वासुदेववर्गीय इति । 'वृद्धाच्छः' इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः ॥ ६४ ॥

भावबोधिनी

अपवाद है । उदा०—पारिग्रामिकः, आनुग्रामिकः । [ पञ्चम्यन्त ग्राम शब्द परि शब्द के साथ 'अपपरिबहिरञ्चवः पञ्चम्या' ( पा० सू० २।१।१२ ) से अव्ययीभाव होता है । उसके बाद 'उसमें होने वाला' इस अर्थ में ठञ् प्रत्यय, आदिवृद्धि, 'ठ' का 'इक' आदेश भसंज्ञा, अलोप करने पर रूप बनता है । 'अनु' शब्द के साथ ग्राम का समास 'अनुर्यत्समया' ( पा० सू० २।१।१५ ) से होता है । बाद में ठञ् प्रत्यय आदिकार्य होते हैं । ] ॥ ६१ ॥

'तत्र भवः' ( वहाँ होना ) इस विषय में जिह्वामूल और 'अङ्गुलि' शब्दों से 'छ' प्रत्यय होता है । ( शरीरावयवाद्यत्' ४।३।५५ से प्राप्त ) यत् का अपवाद यह है । उदा०—जिह्वामूलीयम्, अङ्गुलीयम् [ जिह्वामूले भवम्, अङ्गुलौ भवम—इस अर्थ में छ=ईय प्रत्यय करने पर रूप बने हैं । ] ॥ ६२ ॥

जिस प्रातिपदिक के अन्त में 'वर्ग' शब्द है, उससे 'तत्र भवः ( वहाँ होना ) इस अर्थ में 'छ' प्रत्यय होता है । यह [ सामान्य ] अण् का अपवाद है । उदा० - कवर्गीयम्, चवर्गीयम् । [ कवर्गे भवम्, चवर्गे भवम्—इस अर्थ में छ= ईय प्रत्यय, भसंज्ञा, अलोप ] ॥६३ ॥

"वर्गान्तात्" ( वर्गशब्द है अन्त में जिसके उससे ) इसकी अनुवृत्ति होती है । अशब्द=शब्द से भिन्न प्रत्ययार्थ में 'वर्गान्त' ( वर्ग जिसके अन्त में है उस ) प्रातिपदिक से विकल्प से 'यत्' और 'ख' प्रत्यय होते हैं, 'तत्र भवः' ( वहाँ होना ) इस विषय में । 'छ' के प्राप्त रहते ये प्रत्यय किये जा रहे हैं, पक्ष में वह 'छ' भी होता है । उदा०—वासुदेववर्ग्यः, वासुदेववर्गीणः, वासुदेववर्गीयः । [ वासुदेववर्गे भवः=इस अर्थ में ( १ ) वासुदेववर्ग+यत्, भसंज्ञा अलोप,

---

१. अर्जुनवर्ग्यः, अर्जुनवर्गीणः, अर्जुनवर्गीयः'—इत्यधिकं क्वचित् ।

## १६३८. कर्णललाटात् कनलंकारे ।। ६५ ।। ( १४४४ )

**कर्ण-ललाटशब्दाभ्यां कन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन् विषयेऽलङ्कारेऽभिधेये । यतोऽपवादः । कर्णिका । ललाटिका ।**

**अलङ्कार इति किम् ? कर्ण्यम् । ललाट्यम् ।।**

## १६३९. तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।। ६६ ।। ( १४४५ )

**व्याख्यायतेऽनेनेति व्याख्यानम्, व्याख्यातव्यस्य नाम व्याख्यातव्यनाम । तस्येति षष्ठीसमर्थाद् व्याख्यातव्यनाम्नः प्रातिपदिकाद् व्याख्यानेऽभिधेये यथाविहितं प्रत्ययो भवति, तत्र भवे च । वाक्यार्थसमीपे चकारः**

**न्यासः**

**कर्णललाटात् कनलङ्कारे ।।** कर्णिकाशब्दश्चाभरणविशेषे रूढः । रूढिशब्देषु च नावश्यमपि कर्णसम्बन्धेन भवितव्यम् ।। ६५ ।।

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।। तस्य व्याख्यानमिति ।** व्याख्यायतेऽनेनेति व्याख्यानम्, करणे ल्युट् । चकारात् **तत्र भवे चेति ।** ननु च व्याख्यानं प्रत्ययार्थः तस्य समीपे चकारः श्रूयत इति प्रत्ययार्थमात्रस्यैव समानजातीयस्य तेनानुकर्षणं न्याय्यम्, न तु समर्थविभक्तेरपि; समानजातीयस्य तु चकारः समुच्चयं करोति, यथा—'केदाराद् यञ्च' इति; प्रत्ययसमीपवर्तिना चकारेण प्रत्यय एव समुच्चीयते, यथा—'ठञ् कवचिनश्च' इति प्रातिपदिकसमीपस्थेन चकारेण प्रातिपदिकमेव; तत्र प्रत्ययार्थमात्रस्यैवानुकर्षणे सति

**पदमञ्जरी**

**तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।। तस्येति षष्ठीसमर्थादिति ।** ननु चाधिकारार्थोऽयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथाविहितविधानार्थत्वं व्याख्यायते ? उच्यते—तात्पर्यतोऽपवादविधानायाधिकारस्यानुषङ्गिकेऽणादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः । अत एव 'कृतलब्धक्रीतकुशलाः' इत्यादीन्यनपवादान्यर्थादेशनानि भवन्ति । **तत्र भवे चेति ।** अयमनुवादः; एतस्मिन्नेव विशेषे 'तत्र भवः' इति

**भावबोधिनी**

( २ ) वासुदेववर्ग + ख = ईन भसंज्ञा, अलोप, णत्व । ( ३ ) वासुदेववर्ग + छ = ईय, भसंज्ञा, अलोप । वासुदेव कृष्ण के वर्ग में होने वाला । ]

अशब्द (शब्द से भिन्न अर्थ) में—इसका क्या फल है ? कवर्गीयः वर्णः । [ यहाँ वर्ण = शब्द की ही प्रतीति होती है । अतः यह प्रत्यय न होकर सामान्य 'छ' प्रत्यय होता है । ] ।। ६४ ।।

'तत्र भवः' ( वहाँ होना ) इस विषय में अलंकार अर्थ की प्रतीति रहने पर 'कर्ण' और 'ललाट' शब्दों से 'कन्' प्रत्यय होता है । यह [ "शरीरावयवाच्च" ( पा० सू० ४।३।५५ से प्राप्त ) यत् का अपवाद है । उदा०—कर्णिका । ललाटिका । [ कर्ण + कन् + टाप् करने के बाद "प्रत्ययस्थात् कात्" ( पा० सू० ७।३।४४ ) से उपधा अ का इत्व करने पर रूप बनता है । ललाट + कन् + टाप् इत्व । कान का आभूषण, ललाट का आभूषण । ये दोनों रूढ शब्द हैं । अतः इनमें कर्ण और ललाट का सम्बन्ध होना आवश्यक नहीं है । ]

अलंकार हो = इसका क्या फल है ? कर्ण्यम्, ललाट्यम् । [ कर्णे भवम्, ललाटे भवम्—इस सामान्य अर्थ में यत् प्रत्यय और भसंज्ञा, अलोप के बाद रूप बनता है । यहाँ अलंकार अर्थ नहीं है । ] ।। ६५ ।।

व्याख्या की जाती है, जिसके द्वारा वह 'व्याख्यान' है । व्याख्यातव्य = व्याख्या करने योग्य का नाम = व्याख्यातव्यनाम । 'तस्य' ( उसका ) इस षष्ठीसमर्थ व्याख्यातव्यनाम = वाचक प्रातिपदिक से व्याख्यान अर्थ अभिधेय रहने पर यथाविहित प्रत्यय होते हैं और 'तत्र भवः' ( उसमें होना ) इस अर्थ में भी होते हैं । वाक्यार्थ के समीप में

**श्रूयमाणः पूर्ववाक्यार्थमेव समुच्चिनोति—'तत्र भवः' ( ४. ३. ५३ ) इति। सुपां व्याख्यानः सौपो ग्रन्थः। तैङः। कार्त्तः। सुप्सु भवं सौपम्। तैङम्। कार्त्तम्।**

**व्याख्यातव्यनाम्न इति किम्? पाटलिपुत्रस्य व्याख्यानी सुकोशला, पाटलिपुत्रः सुकोशलया व्याख्यायते—एवं संनिवेशं पाटलिपुत्रमिति, न तु पाटलिपुत्रो व्याख्यातव्यनाम।**

**न्यासः**

समर्थविभक्त्यन्तरोपादानात् पूर्वस्याः समर्थविभक्तेर्निवृत्तौ सत्यां भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः—तदयुक्तमुक्तम्; तत्र भवे चेति, तस्य भवे चेति वक्तुं युक्तम्? इत्यत आह—**वाक्यार्थसमीप इत्यादि**। इहेतिकरणेन तस्य व्याख्यान इत्येषोऽर्थः प्रत्ययवमृश्यते। न तु व्याख्यानप्रत्ययार्थः। तस्मादितिकरणानन्तरमुच्चारितश्चकारस्तत्प्रत्यवमृष्टस्य वाक्यार्थस्यैव समीपे श्रूयमाणस्तुल्यजातीयमेव वाक्यार्थं समुच्चिनोति। तेन भवार्थे सप्तमीसमर्थादेव प्रत्ययो भवति। न ह्यन्यथा पूर्वो व्याख्यार्थं उपपद्यते। इतिकरणश्च वाक्यार्थसमुच्चयो यथा स्यादित्येवमर्थ एव कृतः; अन्यथा हि 'तस्य व्याख्याने च' इत्येवं ब्रूयात्। कः पुनरसौ वाक्यार्थ इत्याह—**तत्र भव इति**।

**न तु पाटलिपुत्रशब्दो व्याख्यातव्यनामेति**। ननु च पाटलिपुत्रः कोशलया व्याख्यायते, नियतं तेन व्याख्यातव्येन भवितव्यम्, अन्यथा तस्य व्याख्यानी सुकोशला न स्यात्। तस्य व्याख्यानस्य पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवतीति तत् कथमुच्यते, न तु पाटलिपुत्रशब्दो व्याख्यातव्यनाम भवतीति? नैतदस्ति; यदीह व्याख्यातव्यमभिप्रेतम्, न तस्यैतन्नाम भवतीति भावः। किञ्चेह व्याख्यातव्यमभिप्रेतम्? यद्व्याख्यातव्यतया लोके प्रसिद्धतरम्। कुत एतत्? व्याख्यातव्यनामग्रहणात्। इह हि व्याख्यातव्यनामग्रहणं व्याख्यातव्यार्थं तु न कर्तव्यमेव; विनापि हि तेन व्याख्यातव्यनाम्न एव प्रत्ययसिद्धेः। तथा हि 'तस्य' इति तस्य प्रतियोगि

**पदमञ्जरी**

विहितत्वात्। ननु च व्याख्यानस्य प्रत्ययार्थस्य समीपे श्रूयमाणश्चशब्दस्तत्समानजातीयस्यैव प्रत्ययार्थस्य समुच्चयं करोति, न समर्थविभक्तेः; यथा 'केदाराद्यञ्च' इति प्रत्ययसमीपवर्त्तिना प्रत्यय एव समुच्चीयते, न प्रकृतिः; 'ठञ्कवचिनश्च' इति प्रकृतिरेव न प्रत्ययः; ततश्चेह तस्येत्युपादानाद्भवार्थेऽपि षष्ठीसमर्थादेव प्रत्ययो युक्तः, तत्राह—**वाक्यार्थसमीपे इति**। इहेतिकरणः क्रियते—प्रकृतं वाक्यार्थं प्रत्यवमर्शामीति। प्रत्यवमर्शस्य च प्रयोजनम्—तत्तुल्यजातीयस्यैव समुच्चयो यथा स्यादित्येतदेवेति भावः। एतमेव च न्यायं निरूपयितुं पूर्वम् 'तत्र भवे च' इत्यनुवादः कृतः।

**व्याख्यातव्यनाम्न इति किमिति**। व्याख्यानशब्दस्य सम्बन्धिशब्दत्वाद्यत्प्रतिव्याख्यानं तदेव तस्येत्यनेन निर्दिष्टमिति गम्यत इति मत्वा प्रश्नः। **पाटलिपुत्र सुकोशलया व्याख्यायत इति**। नेयं कर्तरि तृतीया, किं तर्हि? करणे सुकोशलया करणभूतया पुरुषैर्व्याख्यायत इत्यर्थः। कथमित्याह—**एवंसन्निवेशमिति**। तादृशो हि पाटलिपुत्रे प्राकारादिसन्निवेशो यादृशः सुकोशलायाम्, तेन तया तद्व्याख्यायते। यद्येवम्, तस्य व्याख्यातव्यस्य पाटलिपुत्रशब्दो नामापि भवति, तत्कथं प्रत्युदाहरणम्? अत आह—**न त्विति**। यदिह व्याख्यातव्यमभिप्रेतम्,

**भावबोधिनी**

सुनाई देने वाला चकार पूर्ववर्ती वाक्यों के अर्थ को समुच्चित करता है—'तत्र भवः' ( वहाँ होना )। **उदा०—सुपां** व्याख्यानः—सौपः ग्रन्थः। [ 'सुप्' शब्द से अण्, आदिवृद्धि। ] तैङः। कार्तः। [ **तिङां व्याख्यानः ग्रन्थः—इस अर्थ में** और कृतां व्याख्यानः ग्रन्थः—इस अर्थ में अण् प्रत्यय, आदिवृद्धि, रपर करने पर रूप बने हैं। ] **सुप्सु भवम्—इस अर्थ में** भी अण् होकर सौपम्। [ तिङ्क्षु भवम्- ] तैङम्। [ कृत्सु भवम्- ] कार्त्तम्।

व्याख्यातव्यनाम ( व्याख्यान करने योग्य अर्थवाचक प्रातिपदिक ) से—इसका क्या प्रयोजन है? पाटलिपुत्रस्य व्याख्यानी सुकोशला = सुकोसला द्वारा पाटलिपुत्र की व्याख्या की जाती है—'इस प्रकार के सन्निवेश वाला पाटलिपुत्र

**भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः ( म० भा० ) । कृतनिर्देशौ हि तौ ॥**

**न्यासः**

व्याख्यानमुपात्तम्, तच्च व्याख्यातव्यस्यैव सम्भवति, नान्यस्य। तस्माद् यत् तस्य व्याख्यातव्यं सामर्थ्यात् तदेव तस्येत्यनेन षष्ठ्यन्तेनोपादीयत इति विज्ञायते। ततश्चान्तरेणापि व्याख्यातव्यनामग्रहणं व्याख्यातव्यनामाभिधायिन एव प्रत्ययो भविष्यतीति किं व्याख्यातव्यनामग्रहणेन ? तत् क्रियते व्याख्यातव्यतया लोके यः प्रसिद्धस्तदभिधायिन एव प्रत्ययो यथा स्यादित्येवमर्थम्। व्याकरणादयो ग्रन्थविशेषा लोके प्रसिद्धाः, न ते पाटलिपुत्रादयः। एवमपि नामग्रहणं न कर्तव्यम्, व्याख्यातव्यग्रहणसामर्थ्यादेव हि व्याख्यातव्यतया प्रसिद्धतरेभ्यः प्रत्ययो लभ्यत एव ? नैतदस्ति; व्याख्याने हि प्रत्ययार्थे व्याख्यानादेव व्याख्यातव्यवाचिनः प्रत्यये सिद्धे पुनर्व्याख्यातव्यग्रहणसामर्थ्याद् व्याख्यातव्यतया ये प्रसिद्धास्तेभ्यः प्रत्ययो लभ्यते, न तु तत्र भवे; तत्र सामर्थ्याभावात्। भवेऽपि चार्थे तत्र व्याख्यातव्यतया प्रसिद्धतराः, तदभिधायिभ्य एव प्रत्यय इष्यत इति; न तु यतः कुतश्चित्। तस्माद् भवाधिकारे रूढ्युपसंग्रहार्थं नामग्रहणं कर्तव्यम्।

अथ किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते इत्याह **भवव्याख्यानयोरित्यादि**। ठञादीनपवादानत्राभिधास्यामीत्येवमर्थो युगपदनयोरधिकारः। ननु किमुच्यते—अपवादविधानार्थं इति; न पुनः प्रकृतानामणादीनां प्रत्ययानामर्थनिर्देशो यथा स्यात् ? इत्यत आह—**कृतनिर्देशौ हि ताविति**। कृतनिर्देशौ हि तावर्थौ। एकः 'तत्र भवः' इति, अपरः 'तस्येदम्' इति। तस्येदंविशेषत्वाद् व्याख्यानस्य ॥ ६६ ॥

**पदमञ्जरी**

न तस्य नाम भवतीत्यर्थः। किं पुनरिहाभिप्रेतम् ? यद्व्याख्यातव्यतया लोके प्रसिद्धं ग्रन्थात्मकम्, एतदर्थमेव हि व्याख्यातव्यनामग्रहणं कृतम्, व्याख्यातव्यमात्रस्य व्याख्यानशब्दस्य सम्बन्धिशब्दत्वेनैवाक्षेपसिद्धेः। ननु च भवार्थमेतत्स्यात्, न हि तत्राक्षेपतो व्याख्यातव्यस्य लाभः ? एवं तर्हि नामग्रहणं प्रसिद्ध्युपसंग्रहार्थं भविष्यति।

**भवव्याख्यानयोरिति**। नात्रायमर्थः—योऽयं भवव्याख्यानयोर्युगपदधिकारः सोऽपवादविधानार्थं इति; पूर्वमधिकारत्वास्याव्याख्यातत्वात्। तस्माद्भवव्याख्यानयोर्युगपदधिकारोऽयं न त्वणादीनामर्थनिर्देश इत्यर्थः। किमर्थोऽधिकारस्तत्राह—**अपवादविधानार्थं इति**। अणादीनां चायमर्थनिर्देशः कस्मान्न भवति ? तत्राह—**कृतनिर्देशौ हि ताविति**। एकः 'तत्र भवः' इति, अपरः 'तस्येदम्'—इत्येवं कृतनिर्देशौ हि तावर्थौ। तस्मात्तदर्थमेतन्न भवति। पूर्वं त्वधिकारार्थतयावश्यकर्त्तव्यस्यानुषङ्गिकमर्थनिर्देशार्थमिदमिति व्याख्यातम् ॥ ६६ ॥

**भावबोधिनी**

है', न कि पाटलिपुत्र व्याख्यातव्य-वाचक है।

'भव' और 'व्याख्यान' इन दोनों का एक साथ अधिकार अपवाद का विधान करने के लिए है, क्योंकि इन दोनों अर्थों का निर्देश किया जा चुका है।

**विमर्श**—प्रस्तुत सूत्र अधिकार सूत्र है। 'भव' और 'व्याख्यान' दो अधिकार चलते हैं। सप्तम्यन्त मानकर भव अर्थ में और षष्ठ्यन्त मानकर 'व्याख्यान' अर्थ में प्रत्यय होते हैं। व्याख्यानः—यहाँ व्याख्यायते येन सः व्याख्यानः—ऐसा अर्थ अभीष्ट है। 'इति' शब्द वाक्यार्थ का परामर्श करता है। अतः उसके बाद प्रयुक्त 'च' यह पूर्ववर्ती 'तत्र भवः' इस वाक्यार्थ का ही समुच्चायक=आक्षेपक है। व्याख्यातव्य=व्याख्यान करने योग्य का नाम=वाचक प्रातिपदिक से प्रत्यय होते हैं। व्याख्यातव्य—इस रूप से शास्त्र या शास्त्रीय विषय ही प्रसिद्ध हैं, उन्हीं को लेना चाहिये—इसकी प्रतीति कराने के लिए 'नाम' का ग्रहण है। अतः व्याकरणादि शास्त्र या उनके विषय ही यहाँ व्याख्यातव्यतया लिये जाते हैं। इसका फल यह है कि 'पाटलिपुत्रस्य व्याख्यानी सुकोसला' यहाँ पाटलिपुत्र से ये प्रत्यय नहीं होता है। कारण यह है कि यहाँ सुकोसला नगरी यही बताती है कि उसके समान ही पाटलिपुत्र भी है, किन्तु व्याख्या नहीं है और न यह व्याख्यातव्य नाम है। अतः प्रत्यय नहीं होता है॥ ६६ ॥

## १६४० बह्वचोऽन्तोदात्ताट्ठञ् ॥ ६७ ॥ ( १४४६ )

**बह्वचो व्याख्यातव्यनाम्नः प्रातिपदिकादन्तोदात्ताद् भवव्याख्यानयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । षात्वणत्विकम् । नातानतिकम्[1] । समासस्वरेणान्तोदात्ताः प्रकृतयः ।**

**बह्वच इति किम् ? द्व्यचष्ठकं ( ४. ३. ७२ ) वक्ष्यति । एकाच् प्रत्युदाह्रियते—सौपम्, तैङम्, कार्तम् ।**

**अन्तोदात्तादिति किम् ? संहितायाः सांहितम् । संहिताशब्दो हि गतिस्वरेणाद्युदात्तः ॥**

### न्यासः

**बह्वचोऽन्तोदात्ताट् ठञ् ॥ षात्वणत्विकमिति । नातानतिकमिति ।** उभयत्र द्वन्द्वात् प्रत्ययः । **समासस्वरेणान्तोदात्ताः प्रकृतय इति ।** समासत्येत्यनेन बहुवचननिर्देशश्चैवञ्जातीयापरप्रकृत्यपेक्षया ।

**द्व्यचष्ठकं वक्ष्यति**—'द्व्यजृद्ब्राह्मण' इत्यादिना । **सौपमिति । तैङमिति ।** सुप्तिङ्शब्दौ प्रातिपदिकस्वरेणान्तोदात्तौ । **गतिस्वरेणाद्युदात्त इति ।** गतिरनन्तरः' इत्यनेन । अन्तग्रहणं विस्पष्टार्थम्; सर्वोदात्तस्य प्रातिपदिकस्यासम्भवात् । सामर्थ्यादेव तदन्तविधिर्भविष्यति यथा -'वर्णादनुदात्तात्तोपधात् तो नः' इति । अपि चोदात्त इति वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति युक्त एव तदन्तविधिः ॥ ६७ ॥

### पदमञ्जरी

**बह्वचोऽन्तोदात्ताट् ठञ् ॥ अणोऽपवाद इति ।** वृद्धाच्छं तु परत्वाद्बाधते । सामस्तं नाम शास्त्रं तस्य व्याख्यानं सामस्तिकम् । षत्वादिविधायकं शास्त्रं षत्वादिशब्देनोच्यते । नतः = अनुदात्तः, अनतः = उदात्तः । **अन्तोदात्ता प्रकृतय इति ।** उदाहृतयोर्द्वित्वेऽप्येवञ्जातीयापरप्रकृत्यपेक्षं बहुवचनम्, ताश्च कुत्वरुत्वादयः ।

**गतिस्वरेणेति ।** 'गतिरनन्तरः' इत्यनेन । उदात्त इति वर्णग्रहणम्, तेन सिद्धस्तदन्तविधिः, यथा 'वर्णादनुदात्ताद्' इत्यत्र । तस्मादन्तग्रहणं विस्पष्टार्थम् ॥ ६७ ॥

### भावबोधिनी

बहुत अचों वाले व्याख्यातव्य नाम - वाचक प्रातिपदिक जो अन्तोदात्त है, उससे 'भव' तथा 'व्याख्यान' अर्थों में ठञ् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—षात्वणत्विकम् । [ षत्वं च णत्वं च—षत्वणत्वे तयोर्विधायकं शास्त्रं—षत्वणत्वम् । 'तस्य व्याख्यानम्' इस अर्थ में क्रमशः षष्ठ्यन्त और सप्तम्यन्त से ठञ् प्रत्यय करने पर आदिवृद्धि, ठ का इक, भसंज्ञा, अलोप कर देने पर रूप बनता है—षात्वणत्विकं शास्त्रम्, षात्वणत्विकः ग्रन्थः । ] नातानतिकम् । [ नतः च अनतः च=नतानतौ = अनुदात्तः उदात्तश्च । तयोर्व्याख्यानं शास्त्रं तयोर्भवम् वा—इस अर्थ में ठञ्, आदिवृद्धि, 'ठ' का 'इक' आदेश, भसंज्ञा, अलोप । अनुदात्त और उदात्त का व्याख्यान करने वाला शास्त्र । अनुदात्त और उदात्त में होने वाला—ये दोनों अर्थ हैं । ]

[ यहाँ प्रातिपदिक अन्तोदात्त कैसे मिलेगा—इसका उपपादन करते हैं— ] समास को मानकर होने वाले स्वर से प्रकृति अन्तोदात्त हो जाती है । [ अतः प्रत्यय का विधान सम्भव है । ]

बहुत अचों वाले से—इसका क्या लाभ है ? दो अचों वाले से ठक् प्रत्यय [ "द्व्यजृद्ब्राह्मण०" ४।३।७२ से ] कहा जायेगा । अतः एक अच् वाला प्रत्युदाहरण दिया जा रहा है—सौपम्, तैङम्, कार्तम् । [ सुपां व्याख्यानम्, सुप्सु भवं वा—यह अर्थ है, अण् प्रत्यय होता है । इसी प्रकार अन्य में भी समझना चाहिये । ]

अन्तोदात्त से—इसका क्या प्रयोजन है ? संहितायाः व्याख्यानम्—इस अर्थ में—सांहितम् । संहिता शब्द "गतिरनन्तरः" सूत्र से आद्युदात्त है । [ फलतः "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) सूत्र से शेषनिघात करके अन्त अनुदात्त हो जाता है । अतः ठञ् न होकर अण् प्रत्यय, आदिवृद्धि, भसंज्ञा, आलोप करने पर—सांहितम् यह बनता है । [ 'उदात्त' यह वर्ण लिया जाता है । तदन्तविधि मानकर बह्वच् अन्तोदात्त ही होगा, अतः 'अन्त' का ग्रहण केवल स्पष्टता के लिए है । ] ॥ ६७ ॥

---

१. नतोऽनुदात्तः, अनत उदात्तः, तयोर्व्याख्यानम्; सौवरग्रन्थरूपमित्यर्थः ।

## १६४१. क्रतुयज्ञेभ्यश्च ॥ ६८ ॥ ( १४४७ )

**क्रतुभ्यो यज्ञेभ्यश्च व्याख्यातव्यनामभ्यः प्रातिपदिकेभ्यो भवव्याख्यनयोरर्थयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । ऋतुभ्यस्तावत्—अग्निष्टोमस्य व्याख्यानस्तत्र भवः आग्निष्टोमिकः । वाजपेयिकः । राजसूयिकः ( म० भा० ) । यज्ञेभ्यः—पाकयज्ञिकः । नावयज्ञिकः ।**

**अनन्तोदात्तार्थ आरम्भः । 'क्रतुभ्य' इत्येव सिद्धे यज्ञग्रहणमसोमयागेभ्योऽपि यथा स्यात्—पाञ्चौदनिकः । दाशौदनिकः । बहुवचनं स्वरूपविधिनिरासार्थम् ॥**

**न्यासः**

**क्रतुयज्ञेभ्यश्च ॥ अनन्तोदात्तार्थ आरम्भ इति ।** यद्येवम्, राजसूयिकम्, वाजपेयिकमित्येतदेवोदाहरणद्वयं युक्तम्, राजसूय-वाजपेयशब्दयोः कृदन्तोत्तरपदयोः प्रकृतिस्वरेण मध्योदात्तत्वादुत्तरपदं चाद्युदात्तमत्र, एकं क्यबन्तत्वात् कृत्स्वरेण, अपरम् 'यतोऽनावः' इति समासे च कृते 'गतिकारकोपपदात् कृत्' इति प्रकृतिभावेनाद्युदात्तमेवावतिष्ठते; आग्निष्टोमिकं नावयज्ञिकमिति एतदुदाहरणद्वयमयुक्तम्, अग्निष्टोम-नवयज्ञशब्दाभ्यां प्रत्ययस्वरेणान्तोदात्ताभ्यामनेनाप्राप्तिः ? न हि पूर्वेणानेन वा ठञि विशेषः । क्रतुसाहचर्यादत्रोदाहृतम् । शब्दः साहचर्याद् वर्तत इति विज्ञायते ॥ ६८ ॥

**पदमञ्जरी**

**क्रतुयज्ञेभ्यश्च ॥** अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्त्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम् । **अनन्तोदात्तार्थ आरम्भ इति ।** तत्र राजसूय-वाजपेयशब्दौ कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तौ, राजा सूयते, राज्ञा वेह सूयते, क्यप्; तत एव निपातनात्समासः, षष्ठीसमासो वा । पीयतेऽस्मिन्निति पेयः 'कृत्यल्युटो बहुलम्' इत्यधिकरणे यत्; वाजो यवागूभेदः, तस्य पेयः पायो वाजपेय इति । स्तुतिः=स्तोमः, अग्नेस्तोमोऽस्मिन्निति बहुव्रीहिः, 'परादिश्च परान्तश्च' ( म० भा० ) इत्यन्तोदात्तः । नवैर्व्रीहिभिर्यजनं नवयज्ञः=आग्रयणम्, 'कर्तृकरणे कृता बहुलम्' इति समासः, 'कृदुत्तरपदप्रकृतिभावेन नञ एव स्वरोऽवतिष्ठते' इत्यन्तोदात्तः । अल्पपर्यायः पाकशब्दः, पाकश्चासौ यज्ञश्च पाकयज्ञः, समासस्वरेणान्तोदात्तः । सत्यन्यार्थ एतस्यारम्भे, अन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव ठञ्प्रत्ययो युक्त इत्यन्तोदात्तानामुपन्यासः ।

**कतुभ्य इत्येव सिद्ध इति ।** क्रतुयज्ञयोः पर्यायत्वादिति भावः । **असोमयागेभ्योऽपीति ।** अन्यथा क्रतुशब्दस्य सोमयागे रूढत्वादन्यत्र न स्यात्, यज्ञग्रहणात्तु तेभ्योऽपि भवति । एवं केवलयज्ञग्रहणेऽपि स एव दोषो यः केवलक्रतुग्रहणे, तस्माद् गौणमुख्यपरिग्रहार्थमुभयोरुपादानम् ॥ ६८ ॥

**भावबोधिनी**

क्रतुवाचक और यज्ञवाचक व्याख्यातव्यनाम प्रातिपदिक [ सप्तम्यन्त और षष्ठ्यन्त समर्थ ] से 'भव' तथा 'व्याख्यान' अर्थों में ठञ् प्रत्यय होता है । यह अण् का अपवाद है । उदा०—क्रतुवाचक से—अग्निष्टोमस्य व्याख्यानः, अग्निष्टोमे भवः वा—इस अर्थ में आग्निष्टोमिकः । [ अग्निष्टोम + ठञ्, आदिवृद्धि, ठ = इक ] वाजपेयिक । [ वाजपेयस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ठञ् ] । राजसूयिकः । [ राजसूयस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ठञ् ] यज्ञवाचक से—पाकयज्ञिकः, नावयज्ञिकः । [ पाकयज्ञस्य व्याख्यानः, तत्र भवः वा, नावयज्ञस्य व्याख्यानः, तत्र भवः वा—इन अर्थों में ठञ् । नवैर्व्रीहिभिर्यजनं = नवयज्ञः । ]

जो अन्तोदात्त नहीं हैं, उनके लिए यह सूत्र बनाया गया है । [ क्योंकि अन्तोदात्त से ठञ् प्रत्यय पूर्ववर्ती सूत्र ही करता है । ] 'क्रतुभ्यः' इतने से ही कार्यसिद्धि सम्भव होने पर 'यज्ञ' का ग्रहण सोमयाग से भिन्न से भी प्रत्यय करने के लिए—पाञ्चौदनिकः, दाशौदनिकः । [ पञ्चौदनस्य व्याख्यानः तत्र भवः वा—इस अर्थ में ठञ्, आदिवृद्धि, ठ = इक करने पर रूप बनता है । दशौदनस्य व्याख्यानः तत्र भवः वा यह—अर्थ है । ]

बहुवचन का प्रयोग स्वरूपविधि अर्थात् 'क्रतुयज्ञ' शब्द से प्रत्यय का निवारण करने के लिए है ।

## १६४२. अध्यायेष्वेवर्षेः ॥ ६९ ॥ ( १४४८ )

**ऋषिशब्दाः प्रवरनामधेयानि, तेभ्य ऋषिशब्देभ्यो भवव्याख्यानयोरर्थयोष्ठञ् प्रत्ययो भवति । अणोऽपवादः । अध्यायेष्वेव प्रत्ययार्थविशेषणेषु । 'व्याख्यातव्यनाम्नः' इत्यनुवर्त्तते, तत्साहचर्यादृषिशब्दैर्ग्रन्थ उच्यते । वसिष्ठस्य व्यख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । वैश्वामित्रिकः ।**

**अध्यायेष्विति किम् ? वासिष्ठी ऋक् ॥**

## १६४३. पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥ ( १४४९ )

**पौरोडाशशब्दात्, पुरोडाशशब्दाच्च भवव्याख्यानयोरर्थयोः ष्ठन् प्रत्ययो भवति । पुरोडाशाः= पिष्टपिण्डाः; तेषां संस्कारको मन्त्रः पौरोडाशः, तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः । पौरोडाशिकी ।**

### न्यासः

**अध्यायेष्वेवर्षः** ॥ ६९ ॥ **पौरोडाशपुरोडाशात् ष्ठन्** ॥ पुरोडाशस्येदमित्यन्तोदात्तः । तस्माद् बह्वचोऽन्तोदात्ताद् ठञि प्राप्ते । पुरोडाशस्तु 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तः अस्मादणि प्राप्ते ष्ठन् विधीयते ।

### पदमञ्जरी

**अध्यायेष्वेवर्षः ॥ ऋषिशब्दाः प्रवरनामधेयानीति ।** होत्राध्वर्युणा च प्रव्रियन्त इति प्रवराः = भृग्वादयः, तद्यथा भार्गवच्यावनाप्रवानौवजामदग्नेति होता, जमदग्निवदुर्ववदप्रवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । एतेन यद्यपि मन्त्रदर्शिष्वृषिशब्दः प्रसिद्धः, यथापि प्रवराध्यायपठितानामेव ग्रहणमिति दर्शयति । **वसिष्ठस्य व्याख्यान इति ।** वसिष्ठेन दृष्टो मन्त्र उपचाराद् वसिष्ठ इत्युक्तः ।

**वासिष्ठी ऋगिति ।** भवार्थेऽण्, एवकारः सर्ववाक्यानां सावधारणत्वज्ञापनार्थः ॥ ६९ ॥

**पौरोडाशपुरोडाशात्ष्ठन् ॥ पुरोडाशाः पिष्टपिण्डा इति ।** 'दाश्‌ृ दाने' ( धा० पा० ८८२ ) कर्मणि घञ्, पुरो दाश्यन्ते दीयन्त इति पुरोडाशाः, पृषोदरादित्वात्समासः, दकारस्य च डकारः, एतेनैतदाह—आकृतिवचनः

### भावबोधिनी

**विमर्श**—क्रतु और यज्ञ शब्द पर्याय हैं । अतः "क्रतुभ्यः" इतना सूत्र बनाना सम्भव था, किन्तु 'यज्ञ' का भी ग्रहण किया गया । वह सिद्ध करता है कि क्रतु शब्द सामान्यतया सोमयाग में रूढ है । अतः उसी से प्रत्यय होता । जब 'यज्ञ' का भी ग्रहण किया गया, तब सोमयाग से भिन्न याग से भी यह प्रत्यय हो जाता है । यही बात केवल 'यज्ञ' का ग्रहण करने पर भी हो सकती थी । अतः दोनों का ग्रहण कर देने से गौण और मुख्य सभी प्रकार के यज्ञवाचक के 'व्याख्यान' और 'उसमें होना' अर्थों में प्रत्यय हो जाते हैं ॥ ६८ ॥

ऋषिशब्द = प्रवरों भृगु आदि के नाम हैं, उन ऋषिशब्दों से 'भव' और 'व्याख्यान' अर्थों में ठञ् प्रत्यय होता है । यह अण् का अपवाद है । 'अध्याय' ही जब प्रत्ययार्थ का बिशेषण हो, तभी यह होता है । 'व्याख्यातव्यनाम का' इसकी अनुवृत्ति होती है, इसके साहचर्य से 'ऋषि' शब्द से [ उनके द्वारा दृष्ट आदि ] ग्रन्थ कहा जाता है । उदा०—वसिष्ठस्य व्याख्यानः, तत्र भवः वा—वासिष्ठिकः अध्यायः । [ वसिष्ठ द्वारा देखा गया मन्त्र भी लक्षणया 'वसिष्ठ' कहा जाता है । 'उस वसिष्ठ मन्त्र का व्याख्यान' अथवा 'उसमें होने वाला' अध्याय—यह अर्थ । इसी प्रकार ] वैश्वामैत्रिकः । [ विश्वामित्रेण दृष्टः मन्त्रः लक्षणया विश्वामित्रः, तस्य व्याख्यानः, तत्र भवः वा अध्यायः—वैश्वामैत्रिकः । ]

अध्याय अर्थ में ही—इसका क्या फल है ? वासिष्ठी ऋक् । [ यहाँ वसिष्ठेन दृष्टा इस अर्थ में अण् होता है । यहाँ अध्याय अर्थ न होकर 'ऋक्' अर्थ है । अतः यह ठञ् न होकर सामान्य अण् ही होता है । ऋक् स्त्रीलिंग है, अतः ङीप् = ई करके रूप बना है । ] ॥ ६९ ॥

'पौरोडाश' शब्द तथा 'पुरोडाश' शब्द से 'भव' और 'व्याख्यान' अर्थों में ष्ठन् प्रत्यय होता है । पुरोडाश= पिष्टपिण्ड । [ यज्ञकार्य में आटा या चावल को गूथकर जो पिण्ड बनाया जाता है, उसे 'पुरोडाश' कहा जाता है । ]

**पुरोडाशसहचरितो ग्रन्थः पुरोडाशस्तस्य व्याख्यानस्तत्र भवो वा पुरोडाशिकः। पुरोडाशिकी। षकारो ङीषर्थः॥**

**१६४४. छन्दसो यदणौ॥ ७१॥ (१४५०)**

**छन्दः-शब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ प्रत्ययौ भवतः। 'द्व्यचः' इति ठकि प्राप्ते वचनम्। छन्दस्यः। (तै० स० १.६.११.४) छान्दसः (कौ० गृ० १४१.३.४)॥**

**१६४५. द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्॥ ७२॥ (१४५१)**

**द्व्यजादिभ्यः प्रातिपदिकेभ्यो व्याख्यातव्यनामभ्यो भवव्याख्यानयोरर्थयोष्ठक् प्रत्ययो भवति। अणादेरपवादः। द्व्यचस्तावत्—ऐष्टिकः। पाशुकः। ऋकारान्तात्—चातुर्होतृकः। पाञ्चहोतृकः। ब्राह्मण—ब्राह्मणिकः।**

**न्यासः**

षकारो ङीषर्थः, नकार आद्युदात्तार्थः। तेषां संस्कारो मन्त्रः पौराडाश इति। **पुरोडाशसहचरित इति।** तादर्थ्यात् साहचर्याद्वा पुरोडाशा येन मन्त्रेण संस्क्रियन्ते तत्र पुरोडाशशब्दो वर्तते, न पुरोडाशेषु। कुत एतत्? व्याख्यातव्यनामग्रहणानुवृत्तेः। न हि पुरोडाशा व्याख्यातव्यतया प्रसिद्धतराः॥ ७०॥

**छन्दसो यदणौ॥ ७१॥ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुनश्चरणनामाख्याताट्ठक्। अणादेरपवाद इति।** आदिशब्देन ठञः। तत्र य ऋकारान्ता उद्गातृप्रभृतयो बह्वचोऽन्तोदात्तास्तेभ्यष्ठञोऽपवादः। ब्राह्मणप्रथमाध्वरेभ्योऽपि ठञ एव। तेऽपि बह्वचः प्रातिपदिकस्वरेणान्तोदात्ताः। नामाख्यातशब्दादपि समस्तात् तस्यैव। सोऽपि बह्वच्, समासस्वरेणान्तोदात्तश्च। परिशिष्टेभ्योऽणः। **पांशुकम्, पाञ्चहोतृकमिति।** 'इसुसुक्तान्तात् कः' पञ्चहोतृ-चतुर्होतृ-

**पदमञ्जरी**

पुरोडाशशब्दः, न यूपाहवनीयादिवददृष्टनिमित्त इति। **तेषां संस्कारको मन्त्र इति।** 'मखस्य शिरोऽसि' इत्येवमादिः। **पुरोडाशसहचरितो मन्त्रः पुरोडाश इति।** मन्त्र एव हि व्याख्यातव्यो न पुरोडाश;॥ ७०॥

**छन्दसो यदणौ॥** अत्र भवव्याख्यानौ द्वावर्थौ, यदणौ प्रत्ययावपि द्वावेव, तथापि यथासंख्यं न भवति; 'तस्य व्याख्याने' इति यदणौ भवतः, 'तत्र भवः' इति चेत्येवं समुच्चयात्। **द्व्यच इति ठकि प्राप्त इति।** उत्तरसूत्रे द्व्यज्ग्रहणेन ठकि प्राप्त इत्यर्थः॥ ७१॥

**द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट् ठक्॥ अणादेरपवाद इति।** आदिशब्देन ठञः। तत्र ऋच्छब्दे द्व्यक्षु चाणोऽपवादः, पुरश्चरणशब्दोऽपि ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः। असिप्रत्ययो हि

**भावबोधिनी**

उन पिण्डों का संस्कारक मन्त्र—'पौरोडाश' है, 'उस मन्त्र का व्याख्यान' अथवा उस मन्त्र में 'होने वाला' 'पौरोडाशिकः' पौरोडाशिकी। [पौरोडाश + ष्ठन् = ठ - इक, ऋचा अर्थ में ङीष् होता है।] पुरोडाश का सहचरित ग्रन्थ भी 'पुरोडाश' कहा जाता है, उसका 'व्याख्यान' अथवा 'उसमें होने वाला'—पुरोडाशिकः, पुरोडाशिकी। षकार अनुबन्ध [षिद्गौरादिभ्यश्च' पा० सू० ४।१।४१ से] ङीष् प्रत्यय करने के लिए है॥ ७०॥

'छन्दस्' शब्द से 'भव' और 'व्याख्यान' अर्थों में यत् तथा अण् प्रत्यय होते हैं। उदा०—छन्दस्यः, छान्दसः। [छन्दसां व्याख्यानम्, छन्दःसु भवः वा—इस अर्थ में यत्। अण् करने पर आदिवृद्धि।]॥ ७१॥

दो अचों वाला प्रातिपदिक, ऋकारान्त, ब्राह्मण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नाम, आख्यात—इन व्याख्यातव्यनाम प्रातिपदिकों से 'भव' और 'व्याख्यान' अर्थों में ठक् प्रत्यय होता है। यह अणादि का अपवाद है। उदा०—दो अचों वाला—ऐष्टिकः, पाशुकः [इष्टीनां व्याख्यानम्, इष्टिषु भवः वा—इस अर्थ में ठक् = ठ = इक, आदिवृद्धि, भसंज्ञा, इलोप। पशूनां व्याख्यानम्, पशुषु भवः वा—इस अर्थ में ठक् 'इसुसुक्तान्तात्कः' सूत्र में ठ का क आदेश। पशुशब्द पशुयागपरक है। उसका व्याख्यान। इसी प्रकार शेषस्य व्याख्यानः शेषे भवः वा—इस अर्थ में शेष +

**ऋक्—आर्चिकः । प्रथम—प्राथमिकः । अध्वर—आध्वरिकः । पुरश्चरण—पौरश्चरणिकः ।**

**नामाख्यातग्रहणं सङ्घातविगृहीतार्थम् ( म० भा० ) । नामिकः । आख्यातिकः । नामाख्यातिकः ॥**

**१६४६. अणृगयनादिभ्यः ॥ ७३ ॥ ( १४५२ )**

**ऋगयनादिभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोरण् प्रत्ययो भवति । ठञादेरपवादः । आर्गयनः ।**

**न्यासः**

शब्दाविगन्ते द्विगाविति पूर्वपदप्रकृतिस्वरेणाद्युदात्तौ । पूर्वपदं हि 'त्रेः संख्यायाः' इत्युदात्तम् । पुरश्चरणशब्दो ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । आख्यातशब्दः 'गतिरनन्तरः' इत्याद्युदात्तः ।

**सङ्घातविगृहीतार्थमिति** । तच्चैकशेषसमाश्रयणाल्लभ्यत इति वेदितव्यम् ॥ ७२ ॥

**अणृगयनादिभ्यः ॥ ठञादेरपवाद इति** । आदिशब्देन ठकश्छस्य च । तत्र ये बह्वचोऽन्तोदात्तास्तेभ्यष्ठञः । विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकः । व्याकरणशब्दाद् वृद्धाच्छस्य । अण्ग्रहणं किमर्थम् ? न ऋगयनादिभ्यो यथाविहितमेवोच्येत, न चैवं सत्यपवादाष्ठनादयः स्युरिति संभाव्यते; अपवादविधानस्य हि वैयर्थ्यं स्यात् । तस्माद् वचनप्रमाण्याद् यो विहितो न च प्राप्नोत्यन्येन बाधितत्वात् स एव भविष्यति, स चाणेव ? इत्यत आह—**अण्ग्रहणमित्यादि** । तत्र यद्यण्ग्रहणं न क्रियेत, तदा यदत्र वृद्धमन्तोदात्तं तस्माच्छे ठञा बाधिते पुनर्वचनाच्छ

**पदमञ्जरी**

सप्तम्यन्तादुत्पद्यत इति पुरःशब्दः कारकम्, 'पुरोऽव्ययम्' इति वा गतिः । तेन तस्मादप्यण एवापवादः । ये तु तत्र बह्वचोऽन्तोदात्तास्तेषु परत्वादयं ठञं बाधते । **नामाख्यातग्रहणं सङ्घातविगृहीतार्थमिति** । आख्यातार्थं विगृहीतग्रहणम्, नामशब्दात्तु द्व्यच्त्वादेव सिद्धम् ॥ ७२ ॥

**अणृगयनादिभ्यः ॥ ठञादेरिति** । आदिशब्देन ठकः छस्य च ग्रहणम् । तत्र विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकोऽपवादः, व्याकरणशब्दाद् वृद्धाच्छस्य, शेषा बह्वचोऽन्तोदात्ताः, तेष्वञः । अथाण्ग्रहणं किमर्थम्, न ऋगयनादिभ्यो यथाविहितमेवोच्येत, वचनप्रामाण्याद्यो विहितो न च प्राप्नोति अन्येन बाधितत्वात्, स एवाण

**भावबोधिनी**

ठक्=इक, आदिवृद्धि, मसंज्ञा, अलोप करने पर 'शैषिकः' बनता है । ] ऋकारान्त का उदा०—चातुर्होतृकः, पाञ्चहोतृकः । [ चतुर्होतृ शब्द "पृथिवी होता द्यौरध्वर्युः" इत्यादि मन्त्र का नाम है—ऐसा तत्त्वबोधिनीकार ने लिखा है । बालमनोरमाकार "चित्तिः स्रुक्" आदि मन्त्र 'चतुर्होता' यह तैत्तिरीय में प्रसिद्ध है । इसमें चतुर्होतृ + ठक् = क, आदिवृद्धि । इसी प्रकार पञ्चहोतृ + ठक् = क । ] ब्राह्मण—ब्राह्मणिकः । [ ब्राह्मणस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ब्राह्मण + ठक् = इक, आदिवृद्धि । ] ऋक्—आर्चिकः । [ ऋचां व्याख्यानः, तत्र भवः वा—इस अर्थ में ऋच् + ठक्=इक, आदिवृद्धि, रपर—आर्चिकः ] प्राथमिकः । [ प्रथमस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ठक् = इक, आदिवृद्धि ] आध्वरिकः [ अध्वरस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ठक् ] पौरश्चरणिकः । [ पुरश्चरणस्य व्याख्यानः तत्र भवः वा—इस अर्थ में ठक्=इक, आदिवृद्धि । ]

'नामाख्यात' इनका ग्रहण संघात=समुदाय और विगृहीत=अलग अलग दोनों के लिए है । [ क्योंकि 'नाम' यह तो दो अचों वाला है, अतः इससे सिद्ध ही था । अतः 'आख्यात' से स्वतन्त्र रूप से भी प्रत्यय करने के लिए है—] नामिकः । [ नाम्नां व्याख्यानः, तत्र भवः वा—इस अर्थ में ठक् ] आख्यातिकः । [ आख्यातस्य व्याख्यानम्, तत्र भवः वा । ] नामाख्यातिकः । [ नामाख्यातयोर्व्याख्यानः, तत्र भवः वा—इस अर्थ में ठक् = इक, आदिवृद्धि । ] ॥ ७२ ॥

ऋगयन आदि प्रातिपदिकों से 'भव' और 'व्याख्यान' अर्थों में अण् प्रत्यय होता है । यह ठञ् आदि का अपवाद है । उदा०—आर्गयनः । [ ऋगयनम् = ऋक्संहिता, तस्य व्याख्यानः, तत्र भवः वा—इस अर्थ में ऋगयन + अण् = अ, आदिवृद्धि, रपर ] पादव्याख्यानः । [ पदव्याख्यानस्य व्याख्यानः तत्र भवः—इस अर्थ में अण्, आदिवृद्धि । ] अनुवृत्ति से

पादव्याख्यानः । अण्ग्रहणं बाधकबाधनार्थम् । वास्तुविद्यः ।

**ऋगयन । पदव्याख्यान । छन्दोनाम । छन्दोभाषा । छन्दोविचिति । न्याय । पुनरुक्त । [निरुक्त] व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्त्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त्त । निमित्त । उपनिषत् । शिक्षा[1] । ऋगयनादिः ।।**

**न्यासः**

एव भविष्यति । तस्माच्छस्य बाधकस्य बाधनार्थमण्ग्रहणम्, तेन वास्तुविद्य इति सिद्धं भवति वास्तुविद्याशब्दो वृद्धः, समासस्वरेणान्तोदात्तश्च ।

**ऋगयनेत्यादि** । ऋगयनमिति । ऋगयनशब्दो भावसाधन ऋचामयनम्, यद्यपि भावे ल्युट्, तथाप्यभेदोपचारात् तद्वति ग्रन्थे व्याख्यातव्ये वर्तते, स च 'अनो भावकर्मवचने' इत्यन्तोदात्तः । यैस्तु करणे ल्युटं कृत्वा ऋगयनशब्दो व्युत्पाद्यते, तेषां स कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तो न गणे पाठं प्रयोजयति । ततः 'प्राग्दीव्यतोऽण्' इत्येव सिद्धः । पदव्याख्यानशब्दः 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' इत्यन्तोदात्तः । **मानेति** । मनेर्धातोर्यदा घञ् तदा 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तः । अथ मिनातेर्ल्युट्, तदा 'अनो भावकर्मवचने' इत्यन्तोदात्तः । **छन्दोभाषेति** । 'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणान्तोदात्तः । भाषाशब्दः 'गुरोश्च हलः' इत्यकारप्रत्ययान्तो व्युत्पादितः । **छन्दोविचितीति** । 'मन्क्तिन्' इत्यादिनान्तोदात्तः । पुनरुक्तशब्दः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यन्तोदात्तः । **निरुक्तः** 'संज्ञायामनाचितादीनाम्' इत्यन्तोदात्तः । व्याकरणशब्दो ल्युडन्तो मध्योदात्तः । निगमशब्दः 'गोचरसञ्चर' इत्यादिसूत्रे घप्रत्ययान्तो निपातितः प्रत्ययस्वरेणान्तोदात्तः । वास्तुविद्याशब्दोऽङ्गविद्याक्षत्त्रियविद्येत्येतौ च समासस्वरेणान्तोदात्ताः । **उत्पात, उदपाद**—इत्येतो थाथादि-

**पदमञ्जरी**

भविष्यति ? अत आह—**अण्ग्रहणमिति** । असत्यण्ग्रहणे यद् वृद्धमन्तोदात्तं बह्वच्, यथा—वास्तुविद्येति, तस्माद् वृद्धाच्छे ठञा बाधिते पुनर्वचनाच्छ एव स्याद्, अण्ग्रहणात्त्वणेव भवति ।

**ऋगयन[2] इति** । 'पूर्वपदात्संज्ञायामगः' इति णत्वं न भवति, 'अगः' इति प्रतिषेधात् । अयनशब्दश्च भावसाधनोऽभेदोपचाराद् ग्रन्थे वर्तते, 'अनो भावकर्मवचने' इत्यन्तोदात्तः । पदव्याख्यनशब्दः 'मन्क्तिन्व्याख्यान' इत्यन्तोदात्तः । छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः । छन्दो भाषेति[3] कृत्स्वरेणान्तोदात्तः । छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः । पुनरुक्तशब्दस्थाथादिस्वरेण । निरुक्तशब्दः 'संज्ञायामनाचितादीनाम्' इति । निगमशब्दो गोचरादिसूत्रे घान्तो निपातितऽन्तोदात्तः। वास्तुविद्या, क्षत्त्रविद्या, अङ्गविद्येति समासस्वरेण । उत्पातोत्पादशब्दौ थाथादिस्वरेण।

**भावबोधिनी**

अण् का विधान सम्भव होने पर भी पुनः अण् का ग्रहण बाधक ठञादि का बाध करने के लिए है । उदा० = वास्तुविद्यः । [ वस्तुविद्यायाः व्याख्यानः, तत्र भवः वा—इस अर्थ में वास्तुविद्या अन्तोदात्त बह्वच् है, अतः छ की प्राप्ति ठञ् से बाधित होने पर पुनर्वचन के फलस्वरूप छ ही होता । किन्तु जब अण् का पुनर्ग्रहण कर दिया, तब यही होता है—वास्तुविद्या + अण् , आदिवृद्धि, भसंज्ञा, आलोप । ]

इस गण में पठित शब्द—ऋगयन । पदव्याख्यान । छन्दोनाम । छन्दोभाषा । छन्दोविचिति । न्याय । पुनरुक्त । [ निरुक्त ] व्याकरण । निगम । वास्तुविद्या । अङ्गविद्या । क्षत्रविद्या । उत्पात । उत्पाद । संवत्सर । मुहूर्त । निमित्त । उपनिषद् । शिक्षा । ये ऋगयनादि हैं ।। ७३ ।।

---

१. अत्र–'छन्दोविजिनी; न्याय, निरुक, विद्या, उद्याव, भिक्षा'—एते शब्दा अधिका पुस्तकान्तरे ।

२. ऋगयनमिति' मुद्रितपाठः ।

३. छन्दो भावेति' इति मुद्रितपाठः ।

**१६४७. तत आगतः ॥ ७४ ॥ ( १४५३ )**

**तत इति पञ्चमीसमर्थात् 'आगतः' इत्येतस्मिन्नर्थे यथाविविहितं प्रत्ययो भवति । स्रुघ्नादागतः स्रौघ्नः । माथुरः । राष्ट्रियः ।**

**तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यते, न नान्तरीयकम् । स्रुघ्नादागच्छन्वृक्षमूलादागत इति ॥**

**१६४८. ठगायस्थानेभ्यः ॥ ७५ ॥ ( १४५४ )**

**'आय' इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम् । आयस्थानवाचिभ्यः प्रातिपदिकेभ्यष्ठक् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये, अणोऽपवादः । छं तु परत्वाद्बाधते । शुल्कशालाया आगतः, शौल्कशालिकः । [1]आकरिकम् । बहुवचनं स्वरूपविधिनिरासार्थम् ॥**

**न्यासः**

सूत्रेणान्तोदात्तौ । **संवत्सर इति** । 'अशेः सर' इत्यनुवृत्तौ वसेः सम्पूर्वाच्चिदित्येवं व्युत्पादितत्वात् संवत्सरशब्दोऽन्तोदात्तः । मुह्यतेर्धातोः क्तः, क्ते ऊरागमः, तेन मुहूर्त इत्यन्तोदात्तः । निमित्तशब्दोऽपि प्रातिपदिकस्वरेण । **उपनिषदिति** । उपनिपूर्वात् सदेः क्विप् । कृत्स्वरेणान्तोदात्तः ॥ ७३ ॥

**तत आगतः ॥ अथ स्रुघ्नादागच्छन् वृक्षमूलागत इति ।** अत्र वृक्षमूलशब्दात् प्रत्ययः कस्मान्न भवति ? इत्याह—**मुख्यमित्यादि** । मुख्यं प्रधानं विवक्षितम्, तदिह परिगृह्यते; न तु नान्तरीयकमप्रधानम् । न हि मुख्ये सतीतरस्याप्रधानस्य ग्रहणं युक्तम्; मुख्ये कार्यसम्प्रत्ययात् ॥ ७४ ॥

**पदमञ्जरी**

अशेः सरन्, वसेः सम्पूर्वाच्चिदिति संवत्सरशब्दोऽन्तोदात्तः । मुहूर्तनिमित्तशब्दौ प्रातिपदिकस्वरेण । उपनिपूर्वात्सदेः क्विप् उपनिषच्छब्दः कृत्स्वरेणान्तोदात्तः ॥ ७३ ॥

**तत आगतः । तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यत इति ।** मुख्यत्वादेव । अपादानसंज्ञा तु नान्तरीयकस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते ॥ ७४ ॥

**ठगायस्थानेभ्यः ॥ आय इति स्वामिग्राह्यो भाग इति ।** एत्येनं स्वामी, स्वामिनं वाऽयमेतीति कृत्वा ॥७५॥

**भावबोधिनी**

"ततः" =पञ्चमीसमर्थ से 'आगतः" ( आया ) इस अर्थ में यथाविहित प्रत्यय होते हैं । उदा०—स्रुघ्नात् आगतः=स्रौघ्नः । [ स्रुघ्न+अण् आदिवृद्धि, भसंज्ञा, अलोप । स्रुघ्न नामक स्थान से आया ] माथुरः [ मथुराया आगतः ] । राष्ट्रियः । [ राष्ट्रात् आगतः—इस अर्थ में "राष्ट्रावारपाराद् घखौ" सूत्र से घ=इय प्रत्यय, भसंज्ञा अलोप । ]

'ततः' इससे मुख्य जो अपादान है, उसी का ग्रहण होता है, नान्तरीयक का नहीं । अतः 'स्रुघ्नात् आगच्छन् वृक्षमूलात् आगतः' यहाँ नहीं होता है । [ यहाँ मुख्य अपादान के रूप में 'वृक्षमूल' नहीं है । अतः इससे यह प्रत्यय नहीं होता हैं । ] ॥ ७४ ॥

'आय' शब्द से स्वामी द्वारा ग्राह्य भाग ( अंश ) कहा जाता है । वह जिसमें उत्पन्न हो, उसे 'आयस्थान' कहा जाता है । आयस्थानवाची प्रातिपदिकों से 'तत आगतः' ( वहाँ से आया ) इस अर्थ में ठक् प्रत्यय होता है । यह अण् का अपवाद है । छ को तो परवर्ती होने से ही बाधित कर लेता है । उदा०—शुल्कशालाया आगतः–शौल्कशालिक; । [ शुल्कशाला+ठक्=ठ=इक, आदिवृद्धि, भसंज्ञा, आलोप । चुंगीघर से आयी हुई धनराशि ] आकरिकम् [ आकरात् आगतम्—इस अर्थ में आकर+ठक्=इक, आदिवृद्धि । ] बहुवचन का उल्लेख स्वरूपविधि अर्थात् **'आयस्थान'** इस शब्द से ठक् रोकने के लिए होता है ॥ ७५ ॥

---

१. नागरिकम्, आपणिकम्'–इत्यापि कुत्रचित्पुस्तके ।

## १६४९. शुण्डिकादिभ्योऽण् ॥ ७६ ॥ ( १४५५ )

'शुण्डिक'—इत्येवमादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये। आयस्थानठकोऽपवादः। शुण्डिकादागतः शौण्डिकः। कार्कणः।

अण्ग्रहणं बाधकबाधनार्थम्। औदपानः।

शुण्डिक। कृकण। स्थण्डिल। उदपान। उपल। तीर्थ। भूमि। तृण। पर्ण। शुण्डिकादिः॥

## १६५०. विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ ७७ ॥ ( १४५६ )

विद्यायोनिकृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः, तद्वाचिभ्यः शब्देभ्यो वुञ्प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये। अणोऽपवादः। छं तु परत्वाद्बाधते। विद्यासम्बन्धेभ्यस्तावत्—उपाध्यायादागतम् औपाध्यायकम्। शैष्यकम्। आचार्यकम्। योनिसम्बन्धेभ्यः—मातामहकः। पैतामहकः[1]॥

**न्यासः**

ठगायस्थानेभ्यः॥ ७५॥ शुण्डिकादिभ्योऽण्॥ आयस्थानठकोपवाद इति। बाहुल्यादेवमुक्तम्; यस्मात् कृकणशब्दोऽत्र पठ्यते। तत्र हि 'कृकणपर्णाद् भारद्वाजे' इति प्राप्तस्य च्छस्यापवादः। तीर्थशब्दश्चेह धूमादिषु पठ्यते, ततः 'धूमादिभ्यश्च' इति प्राप्तस्य वुञोऽपवादः। अथाण्ग्रहणं किमर्थम्, न शुण्डिकादिभ्यो यथाविहितमेवोच्येत, न चैवं पठ्यमानेऽपवाद एव स्यादित्याशङ्कनीयम्; अपवादविधाने हि वचनवैयर्थ्यं स्यात्, तस्मादन्तरेणाप्यण्ग्रहणमणेव भविष्यति? इत्यत आह—अण्ग्रहणमित्यादि। उदपानशब्दोऽत्र पठ्यत आयस्थानवचनम्, उत्सादिष्वसौ पठ्यते; तत्रासत्यण्ग्रहण आयस्थानठकं बाधित्वा 'उत्सादिभ्योऽञ्' इत्यञेव स्यात्। तस्मात् तस्य बाधकस्य बाधनार्थमण्ग्रहणम्। तेनोदपान इत्यत्राण्सिद्धो भवति॥ ७६॥

**पदमञ्जरी**

शुण्डिकादिभ्योऽण्॥ आयस्थानठकोऽपवाद इति। उपलक्षणमेतत्। कृकणशब्दात् 'कृकणपर्णाद्भारद्वाजे' इति छस्याप्यपवादः। तीर्थशब्दाद् धूमादिलक्षणस्य वुञोऽप्यपवादः। उदपानशब्दादुत्साद्यञोऽप्यपवादः।

अथाण्ग्रहणं किमर्थं न शुण्डिकादिभ्यो यथाविहितमेवोच्येत, वचनसामर्थ्याद्धि, यो विहितो न च प्राप्नोति अन्येन बाधितत्वात्, स एवाण् भविष्यति? अत आह—अण्ग्रहणमिति। उदपानशब्द इह पठ्यते, स चोत्सादिः, तत्रासत्यण्ग्रहणे आयस्थानठकं बाधित्वा 'उत्सादिभ्योऽञ्' इत्यञेव स्यात्। अण्ग्रहणात्त्वणेव भवति॥ ७६॥

विद्यायोनिसम्बन्धेभ्यो वुञ्॥ विद्यायोनिकृत इति। बहुव्रीहौ गतार्थत्वात्कृतशब्दस्याप्रयोगः॥ ७७॥

**भावबोधिनी**

'तत आगतः' ( वहाँ से आया ) इस विषय में, शुण्डिक आदि प्रातिपदिकों से अण् प्रत्यय होता है। आयस्थान मानकर प्राप्त ठक् का अपवाद है। उदा०—शुण्डिकात् आगतः—शौण्डिकः। [ शुण्डिक + अण्, आदिवृद्धि, भसंज्ञा, अलोप। ] कार्कणः। [ कृकणात् आगतः—इस अर्थ में कृकण + अण्, आदिवृद्धि, रपर ]

अण् का ग्रहण बाधक ( अञादि ) का बाध करने के लिए है। उदा०—औदपानः। [ उदपानात् आगतः—यहाँ 'उत्सादिभ्योऽञ्' से प्राप्त अञ् का बाध करके अण् ही होता है। ]

इस गण में पठित शब्द—शुण्डिका कृकण। स्थण्डिल। उदपान। उपल। तीर्थ भूमि। तृण। पर्ण। ये शुण्डिकादि हैं। [ शुण्डिक—यह पाठ भी है। ]

**विमर्श**— सभी संस्करणों में 'शुण्डिक' यही पाठ उपलब्ध होता है। किन्तु इसका अर्थ अस्पष्ट है। यदि यहाँ 'शुण्डिका' पाठ मान लिया जाय तो अच्छा होगा क्योंकि 'मदिराशाला' का वाचक होने से उससे आने=मिलने वाला धन—शौण्डिकम् कह सकते हैं। इस गण में पठित शब्द ऐसे पदार्थों के वाचक है जहाँ से राजा को आमदनी होती है। ]॥७६॥

विद्याकृत और योनिकृत ( जन्मकृत ) सम्बन्ध जिनका है वे विद्यायोनि सम्बन्ध वाले हैं, उनके वाचक शब्दों से 'तत आगतः' ( वहाँ से आया )—इस विषय में वुञ् प्रत्यय होता है। यह अण् का अपवाद है। [ वृद्धसंज्ञक से प्राप्त ]

१. अत्र 'मातुलकः' इत्युदाहरणमपि बहुषु पुस्तकेषु विद्यते।

**१६५१. ऋतष्ठञ् ॥ ७८ ॥ ( १४५७ )**

**'विद्यायोनिसंबन्धेभ्यः' इत्येव । ऋकारान्तेभ्यः प्रातिपदिकेभ्यो विद्यायोनिसम्बन्धवाचिभ्यष्ठञ् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । वुञोऽपवादः । विद्यासम्बन्धवाचिभ्यस्तावत्—होतुरागतं हौतृकम् । पौतृकम् । योनिसम्बन्धवाचिभ्यः—भ्रातृकम् । स्वासृकम् । मातृकम् ।**

**तपरकरणं मुखसुखार्थम् । विद्यायोनिभ्यामन्यत्र—सावित्रम् ( तै० सं० १.८.२.१ ) ॥**

**१६५२. पितुर्यच्च ॥ ७९ ॥ ( १४५८ )**

**पितृशब्दाद् यत् प्रत्ययो भवति चकाराट्ठञ्च 'तत आगतः' इत्येतस्मिन्विषये । पितुरागतं पित्र्यम् । पैतृकम् ॥**

**न्यासः**

**विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ ७७ ॥ ऋतष्ठञ् ॥ तपकरणं मुखसुखार्थमिति ।** अथ दीर्घनिवृत्त्यर्थं कस्मान्न भवति ? असम्भवात् । न हि विद्यायोनिसम्बन्धिषु किञ्चिद्दकारान्तं प्रातिपदिकमस्ति यन्निवृत्त्यर्थस्तकारः स्यात् ॥ ७८ ॥

**पितुर्यच्च ॥ पित्र्यमिति ।** 'रीङ् ऋतः' इति रीङ्, यस्येति लोपः ॥ ७९ ॥

**पदमञ्जरी**

**ऋतुष्ठञ् ॥** एषूदाहरणेषु 'इसुसुक्तान्तात्कः' । एवं च प्रक्रियालाघवाय कञेवायं विधेयः, **तथा तु न** कृतमित्येव ॥ ७८ ॥

**पितुर्यच्च ॥ मित्र्यमिति ।** 'रीङृतः', 'यस्येति च' ॥ ७९ ॥

**भावबोधिनी**

छ का तो परवर्ती होने से बाध कर लेता है । (१) विद्याकृत सम्बन्ध वालों का उदा०—उपाध्यायाद् आगतम्—औपाध्यायकम् [ उपाध्याय + वुञ् = अक, आदिवृद्धि, भसंज्ञा अलोप । ] शैष्यकम् । [ शिष्यादागतम—इस अर्थ में वुञ् = अक, आदिवृद्धि । उपाध्याय विद्या देने वाला है । शिष्य विद्या लेने वाला है । अतः इनका विद्याकृत सम्बन्ध है । ] (२) योनिकृत ( = जन्मकृत ) सम्बन्ध वालों का उदा०—मातामहकः, पैतामहकः । [ मातामहाद् आगतः, पितामहाद् आगतः—इस अर्थ में वुञ् = अक, आदिवृद्धि । ] ॥ ७७ ॥

'विद्यायोनिसम्बन्धेभ्यः' ( विद्याकृत और योनिकृत सम्बन्ध वालों के वाचक शब्दों से )—इसकी अनुवृत्ति होती है । ऋकारान्त प्रातिपदिक जो विद्याकृत सम्बन्ध वाले और योनिकृत सम्बन्ध वाले के वाचक हैं, उनसे 'तत आगतः' ( उससे आया )—इस विषय में ठञ् प्रत्यय होता है । यह ( पूर्व से प्राप्त ) वुञ् का अपवाद है । (१) विद्याकृत सम्बन्ध वाले के वाचकों से ठञ् के उदा०—होतुः आगतं—हौतृकम् । [ पोतुः आगतम्—] पौतृकम् [ होतृ + ठञ्; आदिवृद्धि, ''इसुसुक्तान्तात्कः'' सूत्र से 'ठ' का 'क' आदेश । यज्ञ में 'ब्रह्मा' का कार्य करने वाले पुरोहित का सहायक 'पोता' कहा जाता है । ] (२) योनिकृत सम्बन्धवाची से प्रत्यय के उदा०—भ्रातृकम् । स्वासृकम् । मातृकम् [ इन सभी में ठञ् = ठ का 'क' आदेश होता है । ]

'ऋतः' का तपरकरण केवल मुखसुखार्थ है [ कालनिर्णयार्थ नहीं क्योंकि विद्याकृत और योनिकृत सम्बन्धी वाचकों में कोई भी दीर्घ ऋकारान्त नहीं है । ] विद्या और योनि कृत सम्बन्धीवाचियों से भिन्न में [ अणादि होते हैं ]—सावित्रम् [ सवितुः आगतं—सवितृ + अण् , आदिवृद्धि, यण् ] [ जब ऋकार मुखसुखार्थ है तब—''उष्ठञ्'' ऐसा सूत्र बनाना उचित था । ] ॥ ७८ ॥

'तत आगतः' ( उससे आया ) इस विषय में 'पितृ' शब्द से यत् प्रत्यय और 'च' के बल से ठञ् प्रत्यय होता है । उदा०—पितुः आगतम्—पित्र्यम्, पैतृकम् । [ पितृ + यत् = य, ''रीङ् ऋतः'' सूत्र से 'ऋ' का रीङ् = री आदेश,

## १६५३. गोत्रादङ्कवत् ॥ ८० ॥ ( १४५९ )

**अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते। गोत्रप्रत्ययान्तात्प्रातिपदिकादङ्कवत् प्रत्ययविधिर्भवति 'तत आगतः' इत्येतस्मिन्विषये। अङ्कग्रहणेन तस्येदमर्थसामान्यं लक्ष्यते। तस्माद् वुञतिदिश्यते[1], नाणेव—'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्' (४.३.१२७) इति। औपगवानामङ्कः औपगवकः। कापटवकः। नाडायनकः। चारायणकः। एवम्-औपगवेभ्य आगतमौपगवकम्। कापटवकम्। नाडायनकम्। चारायणकम् ॥**

### न्यासः

**गोत्रादङ्कवत्** ॥ यदि गोत्रादङ्कवत्प्रत्ययविधिर्भवतीत्युच्यतेऽण एदातिदेशः प्राप्नोति, न वुञः। यस्मादण्विधावेवाङ्कग्रहणमस्ति। 'सङ्घाङ्कलक्षण' इत्यादौ सूत्रेण वुञ्विधौ 'गोत्रचरणाद् वुञ्' इत्यत्र? इत्याह—**अङ्कग्रहणेनेत्यादि**। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकग्रहणमुपघातसामान्यस्योपलक्षणम्, एवमिहाप्यङ्कग्रहणं 'तस्येदम्' इत्यस्य। तेनायं सूत्रार्थो भवति—यथा 'तस्येदम्' इत्यत्र गोत्रात् प्रत्ययो भवति, तथा 'तत आगतः' इत्यत्रापि। तेन वुञोऽप्यतिदेश उपपद्यते। नन्वेवमप्यणोऽतिदेशो न प्राप्नोति, न हि तद्विधौ गोत्रग्रहणमस्ति? पूर्वसूत्राद् गोत्रग्रहणमनुवर्तत इत्यदोषः। 'सङ्घाङ्कलक्षण' इत्यादिना येन सूत्रेणाण् विहितस्तद् दर्शयति ॥ ८० ॥

### पदमञ्जरी

**गोत्रादङ्कवत्। अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यत इति।** कथं मुख्ये सम्भवति लक्षणाश्रीयते? व्याख्यानमत्र शरणम्। अपर आह—अङ्के यद् दृष्टं तदतिदिश्यते, न त्वङ्क आहत्य विहितम्। 'गोत्रचरणाद् वुञ्' इत्ययमपि वुञ् तस्येदमितिसामान्ये विहितोऽप्यञादिव्यतिरिक्ते विषयेऽङ्केऽपि दृष्ट इति तस्याप्यतिदेश इति। **औपगवकमिति**। वुञ उदाहरणम्। अणस्तु—वैदम्, गार्ग्यम्, दाक्षमिति। वतिः सर्वसादृश्यार्थः, 'कालेभ्यो भववत्', 'चरणेभ्यो धर्मवत्' इति यथा ॥ ८० ॥

### भावबोधिनी

भसंज्ञा, ईलोप करने पर पितृ्+य=पित्र्य। पितृ+ठञ्=क, आदिवृद्धि। स्त्रीलिङ्ग में ङीप् करने के लिये ठञ् है अतः 'पैतृकी विद्या' आदि बनते हैं। ]॥ ७९ ॥

अपत्याधिकार से भिन्न लौकिक गोत्र अपत्यमात्र लिया जाता है। गोत्रप्रत्ययान्त प्रातिपदिक से 'तत आगतः' (=उससे आया) इस विषय में अङ्कवत् प्रत्यय का विधान होता है। 'अंक' इसके ग्रहण से 'तस्येदम्' (उसका यह है अर्थात् सम्बन्धसामान्य) लक्षित होता है। इसलिये वुञ् का अतिदेश होता है, अण् का नहीं—"संङ्घाङ्कलक्षणेष्विञ्यञिञामण्" ४।३।१२७। औपगवानाम् अङ्कः—औपगवकः। [ अञन्त औपगव शब्द से "तस्येदम्" (४।३।१२०) के अधिकार में 'गोत्रचरणाद् वुञ्' ४।३।१२६ से वुञ् प्रत्यय, आदिवृद्धि, 'वु' का 'अक' आदेश—औपगव्+अक,—औपगवकः। ] कापटवकः कापटु+वुञ्, शेष पूर्ववत्। ] नाडायनकः [ नडस्य गोत्रापत्यम्—इस अर्थ में 'नडादिभ्यः फक्' ४।१।९९ से फक्=आयन करने के बाद पुनः इञ् प्रत्यय करने पर इञन्त मान कर अङ्क अर्थ में वुञ्=अक होने पर प्रस्तुत रूप बनता है। ] चारायणकः [ चरस्य गोत्रापत्यम्—इस अर्थ पूर्ववत् फक्=आयन के बाद इञ् प्रत्यय करके वुञ् करना चाहिये। अङ्क=लक्षण सामान्य है। इसकी व्याख्या आगे "सङ्घाङ्कलक्षण" ४।३।१२७ सूत्र पर की जायगी। ] जिस प्रकार अङ्क अर्थ में प्रत्यय होता है उसी प्रकार 'तत आगतम्' (उससे आया) इस अर्थ में भी होता है, जैसे—औपगवेभ्य आगतम्—औपगवकम्। कापटवेभ्य आगतम्—इस अर्थ में वुञ्=अक होता है। [ कपटु अथवा कापटु—यह शब्द किस गण में पठित है—ज्ञात नहीं होता। अतः इससे विहित प्रत्यय का भी स्पष्टीकरण नहीं होता। ] नाडायनकम्। चारायणकम्। [ 'ततः आगतम्' अर्थ है। सिद्धि पूर्ववत् समझनी चाहिये। ]॥ ८० ॥

---

१. 'गोत्रचरणाद्वुञिति'-इत्यधिकं पुस्तकान्तरे।

**१६५४. हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८१ ॥ ( १४६१ )**

**हेतुभ्यो मनुष्येभ्यश्चान्यतरस्यां रूप्यः प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । मनुष्यग्रहणमहेत्वर्थम् । हेतुः = कारणम् । हेतुभ्यस्तावत्—समादागतं समरूप्यम् । समीयम् । विषमरूप्यम् । विषमीयम् । गहादित्वाच्छः ( ४.२.१३८ ) । मनुष्येभ्यः—देवदत्तरूप्यम् । यज्ञदत्तरूप्यम् । दैवदत्तम् । याज्ञदत्तम् ।**

**बहुवचनं स्वरूपविधिनिरासार्थम् ॥**

**१६५५. मयट् च ॥ ८२ ॥ ( १४६२ )**

**हेतुभ्यो मनुष्येभ्यश्च मयट् प्रत्ययो भवति 'तत आगतः' इत्येतस्मिन्विषये । सममयम् । विषममयम् । मनुष्येभ्यः—देवदत्तमयम् । यज्ञदत्तमयम् । टकारो ङीबर्थः—सममयी ।**

**योगविभागो यथासंख्यनिरासार्थः ॥**

### न्यासः

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ समादागतमिति ।** समाद्धेतोरागतमस्यार्थः । केन पुनरिह **पञ्चमी ?** अस्मादेव ज्ञापकात् । यदयं पञ्चम्यन्तात् प्रत्ययमाह ततो ज्ञायते—हेतौ पञ्चमी भवति ॥ ८१ ॥

**मयट् च ॥ योगविभागो यथासंख्यनिरासार्थ इति ।** ननु चान्यतरस्यांग्रहणेनौत्सर्गिकेऽभ्यनुज्ञायमाने वैषम्याद् यथासंख्यस्य प्राप्तिरेव नास्ति ? सत्यमेतत्; यस्तु रूप्यमयटोरपूर्वत्वाद् विधीयमानापेक्षया यथासंख्यत्वं मन्येत, तं प्रति योगविभागः क्रियते ॥ ८२ ॥

### पदमञ्जरी

**हेतुमनुष्येभ्योऽन्यरस्यां रूप्यः ॥ समादागतमिति ।** समाद्धेतोरागतमित्यर्थः । तत्र 'हेतौ इति तृतीया प्राप्नोति, ज्ञापकात्सिद्धम्, यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह तज्ज्ञापयति—भवति हेतौ पञ्चमीति । नैतदस्ति ज्ञापकम्, यत्र 'विभाषा गुणे' इति पञ्चमी तदर्थमेतत्स्यात्—जाड्यादागत इति ? तस्मात् 'विभाषा गुणे' इत्यत्र विभाषेति योगविभागादगुणवचनादपि पञ्चमी भवति ॥ ८१ ॥

**मयट् च ॥ योगविभागो यथासंख्यनिरासार्थ इति ।** विकल्पार्थेनान्यतरस्यांग्रहणेन रूप्यमयटोः पक्षेऽभावः प्रतिपाद्यते, तदभावे स्वशास्त्रेणैव प्राप्तः प्रत्ययो भवति । तेन रूप्यमयटोरेवानेन विधानादसति **योगविभागे** स्यादेव यथासङ्ख्यमिति भावः ॥ ८२ ॥

### भावबोधिनी

'ततः आगतः' इस विषय में 'हेतु' और 'मनुष्य' शब्द से 'रूप्य' प्रत्यय विकल्प से होता है । मनुष्य का ग्रहण हेतुभिन्न अर्थ के लिए है । हेतु = कारण । हेतु से प्रत्यय के उदा०—समाद् हेतोः आगतम्—समरूप्यम् । [ सम + रूप्य ] पक्ष में 'समीयम् ।' इसी प्रकार विषमरूप्यम्, विषमरूपीयम् । जब 'रूप्य' नहीं होता है तब 'गहादिभ्यश्च' ( पा० सू० ४।२।१३८ ) सूत्र से 'छ' ( ईय ) प्रत्यय होता है । मनुष्यवाचक से प्रत्यय के उदा०—देवदत्तरूप्यम्, यज्ञदत्तरूप्यम् । [ देवदत्तात् आगतम्, यज्ञदत्तात् आगतम्—यह अर्थ है । रूप्य प्रत्यय होता है । पक्ष में अण्' प्रत्यय होता है । ] दैवदत्तम् । याज्ञदत्तम् । [ देवदत्त + अण्, यज्ञदत्त + अण्, आदिवृद्धि । ]

बहुवचम का उल्लेख स्वरूपविधि का निरास करने के लिये है अर्थात् इन्हीं शब्दों से प्रत्यय रोकने के लिये बहुवचन है ॥ ८१ ॥

हेतुवाचक शब्द और मनुष्यवाचक शब्द से 'तत आगतः' ( उससे आया ) इस अर्थ में मयट् प्रत्यय होता है । उदा०—हेतु—सममयम् । विषममयम् । [ सम + मयट्, विषम + मयट् ] । मनुष्यवाचक से—देवदत्तमयम्, यज्ञदत्तमयम् । मयट् का टकार ( टिड्ढाणञ्' ४।१।१५ सूत्र से ) ङीप् करने के लिए है । सममयी । विषममयी ।

योगविभाग = अलग सूत्र बनाना यथासंख्य का वारण करने के लिए है । [ चूँकि हेतु और मनुष्य ये दो हैं ।

**१६५६. प्रभवति ॥ ८३ ॥ ( १४६३ )**

**'ततः' इत्येव। पञ्चमीसमर्थाद् ङ्याप्प्रातिपदिकात् 'प्रभवति' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। प्रभवति = प्रकाशते, प्रथमत उपलभ्यते इत्यर्थः। हिमवतः प्रभवति हैमवती गङ्गा। दारदी सिन्धुः।**

**१६५७. विदूराञ्ञ्यः ॥ ८४ ॥ ( १४६४ )**

**विदूरशब्दाञ् ञ्यः प्रत्ययो भवति 'ततः प्रभवति' इत्येतस्मिन् विषये। अणोऽपवादः। विदूरात्प्रभवति वैदूर्यो मणिः।**

**ननु च वालवायादसौ प्रभवति, न विदूरात्, तत्र तु संस्क्रियते ? एवं तर्हि—**

**वालवायो विदूरं च प्रकृत्यन्तरमेव वा।**
**न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥ ( म० भा० ४.३.८४ )**

**न्यासः**

**प्रभवति ॥ प्रथमत उपलभ्यत इत्यर्थ इति।** प्रथम इत्यनेन प्रशब्दस्यार्थमाचष्टे। 'उपलभ्यते' इत्यनेनापि भवतेः। अनेकार्थत्वाद्धातूनां भवतिरिहोपलब्धौ वर्तते। **हिमवतः प्रभवतीति।** 'भुवः प्रभवः' इति हिमवतोऽपादानसंज्ञा ॥ ८३ ॥

**विदूराञ्ञ्यः ॥ तत्र तु संस्क्रियत इति।** तु शब्दोऽधारणे। संस्क्रियते एव च तत्र विदूरे नगरे, न ततः प्रभवति।

**वालवायो विदूरञ्चेति।** वालवायशब्द एव प्रत्ययमुत्पादयति, न विदूरशब्दः। प्रभवतिशब्दस्य प्रथमत उपलभ्यत इत्यर्थः। प्रभवति च वालवाये पर्वते। तस्माद् यतः प्रभवति तद्वाची वालवायशब्दः प्रकृतित्वेनाक्षिप्यते। यथा विश्रवणरवणा इत्यादेशावेव शिवादिषु पठ्येते। अपत्याधिकारात् तु येन तयोरपत्यापत्यवत्सम्बन्धः स एव प्रकृतित्वेनाक्षिप्यते विश्रवशशब्दः। विश्रवसोऽपत्यं वैश्रवणः, रावणः।

**पदमञ्जरी**

**प्रभवति ॥ प्रकाशते इति।** उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते; 'तत्र जातः' इत्यनेन गतत्वात् ॥ ८३ ॥

**विदूराञ्ञ्यः ॥** अयुक्तोऽयं निर्देश इत्याह—**ननु चेति।**

**वालवायो विदूरं चेति।** बालवायशब्दः प्रत्ययमुत्पादयति, विदूरं चादेशमापाद्यते, सूत्रे त्वादेश एव निर्दिष्टः, तेनानुरूपः स्थानी वालवायशब्द आक्षिप्यते, यथा—शिवादिषु विश्रवणरवणेत्यादेशाभ्यां पठिताभ्यां विश्रवःशब्दः। **प्रकृत्यन्तरमेव वेति।** विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकः, स एवात्र प्रकृतिरित्यर्थः। **न वै तत्रेति चेदिति।** **चेच्छब्दोऽक्षमायाम्,** पर्वतवाची विदूरशब्दो न प्रसिद्ध इति चेद् ब्रूयात्स **जित्वरीवदुपचारेत्**=व्यवहरेत्, **यथा—**

**भावबोधिनी**

रूप्य और मयट् ये प्रत्यय भी दो हैं। अतः एक सूत्र रखने पर यथासंख्य की आपत्ति सम्भव थी। उसे रोकने के लिए यह सूत्र अलग बनाया गया। ] ॥ ८२ ॥

'ततः ( उससे ) इसकी अनुवृत्ति होती है। पञ्चमीसमर्थ ङ्यन्त, आबन्त प्रातिपदिक से 'प्रभवति' इस विषय में यथाविहित प्रत्यय होते हैं। प्रभवति = प्रकाशित होता है। सबसे पहले उपलब्ध होता है, यह अर्थ है। उदा०— हिमवतः प्रभवति गंगा = हैमवती। [ हिमवत् + अण् = अ, आदिवृद्धि, अण् मानकर ङीप्— हैमवती ] दारदी सिन्धुः। [ दरदात् = तन्नामकपर्वतात् प्रभवति = प्रथमतः प्रकाशते—इस अर्थ में दरद + अण्, आदिवृद्धि, ङीप् आदि करने पर रूप बनता है। ] ॥ ८३ ॥

'विदूर' शब्द से 'ततः प्रभवति' [ उससे सर्वप्रथम उपलब्ध होता है ] —इस विषय में ञ्य प्रत्यय होता है। यह अण् का अपवाद है। उदा० —विदूरात् प्रभवति—वैदूर्यः मणिः। [ विदूर + ञ्य = य, आदिवृद्धि, भसंज्ञा, अलोप — वैदूर्यः ]

( शंका—) यह मणि तो वालवाय पर्वत से उपलब्ध होता है, न कि विदूर नामक स्थान से। वहाँ तो उसका

## १६५८. तद्‌गच्छति पथिदूतयोः ॥ ८५ ॥ ( १४६५ )

**तदिति द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति, योऽसौ गच्छति पन्थाश्चेत्स भवति दूतो वा। स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा। [1]माथुरः। तत्स्थेषु गच्छत्सु पन्था गच्छतीत्युच्यते। अथ वा स्रुघ्नप्राप्तिः पथो गमनम्।**

**पथिदूतयोरिति किम्? स्रुघ्नं गच्छति सार्थः॥**

**न्यासः**

अथवा प्रकृत्यन्तरमेव विदूरशब्दो वालवाये वर्तते। विदूरात् भवति वालवायात् पर्वतात् प्रभवतीत्यर्थः। एवं स्थिते यो ब्रूयात्—नैव तत्र वालवाये प्रसिद्धो विदूरशब्द इति तं प्रत्याह—**जित्वरीवदुपाचरेदिति**। यथा बणिज एव वाराणसीं नगरीं 'जित्वरो' इत्युच्चारयन्ति मङ्गलार्थम्, न लोकाः, एवं वैयाकरणा एव वालवायं विदूरमित्युच्चारयन्ति। नियतदेशपुरुषविषया अपि रूढयो भवन्तीत्येतज्जित्वरीवदित्यनेन कथयति॥ ८४॥

**तद्‌गच्छति पथिदूतयोः**॥ पथो निष्क्रियत्वाद् गमेः कर्तृत्वं नोपपद्यत इत्याह—**तत्स्थेष्वित्यादि**। पुरुषवृत्तिर्गमनं पथ्युपचर्यत इति दर्शयति। **अथ वेत्यादि**। प्राप्तावत्र गमिर्वर्तते। अस्ति च प्रत्यक्षगम्यैव स्रुघ्नादीनां पथोऽस्यैवानन्तर्यलक्षणा प्राप्तिः॥ ८५॥

**पदमञ्जरी**

वणिज एव मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एव वालवायं विदूरमुपचरन्ति। नियतपुरुषापेक्षापि प्रसिद्धिर्भवतीत्यर्थः॥ ८४॥

**तद्‌गच्छति पथिदूतयोः**॥ प्राप्तिफले परिस्पन्दे गमिर्वर्तते, न च पथः परिस्पन्दोऽस्ति तस्मात्पुरुषवर्त्ति गमनं पथ्युपचर्यत इत्याह—**तत्स्थेष्विति**। **अथ वेति**। प्राप्तावपि गमिर्वर्तते, यथा देवद्रुयङ्गत इति॥ ८५॥

**भावबोधिनी**

संस्कार ( तराश ) किया जाता है? ( समाधान ) यदि ऐसा है तो वालवाय और विदूर दोनों एक हैं अथवा अलग-अलग प्रकृति हैं। यदि यह कहें कि विदूर शब्द उस पर्वत अर्थ में प्रसिद्ध नहीं है, तब तो 'जित्वरी' के समान व्यवहार करना चाहिये।

**विमर्श**—भाव यह है कि प्रत्यय तो 'वालवाय' से होता है और 'विदूर' यह आदेश हो जाता है। अथवा 'विदूर' यह शब्द नगरवाचक के समान पर्वतवाचक भी है। अतः प्रत्यय होना ठीक है। यदि कोई कहे कि पर्वत अर्थ में 'विदूर' शब्द प्रसिद्ध ही नहीं है तब यह उत्तर देना चाहिये कि जैसे व्यापारी लोग वाराणसी को मंगलभावना से 'जित्वरी' ऐसा कहते हैं, वैसे वैयाकरण भी 'वालवाय' को ही 'विदूर' ऐसा कह देते हैं। अतः इस 'विदूर' से प्रत्यय करने में कोई बाधक नहीं है॥ ८४॥

'तद्' [ उसको ] इस द्वितीयासमर्थ से 'गच्छति' ( जाता है )—इस विषय में यथाविहित प्रत्यय होते हैं जो जाने वाला है वह यदि मार्ग अथवा दूत होता है। उदा०—स्रुघ्नं गच्छति पन्थाः दूतो वा स्रौघ्नः। [ स्रुघ्न नामक स्थान को जाने वाला दूत या मार्ग। स्रुघ्न + अण्, आदिवृद्धि, भसंज्ञा, अलोप ] माथुरः। [ मथुरा को जाने वाला मार्ग अथवा दूत। ] [ पन्था तो अचेतन होने से क्रियाशून्य होता है तब उसका जाना कैसे सम्भव है? इसका उत्तर यह है—] उस मार्ग पर स्थित पुरुषों के जाने पर कहा जाता है—'पन्था गच्छति' ( रास्ता जाता है। ) अथवा स्रुघ्न की प्राप्ति = संयोग होना पन्था का जाना है। [ अर्थात् गमन = प्राप्ति के अर्थ में है। ]

पन्था और दूत—इन्हीं अर्थों में क्यों? स्रुघ्नं गच्छति सार्थः। [ स्रुघ्न जाने वाला सार्थ = व्यापारियों का समूह। यहाँ नहीं होता है। ]॥ ८५॥

---

१. 'राष्ट्रीयः' इत्यधिकःशब्दोऽन्यत्र।

## १६५९. अभिनिष्क्रामति द्वारम् ॥ ८६ ॥ ( १४६६ )

तदित्येव। द्वितीयासमर्थाद् 'अभिनिष्क्रामति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तदभिनिष्क्रामति द्वारं चेत्तद्भवति। आभिमुख्येन निष्क्रामति = अभिनिष्क्रामति, स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम्। माथुरम्। राष्ट्रियम्। द्वारमभिनिष्क्रमणक्रियायां करणं प्रसिद्धम्, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा—साध्वसिश्छिनत्तीति।

द्वारमिति किम्? स्रुघ्नमभिनिष्क्रामति पुरुषः॥

## १६६०. अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥ ( १४६७ )

'तत्' इत्येव। अधिकृत्यैतदपेक्ष्य द्वितीया। अधिकृत्य = प्रस्तुत्य, आगूर्येत्यर्थः। तदिति द्वितीयासमर्थाद्

### न्यासः

**अभिनिष्क्रामति द्वारम्॥** कथं पुनः करणत्वेन प्रसिद्धं द्वारं स्वातन्त्र्येणैव विवक्ष्यते? इत्याह—**यथेत्यादि।** यथा च्छेदनक्रियायामसिः करणत्वेन प्रसिद्धोऽपि स्वातन्त्र्येण विवक्ष्यते। ननु चेतनावतोऽभिनिष्क्रमणं भवति, चेतनावता प्रयुक्तस्य वा—देवदत्तोऽभिनिष्क्रामति, शकटमभिनिष्क्रामतीति, न च द्वारं चेतनावता प्रयुक्तम्, तस्मान्नोपपद्यते तस्याभिनिष्क्रमणम्? नैष दोषः, अचेतनेष्वप्यभिनिष्क्रामतीति व्यवहारो दृश्यते, तद्यथा—अनेन गुहामुखेन वायुरभिनिष्क्रामतीति। निष्क्रियत्वात् तर्हि नोपपद्यते? तत्स्थेषु निष्क्रामत्सु द्वारमभिनिष्क्रमतीत्युपचर्यत इत्यदोषः॥ ८६॥

**अधिकृत्य कृते ग्रन्थे॥** ननु 'कृते' इति कर्मणि निष्ठा, ततश्च तयाभिहितत्वात् कर्मणो द्वितीया न प्राप्नोति? इत्याह--**अधिकृत्येत्यैतदपेक्षया द्वितीयेति।** ल्यबन्तेन या क्रियाभिधीयते तदपेक्षया द्वितीया, न च

### पदमञ्जरी

**अभिनिष्क्रामति द्वारम्॥ द्वारमभिनिष्क्रमणक्रियायामिति।** अनेनैतदाह—तत्स्थेष्वभिनिष्क्रामत्सु करणभूते द्वारे तदारोपाद् द्वारमेवाभिनिष्क्रामतीत्युच्यत इति। अभिनिष्क्रमणं द्वारमिति नोक्तम्; तदिति द्वितीयाधिकारात्, तदा हि कृद्योगलक्षणा षष्ठी प्राप्नोति॥ ८६॥

**अधिकृत्य कृते ग्रन्थे॥ आख्यायिकाभ्य इति।** तादर्थ्ये चतुर्थी, आख्यायिका = गद्यग्रन्थप्रभेदः, तदभिधानाय

### भावबोधिनी

"तद्' इसकी अनुवृत्ति होती है। द्वितीयासमर्थ से 'अभिनिष्क्रामति' ( निकलता है )—इस अर्थ में यथाविहित प्रत्यय होता है जो अभिनिष्क्रमण कर्ता है, वह यदि द्वार हो तभी यह प्रत्यय होता है। आभिमुख्येन निष्क्रामति = सामने होता हुआ निकलता है = अभिनिष्क्रामति। उदा०—स्रुघ्नम् अभिनिष्क्रामति कान्यकुब्जद्वारम् = स्रौघ्नम्। ( स्रुघ्न की ओर निकलने वाला कन्नौज का द्वार ) [ इससे प्रतीत होता है कि कन्नौज शहर की पश्चिमी सीमा स्रुघ्न में समाप्त होती थी। ] माथुरम्। [ मथुरामभिनिष्क्रामति माथुरम्। ] राष्ट्रियः। [ राष्ट्रमभिनिष्क्रामति द्वारम्—इस अर्थ में राष्ट्र + घ = इय, पूर्व के दोनों में अण् और आदिवृद्धि होती है। ] अभिनिष्क्रमण क्रिया में द्वार का करण होना प्रसिद्ध है, वह यहाँ स्वातन्त्र्यरूप से विवक्षित है, जैसे—साधु असिः छिनत्ति। [ तलवार अच्छी तरह काटती है। करणरूप से 'असि' प्रसिद्ध है किन्तु प्रस्तुत वाक्य में उसकी स्वतन्त्ररूप से विवक्षा होने से वह कर्तृसंज्ञक हो जाती है और उक्त कर्ता मानकर प्रथमा होती है। इसी प्रकार द्वार भी यद्यपि करणरूप से ही प्रसिद्ध है किन्तु उसे भी स्वतन्त्ररूप से विवक्षित मानकर कर्तृसंज्ञा हो जाती है। इसीलिये लिखा है - अभिनिष्क्रामति द्वारम्। ]

द्वार—यह किस लिये है? स्रुघ्नमुभिनिष्क्रामति पुरुषः। [ यहाँ नहीं होता है। ]॥ ८६॥

'तत्' इसकी अनुवृत्ति होती है। 'अधिकृत्य' (= विषय बना करके ) इसको मान कर द्वितीया विभक्ति है। अधिकृत्य = प्रस्तुत करके, उद्यमन करके—यह अर्थ है। 'तत्' इस द्वितीयासमर्थ से 'विषय बनाकर किया गया = बनाया

**'अधिकृत्य कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति यत्तत्कृतं ग्रन्थश्चेत्स भवति। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः। गैरिमित्रः। यायातः।**

**ग्रन्थे इति किम्? सुभद्रामधिकृत्य कृतः प्रासादः।**

**❀ लुबाख्यायिकार्थस्य प्रत्ययस्य बहुलम् ❀ ( म० भा० ४.३.८७ वा० १ )। वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता। सुमनोत्तरा। उर्वशी। न च भवति—भैमरथी॥**

## १६६१. शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः॥ ८८॥ ( १४६८ )

**'तत्' इत्येव। 'अधिकृत्य कृते ग्रन्थे' इति च। शिशुक्रन्दादिभ्यो द्वितीयासमर्थेभ्यश्छः प्रत्ययो भवति अधिकृत्य कृते ग्रन्थे। अणोऽपवादः। शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमस्य**

### न्यासः

तस्या यत् कर्म तत् केनचिदभिहितम्। निष्ठया हि ग्रन्थात्मकमेव कर्माभिहितम्, न तु ल्यबन्तक्रियाया यत् कर्म सुभद्रादिकं तदपि। गिरिमित्त्रमधिकृत्य कृतो गैरिमित्त्रः। ययातिमधिकृत्य यायातः।

लुबित्यादि। आख्यायिकायै इति तादर्थ्ये चतुर्थी। आख्यायिकार्थमाख्यायिकामभिधातुं प्रत्ययस्य लुग्भवतीत्यर्थः॥ ८७॥

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः॥** यमसभमिति। 'सभाराजा' इत्यादिना नपुंसकलिङ्गता।

### पदमञ्जरी

यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः। न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते, क्वचिन्न॥ ८७॥

**शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः॥** इन्द्रजननादिराकृतिगण इति। तेन 'विरुद्धभोजनीयमध्यायं व्याख्यास्यामः' इति सिद्धं भवति॥ ८८॥

### भावबोधिनी

गया' ( अधिकृत्य कृते )—इस अर्थ में यथाविहित प्रत्यय होता है यदि जो किया गया है वह ग्रन्थ हो तो ये प्रत्यय होते हैं। 'सुभद्रामधिकृत्य कृतः ग्रन्थः—सौभद्रः। [ सुभद्रा को विषय बनाकर किया = बनाया गया ग्रन्थ—सौभद्रः। सुभद्रा + अण् आदिवृद्धि, भसंज्ञा, आलोप। ] गैरिमित्रः। [ गिरिमित्रमधिकृत्य कृतः ग्रन्थः ] यायातः। [ ययातिमधिकृत्य कृतः ग्रन्थः। ययाति + अण् = अः, आदिवृद्धि, भसंज्ञा, इलोप ]

'ग्रन्थ' इसका क्या फल है? सुभद्रामधिकृत्य कृतः प्रासादः ( सुभद्रा को मान कर बनाया गया महल। )—यहाँ नहीं होता है।

❀ "आख्यायिकार्थक प्रत्यय का बहुलरूप से लुप् होता है। ❀ उदा०—वासवदत्तामधिकृत्य कृता आख्यायिका—वासवदत्ता। [ यहाँ होने वाले प्रत्यय का लुप् = लोप होने से केवल प्रकृति बचती है, उसीसे पूरा अर्थ निकलता है। ] सुमनोत्तरा। उर्वशी [ सुमनोत्तरामधिकृत्य, उर्वशीमधिकृत्य कृता आख्यायिका—इस अर्थ में विहित प्रत्यय का लुप् = लोप हो जाता है। ] लोप नहीं भी होता है—भैमरथी। [ भीमरथमधिकृत्य कृता आख्यायिका। यहाँ अण् का लुप् नहीं होता है। भीमरथ + अण् = अ, आदिवृद्धि, ङीप् भसंज्ञा, अलोप—भैमरथी। ]॥ ८७॥

'तत्' इसकी अनुवृत्ति होती है और 'अधिकृत्य कृते ग्रन्थे' इसकी भी। [ उसको विषय बनाकर किया = बनाया गया ग्रन्थ। ] द्वितीयासमर्थ शिशुक्रन्द आदि शब्दों से 'विषय बनाकर किया गया ग्रन्थ' इस अर्थ में 'छ' प्रत्यय होता है। यह अण् का अपवाद है। शिशुओं का क्रन्दन = रोना, चिल्लाना, शिशुक्रन्द। इस 'शिशुक्रन्द' को विषय बनाकर किया गया ग्रन्थ—शिशुक्रन्दीयः। [ शिशुक्रन्द + छ + ईय, भसंज्ञा, अलोप ] यमस्य सभा—यमसभम् [ "विभाषा सेनासुरा" पा. से २।४।२५ से नपुंसक लिङ्ग ]। यमसभमधिकृत्य कृतः ग्रन्थः—यमसभीयः। द्वन्द्व से—श्येनकपोतीयः।

सभा यमसभम्, यमसभीयः। द्वन्द्वात्—अग्निकाश्यपीयः। श्येनकपोतीयः। शब्दार्थसम्बन्धीयं प्रकरणम्। वाक्यपदीयम्। इन्द्रजननादिभ्यः—इन्द्रजननीयम्। [1]प्रद्युम्नागमनीयम्। इन्द्रजननादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः, प्रातिपदिकेषु न पठ्यते।

❀ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ❀ ( म० भा० ४.३.८८ वा० १ )। दैवासुरम्। राक्षोऽसुरम्। गौणमुख्यम्।

इन्द्रजननादेराकृतिगणत्वात् शिशुक्रन्दादयोऽपि तत्रैव द्रष्टव्याः। प्रपञ्चार्थमेषां ग्रहणम्। एवं च सति देवासुरादिप्रतिषेधोऽपि न वक्तव्यः, ततश्छप्रत्ययस्यादर्शनात्॥

**१६६२. सोऽस्य निवासः॥ ८९॥ ( १४६९ )**

'स' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थं निवासश्चेत्स भवति। निवसन्त्यस्मिन्निवासः—देश उच्यते। स्रुघ्नो निवासोऽस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥

**न्यासः**

यदीन्द्रजननादावेव शिशुक्रन्दादयो द्रष्टव्याः, तत्किमर्थं पृथग्ग्रहणम्? इत्यत आह—**प्रपञ्चार्थमित्यादि**। **एवञ्च सतीत्यादि**। चशब्दो हेतौ। यस्मादिन्द्रजननादेराकृतिगणस्य तदन्तर्भूतानामेव शिशुक्रन्दादीनां प्रपञ्चार्थं ग्रहणम्; तस्मादेवमर्थेऽस्मिन् स्थिते देवासुरादीनां प्रतिषेधो न वक्तव्यः, प्राप्त्यभावात्। येभ्य एव च्छप्रत्ययोऽयं दृश्यते, त एवेन्द्रजननादयः, न च देवसुरादिभ्यो दृश्यते॥ ८८॥ **सोऽस्य निवासः॥ ८९॥**

**पदमञ्जरी**

**सोऽस्य निवासः॥** इह यस्य स्रुघ्नो निवासः स्रुघ्नेऽसौ भवति, ततः 'तत्र भव' इत्येव सिद्धम्, शब्दार्थभेदात्तु पृथगुपादानम्॥ ८९॥

**भावबोधिनी**

[ श्येन और कपोत को विषय बनाकर किया गया ग्रन्थ। महाभारत वनपर्व १३१ अध्याय को श्येनकपोतीय कहा जाता है। उसमें राजा शिवि के पास श्येन और कपोत आने की कथा है। ] शब्दार्थ-सम्बन्धीयं प्रकरणम्। [ शब्दश्च अर्थश्च सम्बन्धश्च—एषां समाहारः शब्दार्थ-सम्बन्धम्। तदधिकृत्य कृतं प्रकरणम्—शब्दार्थसम्बन्ध + छ = ईय ] वाक्यपदीयम्। [ वाक्य और पद को विषय बनाकर किया गया प्रकरण—वाक्यपदीय। इसी प्रकार—किरातार्जुनीयम्। किरात और अर्जुन को विषय बनाकर किया गया महाकाव्य। ] इन्द्रजनन आदि से भी—इन्द्रजननीयम् [ इन्द्रजननभिधिकृत्य कृतं काव्यादिकम् ]। प्रद्युम्नागमनीयम्। [ प्रद्युम्नागमनमधिकृत्य कृतं काव्यादिकम् ]। इन्द्रजननादिगण आकृतिगण है, अतः प्रयोग के अनुसार शब्दों में प्रत्यय कर लेना चाहिये, यह प्रातिपदिकों में नहीं पठित है अपितु गण है।

❀ द्वन्द्व में देवासुर आदि से छ का प्रतिषेध कहना चाहिये। ❀ दैवासुरम्। [ देवों और असुरों को मानकर किया गया काव्यादि। 'छ' न होकर अण् होता है। ] राक्षोऽसुरम्—रक्षः और असुरों को मानकर किया गया काव्यादि। अण् आदिवृद्धि। ] गौणमुख्यम्। [ गौण और मुख्य को मानकर किया गया काव्यादि। ]

ये इन्द्रजननादिगण आकृतिगण हैं अतः शिशुक्रन्द आदि शब्दों को भी इसी के अन्तर्गत देखना चाहिये। तब इनका ग्रहण प्रपञ्च ( विस्तार ) के लिये है। और ऐसी स्थिति में तो देवासुरादि से 'छ' का प्रतिषेध भी नहीं कहना चाहिये, क्योंकि इन शब्दों से 'छ' देखा ही नहीं जाता है॥ ८८॥

'सः' ( वह ) इस प्रथमासमर्थ से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं, जो प्रथमासमर्थ है वह यदि 'निवास' हो तो प्रत्यय होता है। निवसन्ति अस्मिन्—जिसमें रहते हैं लोग वह—निवास = देश कहा जाता है। उदा० स्रुघ्नः निवासः अस्य—स्रौघ्नः। [ स्रुघ्न जिसका निवास = देश है वह पुरुष स्रौघ्न है। ]

---

१. 'सीतान्वेषणीयः'—इत्यधिकं पुस्तकान्तरे।

## १६६३. अभिजनश्च ॥ ९० ॥ ( १४७० )

**'सोऽस्य' इत्येव । स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्प्रथमासमर्थमभिजनश्चेत्स भवति । अभिजनः=पूर्वबान्धवः । तत्सम्बन्धाद् देशोऽप्यभिजन इत्युच्यते—यस्मिन्पूर्वबान्धवैरुषितम् । तस्मादिह देशवाचिनः प्रत्ययः, न बन्धुभ्यः, निवासप्रत्यासत्तेः । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । माथुरः । राष्ट्रियः ।**

**निवासाभिजनयोः को विशेषः ? यत्र सम्प्रत्युष्यते स निवासः । यत्र पूर्वैरुषितं सोऽभिजनः (म० भा०) ।**

**योगविभाग उत्तरार्थः ॥**

### न्यासः

**अभिजनश्च ॥ तत्सम्बन्धाद् देशोऽप्यभिजन उच्यत इति ।** यथा यष्टीः प्रवेशयेति यष्टिसम्बन्धाद् यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे वर्तते । कः पुनरसौ योऽभिजनसम्बन्धादभिजन उच्यते ? इत्यत आह—**यस्मिन्नित्यादि । इह देशवाचिन इत्यादि ।** कथं पुनर्मुख्येऽभिजने गौणात् प्रत्ययो भवति ? इत्याह—**निवासप्रत्यासत्तेरिति ।** निवासोऽनुकृष्यते तेनाभिजनो विशेष्यते निवासो योऽभिजन इति । तस्माद्देशवाचिन एव प्रत्ययो भवति, न बन्धुभ्यः तेषामनिवासत्वात् ।

**निवासाभिजनयोः को विशेषः ?** नास्त्येव कश्चिद् विशेषः, अभिजनस्य निवासभूतत्वादिति मन्यते । **यत्रेत्यादिना** विशेषं दर्शयति ।

**योगविभाग उत्तरार्थ इति ॥** उत्तरेषु योगेष्वभिजनप्रत्यया यथा स्युः, निवासे मा भूवन्निति ॥ ९० ॥

### पदमञ्जरी

**अभिजनश्च ॥ अभिजनाः पूर्वबान्धवा**[1] **इति ।** अभिजायते तेभ्य इति कृत्वा, पूर्वबान्धवाः=पित्रादयः । बन्धुशब्दः प्रज्ञादिः । **तत्सम्बन्धाद्देशोऽपीति ।** यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते, तथाभिजनशब्दो देशे । कः पुनरसौ देशः ? इत्याह—**यस्मिन्निति । तदिहेत्यादि ।** तदिति वाक्योपन्यासे । कथं पुनर्मुख्येऽभिजने सम्भवति गौणात्प्रत्ययो भवति ? इत्याह—**निवासप्रत्यासत्तेरिति ।** प्रत्यासन्नेनान्तरसन्निहितेन निवासशब्देनाभिजनस्य विशेषणादित्यर्थः । इह हि निवासे योऽभिजन इति विशेषिते, तस्माद् देशवाचिन एव प्रत्ययः ।

**निवासाभिजनयोः को विशेष इति ।** अभिजनस्यापि निवासभूतस्य ग्रहणान्नास्त्येव विशेष इत्यर्थः । **तत्रेति ।** यत्र स्वयं निवसति स तस्य **निवासः ।** यत्र तु पूर्वैः पित्रादिभिरुषितं सोऽभिजन इत्यर्थः ॥ ९० ॥

### भावबोधिनी

माथुरः । [ मथुरा निवासः=देशः अस्य सः—यह अर्थ है । ] राष्ट्रियः । [ राष्ट्रं निवासः =देशः अस्य सः —इस अर्थ में राष्ट्र+घ=इय होता है । ] ॥ ८९ ॥

'सोऽस्य' ( वह इसका है ) इसकी अनुवृत्ति होती है । 'सः' इस प्रथमा समर्थ से 'अस्य' इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं यदि जो प्रथमासमर्थ है वह 'अभिजन' हो तो । अभिजन=पूर्व के बन्धु लोग । उनके सम्बन्ध के कारण देश भी 'अभिजन' ऐसा कहा जाता है —जिसमें पूर्व के बन्धु बान्धव रहते थे । अतः यहाँ देशवाची से प्रत्यय होता है बन्धुवाची से नहीं, क्योंकि निवास की प्रत्यासत्ति देश के साथ ही है बन्धुओं के साथ नहीं । उदा० --स्रुघ्नः अभिजनः अस्य स—इस अर्थ में स्रौघ्नः । [ स्रुघ्न+अण् ] माथुरः । [ मथुरा अभिजनः अस्य सः; पूर्ववत् अण्, आदिवृद्धि, भसंज्ञा, आलोप ] राष्ट्रियः । [ राष्ट्रमभिजनमस्य सः —इस अर्थ में राष्ट्र+घ=इय ]

निवास और अभिजन में क्या अन्तर है ? जहाँ इस ( वर्तमान ) समय में रहा जाता है वह 'निवास' है । जहाँ पूर्वज रहते थे वह अभिजन है ।

योगविभाग ( अलग सूत्र बनाना ) आगे अनुवृत्ति के लिये है ॥ ९० ॥

---

१. 'अभिजनः' पूर्ववान्धवः इति काशिका पाठः ।

## १६६४. आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥ ( १४७१ )

'सोऽस्याभिजनः' इति वर्त्तते । 'आयुधजीविभ्यः' इति तादर्थ्ये चतुर्थी, 'पर्वते' इति प्रकृतिविशेषणम् । पर्वतवाचिनः प्रथमासमर्थादभिजनाद् 'अस्य' इति षष्ठ्यर्थे छः प्रत्ययो भवति । आयुधजीविभ्यः—आयुधजीव्यर्थमायुधजीविनोऽभिधातुं प्रत्ययो भवतीत्यर्थः । हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां हृद्गोलीयाः । अन्धकवर्त्तीयाः । रोहितगिरीयाः ।

आयुधजीविभ्य इति किम् ? ऋक्षोदः पर्वतोऽभिजन एषां ब्राह्मणानाम्, आर्क्षोदा ब्राह्मणाः ।

पर्वत इति किम् ? साङ्काश्यका आयुधजीविनः ॥

## १६६५. शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥ ( १४७२ )

'शण्डिक'—इत्येवमादिभ्यः प्रातिपदिकेभ्यो ञ्यः प्रत्ययो भवति 'सोऽस्याभिजनः' इत्येतस्मिन्विषये । अणादेरपवादः । शाण्डिक्यः । सार्वसेन्यः ।

### न्यासः

**आयुधजीविभ्यश्छः पर्वते ॥ आयुधजीविभ्य इति ।** तादर्थ्ये चतुर्थीति पञ्चमीं निराकरोति । यदि ह्येषा पञ्चमी स्यात्, आयुधजीविभ्य एव पर्वतेऽभिधेये च्छो भवतीत्येष सूत्रार्थः स्यात्, न चेष्यते; तस्मात् तादर्थ्य एवैषा चतुर्थी, न पञ्चमीति । **साङ्काश्यका इति ।** 'धन्वयोपधाद् वुञ्' ॥ ९१ ॥

**शण्डिकादिभ्यो ञ्यः ॥ अणादेरपवाद इति ।** आदिशब्देन च्छादेः । अत्र ये शण्डिकादीन् पर्वतानाचक्षते

### पदमञ्जरी

**आयुधजीविभ्यश्छ पर्वते ॥ आयुधजीविभ्य इति तादर्थ्ये चतुर्थीत्यादि ।** यदि तु 'आयुधजीविभ्यः' इति पञ्चमी स्यात्, पर्वतादिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात्, ततश्चायमर्थः स्यात्–आयुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेऽभिधेये छो भवतीति, तत्र सोऽभिजन इत्यधिकारो बाध्येत ॥ ९१ ॥

**शण्डिकादिभ्यो ञ्यः ॥ अणादेरपवाद इति ।** आदिशब्देन छादेः । तत्र यदि शण्डिकादयः पर्वतशब्दाः, ततः

### भावबोधिनी

'सः अस्य अभिजनः' इनकी अनुवृत्ति होती है । 'आयुधजीविभ्यः' यह तादर्थ्य में चतुर्थी है । 'पर्वते' यह प्रकृति का विशेषण है । पर्वतवाची प्रथमासमर्थ अभिजन ( देश ) से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'छ' प्रत्यय होता है । आयुधजीवियों के लिए– आयुधजीवी के अर्थ=आयुधजीवी को कहने के लिए प्रत्यय होता है, यह अर्थ है । उदा०— हृद्गोलः पर्वतः अभिजनः एषाम् आयुधजीविनां ते—हृद्गोलीयाः । [ हृद्गोल नामक पर्वत अभिजन जिन आयुधजीवियों के लिए है वे 'हृद्गोलीय' कहे जाते हैं । हृद्गोल + छ = ईय] अन्धकवर्तीयाः । [अन्धकव वर्तः अभिजनः एषामायुधजीविनां ते अन्धकवर्त्तीयाः । ] रोहितगिरीयाः [ रोहितगिरिः अभिजनः एषामायुधजीविनां ते— रोहितगिरि + छ = ईय, भसंज्ञा, इलोप ] ।

आयुधजीवियों के लिये—इसका क्या फल है ? ऋच्छोदः पर्वतः अभिजनः एषां ब्राह्मणानाम्— ते आर्च्छोदाः ब्राह्मणाः । [ यहाँ ब्राह्मण हैं वे आयुध से जीविका का निर्वाह करने वाले नहीं हैं । अतः 'छ' प्रत्यय न होकर सामान्य 'अण्' प्रत्यय होता है । ]

पर्वतवाची—इसका क्या फल है ? साङ्काश्यकाः आयुधजीविनः । [ यहाँ पर्वत न होकर ग्राम या नगर का वाचक है । अतः प्रत्यय नहीं होता है । ] ॥ ९१ ॥

'शण्डिक' आदि प्रातिपदिकों से 'सः अस्य अभिजनः' ( वह इसका अभिजन = देश है ) इस विषय में 'ञ्य' प्रत्यय होता है । अणादि का अपवाद है । उदा०– शाण्डिक्यः । [ शण्डिकः अभिजनः अस्य सः– शण्डिक + ञ्य = य,

शण्डिक । शर्वकेश । सर्वसेन । शक । सट । रक । शङ्ख । बोध । शण्डिकादिः ॥

## १६६६. सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९३ ॥ ( १४७३ )

आदिशब्दः प्रत्येकमभिसम्बध्यते । सिन्ध्वादिभ्यः प्रातिपदिकेभ्यस्तक्षशिलादिभ्यश्च यथासंख्यमणञौ प्रत्ययौ भवतः 'सोऽस्याभिजनः' इत्येतस्मिन्विषये । सैन्धवः । वार्णवः ।

सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । किष्किन्धा । गब्दिका । उरस । दरत्[1] ।

ये तु कच्छादिषु पठ्यन्ते सिन्धुवर्णुप्रभृतयः, तेभ्यस्तत एवाणि सिद्धे मनुष्यवुञो बाधनार्थं वचनम् ।

तक्षशिलादिभ्यः खल्वपि—ताक्षशिलः । वात्सोद्धरणः ।

तक्षशिला । वत्सोद्धरण । कौमेदुर । काण्डवारण । ग्रामणी । सरालक । कंस । किन्नर । संकुचित । सिंहकोष्ठ । कर्णकोष्ठ । बर्बर । अवसान ॥

**न्यासः**

तेषां मतेन पूर्वसूत्रेण प्राप्तस्य च्छस्यापवादः । ये तु जनपदशब्दाः, तेषाम् 'अवृद्धादपि बहुवचनविषयात्' इति प्राप्तस्य वुञः । शण्डिकशब्दात् 'कोपधात्' इति प्राप्तस्याणः ॥ ९२ ॥

**सिन्धुतक्षशिलादिभ्योऽणञौ ॥ प्रभृतय इति** । प्रभृतिशब्देन मधु, वसन्त, कम्बोज, साल्व, कश्मीर—इत्येते गृह्यन्ते । गन्धार, किष्किन्धा, सारदि, उरस् दरत्—इत्येतेषाम् 'अवृद्धादपि' इत्यादिना वुञि प्राप्ते वचनम् । तक्षशिलादिष्वपि कौमेदुर, काण्डवारण, ग्रामणी—इत्येतेषाम् 'वृद्धाच्छः' इति च्छे प्राप्ते । शेषाणाम् 'प्राग्दीव्यतोऽण्' इत्यणि ॥ ९३ ॥

**पदमञ्जरी**

पूर्वेण छः प्राप्तः; अथ जनपदशब्दाः, ततो 'अवृद्धादपि बहुवचनविषयात्' इति वुञ्, शण्डिकाशब्दात्कोपधादण् प्राप्तः ॥ ९२ ॥

**सिन्धुतक्षशिलादिभ्योऽणञौ ॥ सिन्धुवर्णुप्रभृतय इति** ॥ प्रभृतिशब्देन मधुमत्, कम्बोज, साल्व, कश्मीर,

**भावबोधिनी**

आदिवृद्धि, भसंज्ञा, अलोप ] सार्वसेन्यः । [ सर्वसेनः अभिजनः अस्य सः—सर्वसेन + ञ्य = य । पूर्ववत् वृद्धि, भसंज्ञा, अलोप ।

इस गण में पठित शब्द - शण्डिक । सर्वकेश । सर्वसेन । शक । सट । रक । शङ्ख । बोध । ये शण्डिकादि हैं ॥९२॥

'आदि' शब्द का सम्बन्ध प्रत्येक के साथ है । सिन्ध्वादिगण में पठित और तक्षशिलादिगण में पठित प्रातिपदिक शब्दों से क्रमशः अण् और अञ् प्रत्यय होते हैं 'सः अस्य अभिजनः' ( यह इसका अभिजन है— ) इस विषय में । उदा०—सैन्धवः । [ सिन्धुः अभिजनः अस्य— इस अर्थ में सिन्धु+अण्, आदिवृद्धि, भसंज्ञा, 'उ' का गुण, अवादेश ] वार्णवः । [ वर्णुः अभिजनः अस्य —इस अर्थ में वर्णु+अण् शेष पूर्ववत् ] [सिन्ध्वादिगण में पठित शब्द] सिन्धु । वर्णु । गन्धार । मधुमत् । कम्बोज । कश्मीर । साल्व । किष्किन्धा । गब्दिका । उरस् । दरद ।

जो सिन्धु, वर्ण आदि शब्द कच्छादिगण में पठित हैं उन शब्दों से उसी सूत्र द्वारा अण् सिद्ध रहने पर मनुष्य अर्थ में वुञ् का बाध करने के लिए वचन है ।

तक्षशिला आदि से भी अञ् होता है । उदा०—ताक्षशिलः । वात्सोद्धरणः । [ तक्षशिला अभिजनः अस्य सः—इस अर्थ में तक्षशिला + अञ्, आदिवृद्धि, भसंज्ञा, आलोप ]

इस गण में पठित शब्द— तक्षशिला । वत्सोद्धरण । कौमेदुर । काण्डवारण । ग्रामणी । सरालक । कंस । किन्नर । संकुचित । सिंहकोष्ठ । कर्णकोष्ठ । बर्बर । अवसान । [ इनमें कुछ स्थानवाची नहीं हैं, इनका अभिजनत्व सम्भव नहीं प्रतीत होता है । संभव है प्राचीन काल में ये स्थान रहे हों ।] ॥ ९३ ॥

---

१. कुलून, दिरसा'—एतौ शब्दौ पुस्तकान्तरेऽत्र गणेऽधिकौ ।

**१६६७. तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥ ( १४७४ )**

**तूद्यादिभ्यश्चतुर्भ्यः शब्देभ्यो यथासंख्यं चत्वार एव ढक्, छण्, ढञ्, यक्—इत्येते प्रत्यया भवन्ति 'सोऽस्याभिजनः' इत्येतस्मिन्विषये। अणोऽपवादः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥**

**१६६८. भक्तिः ॥ ९५ ॥ ( १४७५ )**

**समर्थविभक्तिः प्रत्ययार्थश्चानुवर्त्तते। 'अभिजन' इति निवृत्तम्। स इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति, यत्प्रथमासमर्थं भक्तिश्चेत्तद्भवति। भज्यते = सेव्यते इति भक्तिः। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः। राष्ट्रियः॥**

**१६६९. अचित्तादेशकालाट्ठक् ॥ ९६ ॥ ( १४७६ )**

**देशकालव्यतिरिक्तादचित्तवाचिनः प्रातिपदिकाट्ठक् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये। अणोपवादः। वृद्धाच्छं परत्वाद्बाधते। अपूपा भक्तिरस्य आपूपिकः। शाष्कुलिकः। पायसिकः।**

**न्यासः**

**तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥ भक्तिः ॥ भज्यते सेव्यत इति भक्तिरिति।** 'भज सेवायाम्' इत्येतस्मात् कर्मसाधनः क्तिन् ॥ ९५ ॥

**अचित्तादेशकालाट्ठक्॥** ननु च देशकालयोरचित्तयोः प्रतिषेधान्नाञिवयुक्तन्यायेन प्रकृतिरचेतनैव विज्ञास्यते, तत् किमचित्तग्रहणेन, नैतदस्ति; विना हि तेनादेशकालादिति न ज्ञायते—किमयं प्रकृतिनिर्देशः, उत देशकालयोः प्रतिषेध इति ? तत्रानिष्टमपि विज्ञायते—अदेशशब्दात्, कालशब्दाच्चेति। अचित्तग्रहणे तु सति तेनातिप्रसङ्गे

**पदमञ्जरी**

गन्धार–इत्येते गृह्यन्ते। किष्किन्धादिभ्यश्चतुर्भ्यः 'अवृद्धादपि' इति वुञि प्राप्ते वचनम्। तक्षशिलादिष्वपि वृद्धेभ्यश्छः प्राप्तः, शेषेभ्यः 'प्राग्दीव्यतोऽण्' ॥ ९३ ॥ ९४ ॥ ९५ ॥

**अचित्तादेशकालाट्ठक् ॥ अचित्तवाचिन इति।** स्वरूपग्रहणं तु न भवति, देशकालप्रतिषेधात्। तत्साह-

**भावबोधिनी**

(१) तूदी, (२) शलातुर, (३) वर्मती और (४) कूचवार—इन चार शब्दों से क्रमशः (१) ढक्, (२) छण्, (३) ढञ्, (४) यक्—ये चार प्रत्यय होते हैं, 'सः अस्य अभिजनः' ( यह उसका अभिजन है—इस अर्थ में। यह अण् का अपवाद है। उदा०—तौदेयः। [ तूदी + ढक् = ढ = एय, आदिवृद्धि। ] शालातुरीयः। [ शलातुर + छण् = ईय ] वार्मतेयः। [ वर्मती + ढञ् = ढ = एय, आदिवृद्धि, भसंज्ञा, ईलोप ] कौचवार्यः [ कूचवार + यक्, आदिवृद्धि, अलोप ]।

**विमर्श**—पाणिनि को 'शालातुरीय' कहा जाता है। यहाँ अभिजन अर्थ में यह शब्द बना है। अतः उनके पूर्वज शलातुर के रहने वाले थे, ऐसा ज्ञात होता है ॥ ९४ ॥

समर्थविभक्ति और प्रत्ययार्थ इनकी अनुवृत्ति होती है। 'अभिजनः' इसकी निवृत्ति हो जाती है। 'सः' ( वह ) इस प्रथमासमर्थ से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं, यदि जो प्रथमासमर्थ है वह 'भक्ति' हो तो। भज्यते = सेव्यते—इस अर्थ में भक्ति शब्द है। [ जिस स्थानादि का सेवन किया जाय, उससे प्रत्यय होता है। ] उदा०—स्रुघ्नः भक्ति अस्य—स्रौघ्नः। [ स्रुघ्न जिसका सेवित है वह। ] माथुरः। [ मथुरा भक्तिः अस्य ] राष्ट्रियः। [ राष्ट्रं भक्तिरस्य ] ॥ ९५ ॥

देशकाल को छोड़कर अचित्तवाचक जो प्रातिपदिक उससे ठक् प्रत्यय 'सः अस्य भक्तिः' ( वह इसका सेवित है ) इस अर्थ में होता है। अण् का अपवाद है। वृद्धसंज्ञक से प्राप्त 'छ' का परवर्ती होने से बाध करता है। उदा०—अपूपः भक्तिः अस्य—आपूपिकः। [ अपूप + ठक् = ठ = इक, आदिवृद्धि। जिसको पुआ बहुत अच्छे लगते हैं। ] शाष्कुलिकः। [ शाष्कुली

**अचित्तादिति किम् ? दैवदत्तः । अदेशादिति किम् ? स्रौघ्नः । अकालादिति किम् ? ग्रैष्मः ॥**

**१६७०. महाराजाट्ठञ् ॥ ९७ ॥ ( १४७० )**

**महाराजशब्दाट् ठञ् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन् विषये । अणोऽपवादः । महाराजो भक्तिरस्य माहाराजिकः । प्रत्ययान्तरकरणं स्वरार्थम् ॥**

**१६७१. वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥ ( १४७८ )**

**वासुदेव-अर्जुनशब्दाभ्यां वुन्प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये । छाणोरपवादः । वासुदेवो भक्तिरस्य वासुदेवकः । अर्जुनकः ।**

**न्यासः**

सत्यदेशकालादिति प्रतिषेधो विज्ञायते । अस्मादेव च प्रतिषेधादचित्तादिति स्वरूपग्रहणं न भवति । स्वरूपग्रहणे हि देशकालाभ्यां प्रसङ्गो नास्तीति प्रतिषेधं न कुर्यात् ।. ९६ ॥

**महाराजाट्ठञ्** ॥ ननु च पूर्वसूत्रादेव ठगनुवर्तिष्यते, तेनापि हि माहाराजिक इति सिध्यत्येव, तत् कथं ठञ् प्रत्ययान्तरं क्रियते ? इत्याह —प्रत्ययान्तरकरणमित्यादि । ञित्स्वरेणाद्युदात्तत्वं यथा स्यादिति प्रत्ययान्तरकरणम् । ठकि हि सति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात् ॥ ९७ ॥

**वासुदेवार्जुनाभ्यां वुन्** ॥ वासुदेवशब्दाद् वृद्धाच्छस्यापवादः । अर्जुनशब्दादौत्सर्गिकस्याणः । ननु चार्जुनशब्दः क्षत्रियाख्यः, तस्मादुत्तरसूत्रेण प्राप्तस्य वुञोऽपवादो युक्तः ? एवं मन्यते—बहुलग्रहणं तत्र क्रियते, तेनार्जुनशब्दाद वुञ्प्रत्ययस्य प्राप्तिरेव नास्ति, तस्मादस्मादणेव स्यात्, अतस्तदपवादो न्याय्यः ।

**पदमञ्जरी**

चर्यादेशकालयोरपि स्वरूपग्रहणं न भवति ॥ ९६ ॥ ९७ ॥

**वासुदेवार्जुनाभ्यां वुन्** ॥ छाणोरपवाद इति । 'वासुदेवशब्दः संज्ञा' इति वक्ष्यति, तेन तत्रोत्तरस्य वुञोऽप्राप्तिः । अर्जुनशब्दोऽपि यो वृक्षविशेषवचनो वर्णविशेषवचनो वा, न तत्र वुञः प्राप्तिः; क्षत्रियवचनादपि बहुलवचनाद् वुञोऽप्राप्तिरेवेति भावः ।

**भावबोधिनी**

भक्तिरस्य—इस अर्थ में ठक् । जिसे पूड़ी अच्छी लगती है ] पायसिकः । [ पायसं भक्तिरस्य । जिसे खीर खूब अच्छी लगती है । ]

अचित्तवाचक से—इसका क्या फल है ? दैवदत्तः । [ देवदत्त चित्तवान् प्राणी है । अतः ठक् न होकर अण् होता है । ] देशवाचक न हो—इसका क्या फल है ? स्रौघ्नः । [ स्रुघ्न देशवाचक है । अतः ठक् न होकर अण् होता है । ] कालवाचक न हो—इसका क्या फल है ? ग्रैष्मः । [ ग्रीष्म यह कालवाचक है । अतः ठक् न होकर अण् होता है । ] ॥ ९६ ॥

'महाराज' शब्द से ठञ् प्रत्यय 'सोऽस्य भक्तिः' ( यह इसका सेवित है ) इस अर्थ में होता है । यह अण् का अपवाद है । उदा०—महाराजः भक्तिः अस्य—माहाराजिकः । [ महाराज की सेवा करने वाला । ] यह दूसरा प्रत्यय स्वर करने के लिए है ॥ ९७ ॥

'वासुदेव' और 'अर्जुन' शब्दों से वुन् प्रत्यय 'सोऽस्य भक्तिः' ( यह उसका सेवित है ) इस विषय में होता है । यह 'छ' तथा अण् का अपवाद है । उदा०—वासुदेवः भक्तिः अस्य—वासुदेवकः । [ वसुदेव + वुन् = वु = अक ] अर्जुनकः । [ अर्जुनः भक्तिः अस्य—इस अर्थ में अर्जुन + वुन् = वु = अक । वासुदेव की सेवा करने वाला । अर्जुन की सेवा करने वाला ]

**ननु च वासुदेवशब्दाद् 'गोत्रक्षत्त्रियाख्येभ्यः' ( ४.३.९९ ) इति वुञस्त्येव, न चात्र वुन्वुञोर्विशेषो विद्यते ( म० भा० ) किमर्थं वासुदेवग्रहणम् ? संज्ञैषा देवताविशेषस्य न क्षत्त्रियाख्या ( म० भा० ) ।**

**'अजाद्यदन्तम्' ( २.२.३३ ) 'अल्पाच्तरम्' ( २.२.३४ ) इति चार्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयति—अभ्यर्हितं पूर्वं निपततीति ॥**

## १६७२. गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥ ( १४७९ )

**गोत्राख्येभ्यः क्षत्त्रियाख्येभ्यश्च प्रातिपदिकेभ्यो बहुलं वुञ् प्रत्ययो भवति 'सोऽस्य भक्तिः' इत्येत-**

न्यास

**ननु चेत्यादि चोद्यम्** । स्यादेतत् –वुञ्वुनोर्विशेषोऽस्ति, अतो वासुदेवशब्दाद् वुन् विधीयते ? इत्याह –**न चात्रेत्यादि** । वासुदेवशब्दस्य च वुञि वुनि वा सति नास्ति कश्चिद् विशेष इति । तथा ह्युभयत्र तदेव रूपम्, स एव स्वरः । योऽपि वुञि सति पुंवद्भावप्रतिषेधः 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति, स वुन्यपि लभ्यत एव । 'न कोपधायाः' इति । **संज्ञैषात्यादिना,** यदुक्तं—'ननु च वासुदेवशब्दाद् गोत्रक्षत्रियाख्येभ्य इति वुञस्त्येव' इति, तन्निकरोति । गोत्रक्षत्त्रियाख्येभ्यो वुञ् विधीयते । न च वासुदेवशब्दो गोत्राख्यं प्रातिपदिकम्, नापि क्षत्त्रियाख्यम्, तत् कुतो वुञः सम्भवः । **अजाद्यदन्तमित्यादि** । इतिकरणः प्रत्येकमभिसम्बध्यते । 'अजाद्यन्तम्' इत्यनेन 'अल्पाच्तरम्' इत्यनेन वाऽर्जुनशब्दस्य पूर्वनिपातममकुर्वतैतद् विज्ञापितम्–अभ्यर्हितं पूर्वं निपतति । तेन मातापितरौ, श्रद्धामेधे, दीक्षातपसी–इत्यत्र शास्त्रादेवाभ्यर्हितस्य पूर्वनिपातः सिद्धो भवति । अभ्यर्हितत्वं तु वासुदेवशब्दस्य देवताविशेषत्वात् ॥ ९८ ॥

**गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् ॥ ग्लौचुकायनकः॥ ग्लौचुकायनक इति** । ग्लुचुकम्लुचुकशब्दाभ्याम् 'प्राचा-

पदमञ्जरी

**ननु चेत्यादि** । वसुदेवस्यापत्यम्, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण् । **न चात्रेति** । न तावद् वृद्धौ विशेषः; प्रागेव वृद्धत्वात् । योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽस्यापि 'न कोपधायाः' इत्यस्त्येव । **संज्ञैषा देवताविशेषस्येति** । वसत्यस्मिन्सर्वमिति व्युत्पत्त्या परमात्मन एषा संज्ञा । **न क्षत्त्रियाख्येति** । उपलक्षणमेतत्, नापि गोत्राख्येत्यपि द्रष्टव्यम् ।

प्रासङ्गिकं प्रयोजनान्तरं वासुदेवग्रहणस्य दर्शयति—**अजाद्यन्तम्, आल्पाच्तरमिति चेति** । इतिकरणः प्रत्येकमभिसम्बद्ध्यते । यद्यप्येतज्ज्ञाप्यते, तथापि 'श्वयुवमघोनामतद्धिते' इति निर्देशात्क्वचिदन्यथापि भवति ॥ ९८ ॥

**गोत्रक्षत्त्रियाख्येभ्यो बहुलं वुञ् ॥ गोत्रक्षत्त्रियाख्येभ्य इति** । आङ्पूर्वात्ख्यातेर्मूलविभुजादित्वात्कः ।

भावबोधिनी

शंका—'वासुदेव' शब्द से "गोत्रक्षत्त्रियाख्येभ्यः" ( पा० सू० ४।३।९९ ) द्वारा 'वुञ्' प्रत्यय की प्राप्ति है ही और यहाँ ( वासुदेव शब्द में ) 'वुञ्' या 'वुन्' करने पर कोई अन्तर नहीं है । [ क्योंकि 'वासुदेव' में आदिवृद्धि करने की आवश्यकता नहीं है । केवल "अक" करने के लिए वुञ् या वुन् कोई भी किया जा सकता है । ] तब 'वासुदेव' के ग्रहण का क्या फल है ? यह ( वासुदेव ) एक देवताविशेष ( परमात्मा की संज्ञा ) नाम है । [ वसति सर्वम् अस्मिन्—यह व्युत्पत्ति है । ] यह क्षत्त्रियाख्या नहीं है । [ अतः उक्त सूत्र से प्राप्ति नहीं है । ]

"अजादि अदन्त का पूर्वनिपात होता है ।" ( पा० सू० २।२।३३ ) और "अल्प अचों वाले" का पूर्वनिपात होता है ।" ( पा० सू० २।२।३४ ) इनके अनुसार 'अर्जुन' शब्द का पूर्वनिपात [ सम्भव होने पर भी ] न करते हुए [ पाणिनि ] यह ज्ञापित करते हैं कि 'अभ्यर्हित' का पूर्वनिपात होता है ॥ ९८ ॥

गोत्र आख्या वाले तथा क्षत्त्रिय आख्या वाले ( अर्थात् इनके वाचक ) प्रातिपदिकों से 'वह इसकी भक्ति है' इस अर्थ में बहुल रूप से वुञ् प्रत्यय होता है । यह अण् का अपवाद है । परवर्त्ती होने के कारण 'वृद्धाच्छः' से प्राप्त 'छ' का

**स्मिन्विषये। अणोऽपवादः। वृद्धाच्छं परत्वाद्बाधते। ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः। औपगवकः। कापटवकः। क्षत्त्रियाख्येभ्यः— नाकुलकः। साहदेवकः। साम्बकः।**

**आख्याग्रहणं प्रसिद्धक्षत्त्रियशब्दपरिग्रहार्थम्—यथाकथञ्चित् क्षत्त्रियवृत्तिभ्यो मा भूत्।**

**बहुलग्रहणात् क्वचिदप्रवृत्तिरेव—पाणिनो भक्तिरस्य पाणिनीयः। पौरवीयः॥**

## १६७३. जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥ ( १४८० )

**जनपदिनो ये बहुवचने जनपदेन समानशब्दास्तेषां जनपदवत्सर्वं भवति—प्रत्ययः, प्रकृतिश्च, 'सोऽस्य भक्तिः' इत्येतस्मिन्विषये। 'जनपदतदवध्योश्च' (४.२.१२४) इत्यत्र प्रकरणे प्रत्यया विहिताः, ते**

**न्यासः**

मवृद्धात् फिन्' तदन्ताद् वुञ्। आख्याग्रहणं किमर्थम्? न गोत्रक्षत्रियेभ्य इत्येवोच्येत? इत्यत आह—**आख्याग्रहणमित्यादि**। यद्याख्याग्रहणं न क्रियेत, ततो येऽपि कथाकथञ्चित् क्षत्त्रिये वर्तन्ते तेभ्योऽपि स्यात्, नेष्यते; तस्मात् प्रसिद्धक्षत्त्रियपरिग्रहार्थमाख्याग्रहणं क्रियते। तेनेह न भवति—विद्वान् क्षत्त्रियो भक्तिरस्येति। न विद्वच्छब्दः क्षत्त्रियशब्द इति प्रसिद्धः। क्षत्त्रियशब्दस्य तु सामानाधिकरण्यात् क्षत्त्रिये वृत्तिर्गम्यते। **पाणिनीय इति**। पाणिनोऽपत्यमित्यण्, 'गाथिविदथि' इत्यादिना प्रकृतिभावः, पाणिनो भक्तिरस्येति 'वृद्धाच्छः' पाणिनीयः। पौरवो भक्तिरस्येति **पौरवीयः** ॥ ९९ ॥

**जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने** ॥ **एकशब्दा इति**। एतेन समानशब्दोऽयमेकवाचीति दर्शयति। **प्रत्ययः प्रकृतिश्चेति**। सर्वशब्देन योऽर्थ उपात्तस्तमाचष्टे। **तद्वत् अङ्गा क्षत्त्रिया भक्तिरस्येति।** अङ्गादिभ्यः क्षत्त्रियेभ्यो बहुष्वपत्येषु 'द्व्यञ्मगध' इत्यादिना विहितस्याणः 'तद्राजस्य' इत्यादिना लुक् क्रियते।

**पदमञ्जरी**

**आख्याग्रहणमिति**। आङ्पूर्वस्य ख्यातेर्ग्रहणमित्यर्थः। **यथाकथञ्चिदिति**। क्षत्त्रियशब्दसामानाधिकरण्याद्येषां क्षत्त्रिये वृत्तिः, यथा—शूरः क्षत्त्रिय इति, तेभ्यो मा भूदित्यर्थः ॥ ९९ ॥

**जनपदिनां जनपदवत्सर्वं जनपदेन=समानशब्दानां बहुवचने** ॥ **जनपदिनाम्**=जनपदिवाचिनां शब्दानाम् **जनपदवत्**=जनपदवाचिनां शब्दानामिव, **जनपदेन**=जनपदवाचिना शब्देन, **समानशब्दानाम्**=समानश्रुतीनाम्, बहुवचने=बह्वर्थाभिधाने। **वृत्तेरप्येष** एवार्थः। **प्रत्ययः प्रकृतिश्चेति**। अनेन सर्वशब्दस्यार्थो दर्शितः। **जनपदिनो**

**भावबोधिनी**

भी बाध करता है। उदा०—ग्लुचुकायनिः भक्तिः अस्य—इस अर्थ में—ग्लौचुकायनकः। [ ग्लुचुकायनि यह फिन् प्रत्ययान्त है। प्रस्तुत सूत्र से वुञ् = अक करने पर आदिवृद्धि, भसंज्ञा, इलोप होता है। ] औपगवकः। [ औपगवः भक्तिः अस्य—इस अर्थ में वुञ् = अक होता है। ] कापटवकः। [कापटवः भक्तिः अस्य—इसमें बना है। ये गोत्राख्यावाले हैं।] क्षत्त्रिय आख्या वाले के उदा०—नाकुलकः। साहदेवकः। साम्बकः। [ नकुलः भक्तिः अस्य, सहदेवः भक्तिः अस्य, साम्बः भक्तिः अस्य—ये विग्रह हैं। ]

'आख्या' शब्द का ग्रहण प्रसिद्ध क्षत्रियों का परिग्रहण कराने के लिये है—जिस किसी प्रकार क्षत्रिय अर्थ के वाचक से यह न होने लगे। [ इस कारण—विद्वान् क्षत्रियः भक्तिः अस्य—इस अर्थ में यह नहीं होता है। ]

बहुल—के ग्रहण के कारण कहीं-कहीं नहीं होता है—पाणिनः भक्तिः अस्य पाणिनीयः। [ यहाँ वुञ् न होकर 'छ' = ईय होता है। ] पौरवीयः। [ पौरवः भक्तिः अस्य—इस अर्थ में वुञ् न होकर 'छ' होता है। ] ॥ ९९ ॥

जो जनपदी [ जनपदस्वामी ] बहुवचन में जनपद के समान शब्दरूप वाले हैं उन [ जनपदी = स्वामी के वाचक ] शब्दों से जनपद के समान ही सभी कुछ होता है = प्रत्यय, प्रकृति, 'वह इसकी भक्त है' इस विषय में। [ भाव यह है जो जनपद के स्वामी के वाचक शब्द हैं यदि बहुवचन में उनका रूप जनपदवाचक शब्द के समान ही होता है,

**जनपदिभ्योऽस्मिन्नर्थेऽतिदिश्यन्ते । जनपदिनः = जनपदस्वामिनः क्षत्रियाः । अङ्गा जनपदो भक्तिरस्य आङ्गकः । वाङ्गकः । सौह्मकः । पौण्ड्रकः ।**

**तद्वद्—अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः । वाङ्गकः । सौह्मकः । पौण्ड्रकः ।**

**जनपदिनामिति किम् ? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः ।**

**सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोः प्रयोजयति—वृद्धिनिमित्तेषु च वुञादिषु विशेषो नास्तीति ।**

**मद्रवृज्योः कनि विशेषः । मद्रस्यापत्यम् 'द्व्यञ्मगधकलिङ्गसूरमसादण्' ( ४.१.१७० ) इत्यण्—माद्रः ।**

**न्यास**

बहुवचनेऽङ्गादयो जनपदिनो जनपदेन समानशब्दा भवन्ति । अत्र जनपदवृत्तिभ्योऽङ्गादिभ्यो यथा 'सोऽस्य भक्तिः' इत्येतस्मिन् विषये 'जनपदतदवध्योश्च' इति वुञ् भवति, तथा जनपदवृत्तिभ्योऽपि—**पञ्चाला ब्राह्मणा इति ।** यदा पञ्चालनिवासिषु साहचर्यात् पञ्चालादिशब्दो वर्तते, तदा भवन्ति ब्राह्मणा जनपदेन बहुवचने समानशब्दाः, न तु ते जनपदिनः । तेनातिदेशाभावादणेव भवति—**पाञ्चालः ।**

**सर्वग्रहणमित्यादि ।** यदि सर्वग्रहणं न क्रियते, तदा प्रत्ययस्य विधीयमानतया प्राधान्यात् प्रधाने कार्यसम्प्रत्यात् तस्यैवातिदेशः स्यात्, न प्रकृतेः । तस्माद् यथा प्रकृतेरप्यतिदेशो भवति तदर्थं सर्वग्रहणं क्रियते । **स चेत्यादि ।** स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोरेव प्रयोजयति, न बहुषु । जनपदशब्दो नात्र वृद्धः, तस्मादवृद्धो जनपदशब्दो दृश्यते । बहुवचने तु 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुकि कृते विनाप्यतिदेशेनावृद्धः, अत एव भवतीति तत्र प्रकृत्यतिदेशोऽनर्थकः । ततो नैतदर्थं सर्वग्रहणं कर्तव्यम् । **वृद्धिनिमित्तेष्वित्यादि ।**

**पदमञ्जरी**

**जनपदस्वामिन इति ।** स्वस्वामिभावसम्बन्धे मत्वर्थीयं दर्शयति । **अङ्गा जनपदा** इत्यादिना दृष्टान्ते प्रवृत्तिप्रकारमाह । **तद्वदित्यादिना** तूदाहरणम् । सर्वत्र बहुष्वर्थेषु 'द्व्यञ्मगध' इत्यादिना विहितस्याणः 'तद्राजस्य बहुषु' इति लुकि कृते समानशब्दादवृद्धादपि बहुवचनेति वुञि विवक्षिते 'गोत्रेऽलुगचि' इति वचनादाङ्गशब्दाद् वुञ् ।

**पञ्चाला ब्राह्मणा इति ।** अभेदोपचाराद् ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः, तत्रातिदेशाभावादणेव भवति ।

**सर्वग्रहणमित्यादि ।** असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यात्, न प्रकृतेः । वतिनिर्देशस्तु यैर्जनपदैर्ये जनपदिनस्तेषां तज्जनपदप्रत्यय एव यथा स्यात्, जनपदान्तरप्रत्ययो मा भूदित्येवमर्थं स्यात् । न त्वनेन प्रकृत्यतिदेशो लभ्यते, तस्मात्तदर्थं सर्वग्रहणं क्रियते । **स च द्व्येकयोः प्रयोजयतीति** पाठः । स च प्रकृत्यतिदेशः

**भावबोधिनी**

कोई अन्तर नहीं होता है तो ऐसे जनपदस्वामी के वाचक शब्दों से 'सोऽस्य भक्तिः' इस विषय में जनपदवाचक के समान ही प्रकृति—प्रत्यय सब कुछ होता है । ] "जनपद-तदवध्योश्च" ( पा० सू० ४।२।१२४ ) इस प्रकरण में जो प्रत्यय किये गये हैं वे जनपदी = जनपद के स्वामी से प्रस्तुत अर्थ में अतिदिष्ट किये जाते हैं । जनपदी = जनपद के स्वामी क्षत्रिय । उदा० अङ्गाः जनपदः भक्तिः अस्य—आङ्गकः [ अङ्ग — से वुञ् = अक होता है । ] वाङ्गकः । सौह्मकः । पौण्ड्रकः ।

इसी प्रकार — अङ्गाः क्षत्रियाः भक्तिः अस्य ( अङ्ग जनपद के क्षत्रिय हैं भक्ति = सेवित जिसके वह ) इस अर्थ में—आङ्गकः । वाङ्गकः । [ वाङ्गाः क्षत्रियाः भक्तिरस्य—इस अर्थ में वुञ् = अक आदि होते हैं । ] सौह्मकः [ सौह्माः क्षत्रियाः भक्तिरस्य—यह अर्थ है । ] पौण्ड्रकः । [ पौण्ड्राः क्षत्रियाः भक्तिरस्य—यह अर्थ है । ]

जनपद के स्वामियों का—इसका क्या प्रयोजन है ? पञ्चालाः ब्राह्मणाः भक्तिरस्य—इस अर्थ में—पाञ्चालः यही बने । [ अर्थात् औत्सर्गिक अण् ही हो इस लिये "जनपदिनाम्" इसका ग्रहण है । ब्राह्मण जनपद का स्वामी नहीं होता है । ]

'सर्व' इसका ग्रहण प्रकृति के अतिदेश के लिए है और वह द्विवचन तथा एकवचन में अतिदेश को प्रयोजित

**वृजिशब्दादपि 'वृद्धेत्कोशलाजादाञ्ञ्यङ्', ( ४.१.१७१ ) इति ञ्यङ्—वार्ज्यः। स भक्तिरस्येति प्रकृतिनिर्ह्रासे कृते ( म० भा० )—मद्रकः, वृजिकः।**

**जनपदेन समानशब्दानामिति किम् ? अनुषण्डो जनपदः, पौरवो राजा, स भक्तिरस्य पौरवीयः।**

**बहुवचनग्रहणं समानशब्दताविषयलक्षणार्थम्; अन्यथा हि यत्रैव समानशब्दता तत्रैवातिदेशः स्याद्; एकवचनद्विवचनयोर्न स्यात्—वाङ्गो वाङ्गौ वा भक्तिरस्येति। बहुवचने तु, बहुवचने समानशब्दानामेकवचन-**

**न्यास**

वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टायामवृद्धायां प्रकृतौ पुनर्वृद्धिभावात्। **प्रकृतिनिर्ह्रासे कृत इति।** सर्वग्रहणात्प्रकृत्यतिदेशेन निर्ह्रासः। निर्ह्रासः = अल्पता, अपक्षय इत्यर्थः। **माद्र इति।** एताञ्च प्रकृतिमपेक्ष्य मद्र इत्येषा प्रकृतिरल्पा भवति। **वार्ज्य इति।** एताञ्च वृजिरिति। ननु वतेः सर्वसादृश्यार्थत्वाद् वतिनिर्देशेनैव प्रकृतेरतिदेशो भविष्यतीति तत् किं सर्वग्रहणेन ? नैतदस्ति; यथैव तत्र सर्वसादृश्यार्थे वतौ न प्रत्ययार्थो देवतार्थेऽतिदिश्यते, तथेहापि जनपदरूपं जनपदिनि नातिदिश्यते। कस्मात् पुनस्तत्र प्रत्ययार्थो नातिदिश्यते ? वतिना तयोर्भेदस्य प्रतिपादितत्वात्। वतिर्हि सादृश्ये विधीयते, सादृश्यं च भेदाश्रयम्; यदि भवार्थस्यापि देवतार्थतया विपरिणामः स्यात्, तदा वतिरेव न स्यात्। तस्मादन्यस्य कार्यस्य सादृश्यं वतिराचष्टे, प्रत्ययार्थयोस्तु भेदम्, इहापि च जनपदजनपदिनोर्भेदमाचष्ट इति। असति सर्वग्रहणे जनपदरूपं जनपदिनि न लभ्यते। तस्मात् सर्वग्रहणं क्रियते।

**बहुवचनग्रहणमित्यादि।** समानशब्दताया विषयप्रदर्शनं लक्षणम्। तदर्थं बहुवचनग्रहणम्। **अन्यथा हीत्यादि।** यदि बहुवचनग्रहणं न क्रियेतेत्यर्थः। **तत्रैवेति।** बहुवचने। बहुवचन एव तद्राजप्रत्ययस्य लुकि कृते

**पदमञ्जरी**

सर्वग्रहणं द्व्येकयोः प्रयोजयति, न बहुषु; तत्र रूपस्याभिन्नत्वात्। यदाह—**'बहुवचने समानशब्दानाम्' इति।** द्व्येकयोस्तु जनपदवाचिनो रूपं वृद्धम्, जनपदवाचिनस्त्ववृद्धमिति तत्रैव सर्वग्रहणस्य प्रयोजनमित्यर्थः। **अतिदेशः प्रयोजयति, अतिदेशं प्रयोजयतीति** वा पाठे न समीचीनमर्थं पश्यामः। **वृद्धिनिमित्तेष्वित्यादि।** तत्र ह्यतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति नास्ति विशेषः।

**मद्रवृज्योः कनि विशेष इति।** तत्र वृद्ध्यसम्भवात्। **प्रकृतिनिर्ह्रासे कृत इति।** निर्ह्रासः = अपचयः, अल्पत्वमित्यर्थः। **मद्रकः, वृजिक इति।** असति तु प्रकृत्यतिदेशे माद्रको वार्ज्यक इति स्यात्।

**बहुवचनग्रहणमित्यादि।** समानशब्दताया यो विषयस्तस्य लक्षणं = प्रदर्शनं तदर्थम्। **अन्यथा हीति।** यदि बहुवचनग्रहणं न क्रियते। **यत्रैवेति।** बहुवचने, तत्रैव हि तद्राजस्य लुकि कृते समानशब्दता भवति। **एकवचन-**

**भावबोधिनी**

करता है, [ बहुवचन में नहीं। ] और वृद्धि के निमित्त वुञ् आदि में कोई अन्तर नहीं होता है। [ क्योंकि इनमें प्रकृतिरूप का अतिदेश हो जाने पर भी पुनः वृद्धि हो जाती है। ]

'मद्र' और 'वृजि' का 'कन्' प्रत्यय में अन्तर होता है। मद्र का अपत्य—इस अर्थ में "द्व्यञ्मगधकलिङ्गसूरमसादण्" (पा. सू. ४।१।१७०) से अण् प्रत्यय, आदिवृद्धि होने पर—माद्रः। 'वृजि' इससे भी 'वृद्धेत् कोशलाजादाञ्ञ्यङ्" (पा. सू. ४।१।१७१) से ञ्यङ् प्रत्यय होता है—वार्ज्यः। वार्ज्यः भक्तिरस्य—इस अर्थ में प्रकृति का निर्ह्रास = अल्पत्व करने पर-मद्रकः, वृजिकः—ये रूप बनते हैं।

जनपद के समान रूप वाले शब्दों का—इसके ग्रहण का क्या प्रयोजन है ? अनुषण्ड नामक जनपद और पौरव राजा भक्ति है इसकी—इस अर्थ में—पौरवीयः बनता है। [ वुञ् न होकर छ = ईय होता है और प्रकृति का अतिदेश नहीं होता है। ]

बहुवचन का ग्रहण—समानशब्दता का जो विषय उसके प्रदर्शन के लिए है। यदि बहुवचन का ग्रहण नहीं रहता तब तो जहाँ समानशब्दता रहती उसीमें अर्थात् केवल बहुवचन में ही अतिदेश होता, एकवचन और द्विवचन में

द्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति—वाङ्गः वाङ्गौ वा भक्तिरस्य वाङ्गकः ॥

**१६७४. तेन प्रोक्तम् ॥ १०१ ॥ ( १४८१ )**

**तेनेति तृतीयासमर्थात् 'प्रोक्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। प्रकर्षेणोक्तम् = प्रोक्तमित्युच्यते, न तु कृतम्; 'कृते ग्रन्थे' ( ४.३.११६ ) इत्यनेन गतत्वात्। अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः। पाणिनीयम्। आपिशलम्। काशकृत्स्नम् [व्याकरणम्।]॥**

**न्यासः**

समानशब्दता भवति, यतश्च तत्रैवातिदेशः स्यात्। **एकवचनद्विवचनयोर्न स्यादिति।** तत्र समानशब्दताया अभावात्। **बहुवचने त्वित्यादि।** बहुवचनग्रहणे तु सति बहुवचने ये जनपदेन समानशब्दास्तेषां यत्र वा तत्र वातिदेशे विज्ञायमाने द्व्येकयोरप्यसौ सिद्धं भवति ॥ १०० ॥

**तेन प्रोक्तम् ॥ प्रकर्षेणोक्तमिति।** प्रकर्षः = अतिशयः, व्याख्यातं तदध्यापितं वा प्रोक्तम्' इत्युच्यते। **न तु कृतमिति।** न तु कृतमुत्पादितं प्रोक्तमित्युच्यते। कस्मादित्याह—**कृते ग्रन्थ इति गतार्थत्वात्।** कथं माथुरीत्यण्, यावता वृद्धाच्छेनैव भवितव्यम्? नैष दोष; 'कलापिनोऽण्' इत्यत्राण्ग्रहणस्यान्येभ्यो भवतीत्येतत् प्रयोजनं वक्ष्यति, तेन माथुरशब्दादप्यण्भवति। **पाणिनीयमिति।** पाणिनशब्दाद् 'वृद्धाच्छः' इति च्छः। **आपिशलम्, काशकृत्स्नमिति।** अपिशलिकाशकृत्स्निशब्दाभ्याम् 'इञश्च' इत्यण ॥ १०१ ॥

**पदमञ्जरी**

**द्विवचनयोर्न स्यादिति।** लुगभावेन समानशब्दताया अभावात्। ननु सर्वग्रहणं प्रकृत्यतिदेशार्थम्, स च द्व्येकयोः प्रयोजयतीत्युक्तम्, तत्कथं द्व्येकयोर्न स्यात्? तस्मात् सर्वग्रहणाद्यत्र क्वचित्समानशब्दानां [ तत्र ] सर्वत्रातिदेशः सिद्धः। अस्यैवार्थस्य विस्पष्टप्रतिपत्त्यर्थम् 'बहुवचने' इत्युपलक्षणमुपात्तम् ॥ १०० ॥

**तेन प्रोक्तम् ॥ प्रकर्षेणोक्तमिति।** अध्यापनेनार्थव्याख्यानेन वा प्रकर्षेण प्रकाशितमित्यर्थः[1]। प्रकर्षेणेति वचनाद् ग्रामे ग्रामे यद्यपि काठकादिकं देवदत्तादिभिः प्रोच्यते, तथापि तेभ्यः प्रत्ययो न भवति। **न तु कृतमिति।** प्रपूर्वो वचिः करणेऽपि वर्तते इति भावः। मधुरायां भवो माधुरः, ततो वृद्धाच्छे प्राप्ते 'कलापिनोऽण्' इत्यण्ग्रहणादधिकविधानार्थादण्प्रत्ययः। **पाणिनीयमिति।** स्वयमन्येन वा कृतं यत्पाणिनिना प्रोक्तं तदुच्यते ॥ १०१ ॥

**भावबोधिनी**

यह अतिदेश नहीं हो पाता—आङ्गः आङ्गौ वा भक्तिः अस्य—इस अर्थ में नहीं होता [ क्योंकि इनमें समानशब्दता नहीं होती है। ] किन्तु बहुवचन का ग्रहण करने पर तो, बहुवचन में जिनकी समानशब्दता है उनका एकवचन और द्विवचन शब्दरूपों का भेद रहने पर भी यह अतिदेश होता ही है—वाङ्गः वाङ्गौ वा भक्तिरस्य—इस अर्थ में—वाङ्गकः बनता है। [ भाव यह है कि केवल बहुवचन में ही समानशब्दरूप होना चाहिये। ऐसे शब्दों का एकवचन हो या द्विवचन—सर्वत्र यह अतिदेश होता है। ]॥ १०० ॥

'तेन' इस तृतीया-समर्थ से 'प्रोक्तम्' इस अर्थ में यथाविहित प्रत्यय होते हैं। प्रकर्ष से कहा गया = प्रोक्त—ऐसा कहा जाता है, न कि किया गया; क्योंकि "कृते ग्रन्थे" (पा. सू. ४।३।११६) इसीसे यह गतार्थ हो जाता है। दूसरे किसी के द्वारा बनाई गई माथुर द्वारा प्रोक्त वृत्ति को—'माथुरी वृत्ति' कहा जाता है। पाणिनिना प्रोक्तम्—पाणिनीयम्। [ इस अर्थ में पाणिनि + छ = ईय करने पर रूप बनता है। अतः अन्य आचार्यों द्वारा किया गया किन्तु पाणिनि द्वारा प्रोक्त व्याकरण 'पाणिनीय' कहा जाता है। ] आपिशलम्। [ आपिशलिना प्रोक्तम् ] काशकृत्स्नम्। [ काशकृत्स्निनो प्रोक्तम्—इस अर्थ में यह है। ]

**विमर्श**—स्वयं बनाया गया अथवा किसी अन्य के द्वारा बनाया गया जो व्याकरणादि वह यदि पाणिनि द्वारा प्रोक्त = सर्वप्रथम प्रकाशित किया जाता है तो उसे पाणिनिप्रोक्त समझना चाहिये। इसका निष्कर्ष यह है पाणिनि ने

१. 'प्रकर्षेणाप्रकाशित०' इति मुद्रितपाठः।

**१६७५. तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥ ( १४८२ )**

तित्तिर्यादिभ्यः शब्देभ्यश्छण् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। अणोऽपवादः। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः।

छन्दसि [1]चाऽयमिष्यते—तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवति। 'शौनकादिभ्यश्छन्दसि' (४.३.१०६) इत्यत्रास्यानुवृत्तेश्छन्दोऽधिकारविहितानां च तद्विषयतेष्यते[2] ॥

**१६७६. काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ॥ १०३ ॥ ( १४८३ )**

काश्यप-कौशिकशब्दाभ्यामृषिवाचिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये।

**न्यासः**

**तित्तिरिवरतन्तुखण्डिकोखाच्छण्॥ तैत्तिरीया इति।** छण्प्रत्ययः, तेभ्य 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक्। 'छन्दोब्राह्मणानि च तद्विषयाणि' इति तद्विषयता।

**छन्दसीत्यादि।** कथं पुनश्छन्दसि लभ्यते ? न हि च्छन्दोग्रहणमस्तीत्याह—**शौनकादिभ्य इत्यादि** ॥१०२॥

**काश्यपकौशिकाभ्यामृषिभ्यां णिनिः॥ णकार उत्तरत्र वृद्ध्यर्थ इति।** उत्तरेषु योगेषु वृद्धिर्यथा स्यात्। इह हि णकारस्य प्रयोजनं नास्ति, तस्य हि वृद्धिरेव प्रयोजनम्। काश्यपकौशिकशब्दौ वृद्धिमन्तौ। **तस्यापि**

**पदमञ्जरी**

**तित्तिरिवरतन्तुखण्डिकोखाच्छण्॥ छन्दसि चायमिष्यत इति।** छन्दस्यभिधेय इत्यर्थः। **तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवतीति।** न केवलं छणेव, अपि त्वणपि न भवत्यनभिधानादित्याहुः। कथं पुनरिष्यमाणोऽपि छन्दसि लभ्यः ? इत्याह—**शौनकादिभ्य इति** ॥ १०२ ॥

**काश्यपकौशिकाभ्यामृषिभ्यां णिनिः॥ णकार उत्तरत्र वृद्ध्यर्थ इति।** इह तु पूर्वमेव वृद्धेः सिद्धत्वात्। योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, सोऽपि न प्रयोजनम्, णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियाम-

**भावबोधिनी**

अपनी अष्टाध्यायी में अन्य आचार्यों के और अपने मतों को समाज के सामने सर्वप्रथम प्रस्तुत किया, इस लिये इनके व्याकरण को 'प्रोक्त' कहा जाता है ॥ १०१ ॥

'तेन प्रोक्तम्' [ उसके द्वारा प्रोक्त ]—इस विषय में तित्तिरि आदि शब्दों से 'छण्' प्रत्यय होता है। यह अण् का अपवाद है। उदा०—तित्तिरिणा प्रोक्तम् अधीयते—इस अर्थ में – तैत्तिरीयाः। इसी प्रकार 'वारतन्तवीयाः। [ वरतन्तुना प्रोक्तम् अधीयते—यह विग्रह है। ] खाण्डिकीयाः [ खण्डिकेन प्रोक्तम् अधीयते—यह विग्रह है। ] औखीयाः। [ उखेन प्रोक्तम् अधीयते—यह विग्रह है।

वेदविषय में ही यह इष्ट है—तित्तिरिणा प्रोक्तः श्लोकः—यहाँ नहीं होता है। "शौनकादिभ्यश्छन्दसि" ( पा. सू. ४।३।१०६ ) इसकी यहाँ अनुवृत्ति होती है अतः 'छन्दः' इस अधिकार में आने वालों को इस प्रत्यय का विषय बनाना इष्ट है। [ अग्रिम सूत्र से अनुवृत्ति लिखना चिन्तनीय है। अपकृष्यते—लिखना चाहिये था। ]

**विमर्श**—काशिका में 'तेन प्रोक्तम्' इस सूत्र के सम्बन्ध में चर्चा है और विग्रह वाक्य 'तित्तिरिणा प्रोक्तम् अधीयते—ऐसा लिखा है अर्थात् 'तैत्तिरीयाः' का अर्थ है—तित्तिरि द्वारा प्रोक्त का अध्ययन करने वाले। इस शंका का समाधान यह है कि पहले प्रोक्त अर्थ में 'छण्' ( = ईय ) प्रत्यय करने के बाद 'तदधीते तद्वेद' इस अर्थ में जो प्रत्यय होता है उसका "प्रोक्ताल्लुक्" ( पा. सू. ४।२।६४ ) से लुक् हो जाता है। अतः अध्येतृ—अर्थ की प्रतीति होने पर भी रूप में कोई अन्तर नहीं आता है ॥ १०२ ॥

काश्यप और कौशिक शब्द जो ऋषिवाचक हैं, उनसे 'तेन प्रोक्तम्' इस विषय में 'णिनि' प्रत्यय होता है। यह 'छ' का अपवाद है। आगे शब्दों में आदिवृद्धि करने के लिए णकार है। "इन दोनों के द्वारा प्रोक्त कल्प" इसका स्मरण

---

१. वा—इत्यपपाठः। २. 'शौनकादिभ्यश्छन्दसीत्यत्रेदमनुवर्तयितव्यमित्याहुः' इति पाठो बहुत्र दृश्यते।

छस्यापवादः । णकार उत्तरत्र वृद्ध्यर्थः । 'कल्पस्ताभ्यां प्रोक्तः' इति स्मर्यते[1], तस्यापि च तद्विषयता भवत्येव । 'शौनकादिभ्यश्छन्दसि' ( ४.३.१०६ ) इत्यत्रानुवृत्तेश्छन्दोऽधिकारविहितानां च तत्र तद्विषयतेष्यते—काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः[2] ।

ऋषिभ्यामिति किम् ? इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ॥

**न्यासः**

**चेत्यादि** । ननु च च्छन्दोब्राह्मणादीनां तद्विषयता युक्ता, तत् कथं कल्पस्यापि सा भवति ? इत्याह—**शौनकादिभ्य इत्यादि** । स्यादेतत्—यद्यपीदं 'शौनकादिभ्यश्छन्दसि' इत्यत्रानुवर्तता, तथापि च्छन्दोब्राह्मणादीनां तद्विषयतोच्यमाना कल्पस्य न सिध्यत्येव । न हि शौनकादिसूत्रानुवृत्तौ सत्यामस्य योगस्य कल्पश्छन्दोभावं ब्राह्मणभावमापद्यत इत्याह - **छन्दोऽधिकारविहितानाञ्चेत्यादि** । कथं पुनरिष्यमाणाऽपि च्छन्दोऽधिकारविहितानां तद्विषयता लभ्यते ? एवमर्थम् 'छन्दोब्राह्मणानि च तद्विषयाणि' इत्यत्र च्छन्दोग्रहणं स्वर्यते, तेन शौनकादिभ्यश्छन्दसीतीदम्प्रकृतयो विहिताः प्रोक्तप्रत्ययाः, तेषां सर्वेषामेव कल्पादावपि तद्विषयता भवति । अथ गुणकल्पनया कल्पादीनामपि च्छन्दस्त्वं विवक्ष्यते । ननु च 'च्छन्दोब्राह्मणानि च' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् तेनैव प्रागेव कल्पादेस्तद्विषयता प्रतिपादिता, तत् किमर्थं पुनरनेन प्रकारेण प्रतिपाद्यते ? तत्र वा कल्पादेस्तद्विषयताप्रतिपादनार्थश्चकारः कर्तव्यः, अयं वा प्रकार आश्रयितव्य इति विकल्पप्रदर्शनार्थम् ।

**इदानीन्तनेनेत्यादि** । इदानीन्तनो यः काश्यपः स काश्यपगोत्रप्रभवत्वात् काश्यप इत्युच्यते, तथेदानीन्तनो यः कौशिकः स कौशिकगोत्रप्रभवत्वात् कौशिक इत्युच्यते; तत्र यदि ऋषिग्रहणं न क्रियेत ततो णिनिः स्यात्, ऋषिग्रहणे तु सति न भवति । कथं न भवतीति, यावता काश्यपकौशिकशब्दावपि ऋषिशब्दावेव, तथाहि प्रवराध्याये ये पठ्यन्ते त ऋषय इति, इमावपि तत्र पठ्येते एव ? नैष दोषः; विशेषणोपादानसामर्थ्यादियमृषिशब्दः क्रियाशब्दो विज्ञायते—ऋषिर्दर्शनादिति । तेन यावनन्यपुरुषसाधारणेनौपदेशिकेन दर्शनेन तद्वन्तौ काश्यपकौशिकशब्दौ तत इदं प्रत्ययविधानम्; न चेदनीन्तनौ काश्यपकौशिकशब्दावेवंविधौ, ताभ्यां छ एव भवति ॥ १०३ ॥

**पदमञ्जरी**

वृत्तेः । वृत्तावपि 'जातेश्च' इति सिद्धत्वात् चरणत्वेन जातित्वात् । **तस्यापि चेति** । कथं छन्दोब्राह्मणानामुच्यमाना तद्विषयता कल्पस्य भवति ? तत्राह—**शौनकादिभ्य इति** । ननु च तत्रानुवृत्तौ सत्यामप्यस्य योगस्य न कल्पः छन्दो भवति, नापि ब्राह्मणम् ? अत आह —**छन्दोऽधिकारविहितानां चेति** । 'छन्दोब्राह्मणानि' इत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोऽस्यापि णिनेस्तद्विषयता भवतीत्यर्थः । यत्तु 'छन्दोब्राह्मणानि' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनम्, तत्प्रकारान्तरं द्रष्टव्यम् । **इदानीन्तनेन गोत्रकाश्यपेनेति** । न ह्यसावृषिः; अमन्त्रदर्शित्वात् ॥ १०३ ॥

**भावबोधिनी**

किया जाता है क्योंकि कल्प भी इनके प्रोक्तत्व के विषय बनते ही हैं । 'शौनकादि से छन्दोविषय में' इसकी अनुवृत्ति के कारण 'छन्दः' इसके अधिकार में विहित को उसका विषय माना जाता है—काश्यपेन प्रोक्तं कल्पम् अधीयते काश्यपिनः । [ यहाँ भी पहले 'प्रोक्त' अर्थ में काश्यप + णिनि = इ, बनाकर पुनः 'अध्येतृ' अर्थ में प्रत्यय होता है उसका 'प्रोक्ताल्लुक्' सूत्र से लुक् हो जाता है । अतः काश्यपप्रोक्त कल्प का अध्ययन करने वाले यह अर्थ 'काश्यपिनः' का है । ]

'ऋषिवाचक से ही' इसका क्या फल है ? इस समय के किसी गोत्र काश्यप द्वारा प्रोक्त को 'काश्यपीयम्' ही कहा जाता है । [ सामान्य 'छ' प्रत्यय ही होता है । ] ॥ १०३ ॥

---

१. '·······कल्पः, ताभ्याम्' इत्यादिपाठो न्यासपदमञ्जरीविरुद्धः । २. 'कौशिकिनः' इत्यधिकं बहुत्र दृश्यते ।

**१६७७. कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ १०४ ॥ ( १४८४ )**

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनां च ये वाचकाः शब्दाः, तेभ्यो णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। अणोऽपवादः। छं तु परत्वाद्बाधते। तत्र कलाप्यन्तेवासिनश्चत्वारः—हरिद्रुः, छगली, तुम्बरुः, उलप इति। वैशम्पायनान्तेवासिना नव—आलम्बि, पलङ्ग, कमल, ऋचाभ, अरुणि, ताण्डच, श्यामायन, कठ, कलापी इति।

प्रत्यक्षकारिणो गृह्यन्ते, न तु व्यवहिताः शिष्यशिष्याः। कुतः? कलापि-खाण्डायनग्रहणात्। तथा हि—वैशम्पायनान्तेवासी कलापी, तदन्तेवासिनो वैशम्पायनान्तेवासिन एव भवन्ति किं कलापिग्रहणेन? तथा वैशम्पायनान्तेवासी कठस्तदन्तेवासी खाडायनस्तस्य किं शौनकादिषु पाठेन? तदेतत्प्रत्यक्षकारिग्रहणस्य लिङ्गम्।

**न्यासः**

**कलापिवैशम्पायनान्तेवासिभ्यश्च** ॥ अभिधानेऽभिधेयोपचारात् कलापिवैशम्पायनान्तेवास्यभिधायिनः शब्दा इह कलापिवैशम्पायनान्तेवासिशब्देन निर्दिष्टाः। अत एवाह—**कलाप्यन्तेवासिनामिति**।

ननु च ये व्यवहिताः शिष्यशिष्याः, ते कलापिवैशम्पायनान्तेवासिन एव भवन्ति, तदयुक्तमुक्तम्—कलाप्यन्तेवासिनश्चत्वारः, वैशम्पायनान्तेवासिनो नव? इत्याह—**प्रत्यक्षकारिण इत्यादि**। करोतिरत्राध्ययने वर्तते। यैः साक्षादधीतं ते प्रत्यक्षकारिणः। इहान्तेवासिनो गृह्यन्ते चैतावन्त एवेति। किमत्रायुक्तम्? कुत इह साक्षात्कारिणो गृह्यन्ते, न हि व्यवहिता इत्यत्र हेतुं पृच्छति। **कलापिखाण्डायनग्रहणादिति**। हेतुनिर्देशः। **तथा चेत्यादि**। अस्यैव विवरणम्। वैशम्पायनस्य कलाप्यन्तेवासी, तस्य येऽन्तवासिनस्ते वैशम्पायनान्तेवासिनो भवन्त्येव। यदि तत्र ये व्यवहितास्तेऽप्यन्तेवासिनो गृह्येरन् कलापिग्रहणमनर्थकं स्यात्, 'वैशम्पायनान्तेवासिभ्यः' इत्येवं ब्रूयात्। तथा वैशम्पानान्तेवासी कठः, कठान्तेवासो खाण्डायनः; तत्र यदि व्यवहिता अपि गृह्येरन्, ततो वैशम्पायनान्तेवासित्वादनेनैव सूत्रेण सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फल एव स्यात्।

**पदमञ्जरी**

**कलापिवैशम्पायनान्तेवासिभ्यश्च** ॥ **कलाप्यन्तेवासिनामित्यादि**। सूत्रे त्वभेदोपचाराश्रयो निर्देशः। **कलाप्यन्तेवासिनश्चत्वार इत्यादि**। ननु च शिष्यशिष्येष्वपि शिष्यव्यवहारो लोके दृश्यते, तत्कथमियन्त ऐवेति नियमः? तत्राह—**प्रत्यक्षकारिण इति**। क्रियासामान्यवचनः करोतिः प्रकरणादिहाध्ययने वर्तते। **कलापिखाण्डायनग्रहणादिति**। एतदेव विवृणोति—**तथा हीति**। वैशम्पायनस्यान्तेवासी कलापी, यदि चान्तेवास्यन्तेवासिनोऽपि गृह्येरन्, कलापिग्रहणमनर्थकम्, 'वैशम्पायनान्तेवासिभ्यः' इत्येव सिद्धम्; कलाप्यन्तेवासिनामपि वैशम्पायनान्तेवासित्वात्। तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाण्डायनः, तत्र व्यवहितानामपि ग्रहणे वैशम्पायनान्ते-

**भावबोधिनी**

कलापी के अन्तेवासियों के और वैशम्पायन के अन्तेवासियों के वाचक जो शब्द हैं उनसे 'तेन प्रोक्तम्' इस विषय में 'णिनि' प्रत्यय होता है। यह अण् का अपवाद है। 'छ' का तो परवर्ती होने से बाध करेगा। इनमें कलापी के अन्तेवासी चार हैं—हरिद्रु, छगली, तुम्बुरु, उलप। वैशम्पायन के अन्तेवासी नौ हैं—आलम्बि, पलङ्ग, कमल, ऋचाभ, अरुणि, ताण्डच, श्यामायन, कठ, कलापी।

यहाँ प्रत्यक्षकारी = साक्षात् अध्ययन करने वालों का ही ग्रहण होता है न कि व्यवहित = शिष्यों के शिष्यों का। इस कथन में क्या प्रमाण है? कलापी और खाण्डायन का ग्रहण होने से उक्त अर्थ सिद्ध होता है। इसे इस प्रकार समझना चाहिये—वैशम्पायन का अन्तेवासी कलापी है, इसके अन्तेवासी [ परम्परया ] वैशम्पायन के अन्तेवासी ही होते हैं, तब केवल 'वैशम्पायन' के ग्रहण से ही 'कलापी' के अन्तेवासी भी ले लिए जाते, पुनः 'कलापी' के ग्रहण का क्या लाभ? और

**कलाप्यन्तेवासिभ्यस्तावत्—हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। तौम्बुरविणः। औलपिनः। छगलिनो ढिनुकं ( ४.३.१०९ ) वक्ष्यति। वैशम्पायनान्तेवासिभ्यः—आलम्बिनः। पालङ्गिनः। कामलिनः। आर्च्चाभिनः। आरुणिनः। ताण्डिनः। श्यामायनिनः। कठाल्लुकं वक्ष्यति ( ४.३.१०७ ), कलापिनश्चाणम् ( ४.३.१०८ )॥**

**हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।**
**उलपेन चतुर्थेन कालापकमिहोच्यते॥**
**आलम्बिश्चरकः प्राचां [1]पलङ्गकमलावुभौ।**
**ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे॥**

**न्यासः**

तस्मादिहापि कलापिग्रहणं शौनकादिषु खाण्डायनशब्दस्य पाठ एतदुभयमपि साक्षात्कारिग्रहणस्य लिङ्गं ज्ञापकम्। **हारिद्रविण इत्यादि**। हरिद्रुप्रभृतिभ्यः प्रोक्तार्थे णिनिः, तदन्तात् 'तदधीते तद्वेद' इत्यण्, तस्य 'प्रोक्ताल्लुक्'। अयञ्च योगश्छन्दोऽधिकारमनुवर्तते, तेन तद्विषयता भवति।

**उलपेन चतुर्थेनेति**। सहार्थेनेति तृतीया। **कालापकमिति**। कलापिन इदं कालापकम्, 'गोत्रचरणाद् वुञ्'। ननु च 'धर्माम्नाययोर्वुञ्', न चेमे शिष्या धर्माम्नायाः, तत् कथं वुञ्? एवं तर्ह्युपमानाद् भविष्यतीति। कालापकमिव धर्मवच्छिष्या उच्यते। यथा धर्मः कलापिसम्बन्धी, तथा शिष्या इत्युच्यत उपमानार्थः। **आलम्बिर्नाम प्राचां** देशः, तत्रोत्पन्नश्चरकः। एवं **पलङ्गकमलावुभौ**। प्राचामेव त्रयः। एते प्राच्याः वैशम्पायनशिष्या **ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे** चरकाः। मध्यदेशे भवा मध्यमीयाः। गहादिषु 'मध्यमध्यमञ्चाण् चरणे' इति पठ्यते। तस्यायमर्थः—मध्यशब्दो मध्यमभावमापद्यते, छप्रत्ययश्च ततो भवति, चरणे तु प्रत्ययार्थेऽण् च भवतीति।

**पदमञ्जरी**

वासित्वादनेनैव सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फलः स्यात्। उदाहरणेषु छन्दोब्राह्मणानीति तद्विषयता, अध्येतृप्रत्ययस्य 'प्रोक्ताल्लुक्' इति लुक्।

**उलपेन चतुर्थेनेति**। सहयोगे तृतीया। कलापिन इदं कालापकम्, 'गोत्रचरणाद् वुञ्'। तत्र 'धर्माम्नाययोः' इति पठ्यते, तस्मादिहोपमानाच्छिष्यसमूहे प्रयोगः। **आलम्बिश्चरकः प्राचामिति**। आलम्बिर्नाम प्राचां देश

**भावबोधिनी**

वैशम्पायन का अन्तेवासी कठ है और इस कठ का अन्तेवासी खाण्डायन है, इसका 'शौनकादि' में पाठ करने का क्या लाभ? अर्थात् खाण्डायन भी वैशम्पायन का ही अन्तेवासी हो जाता है, अतः अलग से इसके भी उल्लेख की क्या आवश्यकता? यही सिद्ध करते हैं कि प्रत्यक्षकारी = साक्षात् अध्ययनकर्ता शिष्यों का ही ग्रहण है। [ शिष्य के शिष्यों का ग्रहण नहीं है। तभी उक्त दोनों शब्दों का ग्रहण चरितार्थ होता है। ]

कलापी के अन्तवासियों से पहले प्रत्यय कहे जाते हैं—हरिद्रुणा प्रोक्तम् अधीयते—हारद्रविणाः। [ हरिद्रु + णिनि = इन्, आदिवृद्धि, उकार का गुण, अव् आदेश, प्रोक्तार्थक प्रत्यय के बाद आने वाले अध्येतृ—अर्थक प्रत्यय का लुक् ] तौम्बुरविणः। [ तुम्बुरुणा प्रोक्तम् अधीयते—यही विग्रह है। ] औलपिनः। [ उलपेन प्रोक्तमधीयते—यह विग्रह है। ] छगली शब्द से ढिनुक् कहा जायगा।

वैशम्पायन के अन्तेवासी के उदा०—आलम्बिनः। [ आलम्बिना प्रोक्तमधीयते—यह विग्रह है। ] पालङ्गिनः। [ पलङ्गेन प्रोक्तमधीयते ] कामलिनः। [ कमलेन प्रोक्तमधीयते। ] आर्चाभिनः। [ ऋचभेन प्रोक्तमधीयते ] आरुणिनः। [ अरुणेन प्रोक्तमधीयते। ] ताण्डिनः। [ ताण्ड्येन प्रोक्तमधीयते। भसंज्ञा के बाद अलोप और यलोप ] श्यामायनिनः। [ श्यामायनेन प्रोक्तमधीयते ] कठ शब्द से लुक् [ "कठचरकाल्लुक्" पा. सू.४-३-१०७से ] और कलापी से अण् [ "कलापिनोऽण्" पा. सू. ४।३।१०८ से ] अण् कहा जायगा।

---

१. फलिङ्ग—इति पदमंजर्यां पाठः।

श्यामायन उदीच्येषु उक्तं कठकलापिनोः[1]।
चरक इति वैशम्पायनस्याख्या, तत्सम्बन्धेन सर्वे तदन्तेवासिनश्चरका इत्युच्यन्ते ॥

**१६७८. पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ १०५ ॥ ( १४८५ )**

प्रत्ययार्थविशेषणमेतत्। तृतीयासमर्थात्प्रोक्ते णिनिः प्रत्ययो भवति यत्प्रोक्तं पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति। पुराणेन=चिरन्तनेन मुनिना प्रोक्ताः। ब्राह्मणेषु तावत्—भाल्लविनः। शाट्यायनिनः। ऐतरेयिणः। कल्पेषु—पैङ्गी कल्पः। आरुणपराजी।

पुराणप्रोक्तेष्विति किम्? याज्ञवल्कानि ब्राह्मणानि। आश्मरथः कल्पः। याज्ञवल्क्यादयोऽचिरकाला

**न्यासः**

तत्र यदा ऋचाभादीनां चरणत्वं न विवक्ष्यते, तदा च्छे कृते माध्यमीया इति भवति। चरणविवक्षायां त्वणि कृते माध्यमा इति भवति। उदक्षु भवा उदीच्याः; 'द्युप्रागपाग्' इत्यादिना यत्। उदीच्येषु मध्ये श्यामायनिश्चरकः। कठकलापिनावप्युदीच्येषु चरकौ, तयोरुक्तं **कठकलापिनोः**। किमुक्तम्? एकस्य तावदुक्तम्—कठचरकाल्लुग्' इति, अपरस्याप्युक्तम्—'कलापिनोऽण्' इति। ननु च वैशम्पायनान्तेवासिनां कठेनैव चरक इत्येषाख्या, तत् कथं चरक इत्युच्येत? इत्याह—**चरक इति वैशम्पायनस्येत्यादि**। यद्यपि तेषां चरक इत्याख्यानं न भवति, तद्गुरोस्तु वैशम्पायनस्य भवति, तत्सम्बन्धेन तच्छिष्या अपि तथोच्यन्ते ॥ १०४ ॥

**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ भाल्लविन इति**। भाल्लव, शाट्यायन, ऐतरेय—इत्येतेभ्यः प्रोक्तार्थे णिनिः। तदन्तात् 'तदधीते' इत्युत्पन्नस्य 'प्रोक्ताल्लुक्' 'छन्दोब्राह्मणानि' इत्यादिना तद्विषयता। **पैङ्गीति। आरुणपराजीति**। पिङ्गारुणपराजशब्दाभ्यां णिनिः।

**याज्ञवल्कानीति। आश्मरथ इति**। याज्ञवल्क्याश्मरथ्यशब्दाभ्यां गर्गादियञन्ताभ्याम् 'कण्वादिभ्यो गोत्रे'

**पदमञ्जरी**

उत्पन्नश्चरकस्य शिष्यः। एवं **फलिङ्गकमलावुभौ** प्राचामेव त्रय एते प्राच्या उक्ताः। **कठकलापिनोरिति**। 'कठचरकाल्लुक्' इति कठाल्लुगुक्तः। कलापिशब्दादपि 'कलापिनोऽण्' इत्यणुक्तः ॥ १०४ ॥

**पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ भाल्लविन इत्यादि**। भल्लु, शाट्यायन, ऐतरेय, पिङ्ग, अरुण, पराजि—इत्येतेभ्यो णिनिः।

यज्ञवल्काश्मरथशब्दौ कण्वादी, ताभ्यां यञन्ताभ्यामपि 'आपत्यस्य' इति यलोपः। ननु च याज्ञवल्का-

**भावबोधिनी**

इन शब्दों में सबसे पहले—हरिद्रु फिर छगली, तुम्बुरु तथा चौथे उलप शब्द के साथ कालापक यहाँ कहा जाता है।

पूर्वदेश में उत्पन्न चरक का शिष्य आलम्बि है; इसी प्रकार पलङ्ग और कमल ये दोनों भी (पूर्व के) हैं। मध्य देश में उत्पन्न होने वाले ऋचाभ, अरुणि और ताण्ड्य ये तीन हैं। उत्तरदेश में होने वालों में श्यामायन है। कठ तथा कलापी से प्रत्यय और लुक् कहे जा चुके हैं अर्थात् "कठचरकाल्लुक्" से लुक् और "कलापिनोऽण्" से अण् कहा जा चुका है।

'चरक' यह वैशम्पायन का नाम है। इनके सम्बन्ध से सभी शिष्य 'चरक' कहे जाते हैं ॥ १०४ ॥

यह प्रत्ययार्थ का विशेषण है। तृतीयासमर्थ से 'प्रोक्त' अर्थ में णिनि होता है, जो प्रोक्त हैं वे पुरातन मुनि द्वारा प्रोक्त 'ब्राह्मण' और 'कल्प' हों तो। पुराण = चिरन्तन मुनि द्वारा प्रोक्त। उदा०—ब्राह्मणों में—भाल्लविनः। [ भल्लुना पुरातनमुनिना प्रोक्तमधीयते। ] शाट्यायनिनः [ शाट्यायनेन प्रोक्तमधीयते ] ऐतरेयिणः [ ऐतरेयेण प्रोक्तमधीयते। इन सभी में प्रोक्तार्थक प्रत्यय करने के बाद 'अध्येतृ—अर्थक प्रत्यय करके उसका लुक् कर दिया जाता है। ]

उदा०—कल्पों में—पैङ्गी कल्पः। [ पिङ्गेन प्रोक्तः कल्पः ] आरुणपराजी। [ अरुणपराजिना प्रोक्तः कल्पः। ]

१. प्रकृतसूत्रे महाभाष्ये नैतदुपलभ्यते। मूलं मृग्यम्।

**इत्याख्यानेषु वार्त्ता, तया व्यवहरति सूत्रकारः। तद्विषयता कस्मान्न भवति ? प्रतिपदं ब्राह्मणेषु यः प्रत्ययः, तस्य तद्विषयता विधीयते णिनेः। अयं तु याज्ञवल्क्यशब्दस्य कण्वादिषु पाठादण्।**

**न [1]चायं योगश्छन्दोऽधिकारमनुवर्त्तयति, तेन कल्पेष्वपि न भवति।**

**पुराण इति निपातनात्तुडभावः। न [1]चात्यन्तबाधैव, तेन पुरातनमित्यपि भवति॥**

**न्यासः**

इत्यण्, 'आपत्यस्य' इत्यादिना यलोपः। ननु याज्ञवल्कादीन्यपि पुराणप्रोक्तान्येव ब्राह्मणानि, ब्राह्मणान्तरैः पुराणप्रोक्तैस्तुल्यत्वात् ? इत्याह—**याज्ञवल्क्य इत्यादि**। आख्यानेषु ह्येषा वार्त्ता—याज्ञवल्क्यादयोऽपरकालाः प्रवक्तारो अन्येभ्यः प्रवक्तृभ्यः। तथा च वस्तुत्वमनपेक्ष्य व्यवहरति सूत्रकार इत्यदोषः। **तद्विषयता कस्मान्न भवति**। 'छन्दोब्राह्मणानि' इत्यादिनेति भावः। **प्रतिपदमित्यादि**। लक्षणप्रतिपदोक्तपरिभाषया हि प्रतिपदं विशेषणम्। ब्राह्मणमुच्चार्य ब्राह्मणेषु यः प्रत्ययो विहितस्तस्य तद्विषयता विधीयते। तस्मात् तद्विषयतास्य न भवति। कल्पेषु तर्हि कस्मान्न भवति, यथा—काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिन इत्यत्र ? इत्याह—**न चायमित्यादि**। छन्दोऽधिकारे ये योगास्तद्विहितस्य प्रत्ययस्य तद्विषयता भवति, न चायं योगश्छन्दोऽधिकार-मनुवर्तते; तेनैतद्विहितस्य प्रत्ययस्याध्येतृविषयता कल्पेषु न भवति—पैङ्गी कल्पः, आरुणपराजी कल्प इति।

पुराण इति कोऽयं शब्दः, यावता 'सायंचिरम्' इत्यादिना ट्युट्युलोः सन्नियोगेन तुटि कृते पुरातनमिति भवितव्यम् ? इत्यत आह—**पुराण इति निपातनात् तुडभावः**। यद्येवम्, न भवति पुरातनम् ? इत्याह—**न चेत्यादि**। ननु 'बाधकान्यपि निपातनानि' इत्यतो भवितव्यमेव बाधकेनेति ? अबाधकान्यपि। अबाधकान्यपि भवन्ति, एतच्च 'शदेरगतौ तः' इत्यत्र प्रतिपादितम्॥ १०५॥

**पदमञ्जरी**

दीन्यपि पुराणप्रोक्तान्येव, शाट्यायनकादिभिर्ब्राह्मणान्तरैस्तुल्यकालत्वात् ? इत्यत आह—**याज्ञवल्क्यादयो होति**। आख्यानानि=भारतादीनि। **तथा व्यवहरतीति**। अर्थस्तु तथा वा भवत्वन्यथा वेति भावः। **तद्विषयता कस्मान्न भवतीति**। याज्ञवल्कादिविषयः प्रश्नः, 'छन्दोब्राह्मणानि च' इत्यत्र पुराणप्रोक्तत्वविशेषस्यानाश्रयणात्प्राप्नोतीति भावः। **प्रतिपदमिति**। एतल्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। एतदर्थमेव च तत्र ब्राह्मणग्रहणम्; छन्दस्त्वा-देव सिद्धेः।

कल्पेषु तर्हि कस्मान्न भवति, यथा--काश्यपिनः, कौशिकिन इत्यत्र ? इत्यत आह--**न चायमिति**। युक्तं तत्र छन्दोऽधिकारे तस्य योगस्यानुवृत्तेः, अयं तु न तथेति कल्पेष्वपि तद्विषयता न भवतीत्यर्थः। **न चात्यन्त-बाधैवेति**। 'सिद्धशुष्कपक्वबन्धैश्च' इति निपातनादेव सिद्धे, 'शुषः कः' 'पचो वः' इति लिङ्गम्--'बाधकान्यपि निपातनानि भवन्ति' ( नील० वृ० १०९ ) इति। यथा तु सर्वादिसूत्रे (१. १. २७) भाष्यम्, तथा 'अन्यपराण्यपि

**भावबोधिनी**

पुरातन मुनि द्वारा प्रोक्त— इसका क्या लाभ है ? याज्ञवल्कानि ब्राह्मणानि। आश्मरथः कल्पः। याज्ञ-वल्क्यादि मुनि बहुत प्राचीन नहीं हैं, ऐसा महाभारतादि आख्यानों में प्रसिद्ध है। इसी वृत्तान्त के आधार पर सूत्रकार व्यवहार करते हैं। [ वास्तविकता का ध्यान नहीं रखते हैं। ]

याज्ञवल्क्यादि विषय क्यों नहीं बनते हैं ? लक्षण-प्रतिपदोक्त परिभाषा के अनुसार ब्राह्मणों में जो प्रत्यय कहा गया है, णिनि भी उसका विषय बनता है। यह पूर्वोक्त रूप तो कण्वादिगण में याज्ञवल्क्य के पाठ के कारण अण् होकर बना है।

यह सूत्र 'छन्दः' इस अधिकार की अनुवृत्ति नहीं करता है, इसलिए कल्पों में भी यह णिनि नहीं होता है। 'पुराण' इस शब्द में निपातनात् तुट् का अभाव होता है और यह सार्वकालिक बाध नहीं है, अतः 'पुरातन' यह [ तुट् वाला ] रूप भी होता है॥ १०५॥

१. अयमेव पाठ उचितः, पदमञ्जर्यादौ दर्शनात्।

## १६७९. शौनकादिभ्यश्छन्दसि ॥ १०६ ॥ ( १४८६ )

**'शौनक' इत्येवमादिभ्यो णिनिः प्रत्ययो भवति, 'तेन प्रोक्तम्' इत्येतस्मिन्विषये छन्दस्यभिधेये। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः ( कौ० सू० ८५.८ ) । वाजसनेयिनः (आश्व० श्रौ० १.८.१२)।**

**छन्दसीति किम् ? शौनकीया शिक्षा। 'कठशाठ' इत्यत्र पठ्यते तत्सङ्घातार्थम्, केवलाद्धि लुकं वक्ष्यति। कठशाठाभ्यां प्रोक्तमधीयते काठशाठिनः।**

**शौनक। वाजसनेय। साङ्गरव। शार्ङ्गरव। साम्पेय। शाखेय। खाण्डायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांस। अश्वपेय[1]। शौनकादिः॥**

## १६८०. कठचरकाल्लुक् ॥ १०७ ॥ ( १४८७ )

**कठचरकशब्दाभ्यां परस्य प्रोक्तप्रत्ययस्य लुग्भवति। कठशब्दाद्वैशम्पायनान्तेवासिभ्य ( ४.३.१०४ ) इति णिनेश्चरकशब्दादध्यणः। कठेन प्रोक्तमधीयते कठाः। चरकाः। छन्दसीत्येव—काठाः, चारकाः[2] ॥**

### न्यासः

**शौनकादिभ्यश्छन्दसि॥ छाणोरपवाद इति।** ये वृद्धास्तेभ्यश्छस्यापवादः, शेषेभ्यस्त्वणः। **शौनकिनः। वाजसनेयिन इति।** शौनकेन प्रोक्तं वाजसनेयेन प्रोक्तमिति णिनिः। तदन्तात् 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' पूर्ववत् तद्विषयता।

**केवलाद्धीत्यादि।** तत् संहतार्थमित्यत्रायं हेतुः। यस्मात् केवलात् कठाल्लुकं वक्ष्यति, तस्मात् **कठशाठ** इति यदत्र पठ्यते तत्संहतार्थम् ॥ १०६ ॥

**कठचरकाल्लुक्॥ कठाश्चरका इति।** प्रोक्तप्रत्ययस्य लुकि कृते यो ह्यध्येतर्यण् भवति तस्यापि प्रोक्ताल्लुक्। पूर्ववत् तद्विषयता ॥ १०७ ॥

### पदमञ्जरी

निपातनानि बाधकान्येव' इति स्थितम् ॥ १०५ ॥ १०६ ॥ १०७ ॥

### भावबोधिनी

'शौनक' आदि शब्दों से 'तेन प्रोक्तम्' इस विषय में 'छन्दः' ( वेद ) अभिधेय रहने पर 'णिनि' प्रत्यय होता है। यह 'छ' और 'अण्' का अपवाद है। उदा०—शौनकेन प्रोक्तम् अधीयते—शौनकिनः। वाजसनेयिनः। [ वाजसनेयेन प्रोक्तमधीयते—यह विग्रह है। यहाँ भी प्रोक्तार्थक प्रत्यय करने के बाद अध्येतृ-अर्थ वाले प्रत्यय का लुक् हो जाता है। ]

वेदविषय में—इसका क्या फल है ? शौनकीया शिक्षा। [ यहाँ छ = ईय होता है। ] 'कठशाठ' यहाँ ऐसा पठित है वह दोनों के समुदाय की प्रतीति के लिए है, क्योंकि अकेले 'कठ' शब्द से आगे लुक् कहा जायगा। 'कठशाठाभ्यां' प्रोक्तम् अधीयते—'काठशाठिनः'। [ यहाँ दोनों द्वारा प्रोक्त वैदिकविषय का अध्ययन करने वाले—यह अर्थ है। ]

[ इस गण में पठित शब्द—] शौनक। वाजसनेय। साङ्गरव। शार्ङ्गरव। साम्पेय। शाखेय। खाण्डायन। स्कन्ध। स्कन्द। देवदत्तशठ। रज्जुकण्ठ। रज्जुभार। कठशाठ। कशाय। तलवकार। पुरुषांस। अश्वपेय।—ये शौनकादि है ॥ १०६ ॥

'कठ' और 'चरक' से परे प्रोक्तार्थक प्रत्यय का लुक् हो जाता है। "वैशम्पायनान्तेवासिभ्यः" ( ४।३।१०४ ) सूत्र द्वारा 'कठ' से णिनि प्रत्यय होता है और 'चरक' से [ औत्सर्गिक ] 'अण्' होता है, इनका लुक् हो जाता है। उदा०—कठेन प्रोक्तम् अधीयते—कठाः। चरकेण प्रोक्तमधीयते—चरकाः। यह लुक् वेदविषय में ही होता है। अन्यत्र तो [ औत्सर्गिक अण् करने पर ] 'काठाः', 'चारकाः' ये ही होते हैं ॥ १०७ ॥

---

१. 'स्कम्भ'-इत्ययं शब्दः पुस्तकान्तरेऽत्र गणेऽधिकः। २. 'श्लोकाः' इत्यधिकं कुत्रचित्।

**१६८१. कलापिनोऽण् ॥ १०८ ॥ ( १४८८ )**

**कलापिशब्दादण् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। वैशम्पायनान्तेवासित्वाण्णिनेरपवादः। कलापिना प्रोक्तमधीयते कालापाः। 'इनण्यनपत्ये' ( ६. ४. १६४ ) इति प्रकृतिभावे प्राप्ते, ॐ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमि[1]तैतलिजाजलिजाङ्गलि[2]लाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम्। ॐ ( का० वा० ६. ४. १४४ ) इति टिलोपः।**

**अथाण्ग्रहणं किम्, यथाप्राप्तमित्येव सिद्धम्? अधिकविधानार्थम्। तेन माथुरी वृत्तिः, सौलभानि ब्राह्मणानीत्येवमादि सिद्धम् ॥**

**१६८२. छगलिनो ढिनुक् ॥ १०९ ॥ ( १४८९ )**

**छगलिन्शब्दाद् ढिनुक् प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन् विषये। कलाप्यन्तेवासित्वाण्णिनेरपवादः। छगलिना प्रोक्तमधीयते छागलेयिनः ॥**

**न्यासः**

**कलापिनोऽण् ॥** कालापा इति। पूर्ववत् प्रोक्तप्रत्ययान्तादध्येतर्युत्पन्नस्याणो लुक्, तद्विषयता च।

**अथेत्यादि।** ननु चासत्यण्ग्रहणे यथा प्राप्ते विधीयमाने णिनेरेवापवादः स्यात्? नैतदस्ति; एवं हि वचनमनर्थकं स्यात्। तस्माद् यो विहितो न च प्राप्नोत्यनेन बाधितत्वात् स एव भविष्यति, स चाणेव। **एवमादीति।** आदिशब्देन मौदाः, पैप्पलादाः, शाकलाः, जाजलाः–इत्येतेषां ग्रहणम्। असति त्वण्ग्रहणे सर्वमेव न सिध्येत्; 'वृद्धाच्छः' इति च्छेनाण औत्सर्गिकस्य बाधितत्वात् ॥ १०८ ॥

**छगलिनो ढिनुक् ॥ छागलेयिन इति।** इहापि पूर्ववदेवाध्येतर्युत्पन्नस्याणो लुक् च, तद्विषयता च। एवमुत्तरयोर्योगयोर्वेदितव्यः ॥ १०९ ॥

**पदमञ्जरी**

**कलापिनोऽण् ॥ यथाविहितमेवोच्येतेति।** तत्र वचनसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यतीति भावः। **एवमादीनीति।** आदिशब्देन मौदाः, पैप्पलादाः, शाकला इत्येतेषां ग्रहणम्। अत्र मुद-पिप्पलादा-शाकल्य––इत्येतेभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण्भवति ॥ १०८ ॥ १०९ ॥

**भावबोधिनी**

तेन प्रोक्तम्' इस विषय में 'कलापी' शब्द से अण् होता है। कलापी के वैशम्पायन का अन्तेवासी होने से प्राप्त 'णिनि' का अपवाद यह है। कलापिना प्रोक्तमधीयते—कालापाः। [ कलापिन् + अण्, यहाँ पहले प्रोक्तार्थक अण् होता है, उसके बाद अध्येतृ–अर्थक अण् होता है किन्तु इसका लुक् हो जाता है। ] यहां "इनण्यनपत्ये" ( ६।४।१६४ ) से प्रकृतिभाव की प्राप्ति रहते ॐ "नकारान्त के टिलोप के प्रसङ्ग में सब्रह्मचारिन्, पीठसर्पिष्, कलापिन्, कुथुमिन्, तैतिलिन्, जाजलिन्, जाङ्गलिन्, लाङ्गलिन्, शिलालिन्, शिखण्डिन्, सूकरसद्मन्, सुपर्वन्—इनका उपसंख्यान करना चाहिये, अर्थात् इनमें प्रकृतिभाव न होकर टिलोप होना चाहिये ॐ (इस वचन से टि (इन्) का लोप हो जाता है। का.वा.६।४।१४४)

यहाँ अण् का ग्रहण किस लिए है क्योंकि 'यथाप्राप्त' इस कथन से ही अण् सम्भव था? अधिक का विधान करने के लिए अण् का ग्रहण है। इस कारण—माथुरी वृत्ति, सौलभानि ब्राह्मणानि आदि शब्द भी सिद्ध होते हैं ॥१०८॥

'तेन प्रोक्तम्' इस विषय में 'छगलिन्' शब्द से ढिनुक् प्रत्यय होता है। कलापी का अन्तेवासी होने के कारण प्राप्त णिनि का अपवाद यह है। उदा०—छगलिना प्रोक्तम् अधीयते—इस विग्रह में छागलेयिनः। [ छगलिन् + ढिनुक् = ढ् = एय् + इन्; आदिवृद्धि—छागलेयिन्, यहाँ भी प्रोक्तार्थक प्रत्यय के बाद अध्येतृ—अर्थ वाले प्रत्यय का लुक् हो जाता है। प्रथमा बहुवचन का रूप है। ] ॥ १०९ ॥

---

१. 'कौथुमी'—इति पा०। २. 'जाङ्गली'—इति बहुषु पुस्तकेषु न दृश्यते।

**१६८३. पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥ ( १४९० )**

**णिनिरिहानुवर्त्तते, न ढिनुक्। पाराशर्यशिलालिभ्यां णिनिः प्रत्ययो भवति 'तेन प्रोक्तम्' इत्येतस्मिन्विषये। 'भिक्षुनटसूत्रयोः' इति यथासंख्यं प्रत्ययार्थविशेषणम्, सूत्रशब्दः प्रत्येकमभिसम्बध्यते, तद्विषयता चात्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्, गुणकल्पनया च भिक्षुनटसूत्रयोश्छन्दस्त्वम्। पाराशर्येण प्रोक्तमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः।**

**भिक्षुनटसूत्रयोरिति किम्? पाराशरम्। शैलालम्।**

**१६८४. कर्मन्दकृशाश्वादिनिः ॥ १११ ॥ ( १४९१ )**

**'भिक्षुनटसूत्रयोः' इत्येव। कर्मन्द-कृशाश्वशब्दाभ्यामिनिः प्रत्ययो भवति। 'तेन प्रोक्तम्' इत्येतस्मिन्विषये**

**न्यासः**

**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः॥ यथासंख्यमित्यादि।** पाराशर्याद् भिक्षुसूत्रे प्रत्ययः, शिलालिनो नटसूत्रे। **तद्विषयता चात्रेष्यत इति।** कथं पुनरिष्यमाणापि सा लभ्यते? इत्याह—**तदर्थमित्यादि।** ननु चानुवर्तमानच्छन्दोग्रहणेनैव तद्विषयता प्राप्नोति? न; भिक्षुनटसूत्रयोरच्छन्दस्त्वादित्याह—**गुणकल्पनया चेत्यादि।** छन्दसस्तूपचारनिमित्तं यो धर्मः स इह गुणोऽभिप्रेतः, तद्धेतुका कल्पना। यथा छन्दो यदर्थमधीयते तथा सूत्रमपि तद्धेतुं सम्पादयति। भिक्षुनटयोरित्येवमादिकया गुणकल्पनया भिक्षुनटसूत्रयोश्छन्दस्त्वमौपचारिकम्। **पाराशरिण इति।** पाराशर्यशब्दो गर्गादिषु यञन्तः, 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः। **शैलालिन इति।** 'नस्तद्धिते' इति टिलोपः।

**पाराशरमिति।** 'कण्वादिभ्यो गोत्रे' इत्यण्। **शैलालमिति।** औत्सर्गिकोऽण्, 'नान्तस्य टिलोपे सब्रह्मचारिपीठ' इत्यादिना टिलोपः॥ ११०॥

**पदमञ्जरी**

**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः॥ तदर्थं छन्दोग्रहणमनुवर्त्यमिति।** ननु तदनुवृत्तावपि कथं भिक्षुनटसूत्रयोश्छन्दस्त्वम्? तत्राह—**गुणकल्पनया चेति।** उपचारस्य निमित्तभूतो धर्मो गुणो गुरुशुश्रूषणादिः, तन्निमित्ता कल्पना गुणकल्पना। **पाराशरिण इति।** पूर्ववद्यलोपः। **शैलालिन इति।** शिलामलते इति शिलाली, 'अलं भूषणपर्याप्तिवारणेषु' इत्येतस्मात् 'सुप्यजातौ' इति णिनिः, ततोऽस्मिन् णिनौ टिलोपः।

**भावबोधिनी**

इसमें 'णिनि' प्रत्यय की अनुवृत्ति होती है 'ढिनुक्' की नहीं। 'तेन प्रोक्तम्' इस विषय में 'पाराशर्य' और 'शिलालि' शब्दों से णिनि प्रत्यय होता है। 'भिक्षु' और 'नटसूत्र' ये यथासंख्येन प्रत्ययार्थ के विशेषण हैं, 'सूत्र' शब्द का सम्बन्ध प्रत्येक के साथ होता है और उसकी विषयता यहाँ इष्ट है, इसके लिए 'छन्दः' की अनुवृत्ति करनी चाहिये, गुणकल्पना = औपचारिक रूप से भिक्षु-नट-सूत्र भी 'छन्दः' हो जाते हैं। उदा०—पाराशर्येण प्रोक्तम् अधीयते—पाराशरिणः भिक्षवः। [ पाराशर्य + णिनि = इन्, भसंज्ञा, अलोप के बाद 'आपत्यस्य च तद्धितेऽनाति' (पा. सू. ६।४।१५१) से 'य्' का लोप कर देने पर—'पाराशरिन्' बनता है। ] शैलालिनः नटाः। [ शिलालिना प्रोक्तम् अधीयते—इस अर्थ में णिनि - इन् प्रत्यय, आदिवृद्धि, टिलोप। पाराशर्य = पराशरपुत्र द्वारा प्रोक्त भिक्षु-सूत्रों का अध्ययन करने वाले भिक्षु। शिलाली द्वारा प्रोक्त नटसूत्रों का अध्ययन करने वाले नट—ये अर्थ हैं। ]

भिक्षुसूत्र और नटसूत्र—इनके ग्रहण का क्या फल है? पाराशरम्। शैलालम्। [ यहाँ भिन्न अर्थ होने के कारण णिनि न होकर अण् हुआ है, आदिवृद्धि और 'य' लोप तथा टिलोप करने पर रूप बने हैं। ]॥ ११०॥

'भिक्षु-नटसूत्रयोः' इनकी अनुवृत्ति होती है। 'कर्मन्द' और 'कृशाश्व' शब्दों से 'इनि' प्रत्यय होता है यदि 'तेन प्रोक्तम्' इस विषय में यथासंख्येन भिक्षुसूत्र और नटसूत्र अभिधेय हों तो। यह अण् का अपवाद है। यहाँ वेदविषयता

**यथासंख्यं भिक्षुनटसूत्रयोरभिधेययोः। अणोऽपवादः। अत्रापि तद्विषयतार्थं छन्दोग्रहणमनुवर्त्यम्। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः। कृशाश्विनो नटाः।**

**भिक्षुनटसूत्रयोरित्येव—कार्मन्दम्। कार्शाश्वम्॥**

## १६८९. तेनैकदिक्॥ ११२॥ (१४९२)

**तेनेति तृतीयासमर्थात् 'एकदिक्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। एकदिक् = तुल्यदिक्, समानदिगित्यर्थः। सुदाम्ना एकदिक् सौदामनी विद्युत्। हैमवती। त्रैककुदी। पैलुमूली।**

**'तेन' इति प्रकृते पुनः समर्थविभक्तिग्रहणं छन्दोऽधिकारनिवृत्त्यर्थम्। पूर्वत्र हि छन्दोऽधिकारात् तद्विषयता साध्यते॥**

**न्यासः**

**कर्मन्दकृशाश्वादिनिः**॥१११॥ **तेनैकदिक्**॥ **तेनेति**। 'तुल्यार्थैरतुलोपमाभ्याम्' इति तृतीया। **सौदामनीति**। 'अन्' इति प्रकृतिभावाट् टिलोपाद्यभावः।

ननु च तेनेति प्रकृतमेव, तत् किमर्थं पुनरिह तृतीया समर्थविभक्तिरुपादीयते? इत्याह—**तेनेति प्रकृत** इत्यादि। पूर्वत्र हि तेनेति छन्दोऽधिकारसम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्माच्छन्दोऽधिकारनिवृत्तये पुनरिह तृतीया समर्थविभक्तिरुपादीयते। किमर्थं पुनश्छन्दोऽधिकारः पूर्वत्र क्रियते? इत्याह—**पूर्वत्र इत्यादि**। पूर्वेषु योगेषु च्छन्दोऽधिकारात् तद्विषयता साध्यते। तस्मात् तत्र च्छन्दोऽधिकारः कर्तव्यः। तस्मिंस्तु क्रियमाणे तन्निवृत्त्यर्थं इह च यत्न आस्थेयः; अन्यथेह च्छन्दस्येव प्रत्ययः स्यात्॥ ११२॥

**पदमञ्जरी**

**पाराशरमिति**। कण्वाद्यण्। **शैलालमिति**। औत्सर्गिकेऽणि 'नान्तस्य टिलोपे सब्रह्मचारि' (वा० ७९८) इत्यादिना टिलोपः॥ ११०॥ १११॥

**तेनैकदिक्**॥ **सौदामनीति**। 'अन्' इति प्रकृतिभावः। सुदामादयः = पर्वतविशेषाः॥ ११२॥

**भावबोधिनी**

के लिए 'छन्दः' की अनुवृत्ति करनी चाहिए। उदा०—कर्मन्देन प्रोक्तम् अधीयते—इस अर्थ में—कर्मन्दिनः भिक्षवः। [कर्मन्द + णिनि = इन्, इसके बाद अध्येतृ अर्थक प्रत्यय का लुक्।] कृशाश्वेन प्रोक्तम् अधीयते—कृशाश्विनः नटाः। [कर्मन्द द्वारा प्रोक्त भिक्षुसूत्र का अध्ययन करने वाले। कृशाश्व द्वारा प्रोक्त नटसूत्र का अध्ययन करने वाले—ये अर्थ हैं।]

भिक्षुसूत्र और नटसूत्र—इन अर्थों में ही—इसका क्या फल है? कार्मन्दम्। कार्शाश्वम्। [यहाँ औत्सर्गिक अण् प्रत्यय, आदिवृद्धि होती हैं। भिन्न अर्थ है अतः 'इनि' प्रत्यय नहीं होता है।]॥ १११॥

'तेन इस तृतीयासमर्थ से 'एकदिक्' इस अर्थ में यथाविहित प्रत्यय होते हैं। एकदिक् = तुल्य दिशा, समानदिशा—यह अर्थ है। उदा०—सुदाम्ना एकदिक्—सौदामनी विद्युत्। [सुदामन् + अण्, आदिवृद्धि "अन्" (पा.सू.६।४।१६७) से प्रकृतिभाव के कारण टिलोप का अभाव; स्त्रीलिङ्ग में ङीप्] हैमवती। [हिमवता एकदिक्—यह विग्रह है।] त्रैककुदी। [त्रिककुदा एकदिक्] पैलुमूली। [पीलमूलेन एकदिक्। यहाँ तत्तत् नामवाले पर्वतों और वृक्षों की ओर चमकने वाली बिजली—ये अर्थ हैं।]

'तेन' इसका प्रसङ्ग है फिर दुबारा इसी समर्थ विभक्ति का ग्रहण 'छन्दः' इस अधिकार की निवृति के लिए है। पूर्ववर्त्ती सूत्रों में 'छन्दः' का अधिकार होने से छन्दः (वेद) का विषय सिद्ध किया जाता है॥ ११२॥

## १६८६. तसिश्च ॥ ११३ ॥ ( १४९३ )

**तसिश्च प्रत्ययो भवति 'तेनैकदिक्' इत्येतस्मिन्विषये। पूर्वेण घादिषु अणादिषु च प्राप्तेष्वयमपरः प्रत्ययो विधीयते। स्वरादिपाठादव्ययत्वम्। सुदामतः। हिमवत्तः। पिलुमूलतः॥**

## १६८७. उरसो यच्च ॥ ११४ ॥ ( १४९४ )

**'उरः'-शब्दाद्यत् प्रत्ययो भवति, चकारात्तसिश्च, 'तेनैकदिगिक्' इत्येतस्मिन्विषये। अणोऽपवादः। उरसा एकदिग् उरस्यः। उरस्तः॥**

## १६८८. उपज्ञाते ॥ ११५ ॥ ( १४९५ )

**'तेन' इत्येव। तृतीयासमर्थात् 'उपज्ञाते' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति। विनोपदेशेन ज्ञातम् = उपज्ञातम्, स्वयमभिसम्बद्धमित्यर्थः। पाणिनिनोपज्ञातं पाणिनीयमकालकं व्याकरणम्। काशकृत्स्नम्—गुरुलाघवम्। आपिशलम्—दुष्करणम्॥**

### न्यासः

**तसिश्च** ॥११३॥ **उरसो यच्च** ॥११४॥ **उपज्ञाते** ॥ अकालकमिति। कालपरिभाषारहितमित्यर्थः ॥११५॥

### पदमञ्जरी

**तसिश्च ॥ स्वरादिपाठादव्ययत्वमिति।** तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वाभाविकं वेदितव्यम् ॥ ११३ ॥ ११४ ॥

**उपज्ञाते ॥ विनोपदेशेन ज्ञातमुपज्ञातमिति।** उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः। **अकालकमिति।** आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः। गुरुलाघवं नामार्थशास्त्रम्, यत्रोपायानां गौरवं लाघवं चिन्त्यते। 'दुषू' इत्ययं सङ्केतशब्दो यत्र क्रियते, यथा पाणिनीये 'वृत्' इति, तद् दुष्करणं व्याकरणम्; कामशास्त्रमित्यन्ये ॥ ११५ ॥

### भावबोधिनी

''तेनैकदिक्'' इस विषय में 'तसि' प्रत्यय भी होता है। पूर्वसूत्र से 'घ' आदि और 'अण्' आदि प्रत्ययों के प्राप्त रहते यह दूसरा प्रत्यय किया जा रहा है। स्वरादिगण में तस्प्रत्ययान्त का पाठ होने से ये अव्यय हो जाते है। उदा०—सुदामतः। [ सुदाम्ना एकदिक्—यही पूर्वोक्त विग्रह है। सुदामन् + तस्, टिलोप ] हिमवत्तः। पीलुमूलतः। [ यहाँ भी पूर्वोक्त विग्रह हैं। ] ॥ ११३ ॥

''तेन एकदिक्'' इस विषय में 'उरस्' शब्द से यत् प्रत्यय होता है और 'च' के बल से 'तसि' भी होता है। यह अण् का अपवाद है। उदा०—उरसा एकदिक्—इस विग्रह में 'उरस्यः' और 'तसि' प्रत्यय होने पर 'उरस्तः' यह रूप होता है ॥ ११४ ॥

'तेन' इसकी अनुवृत्ति होती है। 'उपज्ञात' ( नया आविष्कार ) इस विषय में तृतीयासमर्थ से यथाविहित प्रत्यय होते हैं। किसी के उपदेश के बिना जाना गया—उपज्ञात होता है, अपने आप किया गया—यह अर्थ है। उदा०—पाणिनिना उपज्ञातम्—पाणिनीयम् अकालकं व्याकरणम्। [ पाणिनि द्वारा उपज्ञात काल की परिभाषारहित व्याकरण। पाणिनीय व्याकरण में काल की परिभाषा अनावश्यक समझ कर निकाल दी गई है। यह उनका अपना आविष्कार है। ] काशकृत्स्नम् गुरुलाघवम्। [ काशकृत्स्निना उपज्ञातं गुरुलाघवं। काशकृत्स्न द्वारा उपज्ञात लाघव—गौरव वाला अर्थ-शास्त्र है। ] आपिशलं दुष्करणम्। [ आपिशलिना उपज्ञातम्—आपिशली द्वारा उपज्ञात दुष्करण = 'दुषू' इस संकेतवाला या कामशास्त्र है। ] ॥ ११५ ॥

## १६८९. कृते ग्रन्थे ॥ ११६ ॥ ( १४९६ )

**'तेन' इत्येव । तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तत्कृतं ग्रन्थश्चेत्स भवति । वररुचिना कृता वाररुचाः श्लोकाः । हैकुपादो ग्रन्थः । भैकुराटो ग्रन्थः । जालूकः ।**

**ग्रन्थ इति किम् ? तक्षकृतः प्रासादः ।**

**उत्पादितम्=कृतम्, विद्यमानमेव ज्ञातम्=उपज्ञातम्—इत्ययमनयोर्विशेषः ॥**

## १६९०. संज्ञायाम् ॥ ११७ ॥ ( १४९७ )

**तृतीयासमर्थात् 'कृते' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति समुदायेन चेत्संज्ञा ज्ञायते । मक्षिकाभिः कृतं माक्षिकम् । कार्मुकम्[1] । सारघम् । पौत्तिकम् । मधुनः संज्ञा एताः ॥**

## १६९१. कुलालादिभ्यो वुञ् ॥ ११८ ॥ ( १४९८ )

**'तेन' 'कृते' 'संज्ञायम्' इति चैतत्सर्वमनुवर्तते । कुलालादिभ्यो वुञ् प्रत्ययो भवति 'तेन कृतम्' इत्येतस्मिन्नर्थे संज्ञायां गम्यमानायाम् । कौलालकम् । वारुडकम् ।**

**न्यासः**

**कृते ग्रन्थे** ॥ कः पुनः कृतोपज्ञातयोर्विशेषः, येनोपज्ञायत इति प्रकृते सति कृतग्रहणं क्रियते ? इत्याह— **उत्पादितमित्यादि** ॥ ११६ ॥ **संज्ञायाम्** ॥ ११७ ॥ **कुलालादिभ्यो वुञ्** ॥ ११८ ॥

**पदमञ्जरी**

**कृते ग्रन्थे** ॥ 'तित्तिरिवरतन्तु' इत्यादीनि सूत्राण्यत्र प्रकरणे न पठितानि । तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्त्तारः, नित्यानि हि छन्दांसि न केनचित्क्रियन्ते ॥ ११६ ॥

**संज्ञायाम्** ॥ अग्रन्थार्थमिदम् ॥ ११७ ॥ ११८ ॥

**भावबोधिनी**

'तेन' इसकी अनुवृत्ति होती है । तृतीयासमर्थ से 'कृते' इस अर्थ यथाविहित प्रत्यय होते हैं, यदि जो दिया गया ( कृत ) है, वह ग्रन्थ हो तो । उदा०—वररुचिना कृताः श्लोकाः—वाररुचाः । [ वररुचि + अण्, आदिवृद्धि, भसंज्ञा, इलोप । ] हैकुपादः ग्रन्थः । [ हिकुपादेन कृतः—इस विग्रह में बनता है । ] भैकुराटः ग्रन्थः । [ भिकुराटेन कृतः ग्रन्थः ] जालूकः । [ जालूकेन कृतः ग्रन्थः ]

ग्रन्थ—इसका क्या फल है ? तक्षकृतः प्रासादः । [ यहाँ ग्रन्थ नहीं, अपितु प्रासाद बनाया गया है । अतः प्रत्यय नहीं होता है । ]

(१) उत्पादित=कृत, (२) विद्यमान को ही समझा=उपज्ञात—यही दोनों में भेद है । [ भाव यह है कि जो सर्वथा नवीन रचना है, उसे 'कृत' कहा जाता है और जो पहले से है, किन्तु सबसे पहले जिसके द्वारा समझी जाती है, वह उसके द्वारा उपज्ञात है । ] ॥ ११६ ॥

समुदाय से यदि संज्ञा की प्रतीति हो रही हो तो तृतीयासमर्थ से 'कृते' इस अर्थ मे यथाविहित प्रत्यय होते हैं । उदा०—मक्षिकाभिः कृतम्—माक्षिकम् । कार्मुकम् । सारघम् । पौत्तिकम् । ये सभी शब्द मधु की संज्ञा हैं, वाचक हैं ॥

[ ग्रन्थ से भिन्न जो पदार्थ 'कृत' है, वह यदि संज्ञा हो तो इस सूत्र की प्रवृत्ति होती है, क्योंकि 'ग्रन्थ' अर्थ में पूर्ववर्ती सूत्र प्रवृत्त होता है । ] ॥ ११७ ॥

'तेन', 'कृते', 'संज्ञायाम्' इन सभी की अनुवृत्ति होती है । 'तेन कृतम्' [ उसने बनाया ]—इस अर्थ में संज्ञा की प्रतीति रहने पर कुलालादि शब्दों से वुञ् प्रत्यय होता है । उदा०—कौलालकम् । [ कुलालेन कृतम् ] वारुडकम् ।

---

१ 'कार्मुतम्'–इति पाठा० ।

कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह् । ब्रह्मन् । कुम्भकार । श्वपाक । कुलालादिः ॥

**१६९२. क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥ ( १४९९ )**

**'तेन' 'कृते' 'संज्ञायाम्' इति सर्वमनुवर्तते । क्षुद्रादिभ्योऽञ् प्रत्ययो भवति 'तेन कृते' इत्येतस्मिन्विषये संज्ञायां गम्यमानायाम् । अणोऽपवादः । स्वरे विशेषः । क्षुद्रादिभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ॥**

**१६९३. तस्येदम् ॥ १२० ॥ ( १५०० )**

**तस्येति षष्ठीसमर्थात् 'इदम्' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति । अणादयः पञ्च महोत्सर्गाः । घादयश्च प्रत्यया यथाविहितं विधीयन्ते । प्रकृतिप्रत्ययार्थयोः षष्ठ्यर्थमात्रं तत्सम्बन्धिमात्रं च विवक्षितम्, यदपरं लिङ्गसंख्याप्रत्यक्षपरोक्षादिकं तत्सर्वमविवक्षितम् । उपगोरिदमौपगवम् । कापटवम् । राष्ट्रियम् । अवारपारीणम् ।**

न्यासः

**क्षुद्राभ्रमरवटरपादपादञ् ॥ स्वरे विशेष इति ।** अणि हि प्रत्ययस्वरेणान्तोदात्तत्वं स्यात् । अञि तु सति ञित्स्वरेणाद्युदात्तत्वं भवति ॥ ११९ ॥

**तस्येदम् ॥ तस्येति ।** यदि पुंल्लिङ्गेनायं निर्देशः, पुंस्येव स्यात्[1], न द्विवचनबहुवचनान्तात्; प्रत्यक्षवाचिनश्च न स्यात्; नापि विशेषवाचिनः; तच्छब्दस्य परोक्षवस्तुमात्रवाचित्वात् । प्रत्ययार्थोऽपीदमित्येकवचनेन नपुंसकलिङ्गेन निर्दिष्ट इत्येकस्मिन्नर्थे स्यात्--नपुंसक एव, नान्यत्र; परोक्षे न स्यात्; इदमः प्रत्यक्षवाचित्वात् ? इत्येतत् सर्वमा-

पदमञ्जरी

**क्षुद्राभ्रमरवटरपादपादञ् ॥ अणोऽपवाद इति ।** बाहुल्यादेवमुक्तम्, पादपशब्दाद्धि छः प्राप्नोति । अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति ॥ ११९ ॥

**तस्येदम् ॥** 'तस्यापत्यम्' इत्यत्रोक्तमेवार्थं स्मारयति--**प्रकृतिप्रत्ययार्थयोरित्यादि ।** प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम्, प्रत्ययार्थेऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः । मात्रशब्दव्यवच्छेद्यं दर्शयति--

भावबोधिनी

[ वरुडेन कृतम् । कुम्हार द्वारा बनाया गया पात्रविशेष । वरुड एक प्राचीन जातिविशेष थी, उसके द्वारा बनाया गया पदार्थविशेष ]

[ इस गण में पठित शब्द—] कुलाल । वरुड । चण्डाल । निषाद । कर्मार । सेना । सिरिध्र । सेन्द्रिय । देवराज । परिषत् । वधू । रुरु । ध्रुव । रुद्र । अनडुह । ब्रह्मन् । कुम्भकार । श्वपाक—ये कुलालादि हैं ॥ ११८ ॥

'तेन', 'कृते', 'संज्ञायाम्' इन सभी की अनुवृत्ति होती है । संज्ञा की प्रतीति रहने पर 'तेन कृते' इस विषय में क्षुद्रा आदि शब्दों से 'अञ्' प्रत्यय होता है । यह अण् का अपवाद है । अण् और अञ् में स्वर में भेद है । [ अण् में प्रत्यय स्वर के कारण अन्तोदात्त होता है और अञ् में ञित् होने से आद्युदात्त होता है—"ञ्नित्यादिर्नित्यम्" । ] उदा०—क्षुद्राभिः कृतम्—क्षौद्रम् । भ्रमरैः कृतम्—भ्रामरम् । वटरैः कृतम्—वाटरम् । पादपैः कृतम्—पादपम् । [ सभी में अञ् प्रत्यय आदिवृद्धि, भसंज्ञा, अलोप होता है । ये 'शहद' की संज्ञाएँ हैं । पादप के स्थान पर 'पदप' यह पाठ ठीक है, क्योंकि 'पादप' वृद्धसंज्ञक होता है, उससे अण् का अपवाद 'छ' प्रत्यय प्राप्त होता है अथवा अधिक शब्दों में अण् प्राप्त है, इसीलिए काशिकाकार ने केवल अण् का अपवाद लिखा है । वास्तव में "अण्" और "छ" दोनों का अपवाद है । ] ॥ ११९ ॥

'तस्य' इस षष्ठीसमर्थ से 'इदम्' इस विषय में यथाविहित प्रत्यय होते हैं । अण् आदि पाँच महान् उत्सर्ग ( प्रत्यय ) हैं । 'घ' आदि यथाविहित प्रत्यय होते हैं । प्रकृत्यर्थ और प्रत्ययार्थ का षष्ठ्यर्थमात्र तथा उनका सम्बन्धीमात्र विवक्षित है, इसके अतिरिक्त लिंगसंख्या, प्रत्यक्ष तथा परोक्ष आदि जो हैं, वे सब अविवक्षित हैं । उदा०—औपगवम् ।

१. अत्रत्यः पाठस्त्रुटितः प्रतिभाति । "न स्त्रियां न नपुंसके ।" इत्यादि योज्यम् ।

**अनन्तरादिष्वनभिधानान्न भवति—देवदत्तस्यानन्तरमिति ।**

❀ **संवहेस्तुरणिट् च** ❀ ( म० भा० ४. ३. १२० वा० ८ ) । **संवोढुः स्वं सांवहित्रम् । सिद्ध एवात्राण्, इडर्थमुपसंख्यानम् ।**

❀ **अग्नीधः शरणे रण् [रञ्] भं च** ❀ ( वा० ९ ) । **आग्नीध्रम् ।**

**न्यासः**

शङ्कयाह—**प्रकृतिप्रत्ययार्थयोरित्यादि** । प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितम् । प्रत्ययार्थेऽपि षष्ठ्यर्थो न सम्पद्यते । **यदपरमित्यादिना** मात्रशब्देन यद् व्यवच्छिन्नं तद्दर्शयति । आदिशब्देन सामान्याभिधायित्वं गृह्यते । अस्य तु सर्वत्र विवक्षाकारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम् । अथेह कस्मान्न भवति–देवदत्तस्यानन्तरम्, देवदत्तस्य समीपमित्यादि ? **अनन्तरादिष्वित्यादि । अनभिधानादिति** । प्रत्यायान्तेनानन्तरादीनामप्रत्यायनमित्यर्थः ।

**संवहेस्तुरिति** । वहेस्त्रन्तादित्यर्थः । **सांवहित्रमिति** । सम्पूर्वाद्वहेस्तुरिट् च, यणादेशः । **सिद्ध एवत्राणिति** । 'प्राग्दीव्यतोऽण्' इत्यनेन । यद्येवं किमर्थमुपसंख्यानम् ? इत्याह—**इडर्थमित्यादि** । उपसंख्याने ह्यसतीडागमो न स्यात्, 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधात् ।

**अग्नीध इत्यादि** । अग्नीध इत्येतस्माच् शरणे गृहे वाच्ये रण् वक्तव्यः, भसंज्ञा च वक्तव्या, भसंज्ञायाञ्च सत्यां पदसंज्ञाभावाज्जश्त्वं न भवति ।

**पदमञ्जरी**

**यदपरमिति** । इदं शब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः । आदिशब्देन सामान्याभिधायित्वं गृह्यते । **तत्सर्वमविवक्षितमिति** । अत्र कारणम् 'तस्यापत्यम्' इत्यत्रैवोक्तम् ।

**वहेस्तुरिति**[1] । तृन्तृचोः सामान्येन ग्रहणम् । **सांवहित्रमिति** । ढत्वादीनामसिद्धत्वात्पूर्वमिहेटि कृते निमित्ताभावात्तेषामभावः ।

**अग्नीध इति** । अग्निमिन्ध इति क्विप् अग्नीत् 'ऋत्विग्विशेषः । 'त्वमग्निहृतीयते' इत्यत्र तु छान्दसं ह्रस्वत्वम् । **शरणम्**—गृहम्, स्थानम्, यत्राग्नीध्रीयं धिष्ण्यं तदाग्नीध्रम्, तात्स्थ्यात्तु मञ्चाः क्रोशन्तीतिवद्दृत्विजि प्रयोगः । **कल्पसूत्रकाराणाम्**—'प्रत्याश्रावयेदाग्नीधः आग्नीध्रं पोतारं ब्रह्मणः' इति । छप्रत्ययं च ततः **शरणे** कुर्वन्ति, 'आग्नीध्रयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्य' इति शरणवचनाच्छः ।

**भावबोधिनी**

[ उपगोरिदम्—इस विग्रह में उपगु + अण्, आदिवृद्धि, उ का गुण, अवादेश । ] कापटवम् । [ कपटु + अण् । ] राष्ट्रियम् । [ राष्ट्र + घ = इय । ] अवारपारीणम् । [ अवारपार + ख = ईन । ] अनन्तर आदि अर्थों में अनभिधान के कारण नहीं होते हैं—'देवदत्तस्य अनन्तरम् ।'

❀ संपूर्वक 'वह' धातु, जो 'तृ' प्रत्ययान्त है अर्थात् 'संवोढृ' शब्द से अण् प्रत्यय होता है और इट् का आगम होता है । ❀ संवोढुः स्वम् ( इदम् )—सांवहित्रम् । [ संवह् + तृ + अण्, इट् आगम आदिवृद्धि, ऋ का यण्—सांवहित्रम् । यहाँ इस प्रत्यय और इट् की दृष्टि में ढत्वादि असिद्ध हो जाते हैं, अतः इट् करने के बाद ढत्वादि का निमित्त न रह जाने के कारण ये नहीं हो पाते हैं । ] यहाँ [ "प्राग्दीव्यतोऽण्" पा० सू० ४।१।८७ से ] अण् प्रत्यय सिद्ध ही है, अतः यह वचन 'इट्' आगम के लिए है ।

❀ अग्नीध् इस शब्द से शरण = गृह अर्थ वाच्य रहने पर 'रण्' प्रत्यय और भसंज्ञा होती है । उदा०—आग्नीध्रम् । [ अग्नीध् + रण् = र, आदिवृद्धि, भसंज्ञा के फलस्वरूप पदसंज्ञा का बाध हो जाने से जश्त्व नहीं होता है । जहाँ 'अग्नीध्' ऋत्विग्विशेष रहे, उस स्थान को 'आग्नीध्र' कहा जाता है । भाष्य में 'रञ्' प्रत्यय है । ]

---

१. 'संवहेस्तु' इति काशिका पाठः । 'वहेस्तु' इति महाभाष्ये पाठः ।

❀ समिधामाधाने षेण्यण् ❀ ( वा० १० )। सामिधेन्यो मन्त्रः। सामिधेनी ऋक् ( ऐ० ब्रा० १. १, पृ० २० )॥

**१६९४. रथाद्यत् ॥ १२१ ॥ ( १५०१ )**

रथशब्दाद्यत् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः। रथस्येदं रथ्यम्, चक्रं वा, युगं वा।

रथाङ्ग एवेष्यते, नान्यत्र; अनभिधानात्।

❀ रथसीताहलेभ्यो यद्विधाविति तदन्तविधिरुपसंख्यायते ❀ (?)। परमरथ्यम्। उत्तमरथ्यम्॥

**१६९५. पत्त्रपूर्वादञ् ॥ १२२ ॥ ( १५०२ )**

पतन्ति तेनेति पत्त्रम्=अश्वादिकं वाहनमुच्यते। तत्पूर्वाद्रथशब्दादञ् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। पूर्वस्य यतोऽपवादः। आश्वरथं चक्रम्। औष्ट्ररथम्। गार्दभरथम्[1]॥

**न्यासः**

**समिधामित्यादि।** आधीयन्ते येन मन्त्रविशेषेण समिधस्तस्मिन् समिधामधानविशेषे समिच्छब्दात् षेण्यण् प्रत्ययो वक्तव्यः=व्याख्येयः। व्याख्यानं तु — 'हविर्निवाससामिधेनीषु' इत्येतन्निर्देशमाश्रित्य वक्तव्यम्। **सामिधेनीति।** 'षिद्गौरादिभ्यश्च' इति ङीष्, 'हलस्तद्धितस्य' इति यलोपः॥ १२०॥

**रथाद् यत् ॥ नान्यत्रेति।** सन्नाहादौ॥ १२१॥

**पदमञ्जरी**

**समिधामाधान इति।** यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे क्विप्। सा समिदाधीयते यया सा सामिधेनी ऋक्, षित्वान्ङीष्, 'हलस्तद्धितस्य' इति यलोपः॥ १२०॥

**रथाद्यत् ॥ रथाङ्ग एवेष्यत इति।** यस्तु रथस्य वोढा रथ्य इति वोढरि प्रयोगः, सः 'तद्वहति रथयुगप्रासङ्गम्' इति द्रष्टव्यः। स्यादेतत्--अयमेव तद्वोढर्यपीष्यताम्, 'तद्वहति' इत्यत्र रथग्रहणं मा कारीति ? नैवं शक्यम्, इह द्वौ रथौ वहति द्विरथ्य इति 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुक् प्राप्नोति। यत्तु द्वयो रथयोरङ्गं तत्र द्विरथमित्येव भवति॥ १२१॥

**पत्त्रपूर्वादञ् ॥ पतन्त्यनेनेति पत्त्रमिति।** 'दाम्नीशस' इत्यादिना ष्ट्रन्। अश्वयुक्तो रथोऽश्वरथः, षष्ठीसमासे वृत्तिस्वभावाद्युक्तार्थावगतिः। तस्याङ्गमाश्वरथम्॥ १२२॥

**भावबोधिनी**

❀ समिधाओं के आधान में जो मन्त्र विशेष है, उससे षेण्यण्=एण्य प्रत्यय होता है। ❀ उदा०—सामिधेन्यः मन्त्रः। [ समिध् + षेण्यण्=एण्य, आदिवृद्धि, ष् की इत्संज्ञा लोप हो जाने से णत्व भी समाप्त हो जाने से 'एन्य' बचता है। ] सामिधेनी ऋक् [ यहाँ सामिधेन्य बनाने के बाद 'षिद्गौरादिभ्यश्च'' सूत्र से ङीष्=ई और ''हलस्तद्धितस्य'' से यलोप होता है ]॥ १२०॥

'तस्य इदम्' इस विषय में 'रथ' शब्द से यत् प्रत्यय होता है। यह अण् का अपवाद है। उदा०—रथस्य इदम्—इस विग्रह में 'रथ्यम्', पहिया अथवा कन्धों पर रखा जाने वाला युग=जुआ। [ रथ+यत्, भसंज्ञा, अलोप ]

रथ के अवयव अर्थ में ही इष्ट है, अन्य किसी अर्थ में नहीं, क्योंकि अनभिधान है।

❀ रथ, सीता और हल—इन शब्दों से 'यत्' प्रत्यय के विधान में तदन्तविधि कहनी चाहिते। ❀ उदा०—परमरथ्यम्। उत्तमरथ्यम्॥ १२१॥

पतन्ति तेन=जिससे गिरते हैं चलते से—इस अर्थ में 'पत्र' शब्द है, इससे अश्व आदि वाहन कहे जाते हैं। 'तस्य इदम्' इस विषय में 'पत्र'=अश्वादिपूर्वक 'रथ' शब्द से 'अञ्' प्रत्यय होता है। पूर्वसूत्र से प्राप्त 'यत्' का अपवाद है।

१. 'रासभरथम्, छं परत्वाद् बाधते' इत्यधिकं क्वचित्।

**१६९६. पत्त्राध्वर्युपरिषदश्च ॥ १२३ ॥ ( १५०३ )**

पत्त्रं वाहनं तद्वाचिनः प्रातिपदिकादध्वर्यु-परिषच्छब्दाभ्यां चाञ्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन् विषये। अणोऽपवादः।

❀ पत्त्राद्वाह्ये ❀। अश्वस्येदं वहनीयमाश्वम्। औष्ट्रम्। गार्दभम्। आध्वर्यवम्। पारिषदम्॥

**१६९७. हलसीराट्ठक् ॥ १२४ ॥ ( १५०४ )**

हल, सीर-शब्दाभ्यां ठक् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। अणोऽपवादः। हलस्येदं हालिकम्। सैरिकम्॥

**१६९८. द्वन्द्वाद् वुन्वैरमैथुनिकयोः ॥ १२५ ॥ ( १५०५ )**

द्वन्द्वसंज्ञकाद् वुन् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये, वैरमैथुनिकयोः प्रत्ययार्थविशेषणयोः। अणोऽपवादः। छं तु परत्वाद्बाधते।

वैरे तावत्—[1]बाभ्रव्यशालङ्कायनिका। काकोलूकिका।

मैथुनिकायाम्—अत्त्रिभरद्वाजिका। कुत्सकुशिकिका। विवहनमैथुनिका। वैरस्य[2] नपुंसकत्वेऽप्यमी

**न्यासः**

पत्त्रपूर्वादञ् ॥ १२२ ॥

पत्त्राध्वर्युपरिषदश्च ॥ 'पत्त्राद्वाह्ये' इत्यवधारणमत्र द्रष्टव्यम्—पत्त्राद् वाह्य एवेति। अन्यत्र कस्मान्न भवति ? अनभिधानात्। अथ किमर्थं न पूर्वेण सहैकयोग एव क्रियते—पत्त्रपूर्वपत्त्राध्वर्युपरिषदोऽञ्' इति ? नैवं शक्यम्; एवं हि पूर्वपत्त्रपूर्वात् प्रातिपदिकादन्यतोऽपि प्रसज्येत। योगविभागे पूर्वस्मिन् योगे रथादित्यनुवृत्ते रथ एव पत्त्रपूर्वग्रहणेन विशेष्यत इति न भवत्यतिप्रसङ्गः। एकयोगे तु रथाद्यनुवृत्तौ सत्यां यथा पत्त्रपूर्वतया रथो विशेष्यते, तथा पत्त्रादिभिरपि रथ एव विशेष्यते इत्यनिष्टं स्यात्। तस्माद् योगविभाग एव न्याय्यः ॥ १२३ ॥

हलसीराट्ठक् ॥ १२४ ॥ द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ बाभ्रव्यशालङ्कायनिकेति। वुन्नन्तः स्वभावादेव

**पदमञ्जरी**

पत्त्राध्वर्युपरिषदश्च ॥ पत्त्रेत्यर्थग्रहणमितरयोः स्वरूपग्रहणम्। व्याख्यानं चात्र शरणम् ॥१२३॥१२४॥

द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ वैरम् = विरोधः, वीराणामिदमिति कृत्वा, मिथुनकर्म मैथुनिका, मनोज्ञादि-

**भावबोधिनी**

उदा०—आश्वरथम्। [ अश्वरथ + अञ् ] औष्ट्ररथम्। गार्दभरथम् ॥ १२२ ॥

पत्त्र वाहन, इसके वाचक प्रातिपदिक से तथा 'अध्वर्यु' और 'परिषत्' शब्दों से 'तस्येदम्' इस विषय में 'अञ्' प्रत्यय होता है। अण् का अपवाद है।

❀ पत्त्र = वाहन से वाह्य अर्थ में कहना चाहिये। ❀ उदा०—अश्वस्य इदं वहनीयम्—आश्वम्। [ अश्व + अञ् आदिवृद्धि ] औष्ट्रम्। गार्दभम्। आध्वर्यवम्। [ अध्वर्योः इदम्। ] पारिषदम्। [ परिषदः इदम् ] ॥ १२३ ॥

'हल' और 'सीर' शब्दों से ठक् प्रत्यय 'तस्य इदम्' इस विषय में होता है। यह अण् का अपवाद है। उदा०—हलस्य इदम्—इस विग्रह में—हालिकम्। सैरिकम् [ हल + ठक् = इक, आदिवृद्धि, भसंज्ञा, अलोप ] ॥ १२४ ॥

'तस्य इदम्' इस विषय में द्वन्द्वसंज्ञक से वुन् प्रत्यय होता है यदि वैर और मैथुनिक प्रत्ययार्थ के विशेषण हों। यह अण् का अपवाद है। छ' का तो परवर्ती होने से बाध करता है। [वैर = विरोध] वैर अर्थ में उदाहरण—बाभ्रव्य-शालङ्कायनिका। [बाभ्रव्यशालङ्कायन + वुन् = अक, स्त्रीलिङ्ग में टाप्, इत्व] काकोलूकिका। [काकोलूक + वुन् = अक, टाप्, इत्व। यहाँ दोनों का वैर प्रतीत होता है। ]

[ मिथुन = दम्पती, इनका कार्य क्रिया निष्पादन को 'मैथुनिका' कहा जाता है। ] मैथुनिका में—अत्त्रिभर-

स्वभावतः स्त्रीलिङ्गाः[२] ।

❀ वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः ❀ ( म० भा० ४.३.१२५ वा० १ ) । दैवासुरम् । राक्षोऽसुरं वैरम् ॥

## १६९९. गोत्रचरणाद् वुञ् ॥ १२६ ॥ ( १५०६ )

गोत्रवाचिभ्यश्चरणवाचिभ्यश्च प्रातिपदिकेभ्यो वुञ् प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये । अणोऽपवादः । छं तु परत्वाद्बाधते । गोत्रात्तावत्—ग्लौचुकायनकम् । औपगवकम् ।

❀ चरणाद्धर्माम्नाययोरिष्यते ❀ ( म० भा० ४.३.१२० इ० ११ ) । काठकम् । कालापकम् । मौदकम् । पैप्पलादकम् ॥

### न्यासः

स्त्रियां वर्तत इति टाप्, 'प्रत्ययस्थात्' इत्यादिनेत्त्वम् ॥ १२५ ॥

गोत्रचरणाद् वुञ् ॥ वुनि प्रकृते वुञ्विधानं वृद्धचर्थम् । तच्चावृद्धा एव गोत्रचरणशब्दाः प्रयोजयन्ति, न वृद्धाः । तेषु हि वुञि वुनि वा सति न कश्चिद् विशेषः । ग्लौचुकायनक इति । 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन्, तदन्ताद् वुञ् ।

चरणादित्यादि । चरणाद्धर्माम्नाययोरेवेष्यते, नान्यत्र; अनभिधानादिति । १२६ ॥

### पदमञ्जरी

त्वाद् वुञ् । मिथुनम् = दम्पती, कर्म = क्रियानिष्पादनम् । बाभ्रवशालङ्कायनिकेति । वुञन्तं स्वभावतः स्त्रियां वर्त्तते ॥ १२५ ॥

गोत्रचरणाद्वुञ् ॥ वुनि प्रकृते वुञो विधानमवृद्धेषु वृद्धचर्थम् । वृद्धेषु वुनि वुञि च विशेषो नास्ति—तदेव रूपं स एव स्वरः, पुंवद्भावप्रतिषेधोऽपि 'न कोपधायाः' इत्युभयोरस्ति ॥ १२६ ॥

### भावबोधिनी

द्वाजिका । कुत्सकुशिकिका । विवहनमैथुनिका ।

[ यहाँ एक स्त्रीवाची और दूसरा पुरुषवाची मान कर द्वन्द्व करने के बाद मैथुनकर्म = विवाह अर्थ में 'वुन्' प्रत्यय समझना चाहिये । यहाँ एकवचनान्त और बहुवचनान्त दोनों प्रकार के विग्रह किये जा सकते हैं ।, ऐसा "यूनि लुकि" वा० सू: ४/१/९० सूत्र पर भाष्यव्याख्यान में कैयट ने लिखा हैं । यह तत्त्वबोधिनीकार लिखते हैं । परन्तु उस सूत्र के कैयट प्रदीप में ऐसा नहीं है । ]

वैर शब्द नपुंसकलिङ्ग है किन्तु वुन्नन्त स्वभावतः स्त्रीलिङ्ग ही होते हैं ।

❀ वैर अर्थ में देवासुर आदि से 'वुन्' का प्रतिषेध कहना चाहिए । ❀ उदाहरण—दैवासुरं, राक्षोऽसुरम्, वैरम् [ यहाँ वुन् न होकर औत्सर्गिक अण् प्रत्यय और आदिवृद्धि होती है । ] ॥ १२५ ॥

गोत्रवाची और चरणवाची प्रातिपदिकों से 'तस्य इदम्' इस विषय में वुञ् प्रत्यय होता है । यह अण् का अपवाद है । और परवर्ती होने से छ का बाध कर लेता है । उदा०—गोत्रवाचक से—ग्लौचुकायनकम् । औपगवकम् । [ ग्लौचुकायनस्य इदम्—इस अर्थ में वुञ्=अक होता है । वुन् के स्थान पर वुञ् करने से सभी में आदिवृद्धि होती है । ]

❀चरणवाची से धर्म और आम्नाय अर्थों में ही वुञ् इष्ट है ।❀ उदा०—काठकम् । [ कठेन प्रोक्तमधीयते—कठाः, तेषां धर्मं, आम्नायः वा—इस अर्थ में वुञ् होता है । आम्नाय = वेदाभ्यास । ] कालापकम् । मौदकम् । पैप्पलादकम् । ] [ सभी में धर्म और आम्नाय अर्थों की प्रतीति रहती धर्म या आम्नाय अर्थ में नपुंसकत्व चिन्तनीय है । ] ॥ १२६ ॥

---

१. 'बाभ्रव०'–इति पाठा० ।

२-२. पाठोऽयं क्वचिन्न दृश्यते ।

१७००. सङ्घाङ्कलक्षणेष्वञ्यजिञामण् ॥ १२७ ॥ ( १५०७ )

सङ्घादिषु प्रत्ययार्थविशेषणेष्वञन्ताद् यञन्ताद् इञन्ताच्च प्रातिपदिकादण्प्रत्यो भवति 'तस्येदम्' इत्येतस्मिन्विषये। पूर्वस्य वुञोऽपवादः।

❀ घोषग्रहणमत्र कर्त्तव्यम् ❀ ( म० भा० ४.३.१२७ वा० १ )। तेन **वैषम्याद्यथासंख्यं न भवति। अञन्तात्**—बैदः सङ्घः। बैदोऽङ्कः। बैदं लक्षणम्। बैदो घोषः। **यञन्तात्**—गार्गः सङ्घः। गार्गोऽङ्कः। गार्गं लक्षणम्। गार्गो घोषः। इञन्तात्—दाक्षः सङ्घः। दाक्षोऽङ्कः। दाक्षं लक्षणम्। दाक्षो घोषः।

अङ्कलक्षणयोः को विशेषः? लक्षणं लक्ष्यभूतस्यैव चिह्नभूतं स्वम्, यथा—**विद्या बिदानाम्। अङ्कस्तु गवादिस्थोऽपि गवादीनां स्वं न भवति। णित्करणं ङीबर्थं पुंवद्भावप्रतिषेधार्थं च ( म० भा० )। बैदी विद्याऽस्य बैदीविद्यः ॥**

**न्यासः**

**सङ्घाङ्कलक्षणेष्वञ्यजिञामण्** ॥ तेन वैषम्याद् यथासख्यं न भवति। असति तु घोषग्रहणे, अञादयस्त्रयः सङ्घादयोऽपि तत्र इति समानाद् यथासंख्यं स्यात्? घोषे च प्रत्ययो न स्यात्। **बैद इति**। 'अनृष' इत्यादिनाञ् तदन्तादण्। अङ्कलक्षयोः को विशेष इति? नास्त्येव कश्चिद् विशेषः। पर्यायत्वादङ्कलक्षणयोरिति मन्यते। **लक्षणमित्यादिना** विशेषं दर्शयति। लक्षणं चिह्नं लक्ष्यस्यैव स्वम्, नान्यस्य; यथा विद्या बिदानाम्। बिदानामेव हि लक्षणानां सम्बन्धिनाम्, नान्यस्य कस्यचित्। अङ्कस्तु गवादिस्थो न गवादीनां सम्भवति। किं तर्हि? ततोऽन्येषाम्, गवादिस्वामिनाम्। अथ किमर्थं णित्करणं प्रत्ययस्य, यावताऽञन्तयञन्ताः प्रकृतयो वृद्धा एव? अत आह—**णित्करणमित्यादि**। बैदी विद्येत्यत्र ङीब् यथा स्यात्। इह च बैदीविद्य इत्यत्र 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात्। एवमर्थं णित्करणम्, न वृद्ध्यर्थम् ॥ १२७ ॥

**पदमञ्जरी**

**सङ्घाङ्कलक्षणेष्वञ्यजिञामण्** ॥ **पूर्वस्य वुञोऽपवाद इति**। गोत्रग्रहणानुवृत्तेरञादीनां गोत्रप्रत्ययानामत्र ग्रहणमिति भावः।

**घोषग्रहणमत्र कर्त्तव्यमिति**। घोषः = आभीरस्थानम्, तत्रापि प्रत्ययो यथा स्यादित्येवमर्थम्। **घोषग्रहण**स्यानुषङ्गिकं प्रयोजनान्तरमाह—**तेन वैषम्यादिति**।

**अथाङ्कलक्षणयोः[1] को विशेष इति** ॥ निघण्टुषु पर्यायतया पाठान्नास्त्येव विशेष इत्यर्थः। पृथगुपादानसामर्थ्याद्विशेषोऽत्राश्रीयताम्? इत्याह **लक्षणं लक्ष्यस्यैवेति**। स्वमात्मीयं सम्बन्धीत्यर्थः। **बैदी विद्या अस्येति**। बिदानामासाधारणी या विद्या सा यस्यास्ति स बैदीविद्यः ॥ १२७ ॥

**भावबोधिनी**

सङ्घ, अङ्क और लक्षण ये प्रत्ययार्थ के विशेषण रहें तो अञन्त, यञन्त और इञन्त प्रातिपदिक से अण् प्रत्यय 'तस्य इदम्' इस विषय में होता है। यह पूर्ववर्ती वुञ् का अपवाद है। ❀ इस सूत्र में 'घोष' का ग्रहण करना चाहिए। [ अन्यथा तीन होने के कारण यथासंख्य होने लगेगा। ] ❀

इस लिये वैषम्य के कारण यथासंख्य नहीं होता है।

अञन्तका उदा०—बैदः सङ्घः बैदः अङ्कः बैदं लक्षणम्, बैदः घोषः। [ अञन्त बैद से उक्त चार अर्थों में अण् होता है। रूप में कोई अन्तर नहीं है। ] यञन्त से—गार्गः संघः गार्गः अङ्कः गार्गं लक्षणम्, गार्गः घोषः। [ गर्ग + यञ् = गार्ग्य बनाकर उक्त अर्थों में अण् करने पर यलोप हो जाने पर 'गार्ग' रूप बचता है। ] इञन्त से—दाक्षः संघः दाक्षः अङ्कः, दाक्षं लक्षणम्, दाक्षः घोषः। [ दक्ष + इञ् = दाक्षि से अण् करने पर इलोप हो जाने से उक्त रूप बनते हैं। ]

अङ्क और लक्षण में क्या भेद है? लक्षण तो लक्ष्यभूत का ही अपना चिह्न होता है जैसे—विद्या बिदानाम्। किन्तु अङ्क तो गो आदि में स्थित रहता हुआ भी गो आदि का स्व = आत्मीय नहीं होता है। णित् करने का फल ङीप्

१. 'अङ्कलक्षणयोः' इति काशिकापाठः।

**१७०१. शाकलाद्वा ॥ १२८ ॥ ( १५०८ )**

शाकलशब्दात्सङ्घादिषु प्रत्ययार्थविशेषणेषु वाऽण्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। वुञोऽपवादः। शाकलेन प्रोक्तमधीयते शाकलाः, तेषां सङ्घः शाकलः, शाकलकः। शाकलोऽङ्कः, शाकलकोऽङ्कः। शाकलं लक्षणम्, शाकलकं लक्षणम्। शाकलो घोषः, शाकलको घोषः॥

**१७०२. छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ १२९ ॥ ( १५०९ )**

सङ्घादयो निवृत्ताः, सामान्येन विधानम्। छन्दोगादिभ्यः शब्देभ्यो ञ्यः प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। वुञणोरपवादः। 'चरणाद्धर्माम्नाययोः', तत्साहचर्यान्नटशब्दादपि धर्माम्नाययोरेव भवति—छन्दोगानां धर्मो वाऽऽम्नायो वा छान्दोग्यम्। औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। नाटयम्। अन्यत्र—छान्दोगं कुलमित्यादि॥

**न्यासः**

शाकलाद् वा॥ वुञोऽपवाद इति। चरणलक्षणस्य शाकलशब्दस्य चरणलक्षणत्वात्। शाकला इति। शाकल्यशब्दाद् गर्गादियञन्तात् 'कण्वादिभ्यो गोत्रे' इति प्रोक्तार्थेऽण्। 'आपत्यस्य च तद्धितेनाति' इति यलोपः शाकल इति स्थिते 'तदधीते तद्वेद' इत्यण्, तस्य प्रोक्ताल्लुक्'—शाकलाः, तेषां सङ्घः शाकलः' शाकलक इति वा॥१२८॥

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः॥ वुञणोरपवाद इति। छन्दोगादिभ्यश्चरणलक्षणस्य वुञोऽपवादः। नटादौत्सर्गिकस्याणः॥ १२९॥

**पदमञ्जरी**

शाकलाद्वा॥ वुञोऽपवादं इति। शाकलशब्दस्य चरणशब्दत्वात्, तद्दर्शयति—शाकलेन प्रोक्तमिति॥१२८॥

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ् ञ्यः॥ वुञणोरपवाद इति। चरणशब्देभ्यो वुञोऽपवादः, नटादौत्सर्गिकस्याणः॥ १२९॥

**भावबोधिनी**

करना और पुंवद्भावका प्रतिषेध करना है। उदा०—वैदीविद्या अस्य—वैदीविद्यः। [ अण् आलोप करने पर रूप बना है। ]॥ १२७॥

सङ्घ आदि प्रत्ययार्थविशेषण होने पर शाकल शब्द से विकल्प से अण् प्रत्यय होता है 'तस्य इदम्' इस विषय में। यह वुञ् का अपवाद है। उदा०—शाकलेन प्रोक्तम् अधीयते शाकलाः, तेषां सङ्घः—शाकलः, शाकलकः। [ शाकलस्यापत्यं बहवः इस विग्रह में यञ् शकल+यञ्, प्रोक्त अर्थ में अण्, "आपत्यस्य च तद्धितेऽनाति" (पा. सू. ६।४।१०१) से यलोप करने पर—'शाकल' बनता है। पुनः 'तदधीते तद्वेद' सूत्र से अण् होता है उसका लुक् "प्रोक्ताल्लुक्" सूत्र से होता है—शाकलाः। तेषां सङ्घादयः—इस विग्रह में जब वुञ् होता है तब 'अक' होने पर—'शाकलकः'। जब अण् होता है तब 'शाकलाः' ये दो रूप बनते हैं। ] शाकलकः शाकलः वा अङ्कः। शाकलकं शाकलं वा लक्षणम्। शाकलकः शाकलः वा घोषः। [ घोष = अहीरों की बस्ती अथवा आवाज ]॥ १२८॥

सङ्घादि अर्थों की निवृत्ति हो जाती है, सामान्य रूप से विधान है। 'तस्य इदम्' इस विषय में 'छन्दोग' आदि शब्दों से 'ञ्य' प्रत्यय होता है। यह वुञ् और अण् दोनों का अपवाद है। चरणवाची से धर्म और आम्नाय = वेदाभ्यास अर्थों में ही होता है" इस वचन के कारण इन शब्दों के साहचर्य से 'नट' शब्द से भी धर्म तथा आम्नाय अर्थ में ही प्रत्यय होता है—छन्दोगानां धर्मः आम्नायः वा—छान्दोग्यम्। [ छन्दोग + ञ्य = य, आदिवृद्धि, भसंज्ञा, अलोप—छान्दोग्यम्। ] औक्थिक्यम्। [ औक्थिकानां धर्मः आम्नायः वा—इस अर्थ में 'ञ्य' प्रत्यय शेष प्रक्रिया पूर्ववत् ] याज्ञिक्यम्। [ याज्ञिकानां धर्मः आम्नायो वा ] बाह्वृच्यम्। [ बह्वृचानां धर्मः आम्नायः वा—इस विग्रह में ञ्य प्रत्यय आदिवृद्धि। ] नाट्यम्। [ नटानां धर्मः आम्नायो वा ] धर्म तथा आम्नाय से भिन्न अर्थों में औत्सर्गिक अण् होने से—छान्दोगं कुलम्—आदि रूप होते हैं॥ १२९॥

**१७०३. न दण्डमाणवान्तेवासिषु ॥ १३० ॥ ( १५१० )**

**दण्डप्रधाना माणवा दण्डमाणवाः, अन्तेवासिनः = शिष्या, तेष्वभिधेयेषु वुञ्प्रत्ययो न भवति। गोत्रग्रहणमिहानुवर्त्तते, तेन वुञ्प्रतिषेधो विज्ञायते। गौकक्षाः दण्डमाणवा अन्तेवासिनो वा। दाक्षाः। माहकाः॥**

**१७०४. रैवतिकादिभ्यश्छः ॥ १३१ ॥ ( १५११ )**

**रैवतिकादिभ्यश्छः प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये। गोत्रप्रत्ययान्ता एते, ततः पूर्वेण वुञि प्राप्ते छविधानार्थं वचनम्। रैवतिकीयः। स्वापिशीयः।**

**न्यासः**

**न दण्डमाणवान्तेवासिषु ॥ दण्डप्रधाना माणवा दण्डमाणवा इति।** मध्यमपदलोपिसमासं दर्शयति। स पुनर्मयूरव्यंसकादित्वाद् वेदितव्यः। मयूरव्यंसकादेराकृतिगणत्वात्। **वुञ्प्रत्ययो न भवतीति।** एतेन वुञोऽयं प्रतिषेध इति दर्शयति। कथं पुनर्ज्ञायते वुञोऽयं प्रतिषेधः? इत्याह—**गोत्रग्रहणमित्यादि।** इह हि गोत्रग्रहणमनुवर्तते 'गोत्रचरणाद् वुञ्' इत्यतः, तेनायमर्थो भवति—'तस्येदम्' इत्येतस्मिन्नर्थे यः प्रत्ययो गोत्रात् प्राप्नोति स दण्डमाणवान्तेवासिषु न भवतीति, गोत्रे वुञेव प्राप्नोतीति, अतस्तस्यैवायं प्रतिषेधो विधीयते। गौकक्ष्यशब्दाद् गर्गादियञन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण्, पूर्ववद् यलोपः। **दाक्षा इति।** दाक्षिप्लाक्षिमाहकिभ्यः 'इञश्च' इत्यण् ॥ १३० ॥

**रैवतिकादिभ्यश्छः ॥ पूर्वेणेति।** 'गोत्रचरणाद् वुञ्' इत्यनेन। **रैवतिकीयमिति।** रेवत्या अपत्यमिति रैवतिकः, ततश्छः। **स्वापिशीयमिति।** स्वापिशशब्दादिञन्ताच्छः। अथ च्छग्रहणं किमर्थम्, नानन्तरसूत्राद् विप्रतिषेधोऽनुवर्तिष्यते, तत्र रेवतिकादिभ्यो वुञि प्रतिषिद्धे वृद्धत्वादेषां छ एव भविष्यति? भवेत् सिद्धं यत्र च्छस्यापवादो नास्ति—रैवतिकीय इति, ये त्वत्रेञन्ताः पठ्यन्ते—स्वापिशि, औदमेधि [ औदमेयि ] औदवापि

**पदमञ्जरी**

**न दण्डमाणवान्तेवासिषु ॥ दण्डप्रधाना माणवा इति।** अर्थकथनमेतत्, समासस्तु कर्मधारयः। सदा दण्डधारणाद्दण्डशब्दो माणवेषु वर्तते ॥ १३० ॥

**रैवतिकादिभ्यश्छः ॥ पूर्वेणेति।** 'गोत्रचरणाद् वुञ्' इत्यनेन। **रैवतिकीय इति।** रेवत्या अपत्यम् 'रेवत्यादिभ्यष्ठक्' रैवतिकः, ततश्छः। अन्ये इञन्ताः, तत्रानन्तरसूत्रात्प्रतिषेधोऽनुवर्त्तिष्यते, रैवतिकादिभ्यो

**भावबोधिनी**

दण्डप्रधानाः माणवाः—दण्डमाणवाः, [ यहाँ मध्यम पदलोपी कर्मधारय समास है। ] अन्तेवासी = शिष्य, इनके अभिधेय रहने पर वुञ् प्रत्यय नहीं होता है। गोत्रग्रहण की यहाँ अनुवृत्ति होती है, इससे वुञ् का प्रतिषेध ज्ञात होता है। [ आश्रम के रक्षक सदा दण्ड ( डंडा ) लिये रहते हैं उन ब्रह्मचारियों को 'दण्डमाणव' कहा जाता है। ] उदा०—गौकक्षाः दण्डमाणवाः अन्तेवासिनः वा। [ गोकक्ष + यञ्, गोत्रार्थक अण् करने पर 'य' का लोप हो जाता है। वुञ् का प्रतिषेध हो जाने पर औत्सर्गिक अण् प्रत्यय, आदिवृद्धि। ] दाक्षाः अन्तेवासिनः। [ दक्ष + इञ्, "इञश्च" सूत्र से अण्, इलोप] माहकाः। [माहक + इञ्, अण्, इलोप। सभी प्रसंगानुसार दण्डमाणव या अन्तेवासी अर्थ हैं।] ॥१३०॥

'तस्य इदम्' इस विषय में रैवतिक आदि शब्दों से 'छ' प्रत्यय होता है। रैवतिक आदि शब्द गोत्रप्रत्ययान्त हैं इनसे पूर्व सूत्र ( "गोत्रचरणाद् वुञ्" ४।३।२६ ) से वुञ् की प्राप्ति रहते 'छ' का विधान करने के लिये यह सूत्र है। उदा०—रैवतिकीयः। स्वापिशीयः। [ रेवत्या अपत्यम्—इस अर्थ में ठक् प्रत्यय करके 'रैवतिक' शब्द बनता है। इसके बाद 'छ'=ईय प्रत्यय होता है। 'स्वापिश' से इञ् प्रत्यय करने के बाद 'छ'=ईय प्रत्यय होता है। ]

**रैवतिक । स्वापिशि । क्षेमवृद्धि । गौरग्रीवि । औदमेयि । औदवाहि । बैजवापि । रैवतिकादिः ॥**

**१७०९. कौपिञ्जलहास्तिपदादण्[1] ॥ १३२ ॥ ( १५१२ )**

**कौपिञ्जल-हास्तिपदशब्दाभ्यामण्प्रत्ययो भवति 'तस्येदम्' इत्येतस्मिन्विषये । गोत्रवुञोऽपवादः, गोत्राधिकारात् । कौपिञ्जलः । हास्तिपदः ॥**

**न्यासः**

[ औदवाहि ]—इत्येवमादयः तेभ्यः 'इञश्च' इत्यण् प्रसज्येत । तस्माच्छग्रहणं कर्तव्यम् । अथ क्षेमवृद्धिशब्दोऽत्र कस्मात् पठ्यते, यावता गहादिरसौ, गहादित्वाच्छ एव भविष्यति ? न सिध्यति; गहादिपाठस्यान्यस्तद्धितार्थोऽवकाशः, इदमर्थे तु परत्वाद् वुञेव स्यात् । तस्मादिदमर्थे तु स्यादिति युक्तस्तस्येह पाठः ॥ १३१ ॥

**कौपिञ्जलहास्तिपदादण् ॥ गोत्राधिकारादिति ।** 'गोत्रवुञोऽपवादः' इत्यत्रायं हेतुः । अत्र हि गोत्रग्रहणेऽधिक्रियमाणे कौपञ्जल-हास्तिपदशब्दाभ्यां गोत्रवाचकाभ्यामण् विधीयते, स च नाप्राप्ते गोत्रवुञीति तेन तस्यैवापवादो विज्ञायते । **कौपिञ्जल इति ।** कुपिञ्जलस्यापत्यमित्येतस्मादेव निपातनादण्, तदन्तात् कौपिञ्जलस्येदमिति पुनरण् । **हास्तिपद इति ।** हस्तिन इव पादावस्येति हस्तिपादस्यापत्यमित्यस्मादेव निपातनादण्, पादस्य पद्भावः, हास्तिपदस्येदम् इति पुनरनेनाण् ।

अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत ? ननु चैवमुच्यमाने 'वृद्धाच्छः' स्यात् ? नैतदस्ति; यद्येताभ्यां छोऽभीष्टः स्याद्, रैवतिकादिष्वेतौ पठ्येयाताम् । रैवतिकादिभ्यस्तु पृथगुपादानाद् विज्ञायते—नैताभ्यां छो भवतीति । वुञ् तर्हि स्यात् ? नैतदस्ति; आरम्भो ह्येवमनर्थकः स्यात्, गोत्रादित्येवं वुञः सिद्धत्वात् । नानर्थकः; यत्रासौ प्रतिषिध्यते तत्रारम्भस्य सार्थकत्वात् । क्व चासौ प्रतिषिध्यते ? 'न दण्डमाणवान्तेवासिषु' । तस्मादण्ग्रहणं कर्तव्यम् ।

**पदमञ्जरी**

वुञः प्रतिषेधे विज्ञायमाने यत्रापवादो नास्ति—रैवतिकीय इति, तत्र 'वृद्धाच्छः' इत्येव सिद्धः; क्षेमवृद्धिशब्दादपि गहादित्वाच्छः; अन्येषु 'इञश्च' इत्यण् स्यात्, तस्माच्छग्रहणम् ॥ १३१ ॥

**कौपिञ्जलहास्तिपदादण् ॥ गोत्रवुञोऽपवाद इति ।** कुत इत्याह—**गोत्राधिकारादिति । कौपिञ्जल इति ।** कुपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । **हास्तिपद इति ।** हस्तिन इव पादावस्य हस्तिपादः, पादस्य लोपो न भवति; 'अहस्त्यादिभ्य' इति वचनात् । हस्तिपादस्यापत्यम् 'तस्यापत्यम्' इति अस्मादेव निपातनादण्, पद्भावश्च, हास्तिपदस्येदम्, पुनरण् । अथाण्ग्रहणं किमर्थम् ? असत्यण्ग्रहणेऽनन्तरश्छः प्राप्नोति । सिद्धोऽत्र छः 'वृद्धाच्छः' इति ? न सिद्ध्यति; 'गोत्रचरणाद् वुञ्' इति वुञ्प्राप्नोति । एवं तर्हि यद्येताभ्यां छ इष्टः स्यात्, रैवतिकादिष्वेवेमौ पठेत्, एवं हि विभक्त्यनुच्चारणाल्लाघवं भवति । तस्मात्पृथगारम्भादेव छो न भविष्यति । अन्यस्तु यो विहितो न च प्राप्नोति स एव भविष्यति, स चाणेव । एवं तर्ह्यसत्यण्ग्रहणे यत्र वुञ्

**भावबोधिनी**

[ इस गण में पठित शब्द—] रैवतिक । स्वापिशि । क्षेमवृद्धि । गौरग्रीवि । औदमेयि । औदवाहि । बैजवापि—ये रैवतिकादि है । [ इनमें पहला शब्द ठक् प्रत्ययान्त है अन्य सभी इञ् प्रत्ययान्त हैं । ] ॥ १३१ ॥

'तस्य इदम्' इस विषय में 'कौपिञ्जल' और 'हास्तिपद' शब्दों से अण् प्रत्यय होता है । यह गोत्रप्रत्ययान्त से प्राप्त वुञ् का अपवाद है, क्योंकि 'गोत्र' का अधिकार है । उदा०—कौपिञ्जलः । [ कुपिञ्जलस्यापत्यम्—इस अर्थ में इसी सूत्र से निपातन से अण् करने के बाद 'कौपिञ्जल' बनता है । पुनः 'कौपिञ्जलस्य इदम्' इस अर्थ में प्रस्तुत सूत्र से ही अण् होता है । ] हास्तिपादः । [ हस्तिनः इव पादौ अस्य—इस अर्थ में—हस्तिपादः, तस्य अपत्यम् इस

---

१. महाभाष्येतु वार्तिकरूपेण पठितः ।

**१७०६. आथर्वणिकस्येकलोपश्च ॥ १३३ ॥ ( १५१३ )**

'अण्' इत्येव । आथर्वणिकशब्दादण्प्रत्ययो भवति तत्सन्नियोगेन च इकलोपः, 'तस्येदम्' इत्येतस्मिन्विषये । चरणवुञोऽपवादः । आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा । 'चरणाद्धर्माम्नाययोः' ( वा० ४७५ ) ॥

**१७०७. तस्य विकारः ॥ १३४ ॥ ( १५१४ )**

**तस्येति षष्ठीसमर्थात् 'विकारः' इत्येतस्मिन्विषये यथाविहितं प्रत्ययो भवति । प्रकृतेरवस्थान्तरम् =**

**न्यासः**

णित्करणं कौपिञ्जली क्रियेति ङीब्यथा स्यात् । इह च कौपिञ्जली क्रियाऽस्य कौपिञ्जलीक्रिय इति 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात् ॥ १३२ ॥

**आथर्वणिकस्येकलोपश्च ॥ चरणवुञोऽपवाद इति ।** आथर्वणिकस्य चरणवाचित्वात् । **आथर्वण इति ।** अथर्वणा प्रोक्तमित्यण्, अन्' इति प्रकृतिभावः । आथर्वण इति स्थितेऽध्येतरि 'तदधीते तद्वेद' इत्यनुवर्तमाने 'वसन्तादिभ्यष्ठक्'—आथर्वणिकः । अत एव निपातनात् 'प्रोक्ताल्लुक्' इति लुग्न भवति । **चरणाद्धर्माम्नाययोरिति** पूर्वोक्तमिष्टं स्मारयति ॥ १३३ ॥

**तस्य विकारः ॥ प्रकृतेरवस्थान्तरमिति ।** प्रकृतेः कारणस्यावस्थान्तरम् = अन्यथात्वम् । **अप्राणीति ।** प्राणिनः 'प्राणिरजतादिभ्यः' अञं वक्ष्यति । **आद्युदात्तमिति ।** 'अनुदात्तादेश्च' इत्यञं वक्ष्यति । **अवृद्धमिति ।**

**पदमञ्जरी**

प्राप्तः प्रतिषिध्यते, न दण्डमाणवान्तेवासिषु, तत्र वुञो विधानार्थमेतत्स्यात्तस्मादण्ग्रहणं कर्तव्यम् । णित्करणं ङीबर्थम्, पुंवद्भावप्रतिषेधार्थं च — कौपिञ्जली क्रिया अस्य कौपिञ्जलीक्रिय इति ॥ १३२ ॥

**आथर्वणिकस्येकलोपश्च ॥ चरणवुञोऽपवाद इति ।** अथर्वणा प्रोक्तो वेदोऽभेदोपचारादथर्वा, तमधीते वसन्तादित्वाट्ठक्,—आथर्वणिकः, दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः । अथ वा—अथर्वणा प्रोक्तो वेदः 'तेन प्रोक्तम्' इत्यण्, ततः 'छन्दोब्राह्मणानि' इति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात् 'प्रोक्ताल्लुक्' इति लुग्न भवति—आथर्वणिकः ।

पूर्वसूत्रमिदञ्च वार्त्तिके दर्शनात्सूत्रेषु प्रक्षिप्तम् ॥ १३३ ॥

**तस्य विकारः । प्रकृतेरिति ।** उपादानकारणस्य । **अवस्थान्तरमिति** अन्यथात्वम् । अपवादेनानाक्रान्तस्य विषयस्य दुर्लभत्वात्प्रश्नः । **किमिहोदाहरणमिति । अप्राणीति ।** प्राणिभ्योऽञं वक्ष्यति । **आद्युदात्तमिति ।**

**भावबोधिनी**

अर्थ में इसी सूत्र से निपातन से 'अण्' प्रत्यय, आदिवृद्धि करने के बाद 'तस्य इदम्' अर्थ में पुनः 'अण्' होता है । वास्तव में यह सूत्र नहीं है, अपितु पूर्वसूत्र भाष्य में वार्त्तिक है । ] ॥ १३२ ॥

'अण्' इसकी अनुवृत्ति होती है । 'तस्य इदम्' इस विषय में 'आथर्वणिक' शब्द से अण् प्रत्यय होता है और इसके सन्नियोग से 'इक' का लोप होता है । चरण अर्थ में प्राप्त 'वुञ्' का अपवाद है । उदा०—आथर्वणिकस्य अयम् आम्नायः धर्मः वा —आथर्वणः । [ आथर्वणिक + अण्, 'इक' का लोप ] अथर्वणा प्रोक्तम्—इस अर्थ में अण् करने और प्रकृतिभाव करने पर 'आथर्वणः' बनता है, तम् अधीते वेत्ति वा—इस अर्थ में "वसन्तादिभ्यष्ठक्" सूत्र से ठक् = इक होता है । पुनः प्रस्तुत सूत्र से अण् करने पर 'इक' का लोप हो जाता है । ] "चरणवाची से धर्म और आम्नाय = वेदाभ्यास अर्थों में ही [ प्रत्यय ] होता है ।" पदमंजरीकार इसे वार्त्तिक और कैयट सूत्र मानते हैं । ] ॥ १३३ ॥

'तस्य' इस षष्ठीसमर्थ से 'विकार' इस विषय में यथाविहित प्रत्यय होते हैं । प्रकृति की दूसरी अवस्था 'विकार' है । इसका क्या उदाहरण है ? अप्राणी, आद्युदात्त, अवृद्ध, और वह जिसका दूसरा प्रतिपद ग्रहण नहीं है, वे सभी इसके

**विकारः। किमिहोदाहरणम्? अप्राण्याद्युदात्तमवृद्धम्, यस्य च नान्यत् प्रतिपदं ग्रहणम्। अश्मनो विकारः आश्मः। आश्मनः।**

**'अश्मनो विकारः' (?) इति टिलोपः पाक्षिकः। भास्मनः। मार्त्तिकः। नित्स्वरेणाद्युदात्ता एते।**

**तस्य प्रकरणे तस्येति पुनर्वचनं शैषिकनिवृत्तर्थम् (म० भ०)। विकारावयवयोर्घादयो न भवन्ति— हालः, सैरः।**

**न्यासः**

वृद्धान्मयटं वक्ष्यति—'नित्यं वृद्धशरादिभ्यः' इति, यस्य च नान्यत् प्रतिपदं विधानमिति—'गोपयसोर्यत्' इत्येवमादि। ननु च 'अन्'इति प्रकृतिभावेन भवितव्यम्, तत्कथमाश्म इति भवति? इत्याह—**अश्मनो विकार इति टिलोप इति**। टिलोपार्थमश्मनो विकार इत्येतदुपसंख्यानं कृतम्। **नित्स्वरेणाद्युदात्ता एत इति**। अश्मादयः शब्दाः। तत्राश्म-भस्मशब्दौ मनिन्प्रत्ययान्तत्वाद् नित्स्वरेणाद्युदात्तौ। मृत्तिकाशब्दोऽपि तिकन्प्रत्ययान्तत्वात्—'मृदस्तिकन्' इति।

अथ तस्येति वचनं किमर्थम्, यावता तस्यग्रहणं प्रकृतमेव? इत्याह—**तस्य प्रकरणमित्यादि**। तद्धि प्रकृतं तस्येति वचनं शैषिकैर्घादिभिः सम्बद्धः। अतस्तदनुवृत्तौ तेऽप्यनुवर्तेरन्। अस्मिंस्तु तस्यग्रहणे क्रियमाणे पूर्वकं तस्येति वचनं निवर्तते। तस्मात् प्रकृतेऽपि तस्येति वचने शैषिकनिवृत्त्यर्थं पुनस्तस्येत्युच्यत इति। ननु च प्रधानं घादयः, विधीयमानत्वात्; तस्येति तु वचनमप्रधानम्, तदर्थत्वात्; तत्रायुक्ता गुणे निवर्तमाने प्रधानस्य निवृत्तिः, प्रधानवृत्तिर्हि गुणो भवति, न गुणार्थवृत्तिः प्रधानम्? नैष दोषः; तस्येति वचनसामर्थ्यात् प्रधानस्यापि गुणनिवृत्तौ निवृत्तिर्भवतीति, अन्यथा हि तस्येति वचनमनर्थकं स्यात्। अणादीनामपि तर्हि

**पदमञ्जरी**

अनुदात्तादेरञ्यत्रं वक्ष्यति। **अवृद्धमिति**। वृद्धान्मयटं वक्ष्यति। **यस्य च नान्यदिति**। यथा 'गोपयसोर्यत्' इति। **नित्स्वरेणेति**। अश्मभस्मशब्दौ मनिन्प्रत्ययान्तौ। 'मृदस्तिकन्', मृत्तिका।

**तस्य प्रकरणे इति**। 'तस्येदम्' इत्यस्मिन्। **पुनर्वचनं शैषिकनिवृत्त्यर्थमिति**। प्रकृतं हि तस्यग्रहणं शैषिकैर्घादिभिः सम्बद्धम्, अतस्तदनुवृत्तौ तेऽप्यनुवर्तेरन्, इदं त्वपूर्वं तस्य ग्रहणं क्रियमाणं घादिसम्बद्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति। ननु च विधेयतया प्रधानभूता घादयः, न ते गुणभूते तस्यग्रहणे निवर्त्तमानेऽपि निर्वतितुमर्हन्ति, न हि गुणानुवर्त्ति प्रधानम्, किं तर्हि? प्रधानानुवर्त्ती गुणः? सत्यम्; तस्य ग्रहणसामर्थ्यात्प्रधानभूतानामपि घादीनां निवृत्तिः, अणादयस्तु न निवर्तन्ते, 'प्राग्दीव्यतः' 'प्राग्भवनात्' इति च विशिष्टावधिपरिच्छेदेनाधिकृतत्वात्। **विकारावयवयोरिति**। परस्तात्तु प्राग्वहतेः 'प्राग्घितात्' इति चाधिकारान्तरेणावष्टब्धत्वादेव घादीनां निवृत्तिः सिद्धेति भावः। स्यादेतत्—मा भूवन्ननेन घादयः, तस्य ग्रहणेन निर्वतितत्वात्; 'तस्येदम्' इत्यनेन तु प्राप्नुवन्ति, तस्येदंविशेषत्वाद्विकारावयययवयोरिति? तन्न; 'तस्येदम्'

**भावबोधिनी**

उदाहरण हैं। [भाव यह है कि आगे के सूत्रों में जिनका प्रतिपद उच्चारण करके ग्रहण किया गया है, उनसे भिन्न जो हैं उनके विकार अर्थ में प्रत्यय होता है।] उदा०—अश्मनः विकारः—इस अर्थ में—आश्मः। [अश्मन् + अण्, आदिवृद्धि, टिलोप। पत्थर का विकार।] "अश्मनो विकारः" इस वचन से टिलोप वैकल्पिक है, अतः न होने पर—आश्मनः ये दूसरा रूप होता है। भास्मनः [भस्मनः विकारः—यह विग्रहः।] मार्त्तिकः। [मृत्तिकायाः विकारः—यह विग्रह है।] ये नित्स्वर से ["ञ्नित्यादिर्नित्यम्" सूत्र से] आद्युदात्त हैं। [अश्मन्, भश्मन् तो मनिन् प्रत्ययान्त हैं और 'मृदस्तिकन्' के अनुसार 'मृत्तिका' भी नित् है।]

'तस्य' का प्रकरण है इसमें पुनः 'तस्य' यह वचन शैषिक प्रत्यय की निवृत्ति के लिए है। विकार और अवयव

## १७०८. अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३५ ॥ ( १५१५ )

**न्यासः**

निवृत्तिः प्रसज्येत, यथैव हि प्रकृतं तस्येतिवचनं घादिभिः सम्बद्धं तथा अणादिभिरपि ? नैष दोषः; उभयेषां हि निवृत्तौ निष्फलः सूत्रस्यारम्भः स्यात् । विधेयस्य कस्यचिदभावात् । तस्मान्न भवत्युभयेषां निवृत्तिः । ननु चारम्भसामर्थ्यादुभयेषामन्यतमेषां निवृत्तिरित्येतावद् विज्ञायते । तत् किं घादयो निवर्तन्ते ? उताणादयः ? सन्देह एव । सन्देहमात्रमेतत्, सर्वसन्देहेष्विदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति । घातयो निवर्तन्त इत्येवं व्याख्यास्यामः स्वरितत्वादणादीनामनुवृत्तिर्भविष्यति । ननु चास्वरितत्वाद् घादीनामनुवृत्तिः, सैव तु तस्येति वचनेनाख्यायते शैषिकनिवृत्त्यर्थम् । **विकारावयवयोरित्यादिना** विशेषं दर्शयति । केन पुनर्विकारावयवयोर्घादयः प्राप्नुवन्ति ? 'तस्येदम्' इत्यनेन; तस्येदंविशेषत्वात् तयोः । **हालः, सैर इति** । यदि शैषिका अनुवर्तेरंस्ततो हलसीरशब्दाभ्याम् 'हलसीराट्ठक्' इति ठक् स्यात् । तन्निवृत्तौ त्वणेव भवति ॥ १३४ ॥

**अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ मौर्वं काण्डमिति** । मूर्वाशब्दादवयवे प्रत्ययः । **मौर्वं भस्मेति** । विकारे ।

**पदमञ्जरी**

इत्येव विकारावयवयोरणादिषु सिद्धेषु पुनस्तेषां विधानं शैषिकाणां बाधनार्थमेव । किं तर्ह्युच्यते—यस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थमिति, यावता सूत्रप्रवृत्तिरेव शैषिकनिवृत्त्यां ? सत्यम्; तस्य ग्रहणे त्वसति सूत्रप्रवृत्तिः शैषिकानपि विषयीकुर्यादिति तस्यग्रहणस्यैवायं भारः यदुत वै शैषिका निवर्तन्ते । **हालः, सैर इति** । हलशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । सीरशब्दः कन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः, नात्र वक्ष्यमाणस्यापवादस्य कस्यचित्प्रसङ्ग इत्यणभवति ।

इदं च योगविभागेनाणादिविधानस्य प्रयोजनं दर्शितम् । यदि हि 'तस्य विकारः' 'बिल्वादिभ्योऽण्' इत्येवापवादविधानार्थमुच्येत, ततो हलस्य विकार इत्यत्र 'तस्येदम्' इत्यनेन प्रत्ययो विधातव्यः, ततश्चाणं बाधित्वा 'हलसीराट्ठक्' इति ठक् प्राप्नोति, तथान्यस्मिंस्तस्येदंविशेषे; योगविभागेन त्वणादीनां विधानादणेव भवति, तस्यग्रहणे तु घादीनां निवृत्तिः प्रयोजनम् । वृजीनां विकारो वार्ज इति, वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात्पक्षे आद्युदात्तत्वादण् । यदि त्वत्र 'तस्येदम्' इत्यण्प्रत्ययः स्यात्; यदि वानेन घादयो विधीयेरन् ततो 'मद्रवृज्योः कन्नि'ति कन्स्यात् । तथा त्रिगर्तानां विकारः त्रैगर्त इति, त्रिगर्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अत्र प्रथमः 'प्राग्दीव्यतोऽण्' प्राप्तः, जनपदलक्षणो वुञ् द्वितीयः, गर्तोत्तरपदलक्षणश्छस्तृतीयः, तदवधिग्रहणेन विहितो वुञ् चतुर्थः; अनेन त्वणेव भवति । तथा रङ्कूणां विकारो राङ्कव इति—अत्र 'प्राग्दीव्यतोण्' प्रथमः, तदपवादयोः 'अवृद्धादपि' इति 'ओर्देशे ठञ्' इति वुञ्ठञोस्तुल्यकक्षयोरन्यतरो द्वितीयः, 'कोपधादण्' इति वा कच्छादिपाठाद्वाऽण्तृतीयः, 'मनुष्यतत्स्थयोर्वुञ्' चतुर्थः; अनेन त्वण् प्राप्त ओरञा बाधितः 'कोपधाच्च' इति प्रतिप्रसूयते । यदि तर्हि विकारावयवयोर्घादयो न भवन्ति पाटलिपुत्रस्यावयवाः पाटलिपुत्रकाः प्रासादा इति, 'तस्येदम्' इत्यत्रार्थे 'रोपधेतोः प्राचाम्' इति वुञ्न प्राप्नोति ? नैष दोषः; प्राण्योषधिवृक्षेभ्यो हि घादीनामवयवे निवृत्तिः, तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्योऽवयवे निवृत्तिः स्यात् ! ॥ १३४ ॥

**अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ मौर्वमिति** । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषाम्' ( फि० सू० २·२७ )

**भावबोधिनी**

अर्थों में 'घ' आदि प्रत्यय नहीं होते हैं । उदा०—हालः, सैरः । [ हलस्य विकारः अवयवः वा, सीरस्य विकारः अवयवः वा – इस अर्थ में वक्ष्यमाण अपवाद का प्रसङ्ग मान कर अण् ही होता है । ] ॥ १३४ ॥

प्राणी, ओषधि और वृक्ष के वाचक षष्ठीसमर्थ शब्दों से 'अवयव' अर्थ में और 'च' के बल से 'विकार' अर्थ में

**प्राण्योषधिवृक्षवाचिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्योऽवयवे यथाविहितं प्रत्ययो भवति, चकाराद्विकारे च। तत्र प्राणिभ्योऽञं वक्ष्यति। कपोतस्य विकारोऽवयवो वा** कापोतः। मायूरः। **तैत्तिरः। औषधिभ्यः—मौर्वं काण्डम्, मौर्वं भस्म। वृक्षेभ्यः—कारीरं काण्डम्, कारीरं भस्म।**

**इत उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवयोर्भवन्ति**[1] **। अन्येभ्यस्तु विकारमात्रे। कथं द्वयमप्यधिक्रियते—'तस्य विकारः', 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति? विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः। कृतनिर्देशौ हि तौ ( म० भा० )।**

**न्यासः**

**इत उत्तरमित्यादिना** वक्ष्यमाणानां प्रत्ययानां विषयविभागं दर्शयति। **कथमिति।** केन प्रकारेणायं विभागो लभ्यते। प्रत्यक्षमर्थं पृच्छति—**द्वयमपीत्यादि।** यतो हेतोरेष विषयविभागो लभ्यते तद्दर्शयति। तत्र फलपाकान्ता ओषधयः, पुष्पवन्तः फलवन्तश्च वृक्षाः, तद्विशेषा वनस्पतयः फलवन्तः एव। तत्र वनस्पतिग्रहणेन वृक्षविशेषास्ततोऽन्ये न गृह्यन्ते। वृक्षग्रहणे तु वनस्पतेरपि ग्रहणं विज्ञेयम्। **विकारावयवयोरित्यादि।** युगपदधिकारे ह्यणादीन् वक्ष्यामीत्येवमर्थो युगपदधिकारः। अणादीनामर्थनिर्देशार्थोऽपि कस्मान्न भवति? इत्याह—**कृतनिर्देशौ हि ताविति।** कृतनिर्देशौ हि तावर्थौ 'तस्येदम्' इत्यनेनैव; तस्येदंविशेषत्वात् तयोः ॥ १३५ ॥

**पदमञ्जरी**

इत्याद्युदात्तः। **खदिरमिति।** खादेः खदिरशब्दः किरच्प्रत्ययान्तो निपातितः, तेनानुदात्तादिलक्षणो वुञ् प्राप्नोति। यदि त्वणिष्यते, बिल्वादिषु पठितव्यः।

**कृतनिर्देशौ हि ताविति।** 'तस्येदम्' इत्यनेन। यद्यपि शैषिकनिवृत्त्यर्थत्वं पूर्वयोगस्य प्रयोजनमुक्तम्, तथापि तदनपेक्ष्य भास्मनम्, मार्तिकमित्यादौ तावदणादयः सिद्धा इत्यभिसन्धायेदमुक्तम् ॥ १३५ ॥

**भावबोधिनी**

यथाविहित प्रत्यय होते हैं। इनमें प्राणी के वाचक से अञ् प्रत्यय आगे ( "प्राणिरजतादिभ्योऽञ्" पा. सू. ४।३।१५४ से ) कहा जायगा। उदा०—कपोतस्य विकारः अवयवः वा—इस विग्रह में—कापोतः। मायूरः। [ मयूरस्य विकारः अवयवः वा। ] तैत्तिरः। [ तित्तिरस्य विकारः अवयवः वा। ] ओषधिवाची से मौर्वं काण्डम्, मौर्वं भस्म। [ मूर्वायाः विकारः अवयवः वा। यह 'चुनार' नामक लताविशेष है जो धनुष के लिये उपयोगी होती है। ] वृक्षवाची से—कारीरं काण्डम्, कारीरं भस्म।

इस सूत्र के आगे जो प्रत्यय हैं वे प्राणी, ओषधि और वृक्ष के वाचक शब्दों से 'विकार' तथा 'अवयव' इन दोनों अर्थों में होते हैं, इनसे भिन्न शब्दों से केवल विकार अर्थ में होते हैं। ऐसा क्यों, क्योंकि इन दोनों का अधिकार ( अनुवृत्ति ) है—'तस्य विकारः' तथा 'अवयवे च प्राण्योषधिवृक्षेभ्यः'? इसका समाधान यह है कि विकार और अवयव इन दोनों का एक साथ अधिकार अपवाद का विधान करने के लिये है। क्योंकि इन दोनों अर्थों का निर्देश ( 'तस्येदम्' पा. सू. ४।३।१२० से ) किया ही जा चुका है ॥ १३५ ॥

---

१. भवन्तीत्यस्याग्रे 'वृक्षशब्देन वनस्पतयोऽपि गृह्यन्ते—न्यग्रोधस्य विकारोऽवयवो वा नैयग्रोधः, पैप्पलः, औदुम्बरः। ओषधिशब्दाल्लतादयोऽपि गृह्यन्ते, ताम्बूल्या विकारोऽवयवो वा, ताम्बूलः, गान्दूचः-एभ्यो विकारावयवयोर्भवन्ति'—इत्यधिकमेकस्मिन्पुस्तके।

## १७०९. बिल्वादिभ्योऽण् ॥ १३६ ॥ ( १५१६ )

**'बिल्व'—इत्येवमादिभ्योऽण्प्रत्ययो भवति विकारावयवयोरर्थयोः । यथायोगमञ्मयटोरपवादः । बिल्वस्यावयवो विकारो वा बैल्वः । गवेधुकाशब्दोऽत्र पठ्यते, ततः कोपधादेव सिद्धे मयड्बाधनार्थं ग्रहणम् ।**

**बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका । कर्पासी । पाटली । कर्कन्धू । कुटीर । बिल्वादिः ॥**

### न्यासः

**बिल्वादिभ्योण् ॥ अञ्मयटोरपवाद इति ।** यदत्रानुदात्तादि तस्माद् 'अनुदात्तादेश्च' इति प्राप्तस्याञोऽपवादः । यद् वृद्धं ततः 'नित्यं वृद्धशरादिभ्यः' इति मयटः । तत्र बिल्वशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'बिल्वतिष्ययोर्वान्तस्वरित्वम्' इति स्वरितत्वं भवति, उदात्तो वा । **व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ । मसूरगोधूमशब्दौ** 'लघावन्ते द्वयोश्च बह्वषो गुरु' इति मध्योदात्तौ । **एवं गवेधुकाशब्दोऽपि** । इषेः क्सुः **इक्षुः** । प्रत्ययस्वरेणान्तोदात्तः । **वेणुशब्दोऽपि** 'विभाषा वेण्विन्धानयोः' इति पक्षेऽन्तोदात्त एव । **कर्पासीपाटलीशब्दौ** 'जातेरस्त्रीविषयादयोपधात्' इति ङीषन्तौ । ङीष्प्रत्ययान्तत्वान् ङीष्प्रत्ययस्वरेणान्तोदात्तौ । **कर्कन्धूशब्दः** 'अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः' इति निपातनान्मध्योदात्तः । **कुटीरशब्दः** 'लघावन्ते' इत्यादिना मध्योदात्तः । सर्वं **एते** 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तादयः । तेनाञ्बाधनार्थं ग्रहणमिति । अथाण्ग्रहणं किमर्थम्, **न बिल्वादिभ्यो** यथाविहित-मेवोच्येत ? नैवं शक्यम्; पाटलीशब्दो ह्यत्र वृद्धः पठ्यते, तस्मादञो बाधके मयटि प्राप्ते पुनर्वचनादञेव स्यात् । अण्ग्रहणात् त्वणेव भवति । तस्मादण्ग्रहणं क्रियते ॥ १३६ ॥

### पदमञ्जरी

**बिल्वादिभ्योऽण् ॥ अञ्मयटोरपवाद इति ।** तत्र काण्ड-पाटलीशब्दाभ्यां वृद्धलक्षणस्य **मयटोऽपवादः**, शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, बिल्वशब्दस्य 'बिल्वतिष्योर्वान्तःस्वरितः' ( फि० सू० १.२३ ) इत्यन्तःस्वरितः, उदात्तो वा । व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ । मसूर-गोधूम-गवेधुकशब्दाः 'लघावन्ते द्वयोश्च' ( फि० सू० २.४२ ) इति मध्योदात्ताः । इषेः क्सः, इक्षुः, प्रत्ययस्वरेणान्तोदात्तः । वेणुशब्दः 'विभाषा वेण्विन्धानयोः' इति पक्षेऽन्तोदात्तः । कर्पासीशब्दो जातिलक्षणङीषन्तः । कर्कन्धूशब्दः 'अलाबूकर्कन्धूदिधिषूः' ( द० उ० १.१७६ ) इति निपातनान्मध्योदात्तः, 'कुटीशमीशुण्डाभ्यो रः' इति कुटीरशब्दः प्रत्ययस्वरेणान्तोदात्तः । **मयड्बाधनार्थमिति ।** 'मयड्वैतयोः' इत्यादिना प्राप्तस्य मयटो बाधनार्थम्, शेषेभ्यस्त्ववृद्धेभ्यः शब्देभ्यः पक्षे मयड् भवत्येव । अण्ग्रहणं बाधकबाधनार्थम् । बिल्वादिभ्यो यथाविहितमित्युच्यमानेऽपि हि पाटलीशब्दान्ङीषन्तादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनादञेव स्यात्; अण्ग्रहणात्त्वणेव भवति ॥ १३६ ॥

### भावबोधिनी

बिल्व आदि शब्दों से 'विकार' तथा 'अवयव' अर्थों में 'अण्' प्रत्यय होता है । यह यथायोग 'अञ्' तथा 'मयट्' का अपवाद है । [ "अनुदात्तादेश्च" से प्राप्त 'अञ्' का और 'नित्यं वृद्धशरादिभ्यः' से प्राप्त 'मयट्' का अपवाद है । ] उदा०—बिल्वस्य अवयवः विकारः वा—इस अर्थ में बैल्वः । [ बिल्व+अण् ] इस गण में 'गवेधुका' शब्द का भी पाठ है, इससे तो ककारोपध मान कर ( "कोपधाच्च" ४।३।३७ से ) सिद्ध रहने पर मयट् का बाध करने के लिये है ।

[ इस गण में पठित शब्द—] बिल्व । व्रीहि । काण्ड । मुद्ग । मसूर । गोधूम । इक्षु । वेणु । गवेधुका । कर्पासी । पाटली । कर्कन्धू । कुटीर—ये बिल्वादि हैं ॥ १३६ ॥

**१७१०. कोपधाच्च ॥ १३७ ॥ ( १५१७ )**

**ककारोपधात्प्रातिपदिकादण् प्रत्ययो भवति यथायोगं विकारावयवयोरर्थयोः । अञोऽपवादः । तर्कु— तार्क्कवम् । तित्तिडीक—तैत्तिडीकम् । माण्डूकम् । दार्दुरूकम् । माधूकम् ॥**

**१७११. त्रपुजतुनोः षुक् ॥ १३८ ॥ ( १५१८ )**

**त्रपु-जतुशब्दाभ्यामण् प्रत्ययो भवति विकारे, तत्सन्नियोगेन तयोः षुगागमो भवति । ओरञोऽपवादः । त्रपुणो विकारः त्रापुषम् । जातुषम् । अप्राण्यादित्वान्नावयवे ॥**

**१७१२. ओरञ् ॥ १३९ ॥ ( १५१९ )**

**उवर्णान्तात्प्रातिपदिकादञ्प्रत्ययो भवति विकारावयवयोरर्थयोः । अणोऽपवादः । अनुदात्तादेरन्यदिहो-दाहरणम् । दैवदारवम् । भाद्रदारवम् ॥**

**न्यासः**

**कोपधाच्च ॥ यथायोगमिति ।** प्राण्योषधिवृक्षेभ्यो विकारावयवयोः, अन्येभ्यस्तु विकारमात्र इत्येष यथायोगार्थः । **अञोऽपवाद इति ।** 'ओरञ्', 'अनुदात्तादेः' इत्येताभ्यां प्राप्तस्य । **तित्तिडीक-माण्डूक-दर्दुरूक-मधूकशब्दाः** 'लघावन्ते' इत्यादिना मध्योदात्ताः, तेनानुदात्तादयो भवन्ति ॥ १३७ ॥

**त्रपुजतुनोः षुक् ॥ ओरञोऽपवाद इति ।** अनुदात्तत्वात् । **अप्राण्यादीति ।** आदिशब्देनौषधित्वमवृक्षत्वं च गृह्यते ॥ १३८ ॥

**ओरञ् ॥ अनुदात्तादेरन्यदिहोदाहरणमिति ।** अनुदात्तादेरुत्तरसूत्रेणैव सिद्धत्वात् । **दैवदारवम्, भाद्रदारवमिति ।** देवदारु-भद्रदारुशब्दौ 'पीतद्र्वर्थानाम्' इत्याद्युदात्तौ । तस्यायमर्थः - पीतद्रुः अर्थो येषां ते पीतद्र्वर्थाः, तेषां पीतद्र्वर्थवचनानामादिरुदात्तो भवति ॥ १३९ ॥

**पदमञ्जरी**

**कोपधाच्च । अञोऽपवाद इति ।** 'ओरञ्' 'अनुदात्तादेश्च' इति प्राप्तस्य, तित्तिडीकादयः 'लघावन्ते' ( फि० सू० २.४२ ) इत्यादिना मध्योदात्ताः ॥ १३७ ॥

**त्रपुजतुनोः षुक् ॥ अप्राण्यादित्वादिति ।** प्राण्योषधिवृक्षेष्वन्यतमत्वस्याभावादित्यर्थः ॥ १३८ ॥

**ओरञ् ॥** देवदारु-भद्रदारुशब्दौ 'पीतद्र्वर्थानाम्' (फि० सू० २.३७) इत्यादिनाद्युदात्तौ । पीतद्रुः = सरलो वनस्पतिः, पीतद्रुरर्थो येषां तेषामादिरुदात्तो भवतीत्यर्थः ॥ १३९ ॥

**भावबोधिनी**

जिनकी उपधा में ककार है ऐसे प्रातिपदिकों से यथायोग विकार और अवयव अर्थों में अण् प्रत्यय होता है अर्थात् प्राणी, ओषधि और वृक्ष के वाचकों से विकार और अवयव दोनों अर्थों में तथा दूसरे प्रातिपदिकों से केवल विकार अर्थ में होता है। यह [ "ओरञ्" तथा "अनुदात्तादेः" से प्राप्त ] 'अञ्' का अपवाद है। उदा०—तर्कु— तार्कवम् । [ तर्कु + अञ् आदिवृद्धि, 'उ' का गुण, अवादेश ] तित्तिडीक—तैत्तिडीकम् । मण्डूक—माण्डूकम् । दर्दरूक— दार्दरूकम् । मधूक—माधूकम् । [ इन सभी की उपधा में 'क' है । अतः अण् प्रत्यय, आदिवृद्धि होती है । ] ॥ १३७ ॥

त्रपु और जतु—इनसे विकार अर्थ में अण् प्रत्यय होता है और इसके सन्नियोग से इन्हें षुक् का आगम होता है। "ओरञ्" सूत्र से प्राप्त 'अञ्' का अपवाद है। उदा० —त्रपुणः विकारः—त्रापुषम्, जातुषम् । [ जतुनो विकारः । त्रपु + अण् षुक् = ष् आगम, आदिवृद्धि । ] प्राणी का वाचक न होने से अवयव अर्थ में नहीं होता है ॥ १३८ ॥

उकारान्त प्रातिपदिक से 'विकार' तथा 'अवयव' अर्थों में अञ् प्रत्यय होता है। यह अण् का अपवाद है। अनुदात्तादि से भिन्न शब्द इसमें उदाहरण होते हैं। उदा०—दैवदारवम् । भाद्रदारवम् । [ देवदारु + अञ्, आदिवृद्धि, 'उ' का गुण, अवादेश ] ॥ १३९ ॥

**१७१३. अनुदात्तादेश्च ॥ १४० ॥ ( १५२० )**

**अनुदात्तादेः प्रातिपदिकादञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणोऽपवादः । दाधित्थम् । कापित्थम् । माहित्थम् ॥**

**१७१४. पलाशादिभ्यो वा ॥ १४१ ॥ ( १५२१ )**

**पलाशादिभ्यः प्रातिपदिकेभ्यो वाऽञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । पालाशम् । खादिरम् । यावसम् । उभयत्रविभाषेयम् । पलाशखदिरशिंशपास्पन्दनानामनुदात्तादित्वात्प्राप्ते, अन्येषामप्राप्ते ।**

**पलाश । खदिर । शिंशपा । स्पन्दन । करीर । शिरीष । यवास । विकङ्कत । पलाशादिः ॥**

**न्यासः**

**अनुदात्तादेश्च ॥ दाधित्थमित्यादि ।** दध्नि तिष्ठतीति, कपौ तिष्ठतीति—'सुपि स्थः' इति कः, 'अतो लोपः' इत्यकारलोपः, पृषोदरादित्वात् सकारस्य तकारः, उपपदसमासः, समासस्वरेणान्तोदात्तौ । तेन दधित्थ-कपित्थशब्दावनुदात्तादी भवतः ॥ १४० ॥

**पलाशादिभ्यो वा ॥ उभयत्रविभाषेयमिति ।** प्राप्ते चाप्राप्ते च । तामेवोभयत्रविभाषां स्पष्टीकर्तुमाह—**पलाशखदिरेत्यादि ।** पलाशशब्दो घृतादित्वादन्तोदात्तः, **खदिरशब्दोऽपि** तित्स्वरेण । 'इषिमदिमुदिखिदिच्छिदिभिदिमन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्' इत्यनुवर्तमाने 'अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः' इति किरच्प्रत्ययान्तो निपातितः । **शिंशपाशब्दः** 'पान्तानां गुर्वादीनाम्' इति मध्योदात्तः । तस्यायमर्थः—पाशब्दान्तानां गुर्वादीनां द्वितीयमुदात्तं भवतीति । अथ द्वितीयं प्रागीषादित्यत्रानुवर्तते, 'स्पदि किञ्चिच्चलने' अस्माद् 'अनुदात्तादेश्च हलादेः' **इति युच्** —स्पन्दनः, चित्स्वरेणान्तोदात्तः । 'कॄशॄगॄकटिपटिशटिभ्य ईरन्' । करीरशब्दो निस्वरेणाद्युदात्तः । 'कॄहॄभ्यामीषन्' 'शॄपॄभ्यां किच्च' इति **शिरीषशब्दोऽपि नित्स्वरेणाद्युदात्तः ।** विकङ्कतपू[१]लासयवासाश्च 'ग्रामादीनां च' इत्याद्युदात्ताः ॥ १४१ ॥

**पदमञ्जरी**

**अनुदात्तादेश्च ॥ दाधित्थं कापित्थमिति ।** दधनि तिष्ठतीति 'सुपि स्थः', उपपदसमासः, पृषोदरादित्वात्सकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ॥ १४० ॥

**पलाशादिभ्यो वा ॥ उभयत्रविभाषेयमिति ।** कथमित्याह—**पलाशखदिरेत्यादि ।** पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दः 'अजिरशिशर' ( द० उ० ८·२७ ) इत्यादौ किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दो 'द्वितीयं प्रागीषात्' ( फि० सू० ३·५० ) इति वर्तमाने 'पान्तादीनां गुर्वादीनाम्' ( फि० सू० ३·५५ ) इति मध्योदात्तः । 'स्पदि किञ्चिच्चलने' ( धा० पा० १४ ) 'अनुदात्तेतश्च हलादेः' इति युच्, किरतेरीरन्, करीरम्, 'कॄहॄभ्यामीषन्' ( दश० उ० ९.९ ), शॄपॄभ्यां किच्च ( दश० उ० ९·१० ) शिरीषम्, शेषे नित्स्वरेणाद्युदात्तावेतौ । विकङ्कतमू[१]लासयवासशब्दाः 'ग्रामादीनां च' ( फि० सू० २·३८ ) इत्याद्युदात्ताः ॥ १४१ ॥

**भावबोधिनी**

अनुदात्तादि प्रातिपदिक से 'विकार' और 'अवयव' अर्थों में 'अञ्' प्रत्यय होता है । यह अण् का अपवाद है । उदा०—दाधित्थम्, कापित्थम्, माहित्थम् । [दधित्थ+अञ्, दधित्थ और कपित्थ— कैथ नामक फलवाची हैं । ] ॥१४०॥

'पलाश' आदि प्रातिपदिकों से विकार तथा अवयव अर्थों में विकल्प से अञ् प्रत्यय होता है । उदा०—पालाशम् । खादिरम् । यावसम् । यह उभयत्र विभाषा=प्राप्ताप्राप्त विभाषा है क्योंकि—पलाश, खादिर तथा शिंशपा—शब्द आद्युदात्त हैं अतः इनसे प्राप्त रहते और दूसरे शब्दों से प्राप्त न रहते यह विकल्प किया जा रहा है ।

[ इस गण में पठित शब्द —] पलाश । खदिर । शिंशपा । स्पन्दन । करीर । शिरीष । यवस । विकङ्कत— ये पलाशादि हैं ॥ १४१ ॥

---

१. नायं शब्दो मूले दृश्यते ।

**१७१५. शम्याष्ट्लञ् ॥ १४२ ॥ ( १५२२ )**

**शमीशब्दात् ट्लञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। अञोऽपवादः। शामीलं भस्म। शामीली स्रुक् ॥**

**१७१६. मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥ ( १५२३ )**

**प्रकृतिमात्राद्वा मयट् प्रत्ययो भवति, भक्ष्याच्छादनवर्जितयोर्विकारावयवयोरर्थयोर्भाषायां विषये यथायथं प्रत्ययेषु प्राप्तेषु। अश्ममयम्। आश्मनम्। मूर्वामयं मौर्वम्।**

**भाषायामिति किम्? बैल्वः खादिरो वा यूपः स्यात्। अभक्ष्याच्छादनयोरिति किम्? मौद्गः सूपः। कार्पासमाच्छादनम्।**

**न्यासः**

**शम्याष्ट्लञ्** ॥ **अञोऽपवादः इति।** शमीशब्दस्य गौरादित्वान् ङीषन्तस्य प्रत्ययस्वरेणान्तोदात्तस्यानुदात्तादित्वात्। टकारो ङीबर्थः ॥ १४२ ॥

**मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः** ॥ **एतयोरिति। किमनेनेत्यादि चोद्यम्। ये विशेषप्रत्यया** इत्यादि परिहारः। आदिशब्देन 'उष्ट्राद्वुञ्' इत्येवमादयो गृह्यन्ते। यदि ह्येतयोरिति नोच्येत, ततो य इत उत्तरे विशेषाः प्रत्यया अञादयः, तैः सह सम्प्रधारणायां परत्वात् त एव स्युः। 'एतयो' इत्युच्यमाने तु विशेषप्रत्ययेष्वपि पक्षे भवन्ति, तेन कपोतमयमित्यादि सिद्धं भवति। अथ क्रियमाणे 'एतयोः' इत्येतस्मिन्, कथमपवादविषये मयड् भवति? एतयोरित्यस्य द्वितीयविधानार्थत्वान् मयट् प्रत्ययो विकारावयवयोर्भवति। एकम्—विधानमेतयोरिति, मयड् भवतीति—द्वितीयम्। तत्र यद्येतद् द्वितीयं विधानं तदा प्रापणार्थम्। तेन यत्रापि निषेधप्रत्ययैर्बाधितो मयड् न प्राप्नोति तत्रापि भवति।

**पदमञ्जरी**

**शम्याष्ट्लञ्** ॥ **अञोऽपवाद इति।** शमीशब्दो गौरादिङीषन्तः। **शामीली स्रुगिति।** चातुर्मास्ये वरुणप्रघासेषु शमीमय्यः स्रुचो भवन्तीति श्रुतम् ॥ १४२ ॥

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ॥ **मौद्गः सूपः, कार्पासमाच्छादनमिति।** उभयत्र बिल्वाद्यण्, विकारावयवयोरभक्ष्याच्छादनयोश्च यथासंख्यं न भवति; विकारावयवयोरसमासनिर्देशेन प्रत्येकमभिसम्बन्धात्।

**भावबोधिनी**

'शमी' शब्द से 'ट्लञ्' प्रत्यय होता है विकार और अवयव अर्थों में। यह अञ् का अपवाद है। उदा०—शामीलं भस्म। शामीली स्रुक्। [ शमी एक वृक्ष है। उसकी भस्म, उसकी स्रुक्। ] ॥ १४२ ॥

'भक्ष्य' और 'आच्छादन' अर्थों को छोड़ कर विकार तथा अवयव अर्थों में भाषा = लौकिक प्रयोग में [ षष्ठी-समर्थ ] प्रकृतिमात्र से यथायथ प्रत्यय प्राप्त रहते 'मयट्' प्रत्यय विकल्प से होता है। उदा०—अश्ममयम्, आश्मनम् [ मयट् न करने पर औत्सर्गिक अण् प्रत्यय होता है। ] मूर्वामयम्, मौर्वम्।

भाषा = लौकिक संस्कृत में ही—इसका क्या फल है? "बैल्वः खादिरो वा यूपः स्यात्"। [ यहाँ एक ही प्रत्यय होता है अण्। ]

भक्ष्य और आच्छादन से भिन्न अर्थों में—इसका क्या फल है? मौद्गः सूपः। कार्पासम् आच्छादनम्। [ यहाँ मयट् नहीं होता है। ]

**एतयोरिति किमनेन, यावता विकारावयवौ प्रकृतावेव ? ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञ्'** ( ४.३.१५४ इत्येवमादयः, **तद्विषयेऽपि यथा स्यात्--कपोतमयम्, कापोतम् । लोहमयम्, लौहमिति** ॥

## १७१७. नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥ ( १५२४ )

**'भाषायामभक्ष्याच्छादनयोः'** इत्येव । **वृद्धेभ्यः प्रातिपदिकेभ्यः शरादिभ्यश्चाभक्ष्याच्छादनयोर्विकारावयवयोर्भाषायां विषये नित्यं मयट् प्रत्ययो भवति । वृद्धेभ्यस्तावत्—आम्रमयम् । शालमयम् । शाकमयम् । शरादिभ्यः—शरमयम् । दर्भमयम् । मृण्मयम् ।**

**नित्यग्रहणं किम्, यावताऽऽरम्भसामर्थ्यादेव नित्यं भविष्यति ? एकाचो नित्यं मयटमिच्छन्ति, तदनेन क्रियते । त्वङ्मयम् । स्रङ्मयम् । वाङ्मयमिति ।**

**न्यासः**

अथ वाग्रहणं किमर्थम्, यावतोत्तरसूत्रे नित्यग्रहणादेवेह विभाषा विज्ञायते ? नैतदस्ति; नित्यशब्दो ह्याभीक्ष्ण्येऽप्यस्ति—नित्यप्रहसितः, नित्यजल्पितमिति । प्रायेण च भवनमाभीक्ष्ण्यं भवतीति वृद्धशरादिलक्षण एव मयड् नित्यः स्यात्, अयं त्वनित्यः । इह तु वाग्रहणे सति नित्यग्रहणम्, तत्र नियमेनाव्यभिचारेण भवतीत्येषोऽर्थो विज्ञायते । तस्माद्वाग्रहणं कर्तव्यम् ॥ १४३ ॥

**नित्यं वृद्धशरादिभ्यः** ॥ प्राग्दीव्यतीयाणो ह्यपवादो मयडारभ्यते, अणं तु कोपधलक्षणम् अञमुवर्णान्तलक्षणमनुदात्तादिलक्षणं च परत्वाद् बाधते । **आरम्भसामर्थ्यादेव नित्यं भविष्यतीति** । यदि ह्यनित्यः स्यात्, अस्य सूत्रस्यारम्भोऽनर्थकः स्यात्; पाक्षिकस्य मयटः पूर्वेणैव सिद्धत्वात् । **तदनेन क्रियत इति** । यत् तदेकेषामाचार्याणामिष्टम् । तदनेन नित्यग्रहणेन सफलं क्रियत इत्यर्थः । कथं योगविभागः क्रियते ? तद् यथा द्वारं द्वार-

**पदमञ्जरी**

**तद्विषयेऽपि यथा स्यादिति** । यद्येतयोरिति नोच्येत, उत्तरैर्विशेषप्रत्ययैरञादिभिः सम्प्रधारणायां परत्वात्त एव स्युः, पूर्वेषां विशेषप्रत्ययानां मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यत इति प्राणिरजतादिभ्योऽञादय इत्युक्तम् । 'एतयोः' इति वचनं पुनर्विधानार्थं सम्पद्यत इति परेषामपि विषये मयड् भवति ॥१४३॥

**नित्यं वृद्धशरादिभ्यः** ॥ **नित्यं मयट्प्रत्ययो भवतीति** । प्राग्दीव्यतीयानामपवादः । अणं तु कोपधलक्षणमञेव परत्वाद्बाधते । **शाकमयम्, आम्रमयमिति** । आम्रशब्दः 'अमितम्योर्दीर्घश्च' ( दश० उ० ८.३६ ) इति रन्प्रत्ययान्तः ।

**भावबोधिनी**

'एतयोः' इससे क्या लाभ, क्योंकि 'विकार' तथा 'अवयव' अर्थ प्रकृत हैं ही ? जो "प्राणिरजतादिभ्योऽञ्" आदि से होने वाले विशेष प्रत्यय हैं उनके विषय में भी यह 'मयट्' जिस प्रकार हो सके उसके लिए 'एतयोः' का ग्रहण है—कपोतमयम्, कापोतम्, लौहमयम्, लौहम् । [ यहाँ मयट् और अण् दोनों के रूप बनते हैं । ] ॥ १४३ ॥

"भाषायाम् अभक्ष्याच्छादनयोः" ( लौकिक संस्कृत में, भक्ष्य तथा आच्छादन अर्थों को छोड़ कर )—इसकी अनुवृत्ति होती है । वृद्ध-संज्ञक प्रातिपदिकों से और शरादि शब्दों से भक्ष्य तथा आच्छादन अर्थों को छोड़ कर विकार तथा अवयव अर्थों में भाषा = लौकिक संस्कृत में 'मयट्' प्रत्यय नित्य होता है । उदा०—वृद्धसंज्ञकों से—'आम्रमयम् । शालमयम् । शाकमयम् । शरादि से—शरमयम् । दर्भमयम् । मृण्मयम् ।

चूँकि यह सूत्र बनाया गया है इसी कारण यह प्रत्यय नित्य होगा, तब 'नित्य' इसके ग्रहण की क्या आवश्यकता ? एकाच् शब्द से नित्य 'मयट्' की इच्छा आचार्य करते हैं, वह इस सूत्र से किया जाता है । उदा०—त्वङ्मयम् । स्रङ्मयम् । वाङ्मयम् । [ त्वचः विकारः अवयवः वा—इस विग्रह में त्वच् + मयट् कुत्व और "प्रत्यये

शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज । शरादिः ॥

**१७१८. गोश्च पुरीषे ॥ १४५ ॥ ( १५२५ )**

गोशब्दात्पुरीषेऽभिधेये मयट् प्रत्ययो भवति । गोमयम् ।

पुरीष इति किम् ? गव्यं पयः । पुरीषं न विकारो न चावयवः । तस्येदंविषये विधानम् । विकारावयवयोस्तु गोपयसोर्यत् ( ४.३.१६० ) वक्ष्यति ॥

**१७१९. पिष्टाच्च ॥ १४६ ॥ ( १५२६ )**

पिष्टशब्दान्नित्यं मयट् प्रत्ययो भवति 'तस्य विकारे' इत्येतस्मिन् विषये । अणोऽपवादः । पिष्टमयं भस्म ॥

**न्यासः**

मिति शब्दाधिक्यादर्थाधिक्यं भवतीति नित्यग्रहणेनायमर्थः सूच्यते। यद्येवम्, नित्यग्रहणादेव मृच्छब्दादपि नित्योऽयं मयट् सिद्धः, तदपार्थकोऽस्य शरादिषु पाठः ? नानर्थकः; नित्यग्रहणस्यैवोदाहरणप्रदर्शनार्थत्वात् ॥१४४॥

**गोश्च पुरीषे ॥ गव्यमिति ।** गोरिदमित्यर्थविवक्षायां सर्वत्र 'गोरजादिप्रसङ्गे यत्' इति यत् 'वान्तो यि प्रत्यये' इत्यवादेशः। **पुरीषं न विकारो नाप्यवयव इति ।** प्रकृतत्वाद् गोरिति गम्यते । तत्र विकारस्तावन्न भवति; प्रकृतेरवस्थान्तरं विकारः, न च गोरवस्थान्तरं पुरीषम्; गोधर्मानन्वयात्[1] । वस्तूपकारस्य[1] समुदायस्यैकदेशो ह्यारम्भकोऽवयवो भवति, यथा हस्तादि शरीरस्य; न चैवं गोः पुरीषम् । क्व तर्हीदं विधानमित्याह— **तस्येदंविषय इति ।** गवा भावितत्वात् पुरीषस्य, तत् तस्याः कार्यमिति तस्येदमर्थो भवति। तस्मात् तत्रैवेदं मयटो विधानम् । विकारावयवयोस्तर्हि केन भवितव्यम् ? इत्याह—**विकारावयवयोस्त्वित्यादि** ॥ १४५ ॥

**पिष्टाच्च ॥ अणोऽपवाद इति ।** पिष्टशब्दोऽयम् 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः, तेन तस्मादौत्सर्गिकः प्राप्नोति, ततस्तस्यायमपवादः ॥ १४६ ॥

**पदमञ्जरी**

**तदनेन क्रियत इति ।** नित्यंशब्दोऽतिरिच्यमानः पूर्वाचार्यपठितस्य वाक्यस्य स्मारक इति । एवं च मृच्छब्दस्य शरादिषु पाठोऽस्यैव प्रपञ्चार्थो द्रष्टव्यः ॥ १४४ ॥

**गोश्च पुरीषे ॥ गव्यं पय इति ।** कथं पुनरत्र प्रसङ्गः, यावता विकारावयवयोरिति वर्तते, पयश्च न विकारो नावयवः ? तत्राह—**पुरीषं न विकार इत्यादि ।** अक्रियमाणे पुरीषग्रहणे इष्टसिध्यर्थमेव 'तस्येदम्' इत्यधिकारे 'गोर्मयट्' इति सूत्रं कर्तव्यम्, ततश्चात्रापि प्रसङ्ग इत्यर्थः ॥ १४५ ॥

**भावबोधिनी**

भाषायां नित्यम्'' इस वार्तिक से नित्य परसवर्ण होता है। इसी प्रकार स्रज् + मयट्, वाच् + मयट् में भी समझना चाहिए। ]

शर । दर्भ । मृत् । कुटी । तृण । सोम । बल्वज—ये शरादि हैं ॥ १४४ ॥

'पुरीष' ( गोबर ) अर्थ वाच्य रहने पर 'गो' शब्द से 'मयट्' प्रत्यय होता है । उदा०—गोमयम् ।

पुरीष—इसका क्या फल है ? गव्यं पयः । [ यहाँ 'यत्' होता है । ] 'पुरीष' न तो विकार है और न अवयव । 'गोरिदम्' इस अर्थ में अर्थात् सम्बन्धी अर्थ में यह विधान है । विकार तथा अवयव अर्थों में यत् का विधान आगे [ ''गोपयसोर्यत्'' सूत्र से ] कहा जायगा ॥ १४५ ॥

'तस्य विकारः' इस विषय में 'पिष्ट' शब्द से नित्य मयट् प्रत्यय होता है। यह अण् का अपवाद है। उदा० -पिष्टमयं भस्म ॥ १४६ ॥

---

१–१ 'गोधर्मान्वयारोदनवस्तूपकारस्य' इति मुद्रितः पाठोऽपपाठः; अर्थासङ्गतेः।

**१७२०. संज्ञायां कन् ॥ १४७ ॥ ( १५२७ )**

**पिष्टशब्दात्कन् प्रत्ययो भवति विकारे संज्ञायां विषये । मयटोऽपवादः । पिष्टकः ॥**

**१७२१. व्रीहेः पुरोडाशे ॥ १४८ ॥ ( १५२८ )**

**व्रीहिशब्दान्मयट् प्रत्ययो भवति पुरोडाशे विकारे । बिल्वाद्यणोऽपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥**

**१७२२. असंज्ञायां तिलयवाभ्याम् ॥ १४९ ॥ ( १५२९ )**

**तिल-यवशब्दाभ्यामसंज्ञाविषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः । तिलमयम् । यवमयम् । असंज्ञायामिति किम् ? तैलम् । यावकः । 'यावादिभ्यः कन्' ( ५.४.२९ ) ॥**

**१७२३. द्व्यचश्छन्दसि ॥ १५० ॥ ( ३४५३ )**

**द्व्यचः प्रातिपदिकाच् छन्दसि विषये मयट् प्रत्ययो भवति विकारावयवयोरर्थयोः । भाषायां मयडुक्तः, छन्दस्यप्राप्तो विधीयते—यस्य पर्णमयी जुहूर्भवति (नि० ३.५.७.१) । दर्भमयं वासो भवति (मै० सं० १.११.१) । शरमयं बर्हिर्भवति ( का० सं० ११.८ )**

**न्यास**

**संज्ञायां कन् ॥ मयटोऽपवाद इति ।** पूर्वसूत्रेण प्राप्तस्य । ननु च संज्ञायां कनं वक्ष्यत्येव, तदपार्थकं तद्विधानम् ? नैतदस्ति; स ह्यल्पादिष्वर्थेषु, अयं तु विकारे । तदिदं सार्थकम्; अर्थभेदात् ॥ १४७ ॥

**व्रीहेः पुरोडाशे** ॥ १४८ ॥ **असंज्ञायां तिलयवाभ्याम् ॥ तिलयवशब्दावाद्युदात्ताविति ।** तस्मादण्प्राप्नोति, अतस्तस्यायमपवादः । आद्युदात्तत्वं तु तयोः 'तृणधान्यानां द्व्यषाम्' इत्यनेनैव भवितव्यम् । अस्यायमर्थः—तृणधान्यानां द्व्यचामादिरुदात्तो भवतीति ।

**यावक इति ।** विकारेऽण् । तदन्तात् तु 'यावादिभ्यः कन्' इति कन् ॥ १४९॥

**पदमञ्जरी**

**पिष्टाच्च ॥ पिष्टमयं भस्मेति ।** पैष्टी सुरेति तु सामान्यविवक्षायाम् 'तस्येदम्' इत्यण्, 'प्रदीयतां दाशरथाय मैथिली' इतिवत् ॥ १४६ ॥ १४७ ॥ १४८ ॥

**असंज्ञायां तिलयवाभ्याम् ॥ यावक इति ।** यवशब्दाद्विकारेऽण्, तदन्ताद् 'यावादिभ्यः' इति स्वार्थे कन् ॥ १४९ ॥ १५० ॥

**भावबोधिनी**

विकार अर्थ में संज्ञा-विषय में 'पिष्ट' शब्द से कन् प्रत्यय होता है । मयट् का अपवाद है ।उदा०—पिष्टकः ॥१४७॥

पुरोडाश (यज्ञीय पदार्थविशेष) विकारअभिधेय रहने पर 'व्रीहि' शब्द से मयट् प्रत्यय होता है। "बिल्वादिभ्योऽण्" सूत्र से प्राप्त अण् का यह अपवाद है । उदा०—व्रीहिमयः पुरोडाशः । अन्य पदार्थ—'व्रैहम्' कहा जाता है ॥ १४८ ॥

असंज्ञा-विषय में विकार और अवयव अर्थों में 'तिल' तथा 'यव' शब्दों से मयट् प्रत्यय होता है । उदा०—तिलमयम्, यवमयम् । [ तिलस्य विकारः अवयवः वा—यह विग्रह है । ]

असंज्ञा—विषय में—इसका क्या फल है ? तैलम् । यावकः । [ एक विशेष प्रकार के 'लाख' अथवा 'जौं' की संज्ञा है । इसमें 'यावादिभ्यः कन्' सूत्र से कन् प्रत्यय स्वार्थ में होता ] ॥ १४९ ॥

दो अचों वाले प्रातिपदिक से छन्दोविषय में विकार तथा अवयव अर्थों में 'मयट्' प्रत्यय होता है । भाषा = लौकिक संस्कृत में मयट् का विधान [ "मयड् वैतयोः" सूत्र से ] किया जा चुका है, छन्दः = वेद में अप्राप्त है उसका विधान किया जा रहा है । उदा०—यस्य पर्णमयी जुहूर्भवति । [ पर्ण + मयट् ] दर्भमयं वासो भवति । [ दर्भ + मयट् ] शरमयं बर्हिः भवति । [ शर + मयट् ] ॥ १५० ॥

## १७२४. नोत्वद्वर्ध्रबिल्वात् ॥ १५१ ॥ ( ३४५४ )

**उत्वतः प्रातिपदिकाद् वर्ध्र-बिल्वशब्दाभ्यां च मयट् प्रत्ययो न भवति । 'द्व्यचश्छन्दसि' ( ४.३.१५० ) इति प्राप्तः प्रतिषिध्यते । मौञ्जं शिक्यम् ( तै० सं० ५.१.२०.१ ) गार्मुतं चरुम् ( तै० सं० २.४.४.१ ) । वार्ध्री=बालप्रग्रथिता भवति । बैल्वो ब्रह्मवर्चसकामेन कार्यः ( मै० सं० ३.९.३ ) ।**

**तपरकरणं तत्कालार्थम् । धूममयान्यभ्राणि ।**

**मतुब्निर्देशस्तदन्तविधिनिरासार्थः । इहैव स्यात्—वैणवी यष्टिरिति ॥**

### न्यासः

**द्व्यचश्छन्दसि ॥ १५० ॥ नोत्वद्वर्ध्रबिल्वात् ॥ मौञ्जमिति ।** मुञ्जाशब्दस्य पूर्वपदाद्युदात्तत्वेन तस्मादौत्सर्गिक एवाण् । **गार्मुतमिति ।** 'मृग्रोरुतिः', 'ग्रोर्मुट् च' इति प्रत्ययस्वरेण गर्मुच्छब्दोऽन्तोदात्तः । तस्माद् 'अनुदात्तादेश्च' इत्यञ् । **वार्ध्रीति ।** 'बृधिवपिभ्यां रन्' वर्ध्रशब्दो नित्स्वरेणाद्युदात्तः, तस्मात् 'प्राग्दीव्यतोऽण्' इति ङीप् । **बैल्वमिति ।** 'बिल्वादिभ्योऽण्' ।

अथ मतुपा निर्देशः किमर्थः ? न नोद्वर्ध्रबिल्वादित्येवोच्येतेत्यत आह—**मतुब्निर्देश इति ।** 'नोत्वद्वर्ध्रबिल्वात्' इत्युच्यमान उदिति वर्णग्रहणं स्यात् । अत्र वर्णग्रहणे सर्वत्र तदन्तविधिं प्रयोजयतीति तस्मात्तन्निषेधाय मतुब्निर्देशः । कः पुनस्तदन्तविधौ सति दोषः स्यादित्यत आह—**इहैवेत्यादि ।** एवकारेण मुञ्जादिभ्यो न स्यादिति दर्शयति । **वैणवीति ।** बिल्वादित्वादण् ॥ १५१ ॥

### पदमञ्जरी

**नोत्वद्वर्धबिल्वात् ॥ मौञ्जमिति ।** मुञ्जशब्दात् 'तृणधान्यानां च द्व्यषाम्' ( फि० सू० २·२७ ) इत्याद्युदात्तत्वादौत्सर्गिकोऽण् । **गार्मुतमिति ।** गर्मुच्छब्दः 'मृग्रोरुतिः' ( द० उ० ६·१ ), 'ग्रोर्मुट् च' ( दश० उ० ६·२ ) इत्युतिप्रत्ययान्तत्वादन्तोदात्त इति 'अनुदात्तादेश्च' इत्यञ् । कथं तर्हि 'तस्मा एतं गार्मुतं चरुं निर्वपेत्' इत्यन्तोदात्तत्वम् ? सर्वविधीनां छन्दसि विकल्पितत्वादण् भविष्यति **वार्ध्रीति ।** वर्ध्रशब्दः 'लघावन्ते' (फि० सू० २·४२) इत्याद्युदात्तः, तस्मादण्, 'टिड्ढाणञ्' इति ङीप् ।

**मतुब्निर्देशे इत्यादि ।** असति तस्मिन्वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिः स्यात् । **वैणवीति ।** बिल्वाद्यण ॥ १५१ ॥

### भावबोधिनी

ह्रस्व उकारवान् प्रातिपदिक से और वर्ध्र तथा बिल्व शब्दों से मयट् प्रत्यय नहीं होता है । ''द्व्यचश्छन्दसि'' इस सूत्र से प्राप्त मयट् का प्रतिषेध किया जा रहा है । उदा०—मौञ्जं शिक्यम् [ यहाँ 'मुञ्ज' से मयट् प्राप्त है उसका प्रतिषेध करने पर ''तृणधान्यानां च द्व्यषाम्'' सूत्र से औत्सर्गिक अण् होता है । मूंज का बना हुआ सींका । ] गार्मुतं चरुम् । [ गर्मुत्+अण् । ] वार्ध्री [ वर्ध्र=चमड़ा, इससे बनी हुई वस्तु ] बालप्रग्रथित होती है ।'' ''बैल्वः ब्रह्मवर्चसकामेन कार्यः । [ यहाँ भी मयट् न होकर अण् होता है । ]

उत्वान्—में तपरकरण तत्काल=एकमात्रा कालवाले अर्थात् केवल ह्रस्व उकार वाले के ग्रहण के लिए है । उदा०—धूम्रमयानि अभ्राणि । [ धूम में द्विमात्रिक 'ऊ' है । अतः निषेध न होकर मयट् होता है । ]

मतुप् प्रत्ययविशिष्ट का निर्देश तदन्तविधि के निरास के लिए है । यदि तदन्तविधि होती तो केवल इन्हीं में होता—वैणवी यष्टिः । [ वेणु—उकारान्त है । तदन्तविधि में ऐसे शब्दों से ही मयट् का निषेध होकर अण् होता । ] १५१ ॥

## १७२५. तालादिभ्योऽण ॥ १५२ ॥ ( १५३० )

तालादिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति विकारावयवयोरर्थयोः । मयडादीनामपवादः । तालं धनुः । बार्हिणम् । ऐन्द्रालिशम् ।

❀ तालाद्धनुषि[1] ❀ गणसूत्र । बर्हिण । इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । चाप[2] । श्यामाक । पीयुक्षा । तालादिः ॥

### न्यास

**तालादिभ्योऽण् ॥ मयडादीनामपवाद इति ।** आदिशब्देनाञः । प्रकृतिभदात् तयोर्बहुत्वस्य विवक्षितत्वाद् द्वयोरपि वहुवचनम् । तत्र तालश्यामाकशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः । बर्हिणो विकारोऽवयवो वेति 'प्राणिरजतादिभ्योऽञ्' इत्यनेन बार्हिणशब्दोऽपि विकारावयवप्रत्ययान्तः, तेन तस्मादञ् 'ञितश्च तत्प्रत्ययात्' इति प्राप्तस्याञोऽपवादः । शेषेभ्यस्त्विन्द्रालिशादिभ्योऽनुदात्तादिलक्षणस्याञः । लिशिदृशिभ्यामिन्द्र उपपदे 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति कप्रत्ययः । 'अन्येषामपि दृश्यते' दीर्घत्वम् । 'गतिकारकोपपदात् कृत्' इति कृत्स्वरेणान्तोदात्तौ **इन्द्रालिशेन्द्रादृशशब्दौ ।** **इन्द्रायुधशब्दः** समासस्वरेणान्तोदात्तः । 'चप सान्त्वने' 'पचाद्यच्' चपशब्दोऽन्तोदात्तः । **पीयूक्षाशब्दः** 'लघावन्ते' इत्यादिना मध्योदात्तः । यद्यप्यस्य टापि कृते 'लघावन्ते' इति नास्ति, प्राक् तु टापो विद्यत एव, तस्यामेवावस्थायां मध्योदात्तत्वं भवति ।

**तालाद् धनुषीति** पठ्यते । तालशब्दादण् प्रत्ययो भवति धनुष्यभिधेय इति । तालं धनुः, तालमयमन्यत् । अथाण्ग्रहणं किमर्थम्, न यथाविहितमेवोच्येत ? नैवं शक्यम्; बार्हिणशब्दाद् वृद्धिलक्षणो मयड् 'ञितश्च तत्प्रत्ययात्' इत्यणा बाधितः । तत्रारम्भसामर्थ्याद् मयडेव स्यात् । **श्यामाकशब्दः** 'लघावन्ते' इत्यादिना मध्योदात्तः । तस्माद् 'अनुदात्तादेरञ्' परत्वाद् वृद्धलक्षणेन मयटा बाधित इति पुनरारम्भसामर्थ्यादञेव स्यात् । अण्ग्रहणादणेव भवति ॥ १५२ ॥

### पदमञ्जरी

**तालादिभ्योऽण् ॥ मयडादीनामपवाद इति ।** आदिशब्देनाञो ग्रहणम्, बहुवचनं तु तयोरेव प्रकृतिभेदेन बहुत्वात् । तत्र तालश्यामाकाभ्यां वृद्धत्वान्मयट् प्राप्तः, बर्हिणस्य विकारो बार्हिणम्—'प्राणिरजतादिभ्योऽञ्', तस्माद् 'ञितश्च तत्प्रत्ययात्' इत्यञ् प्राप्तः, शेषेभ्योऽनुदात्तादिलक्षणस्य । लिशिदृशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । 'चप् सान्त्वने' ( धा० पा० ३९९ ), पचाद्यच् । पीयूक्षाशब्दः 'लघावन्ते' ( फि० सू० २.४२ ) इति मध्योदात्तः, यत्र हि 'फिष' इत्यधिकारात्प्रागेव टापः स्वरप्रवृत्तिः, इन्द्रायुधशब्द समासस्वरेणान्तोदात्तः ।

**तालाद्धनुषीति ।** अन्यत्र तालमयमित्येव भवति । अण्ग्रहणं बाधकबाधनार्थम्, अन्यथा यथाविहितमित्युच्यमाने बार्हणशब्दादवृद्धलक्षणो मयट् स्यात्, वचनं तु 'ञितश्च तत्प्रत्ययात्' इत्यञो बाधनार्थं स्यात् ॥ १५२ ॥

### भावबोधिनी

'विकार' और 'अवयव' अर्थों में तालादि प्रातिपदिकों से अण् प्रत्यय होता है । यह मयट् आदि का अपवाद है । उदा०—तालं धनुः । [ ताल + अण् । ] बार्हिणम् । ऐन्द्रालिशम् । ❀ ताल से धनुष अर्थ में अण् होता है । ❀ [ इस गण में पठित शब्द—- ] बर्हिण । इन्द्रालिश । इन्द्रादृश । इन्द्रायुध । चाप । श्यामाक । पीयुक्षा । ये तालादि हैं ॥ १५२ ॥

---

१. इतोऽग्रे 'तालमयमन्यत्, नित्यं वृद्धेति मयट्'—-इत्यधिकमन्यत्र दृश्यते ।　　२. चर्ग—इति पाठा० ।

## १७२६. जातरूपेभ्यः परिमाणे ॥ १५३ ॥ ( १५३१ )

**जातरूपम् = सुवर्णम् । बहुवचननिर्देशात्तद्वाचिनः सर्वे गृह्यन्ते । जातरूपवाचिभ्यः प्रातिपदिकेभ्योऽण् प्रत्ययो भवति परिमाणे विकारे । मयडादीनामपवादः । हाटको निष्कः । हाटकं कार्षापणम् । जातरूपम् । तापनीयम् ।**

**परिमाण इति किम् ? यष्टिरियं हाटकमयी ॥**

## १७२७. प्राणिरजतादिभ्योऽञ् ॥ १५४ ॥ ( १५३२ )

**प्राणिवाचिभ्यः प्रातिपदिकेभ्यो रजतादिभ्यश्चाञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । अणादीनामपवादः । अनुदात्तादेरञ् विहित एव, परिशिष्टमिहोदाहरणम् । प्राणिभ्यस्तावत्—कापोतम् । मायूरम् ।**

### न्यासः

**जातरूपेभ्यः परिमाणे ॥ बहुवचननिर्देशादित्यादि ।** यदि स्वरूपग्रहणमभीष्टं स्यात् तस्यैकत्वादेकवचनेनैव निर्देशं कुर्यादिति भावः । **मयडादीनामिति ।** आदिशब्देनाञो ग्रहणम् । बहुवचनं तु पूर्ववत् । तत्र ये वृद्धा हाटकजातरूपप्रभृतयः, तेभ्यो मयटोऽपवादः । ये तु तपनीयप्रभृतयोऽनुदात्तादयस्तेभ्योऽञः । **तापनीयमिति ।** तपनीयशब्दः 'लघावन्ते' इत्यादिना मध्योदात्तः । १५३ ॥

**प्राणिरजतादिभ्योऽञ् ॥ अणादीनामपवाद इति ।** आदि शब्देन मयट् परिगृहते । बहुवचनं तु पूर्ववत् । तत्र ये प्राणिशब्दा आद्युदात्तास्तेभ्योऽणपवाद इति । ये तु वृद्धास्तेभ्यो मयट् परिगृह्यते । रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः । यत् पुनरनुदात्तादि तस्मान् मयटः । ततो हि 'अनुदात्तादेश्च' इत्यनेनैवाञि सिद्धे पुनर्वचनमञेव यथा स्याद्, 'मयड्वैतयोः' इत्यादिना मयड् मा भूदित्येवमर्थम् । तत्र **रजतं** घृतादिपाठादन्तोदात्तम् ।

### पदमञ्जरी

**जातरूपेभ्यः परिमाणे ॥ मयडादीनामपवाद इति ।** आदिशब्देनाञो ग्रहणम्, बहुवचनं तु पूर्ववत् । तत्र वृद्धेभ्यो हाटकादिभ्यो मयटोऽपवादः, तपनीयादिभ्योनुदात्तादिभ्योऽञः ॥ १५३ ॥

**प्राणिरजतादिभ्योऽञ् ॥ अणादीनामिति ।** आदिशब्देन मयड् गृह्यते, बहुवचनं तु पूर्ववत् । तत्राद्युदात्तेभ्यः प्राणिशब्देभ्योऽणोऽपवादः, वृद्धेभ्यो मयटः, रजतादिष्वपि यदाद्युदात्तं तस्मादणोऽपवादः अनुदात्तादेस्तु मयटः । **कापोतम्, मायूरम्, तैतिरमिति ।** तित्तिरिशब्दस्तरतेः 'सन्वच्चाभ्यासस्य' इति किप्रत्ययान्तोऽन्तोदात्तः, शेषौ 'लघावन्ते' ( फि० सू० २.४२ ) इति मध्योदात्तौ । **परिशिष्टमिहोदाहरणमिति चोक्तम्,** तस्माच्छुक-बक-गृध्रादय इहोदाहार्याः । शुकबकशब्दौ 'प्राणिनां कुपूर्वाणाम्' ( फि० सू० २.३० ) इत्याद्युदात्तौ । गृध्रशब्दो रन्प्रत्ययान्त

### भावबोधिनी

जातरूप = सुवर्ण । बहुवचन के निर्देश के कारण जातरूप के वाचक सभी शब्दों का ग्रहण होता है । परिमाण विकार अर्थ में जातरूपवाची प्रातिपदिकों से अण् प्रत्यय होता है । यह मयट आदि का अपवाद है । उदा०—हाटकः निष्कः । [ हाटक + अण्, सोने का सिक्का । ] हाटकं कार्षापणम् । [ सोने का पैसा ] जातरूपम् । तापनीयम् । [ तपनीय + अण् ]

परिमाण—यह किस लिए है ? यष्टिरियं हाटकमयी । [ यहाँ परिमाण की प्रतीति न होने से अण् नहीं होता है । ] । १५३ ॥

प्राणिवाची प्रातिपदिक से और रजतादि से विकार तथा अवयव अर्थों में अञ् प्रत्यय होता है । यह अणादि का अपवाद है । अनुदात्त जिसके आदि में है उससे अञ् प्रत्यय [ ४।३।१४० से ] किया ही जा चुका है, इससे बचे हुये शब्द यहाँ उदाहरण बनते हैं । प्राणिवाचक से पहले उदा० —कापोतम् । [ कपोतस्यावयवः विकारः वा—इस विग्रह में अञ् प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप । ] मायूरम् [ मयूरस्यावयवः विकारः वा— ] तैतिरम् । [ तित्तिरस्यावयवः

**तैत्तिरम् । रजतादिभ्यः—राजतम् । सैसम् । लौहम् ।**

**रजतादिषु येऽनुदात्तादयः पठ्यन्ते—रजत-कण्टकारप्रभृतयः, तेभ्योऽञि सिद्धे पुनर्वचनं मयड्बाधनार्थम् ।**

**रजत । सीस । लोह । उदुम्बर । नीलदारु[1] । रोहितक । बिभीतक । पीतदारु । तीव्रदारु । त्रिकण्टक । कण्टकार । रजतादिः ॥**

## १७९८. ञितश्च तत्प्रत्ययात् ॥ १५५ ॥ ( १५३३ )

**'अञ्' इत्येव । तदिति विकारावयवयोरर्थयोः प्रत्यवमर्शः । ञितो विकारावयवप्रत्ययस्तदन्तात्प्रातिपदिकादञ्प्रत्ययो भवति 'विकारावयवयोः[2]' इत्येव । मयटोऽपवादः । 'ओरञ्' ( ४.३.१३९ ), अनुदात्तादेश्च**

**न्यासः**

**सीस, लोहेति** 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तम् । अस्यायमर्थः—नपुंसकविषयस्य शब्दस्यानिसन्तस्यादिरुदात्तो भवतीति । नबिति नपुंसकस्य संज्ञा । अन्त्यात् पूर्वमित्यनुवर्तमाने 'शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च' इत्युदुम्बरेऽन्त्यात् पूर्वमक्षरमुदात्तम् । **नीलदारु-रोहितक-बिभीतक** इत्येतेषां 'लघावन्ते' इत्यादिना मध्योदात्तत्वम् । पीतदारुशब्दमपि केचित् पठन्ति, स 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः 'तरतेर्ड्रि' इति ड्रिप्रत्ययान्तत्वात् त्रिशब्दस्य प्रत्ययस्वरेणाद्युत्तत्वम् । त्रयः कण्टका अस्येति बहुव्रीहिः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति त्रिकण्टकशब्द आद्युदात्तः । कण्टं करोतीति कर्मण्यण् । कण्टकारकशब्दः कृत्स्वरेणान्तोदात्तः ॥१५४॥

**ञितश्च तत्प्रत्ययात् ॥ मयटोऽपवाद इति** । वृद्धलक्षणस्य सर्वस्य ञित्प्रत्ययान्तत्य वृद्धत्वात् । **एते प्रत्यया गृह्यन्त इति** । ननु चैकानुबन्धपरिभाषया ष्ट्लञो ग्रहणं न प्राप्नोति ? नैष दोषः; ञितश्च' इति चकारस्तत्स-

**पदमञ्जरी**

आद्युदात्तः । कथं तर्हि कापोतमित्याद्युदाहृतम्, सत्युदात्तार्थे प्राणिग्रहणेऽनुदात्तादेरपि प्राणिनः परत्वादनेनैवाऽभवितुमर्हतीति मन्यते, आह च 'अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन' इति ? कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? सापवादकः स विधिर्मयटा परेण बाध्यते, अयं पुनर्निरपवादः, अनेनैव हि परत्वान्मयड् बाध्यते । किं सिद्धं भवति ? श्वाविधो विकारः शौवाविधा इति सिद्धं भवति । कथं सिद्धं भवति ? श्वानं विध्यतीति क्विप्, 'नहिवृत्ति' इति दीर्घः, ग्रहिज्यादिसम्प्रसारणम्, कृदुत्तरपदकृतिस्वरेणान्तोदात्तत्वादनुदात्तादिः । तत्रानुदात्तलक्षणस्याञो बाधकं मयटं परत्वादयमञ् बाधते, द्वारादित्वाद्वृद्धिप्रतिषेधः, ऐजागमश्च ॥ १५४ ॥

**ञितश्च तत्प्रत्ययात्** ॥ तयोर्वाचकत्वेन यः सम्बन्धो प्रत्ययः स तत्प्रत्ययः षष्ठीसमासः । **विकारावयवयोरेवेति** । यदि तु ञित्प्रत्ययान्तः प्राण्योषधिवृक्षावाची सम्भवति ततोऽवयवेऽपि भवति; द्वयो प्रकृतत्वाद् ।

**भावबोधिनी**

विकारः वा । ] रजतादि से अञ् के उदा०—राजतम् । [ रजतस्यावयवः विकारः वा ] सैसम् । लौहम् । [ अवयव या विकार । ]

रजतादि के अन्तर्गत जो अनुदात्तादि पढ़े जाते हैं—रजत, कण्टकार आदि, इन शब्दों से अनुदात्तादि मान कर पूर्वसूत्र [ ४।३।१४० ] से अञ् प्रत्यय के सिद्ध रहते पुनः यह विधान मयट् का बाध करने के लिए है ।

[ इस गण में पठित शब्द — ] रजत । सीस । लोह । उदुम्बर । । नीलदारु । रोहितक । बिभीतक । पीतदारु । तीव्रदारु । त्रिकण्टक । कण्टकार—ये रजतादि हैं ।। १४४ ।।

'अञ्' इसकी अनुवृत्ति होती है । 'तत्' इस सर्वनाम शब्द से विकार और अवयव—इन अर्थों का परामर्श होता है । विकार और अवयव अर्थों में होने वाला जो ञित् प्रत्यय, यह जिसके अन्त में है ऐसे प्रातिपदिक से 'विकार'

१. 'नीचदारु' इति पाठा० ।　　२. विकारावयवयोरव—पाठा० ।

( ४. ३. १४०) 'पलाशादिभ्यो वा', ( ४.३.१४१ ) 'शम्याष्ट्लञ्' ( ४.३.१४२ ), 'प्राणिरजतादिभ्योऽञ्' ( ४.३.१५४ ), 'उष्ट्राद्वुञ्' ( ४.३.१५७ ), 'एण्या ढञ्' ( ४.३.१५९ ), 'कंसीयपरशव्ययोर्यञञौ लुक्च' ( ४.३.१६८ )—इत्येते प्रत्यया गृह्यन्ते । दैवदारवस्य विकारोऽवयवो वा दैवदारवम् । दाधित्थस्य दाधित्थम् । पालाशस्य पालाशम् । शामीलस्य शामीलम् । कापोतस्य कापोतम् । औष्ट्रकस्य औष्ट्रकम् । ऐणेयस्य ऐणेयम् । कांस्यस्य कांस्यम् । पारशवस्य पारशवम् ।

### न्यासः

मुच्चयार्थः तेन तस्यापि ग्रहणं भविष्यति । ओरञो ग्रहणेन 'अनुदात्तादेश्च' 'पलाशादिभ्यो वा' इत्यतेत्सूत्रग्रहणं वेदितव्यम्; अभिन्नत्वात् । य एवम् 'ओरञ्' इत्यनेनाञ्विहितः स एवास्मिन् सूत्रद्वयेऽनुवर्तते । **दैवदारवस्य विकारोऽवयवो वेत्यादिना** यथायोगमेषां प्रत्ययानामुदाहरणादीनि दर्शयति । **कांस्यम्** । **पारशवमिति** । कंसाय हितमिति 'प्राक् क्रीताच्छः' कंसीयः । परशवे हितमित्युगवादित्वाद् यत् । परशव्यस्य विकारोऽवयवो वेति 'कंसीयपरशव्ययोर्यञञौ लुक् च' इति यथासंख्यं यञञौ भवतः, छयतोश्च लुक्—कांस्यम्, पारशवः, तयोर्विकारोऽवयवो वेत्यनेनाञ् । **वैल्वमयमिति** । विल्वशब्दो 'विल्वादिभ्योऽण्' इत्यण्णन्तः, ततो वृद्धलक्षणो मयडेव भवति । **वैदमयमिति** । 'अनृष' इत्यादिनाञ्—वैदः । भवत्ययमञ्प्रत्ययो ञित्, न तु विकारावयवलक्षणः, तेन मयडेव भवति ॥ १५५ ॥

### पदमञ्जरी

लक्ष्यमनपेक्ष्यैवमुक्तम् । ननु च पूर्वे पञ्चालाः । पटो दग्ध इत्यवयवे समुदायशब्दो दृष्टः, विकारे च प्रकृतिशब्दः—शालीन्भुङ्क्ते मुद्गैरिति शालिविकारान्मुद्गविकारैरित्यर्थः; ततश्च देवदार्वाद्यवयवविकारवृत्तेर्देवदार्वादिशब्दात् तद्विकारावयवयोस्तेन तेनाञादयो भविष्यन्ति, नार्थोऽनेनेत्याशङ्क्याह—**मयटोऽपवाद इति** । सत्यमस्ति यथाकथञ्चिदिष्टसिद्धिः, तथापि वृद्धलक्षणो मयण्मा भूदित्येवमर्थमेवाञ्विधेयः । अन्यथा येनैव हेतुनैतद्वाक्यं भवति—दैवदारवस्य विकारः, शामलस्य विकारः, तेनैव मयडपि स्यात्, विकारार्त्तेनैव हेतुना मयडपि प्राप्नोति ? अनभिधानान्न भविष्यति, तदेव तर्ह्यनभिधानं विधानेन प्रतिपाद्यते । यद्येवम्, 'तस्य विकारः' 'उष्ट्राद् वुञ्' औष्ट्रकं चर्म, तस्य विकार औष्ट्रिकोपानदिति, 'टिड्ढाणञ्' इति ङीप्प्राप्नोति, न चेष्यते, एवं हि सौनागाः पठन्ति—'वुञश्चाञ ईतः प्रसङ्गः' इति । तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्द इति तेन तेन लक्षणेनाञादयो भविष्यन्ति । अनभिधानात्तु विकारावयवप्रत्ययान्तान्न मयड् भविष्यतीत्येतदेव साम्प्रतम् । **वैल्वमयमिति** । 'ञितो यत्नेन मयटं सूत्रकारो निवर्त्तयन् अन्यतो वष्टि मयटम्' इति **वृत्तिकृतो** मतम् । **भाष्यवार्त्तिककारौ** पुनराहतुः—'तच्चानभिधानमाश्रयितव्यम्, अभिधाने ह्यन्यतोऽपि मयटः प्रसङ्गः—बैल्वस्य विकारः' इति ॥ १५५ ॥

### भावबोधिनी

और 'अवयव' अर्थों में ही अञ् प्रत्यय होता है। यह मयट् का अपवाद है। 'ओरञ्', 'अनुदात्तादेश्च', 'पलाशादिभ्यो वा', 'शम्याष्टलञ्', 'प्राणिरजतादिभ्योऽञ्', 'उष्ट्राद्वुञ्', 'एण्या ढञ्, कंसीयपरशव्ययोर्यञञौ'—इनसे विहित प्रत्यय लिए जाते हैं। उदा० दैवदारवस्य अवयवः विकारः वा—इस अर्थ में—दैवदारवम् । [ पहले देवदारु से अञ् करके 'दैवदारव' बना कर पुनः इस सूत्र से 'अञ्' प्रत्यय होता है । ] दाधित्थस्य अवयवः विकारः वा—दाधित्थम् । पलाशस्य अवयवः विकारः वा—पालाशम् । शामीलस्य अवयवः विकारः वा—शामीलम् । कापोतस्य अवयवः विकारः वा—कापोतम् । औष्ट्रकस्य अवयवः विकारः वा—औष्ट्रकम् । ऐणेयस्य विकारः अवयवः वा—ऐणेयम् । कांस्यस्य अवयवः विकारः वा—कांस्यम् । पारशव्यस्य अवयवः विकारः वा—पारशव्यम् । [ इनमें अञ्, वुञ्, ढञ् आदि प्रत्यय करने के बाद पुनः 'अञ्' होता है । ]

ञित इति किम् ? बैल्वमयम् । तत्प्रत्ययादिति किम् ? बैदमयम् ॥

**१७२९. क्रीतवत्परिमाणात् ॥ १५६ ॥ ( १५३४ )**

**'प्राग्वतेष्ठञ्' ( ५.१.१८ ) इत्यत आरभ्य क्रीतार्थे ये प्रत्ययाः परिमाणाद्विहितास्ते विकारेऽतिदिश्यन्ते । परिमाणात् क्रीत इव प्रत्यया भवन्ति 'तस्य विकारः' इत्येतस्मिन्विषये । अणादीनामपवादः । संख्यापि परिमाणग्रहणेन गृह्यते, न रूढिपरिमाणमेव । निष्केण क्रीतं नैष्किकम् । एवं निष्कस्य विकारो नैष्किकः । शतेन क्रीतं शत्यम्, शतिकम् । शतस्य विकारः शत्यः, शतिकः । साहस्रः ।**

**न्यासः**

**क्रीतवत् परिमाणात् ॥ अणादीनामपवाद इति ।** आदिशब्देनाञादीनां ग्रहणम् । **संख्यापि परिमाणग्रहणेन गृह्यत इति ।** कथं पुनरेतल्लभ्यते, यावता परिमाणशब्दः प्रस्थादिषु रूढः, न संख्यायाम् ? नैष दोषः; यथैव हि प्रस्थादि परिच्छेदहेतुस्तथा संख्यापि । अत उपमानात् संख्यायामपि परिमाणशब्दो वर्तिष्यते परिमाणमिव परिमाणमिति । नन्वेवं मुख्ये सति गौणग्रहणमयुक्तम् ? अयमत्र दोषः—इह हि तन्त्रेण द्वौ परिमाणशब्दावुच्चारितौ, तत्र द्वितीयं पदमुपात्तम्, तेन संख्यापि गृह्यते । **नैष्किकमिति ।** प्राग्वतेष्ठञ् । **शत्यः, शतिक इति ।** 'शताच्च ठन्यतावशते' । **साहस्रमिति ।** 'शतमानविंशतिकसहस्रवसनादण्' ।

**अध्यर्धपूर्वेत्यादिना ।** सादृश्यार्थे वतौ सति यदिष्टं सम्पद्यते तद्दर्शयति । आदिशब्देन प्रकृत्यादिपरिग्रहः । **द्विसहस्रमिति ।** द्वयोः सहस्रयोर्विकार इति तद्धितार्थे द्विगुः । 'प्राग्वतेः संख्यापूर्वपदात् तदन्तविधिरलुकि' इति तदन्तविधेरभ्यनुज्ञानाद् यथा क्रीतार्थे 'शतमानविंशतिकसहस्रवसनात्' इति द्विसहस्रादण् भवति, तथा विकारेऽपि । तस्य च क्रीतार्थे 'विभाषा कार्षापणसहस्राभ्याम्' इति पक्षे लुग् भवति, तथेहापि । **द्विसाहस्रमिति ।** 'संख्यायाः संवत्सरपूर्वस्य' इत्युत्तरपदवृद्धिः । **द्विनिष्क इति ।** यथा क्रीतार्थे निष्कशब्दात् प्राग्वतेष्ठञ् भवति

**पदमञ्जरी**

**क्रीतवत्परिमाणात् ॥** 'चरणेभ्यो धर्मवत्' इत्यनेन तुल्यमेतत् । **सङ्ख्या च परिमाणग्रहणेन गृह्यत इति ।** चकारादुन्मानं च, परिमीयतेऽनेनेति परिमाणमिति यौगिकः परिमाणशब्द इत्यर्थः । तदाह—**न रूढिपरिमाणमेवेति । नैष्किक इति ।** 'असमासे निष्कादिभ्यः' इति ठक् । **शत्यः, शतिक इति ।** 'शताच्च ठन्यतावशते' । **साहस्रमिति ।** 'शतमानविंशतिकसहस्रवसनादण्' ।

**भावबोधिनी**

ञित् —इसका क्या फल है ? बैल्वमयम् । [ यहाँ मयट् है । ] विकार और अवयव अर्थवाले प्रत्ययान्त से—इसका क्या फल है ? बैदमयम् । [ यहाँ अपत्यार्थक अञ् है विकारावयवार्थक नहीं । ] ॥ १५५ ॥

'प्राग्वतेष्ठञ्' ( पा० सू० ५।१।१८ ) इस सूत्र से लेकर क्रीत अर्थ में जो प्रत्यय परिमाणवाचक से किये गये हैं वे 'विकार' अर्थ में अतिदिष्ट होते हैं । 'तस्य विकारः' इस विषय में परिमाणवाचक से 'क्रीत' के समान प्रत्यय होते हैं । ये अणादि के अपवाद हैं । संख्या भी परिमाण के ग्रहण से गृहीत होती है, न कि केवल रूढिपरिमाण का ग्रहण होता है । उदा०—निष्केण क्रीतम्—इस विग्रह में 'नैष्किकम्' । इसी प्रकार निष्कस्य विकारः—नैष्किकः । [ यहाँ "असमासे निष्कादिभ्यः" ( पा० सू० ५।१।२० ) से ठक् प्रत्यय, आदिवृद्धि, ठ = इक आदेश भसंज्ञा, अलोप । खरीदा गया भी 'नैष्किक' है और 'विकार' भी ] शतेन क्रीतम्—शत्यम्, शतिकम्, । [ यहाँ "शताच्च ठन्यतावशते" ( पा० सू० ५।१।२१ ) से यत् और ठन् प्रत्यय होते हैं । ] इसी प्रकार शतस्य विकारः—शत्यः, शतिकः । [ सहस्रेण क्रीतः—इस विग्रह में— ] 'साहस्रः' बनता है । [ "शतमानविंशतिकसहस्रवसनादण्" ( पा० सू० ५।१।२७ ) से अण् होता है । विकार अर्थ में भी यही रूप बनता है । ]

**वतिः सर्वसादृश्यार्थः। अद्धचर्द्धपूर्वाद् 'द्विगोर्लुगसंज्ञायाम्' (५.१.१८) इत्येवमादिकमप्यतिदिश्यते। द्विसहस्रः, द्विसाहस्रः। द्विनिष्कः, द्विनैष्किकः॥**

**१७३०. उष्ट्राद् वुञ् ॥ १५७ ॥ ( १५३५ )**

**उष्ट्रशब्दाद्वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। प्राण्यञोऽपवादः। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः॥**

**१७३१. उमोर्णयोर्वा ॥ १५८ ॥ ( १५३६ )**

**उमाशब्दादूर्णाशब्दाच्च वा वुञ् प्रत्ययो भवति विकारावयवयोरर्थयोः। औमम्, औमकम्। और्णम्, और्णकम्॥**

**१७३२. एण्या ढञ् ॥ १५९ ॥ ( १५३७ )**

**न्यासः**

तस्य 'द्वित्रिपूर्वान्निष्कात्' इति पक्षे लुक्, तथेहापि। **द्विनैष्किकमिति**। 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्युत्तरपदवृद्धिर्भवति॥ १५६॥

**उष्ट्राद् वुञ्** ॥ १५७॥ **उमोर्णयोर्वा** ॥ उमाशब्दस्तृणधान्यमित्यादिनाद्युदात्तः, ऊर्णाशब्दोऽपि प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां यथासंख्यमणञोः प्राप्तयोर्विभाषा वुञारभ्यते॥ १५८॥

**एण्या ढञ्** ॥ **पुंसस्त्वञेव भवतीति**। यदिह पुंसो ढञ् स्यात पुंल्लिङ्गेनैव निर्देशं कुर्यादिति। पुंल्लिङ्गेन

**पदमञ्जरी**

**वतिः सर्वसादृश्यार्थ** इति। किमेवं सति सिद्धं भवति? तदाह—**अध्यर्द्धपूर्वेत्यादि**। आदिशब्देन प्रकृतिप्रत्यययोः प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुक्' इति तदन्तविधेश्च परिग्रहः। एतदुक्तं भवति—याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन त एव प्रत्यया विकारे भवन्ति। **द्विसाहस्रमिति**। पक्षे लुक्, 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिः। **द्विनैष्किकमिति**। प्राग्वतीयस्य ठञः 'द्वित्रिपूर्वान्निष्कात्' इति पक्षे लुक्, 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः॥ १५६॥ १५७॥

**उमोर्णयोर्वा** ॥ उमाशब्दस्तृणधान्यानां वेत्याद्युदात्तः, ऊर्णाशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां वुञभावे यथाक्रममणञौ॥ १५८॥

**भावबोधिनी**

'वति' प्रत्यय सभी प्रकार के सादृश्य के ग्रहण के लिए है ''अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्'' (पा० सू० ५।१।२८) इत्यादि सभी का अतिदेश होता है। उदा०—द्विसहस्रः, द्विसाहस्रः' [ द्वयोः सहस्रयोः विकारः—इस विग्रह में 'प्राग्वतेः संख्यापूर्वाद् तदन्तविधिरलुकि'' इस वचन से तदन्तविधि मान कर ''शतमानविंशतिकसहस्रवसनादण्'' सूत्र से अण् प्रत्यय, ''विभाषा कार्षापणसहस्राभ्याम्'' सूत्र से वैकल्पिक लुक्। लुगभाव पक्ष में—''संख्यायाः संवत्सरपूर्वस्य'' से उत्तर पद की वृद्धि होती है। ] द्विनिष्कः, द्विनैष्किकः। [ यहाँ पूर्ववत् ''द्वित्रिपूर्वान्निष्कात्'' से विकल्प से ठञ् का लुक् होता है। लुगभावपक्ष में—''परिमाणान्तसंज्ञाशाणयोः'' सूत्र से उत्तरपद की वृद्धि होती है। ]॥ १५६॥

'विकार' और 'अवयव' अर्थों में उष्ट्र शब्द से वुञ् प्रत्यय होता है। प्राणिवाचक से प्राप्त अञ् का अपवाद है। उदा०—उष्ट्रस्य विकारः अवयवः वा—औष्ट्रिकः। [ उष्ट्र + वुञ् = वु = अक, आदिवृद्धि। ]॥ १५७॥

'उमा' और 'ऊर्णा' शब्द से विकार तथा अवयव अर्थों में विकल्प से वुञ् प्रत्यय होता है। उदा०—औमम्, औमकम्। [ उमायाः अवयवः विकारः वा—यह विग्रह। उमा = तीसी का विकार या अवयव ]। और्णम् और्णकम्। [ ऊर्णायाः अवयवः विकारः वा। ऊर्णा = ऊन का विकार या अवयव। ]॥ १५८॥

विकार और अवयव अर्थों में 'एणी' शब्द से ढञ् प्रत्यय होता है। यह प्राणिवाचक से प्राप्त अञ् का अपवाद

**एणीशब्दाद् ढञ् प्रत्ययो भवति विकारावयवयोरर्थयोः । प्राण्यञोऽपवादः । ऐणेयं मांसम् । पुंसत्वञेव भवति—एणस्य मांसमैणम्[1] ॥**

**१७३३. गोपयसोर्यत् ॥ १६० ॥ ( १६३८ )**

**गो, पयस् —शब्दाभ्यां यत् प्रत्ययो भवति विकारावयवयोरर्थयोः । गव्यम् । पयस्यम् । सर्वत्र गोरजादिप्रसङ्गे यदस्त्येव, मयड्विषये तु विधीयते ॥**

**१७३४. द्रोश्च ॥ १६१ ॥ ( १६३९ )**

**द्रुशब्दाद्यत्प्रत्ययो भवति विकारावयवयोरर्थयोः । ओरञोऽपवादः । द्रव्यम् ॥**

**१७३५. माने वयः ॥ १६२ ॥ ( १६४० )**

**द्रुशब्दान्माने विकारविशेषे वयः प्रत्ययो भवति । यतोऽपवादः । द्रुवयम् ॥**

**न्यासः**

निर्देशे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येणीशब्दादपि प्रत्ययो लभ्यत एव। तस्मात् स्त्रीलिङ्ग-निर्देशादेव पुंसोऽञ् भवति, न ढञ् ॥ १५९ ॥

**गोपयसोर्यत् ॥ मयड्विषये तु विधीयत इति**। अजादिप्रसङ्ग इति वचनात् ॥ मयटोऽनजादित्वात् तद्विषये न प्राप्नोतीत्यतस्तत्र गोशब्दाद् विधीयते। पयःशब्दस्तु पिबतेरित्यसुन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः, तस्मात् 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्नोति। अतस्तदपवादोऽयं यद्विधीयते ॥ १६० ॥

**द्रोश्च ॥ १६१ ॥ माने वयः ॥ १६२ ॥**

**पदमञ्जरी**

**एण्या ढञ्** । स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह—**पुंसस्त्वञेव भवतीति** ॥ १५९ ॥

**गोपयसोर्यत् ॥ मयड्विषये त्विति** । **मयड्वैतयोः**' इति विहितस्य मयटो विषये ॥ १६० ॥

**द्रोश्च ॥ अञोऽपवाद इति** । 'ओरञ्' इत्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । **द्रव्यमिति** । गुणैः संद्रूयते प्राप्यत इति गुणसंद्रावः ॥ १६१ ॥

**माने वयः** ॥ मीयते येन तन्मानं प्रस्थादि ॥ १६२ ॥

**भावबोधिनी**

है। उदा०—ऐणेयं मांसम्। [ एण्याः विकारः अवयवः वा—इसमें एणी + ढञ् ढ = एय, आदिवृद्धि, भसंज्ञा, ईलोप ] पुरुषवाचक से अञ् प्रत्यय ही होता है—एणस्य मांसम्–ऐणम्। ] ॥ १५९ ॥

'गो' तथा 'पयस्' शब्दों से विकार और अवयव अर्थों में 'यत्' प्रत्यय होता है। उदा०—गव्यम्। [ गो + यत्, "वान्तो यि प्रत्यये" सूत्र से 'ओ' का अव् आदेश। ] पयस्यम्। [ पयस् + यत् ]।

गो शब्द से अजादि प्रसंग में यत् होता ही है, यह तो मयट् के विषय में यत् किया जा रहा है। [ अतः यत् ही होता है मयट् नहीं। ] ॥ १६० ॥

विकार और अवयव अर्थों में द्रु' शब्द से यत् प्रत्यय होता है। उकारान्त मान कर प्राप्त 'अञ्' का अपवाद है। उदा०—द्रव्यम्। [ द्रु + यत्, "ओर्गुणः से 'उ' का गुण, "वान्तो यि प्रत्यये" से 'ओ' का अव् आदेश।] ॥१६१॥

"द्रु शब्द से मान परिमाण विकारविशेष अभिधेय रहने पर 'वयः' प्रत्यय होता है। यह यत् का अपवाद है। उदा०—द्रुवयम्। [ यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्। "अमरकोश २।९।८५ के अनुसार अङ्गुलि के परिमाण जैसे—बालिस्त, हाथ, फुट, गज आदि। ] ॥ १६२ ॥

---

१. इतोऽग्रे 'कोशाड्ढञ् वक्तव्यः ॐ। कौशेयं वासः, सूत्रं च' इत्यधिकं क्वचित्।

## १७३६. फले लुक् ॥ १६३ ॥ ( १५४१ )

**विकारावयवयोरुत्पन्नस्य फले तद्विषये विवक्षिते लुग्भवति। आमलक्याः फलम् आमलकम्। कुवलम्। बदरम्। फलितस्य वृक्षस्य फलमवयवो भवति विकारश्च, पल्लवितस्येव पल्लवः॥**

**न्यासः**

**फले लुक्॥ तद्विषय इति।** विकारावयवविषये। **आमलकमिति।** 'नित्यं वृद्धशरादिभ्यः' इति मयट्, तस्य लुक्। स्त्रीप्रत्ययस्य लुक् पूर्ववत्। ननु च फलं वृक्षस्य न विकारः, नाप्यवयवः। विकारो द्विधा भवति—यो वा प्रकृतं निगृह्णाति। खादिरं भस्मेति, यो वा प्रकृतिव्यपदेशं करोति। खादिरो यूप इति। नच फलं वृक्षमपगृह्णाति, नापि फलेन युक्तस्य व्यपदेशान्तरं भवतीत्य आह—**फलितस्येत्यादि।** यथा पल्लवो न वृक्षमपगृह्णाति, नापि तस्य व्यपदेशान्तरं जनयति, अथ च तस्य विकारस्तथा फलमपि। स्यादेतत्। पल्लवितावस्थां वृक्षस्यापगृह्णन् पल्लव उपजायते, अतो युक्ता तस्य तद्विकारावयवतेति; फलमपि तस्य फलितावस्थां वृक्षस्यापगृह्णन्फलमुपजायते, तस्यापि युक्त एव तद्विकारभावः। यदप्युक्तम्—नावयवोऽनारम्भकत्वादिति, तदप्युक्तम्; फलं ह्युपजायमानं शाखाद्यवयवसहायमन्यमेव विशिष्टं वृक्षावयवमारभते। तद् यथा पल्लवो विशिष्टं समुदायान्तरमारभमाणोऽवयवो भवति तथा फलमपीति वेदितव्यम्॥ १६३॥

**पदमञ्जरी**

**फले लुक्॥ तद्विशेष[1] इति॥** विकारावयवविशेषे। उदाहरणेषु आमलकीशब्दाद् वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक्। ननु च न फलं वृक्षस्य विकारः, स हि द्विविधो भवति—यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति; फलं तु नैवंविधमिति वृक्षे स्थितमपि काकादिवन्न तस्य विकारः, नाप्यवयवः, अनारम्भकत्वात्; उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयते? इत्याह—**फलितस्येति।** फलशब्दस्तारकादिः, 'प्रकृतेरवस्थान्तरं विकारः' इत्युक्तम्, अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव। तत्र वृक्षत्वं तूभयत्रानुवर्तते, सर्वत्र चोत्तरावस्थाविकारः, सर्वश्चावयवः स्वोत्पत्तेः प्राग्नोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरथ च गवादेरवयवो भवति, तदेतत्फलेऽपि समानम्। पल्लवशब्दोऽर्द्धर्चादिः। फले लुग्विधानमनर्थकम्; प्रकृत्यन्तरत्वात्। आमलकादिशब्दः फले वर्तते, न यौगिकः—आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादिशब्दः क्षत्त्रिये जनपदे च। प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति—आमलक्या विकारः कुवल्या विकार इति, तथा प्रत्ययोऽपि स्यात्॥ १६३॥

**भावबोधिनी**

विकार और अवयव अर्थों में फल में तद्विषय = विकार और अवयव के विषय के विवक्षित रहने पर उत्पन्न प्रत्यय का लुक् होता है। उदा०—आमलक्याः फलम्—आमलकम् [ यहाँ "नित्यं वृद्धशरादिभ्यः" से मयट् होता है, इसका लुक हो जाता है, "लुक् तद्धितलुकि" सूत्र से स्त्रीप्रत्यय का लुक् होता है। अतः केवल प्रकृति बचती है—आमलकम्। ] कुवलयम्। बदरम्। [ विकार दो प्रकार के होते हैं; १—प्रकृति के रूप के नष्ट हो जाने पर, जैसे—खादिरं भस्म। २—प्रकृति के रहते ही दूसरा नाम ग्रहण कर लेने पर जैसे—खादिरं स्रुवं गृह्णाति। परन्तु फल तो इन दोनों अवस्थाओं में नहीं आता है अतः विकार अर्थ में प्रत्यय कैसे होगा? इस प्रश्न का समाधान यह है—] फलित वृक्ष का फल उसका अवयव भी होता है और विकार भी, जैसे—पल्लवित वृक्ष के पल्लव उसी वृक्ष के अवयव या विकार माने जाते हैं। [ उसी प्रकार फल को भी समझना चाहिये। ]॥ १६३॥

---

१. 'तद्विषये' काशिका पाठः।

**१७३७. प्लक्षादिभ्योऽण् ॥ १६४ ॥ ( १५४२ )**

'फले' इत्येव। प्लक्षादिभ्यः प्रातिपदिकेभ्यः फले विकारावयवत्वेन विवक्षितेऽण् प्रत्ययो भवति। अञोपवादः। विधानसामर्थ्यात्तस्य न लुग्भवति। प्लाक्षम्। नैयग्रोधम्।

प्लक्ष। न्यग्रोध। अश्वत्थ। इङ्गुदी। शिग्रु। कर्कन्धु[1]। बृहती[2]। प्लक्षादिः॥

**१७३८. जम्ब्वा वा ॥ १६५ ॥ ( १५४४)**

'फले' इत्येव। जम्बूशब्दात्फलेऽभिधेये वाऽण् प्रत्ययो भवति। अञोऽपवादः। अत्राणो विधानसामर्थ्याल्लुग्न भवति, अञस्तु भवत्येव—जाम्बवानि फलानि, जम्बूनि वा॥

**न्यासः**

**प्लक्षादिभ्योऽण्॥ अञोऽपवाद इति।** तत्रेक्षुकर्कन्धूशब्दाभ्यामुवर्णान्तलक्षणस्याञोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्य। सर्वे हि तेऽन्तोदात्तत्वादनुदात्तादयः। तत्र प्लक्षन्यग्रोधश्वत्थशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः। इङ्गुदीबृहतीशब्दौ तु गौरादिङीषन्तत्वात् प्रत्ययस्वरेणान्तोदात्तौ। **विधानसामर्थ्यादित्यादि।** यद्यणो लुक् स्याद् वचनमनर्थकं स्यात्। न ह्यणो वाञो वा लुकि कृते कश्चिद् विशेषोऽस्ति। **नैयग्रोधमिति।** 'न्यग्रोधस्य च केवलस्य' इत्यैजागमः॥ १६४॥

**जम्ब्वा वा॥ अञस्तु भवत्येवेति।** तस्य हि लुकि सति विधानमनर्थकं भवति; अश्रूयमाणत्वात्। **जम्बूनीति।** लुकि कृतेऽभिधेयलिङ्गं नपुंसकं भवति। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति, 'जश्शसोः शि', नुम्, 'नोपधायाः' इति दीर्घः॥ १६५॥

**पदमञ्जरी**

**प्लक्षादिभ्योऽण्॥ अञोऽपवाद इति।** शिग्रु-काक्षतुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य। तत्र प्लक्षशब्दः "फिषः' ( फि० सू० १.१ ) इत्यन्तोदात्तः, फिषिति प्रातिपदिकस्य नाम। न्यग्रोधशब्दः 'लघावन्ते' ( फि० सू० २.४२ ) इति मध्योदात्तः। अश्वत्थशब्दो घृतादित्वादन्तोदात्तः। इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ। **विधानसामर्थ्यादिति।** यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात्। न ह्यणोऽञो वा लुकि कृते कश्चिद्विशेषः। **नैयग्रोधमिति।** 'न्यग्रोधस्य च केवलस्य' इत्यैजागमः॥ १६४॥

**जम्ब्वा वा॥** अञस्तु भवत्येव। न ह्यञो विधानसामर्थ्यम्; फलादन्यत्र श्रवणात्। **जम्बूनीति।** फलस्याभिधेयत्वान्नपुंसकह्रस्वे 'जश्शसोः शिः', नुम्, 'सर्वनामस्थाने च' इति दीर्घः॥ १६५॥

**भावबोधिनी**

'फले' इसकी अनुवृत्ति होती है। प्लक्षादि प्रातिपदिकों से फल के विकाररूप या अवयवरूप से विवक्षित रहने पर अण् प्रत्यय होता है। यह [ उवर्णान्त और अनुदात्तादि मानकर प्राप्त ] अञ् का अपवाद है। विधानसामर्थ्य के कारण इस अण् प्रत्यय का लुक् नहीं होता है। उदा०—प्लाक्षम्। नैयग्रोधम्। [ न्यग्रोधस्य अवयवः विकारः वा इस अर्थ में "अनुदात्तादेश्च" सूत्र से अञ् प्राप्त है। प्रस्तुत सूत्र अण् करता है। ऐच् आगम होता है— 'न्यग्रोधस्य च केवलस्य।" ( पा० सू० ७।३।५ )

[ इस गण में पठित शब्द—] प्लक्ष। न्यग्रोध। अश्वत्थ। इङ्गुदी। शिग्रु। कर्कन्धु। बृहती—ये प्लक्षादि हैं॥ १६४॥

'फले' इसकी अनुवृत्ति होती है। फल अर्थ अभिधेय रहने पर जम्बू शब्द से विकल्प से अण् होता है। यह अञ् का अपवाद है। यहाँ विधानसामर्थ्य के कारण अण् का लुक् नहीं होता है किन्तु अञ् का तो लुक् होता ही है। उदा०—जाम्बवानि फलानि, जम्बूनि फलानि। [ जम्बू + अण्, आदिवृद्धि, उ का गुण, अव् आदेश—जाम्बव + जस्= शि = इ,

---

१. 'ऋक्रतु', 'कर्कन्तु'—इति पाठा०।　　　　२. 'काक्ष, तुरुह'—इत्यधिकं कुत्रचित्।

## १७३९. लुप् च ॥ १६६ ॥ ( १५४९ )

'वा' इत्येव । जम्ब्वाः फलेऽभिधेये प्रत्ययस्य वा लुब्भवति । युक्तवद्भावे विशेषः । जम्ब्वाः फलं जम्बूः फलम्, जम्बु फलम्, जाम्बवमिति वा ॥

❀ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् ❀ ( म० भा० ४.३.१६६ वा० १ )। व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः।

❀ पुष्पमूलेषु बहुलम् ❀ ( वा० २ )। मल्लिकायाः पुष्पं मल्लिका। नवमल्लिका[1] जातिः। विदार्याः

न्यासः

लुप् च ॥ कः पुनर्लुपि सति विशेषो यतो लुकि प्रकृते स विधीयते ? इत्याह—युक्तवद्भावो विशेष इति। लुपि सति युक्तवद्भावो भवति 'लुपि युक्तवद्व्यक्तिवचने' इति–लुपि सत्येष विशेष इति। जम्बूः फलमिति। अत्र युक्तवद्भावेन प्रकृतिगतमेव लिङ्गं भवति, तेन नपुंसकलिङ्गं न प्रवर्तते।

लुप्प्रकरण इत्यादि। फलपाकेन शुष्यन्तीति फलपाकशुषः। 'अन्येभ्योऽपि दृश्यते' इति क्विप्। व्रीहयः, मुद्गा इति। बिल्वादिभ्योऽणो लुप्। यवाः, माषा इति। अत्र औत्सर्गिकस्याणः। एते 'तृणधान्यानाम्' इत्यादिनाद्युदात्ताः।

पुष्पमूलेषु बहुलमिति। पुष्पमूलेषु चाभिधेयेषु बहुलं लुब्भवति। मल्लिका, नवमल्लिका, जातिः, विदारी,

पदमञ्जरी

लुप्च ॥ युक्तवद्भावे विशेष इति। लुपि हि सति 'लुपि युक्तवद्व्यक्तिवचने' इति प्रकृत्यर्थगते लिङ्गवचने भवतः, लुकि त्वभिधेयवल्लिङ्गवचने स्याताम्।

फलपाकशुषामिति। फलपाकेन शुष्यन्तीति फलपाकशुषः। व्रीहयो मुद्गा इति। बिल्वाद्यणो लुक्, यवमाषतिलशब्दाः 'तृणधान्यानां च द्व्यषाम्' ( फि० सू० २·२७ ) इत्याद्युदात्ताः, तेभ्य औत्सर्गिकस्याणो लुक्। मल्लिकाशब्दो 'मादीनाम्' ( फि० सू० ३·५३ ) इति। मध्योदात्तः। अस्यार्थः—अत्र 'द्वितीयः प्राग्गीषात्' ( फि० सू० ३·५० ) इति त्र्यषामिति वर्तते, मकारादीनां त्र्यषां द्वितीयमक्षरमुदात्तं भवति। नवमालिकाशब्दः 'लघावन्ते' ( फि० सू० २·४२ ) इति मध्योदात्तो जातिशब्दः। विदारीबृहतीशब्दौ गौरादिङीषन्तौ। अंशुशब्दः प्रातिपदि-

भावबोधिनी

नुम्, दीर्घ—जाम्बवानि। अण् के अभाव में अञ् होता है किन्तु उसका लुप् हो जाता है और "लुपि व्यक्ति युक्तवद् वचने" के अनुसार नपुंसक लिङ्ग, बहुवचन ही रहता है। ]॥ १६५ ॥

'वा' इसकी अनुवृत्ति होती है। जम्बू का फल अभिधेय रहने पर प्रत्यय का लुप् ( लोप ) विकल्प से होता है। इसका अन्तर युक्तवद्भाव में होता है। उदा०—जम्ब्वाः फलम्—[ इस अर्थ में विकल्प से अण् होता है और प्रस्तुत सूत्र से विकल्प से लुप् होता है अतः तीन रूप बनते है—] (१) जम्बूः फलम्। [ लुप् हो जाने पर "लुपि युक्तवद्-व्यक्तिवचने" सूत्र से प्रकृति के लिङ्गवचन होने से स्त्रीलिङ्ग एकवचन है ] (२) जम्बु फलम्। [ जब अण् और लुप् दोनों नहीं होते हैं तब यह रूप बनता है। जब अण् का लुप् नहीं होता है तब ] (३) जाम्बवम्। [ जम्बू+अण् = अ, आदिवृद्धि, उ का गुण, अव् आदेश ]।

❀ लुप् के प्रकरण में फल के पकने पर सूख जाने वालों का उपसंख्यान करना चाहिये। ❀ उदा०—व्रीहयः। यवाः। माषाः। मुद्गाः। तिलाः। [ इनमें अणादि प्रत्यय होते हैं और उनका लुप् हो जाने पर "लुपि युक्तवद् व्यक्ति-वचने" के अनुसार लिङ्ग तथा वचन होते हैं। ]

❀ पुष्प और मूल=जड़ अर्थों में बहुल रूप से उपसंख्यान करना चाहिए। ❀ उदा०—मल्लिकायाः

---

१. 'नवमालिका'–इति पाठा०।

**मूलं विदारी। अंशुमती। बृहती। न च भवति पाटलानि पुष्पाणि। शाल्वानि मूलानि।**

**बहुलवचनात्क्वचिदन्यदपि भवति--कदम्बं पुष्पम्, अशोकम्, करवीरम्, बैल्वानि फलानीति॥**

## १७४०. हरीतक्यादिभ्यश्च ॥ १६७ ॥ ( १५४६ )

**'हरीतकी' इत्येवमादिभ्यः शब्देभ्यः फले प्रत्ययस्य लुब् भवति। लुकि प्राप्ते लुपो विधाने युक्तवद्भावे स्त्रीप्रत्ययश्रवणे च विशेषः। हरीतक्याः फलं हरीतकी। कोशातकी। नखरजनी। अत्र च व्यक्तियुक्तवद्भावे-**

**न्यासः**

अंशुमती, बृहती–अत्रानुदात्तादिलक्षणस्याञो लुप्। मल्लिका-नवमल्लिकाशब्दौ 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तौ। जातिशब्दश्च 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्प्रत्ययान्तत्वादन्तोदात्तः। बदरीबृहतीशब्दावपि गौरादिङीषन्तत्वादन्तोदात्तावेव। अंशुमतीशब्दः 'उगितश्च' इति ङीबन्तः। अंशुशब्दस्य प्रातिपदिकस्वरेणान्तोदात्तत्वात् मध्योदात्तः। **पाटलानीति**। बिल्वादित्वादण्। **शाल्वानि मूलानीति**। शाल्वानीत्यनुदात्तादिलक्षणोऽञ्। शाल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। शाल्व इति = शाक इति यस्य प्रसिद्धिः। क्वचिदन्यदपीति। लुपोऽन्यत्रापि क्वचित् कार्यं भवति। तत् पुनर्लुक्लुपोरभावश्च। कदम्बमित्यादावनुदात्तलक्षणस्याञो लुक्। कदम्बादयः शब्दाः 'लघावन्ते' इत्यादिना मध्योदात्ताः। **बैल्वानीति**। अत्रोभयाभावः। 'बिल्वादिभ्योऽण्। एतत् तु सर्वं हरीतक्यादिपाठादेव सिद्धमिति नापूर्वं वक्तव्यम्। यतः हरीतक्यादिषु 'येषाञ्च फलपाकनिमित्त शोषः, पुष्पमूलेषु बहुलम्' इति पठ्यन्ते॥ १६६॥

**हरीतक्यादिभ्यश्च**॥ हरीतक्यादिषु कण्टकारिका, गर्गारिका, शेफालिका—इत्येते 'संज्ञायां कन्' इति कन्नन्तत्वात् नित्स्वरेणाद्युदात्ताः। तेनैव तेभ्य औत्सर्गिकस्याणो लुप्। शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, सर्वे हि

**पदमञ्जरी**

कस्वरेणान्तोदात्तः, ततो मतुप् 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबाद्युदात्तः, ङीबनुदात्तः। तदेवमंशुमतीशब्दे मतुबकार उदात्तः। **पाटलानीति**। बिल्वादित्वादण्, साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। **क्वचिदन्यदपि भवतीति**। लुपोऽन्यदपि क्वचित्कार्यं भवति, तत्पुनर्लुग्लुपोरभावश्च। कदम्बमित्यादावनुदात्तादिलक्षस्याञो लुक्। कदम्बादयः शब्दाः 'लघवान्ते' ( फि० सू० २·४२ ) इति मध्योदात्ताः। **बैल्वानीति**। अत्रोभयाभावः, बिल्वाद्यण्॥ १६६॥

**हरीतक्यादिभ्यश्च**॥ हरीतक्यादिषु द्राक्षाप्रभृतिभ्यो मयटो लुप्, उदात्तादिभ्योऽणः, अनुदात्तादिभ्योऽञः॥ १६७॥

**भावबोधिनी**

पुष्पम्—मल्लिका। नवमल्लिकायाः पुष्पम्- नवमल्लिका जाति = चमेली। [ यहाँ अनुदात्तादि मान कर जो अञ् होता है उसका लुप् हो जाता है। ] विदार्याः मूलम्---विदारी। [ कद्दू की जड़। ] अंशुमती [ अंशुमत्याः मूलम्। सालपर्णी = सरिवन की जड़ ] बृहती। [ बृहत्याः मूलम्। पिठिवन की जड़। ] बहुल के कारण कहीं-कहीं लुप नहीं भी होता है—पाटलानि पुष्पाणि। शाल्वानि मूलानि। [ यह 'शाक' का पर्याय समझना चाहिए। ]

बहुल--वचन के कारण कहीं-कहीं दूसरा भी होता है, अर्थात् लुक् और लुप् का अभाव भी होता है, जैसे--कदम्बं पुष्पम्, अशोकम्, करवीरम्--[ इनमें लुक् हुआ है और ] बैल्वानि फलानि। [ इसमें लुक् और लुप् दोनों नहीं हुये हैं। अतः "बिल्वादिभ्योऽण्" से जो अण् किया गया वह रहता है उसे मानकर आदिवृद्धि होती है। ।१६६॥

'हरीतकी' आदि शब्दों से फल अर्थ में प्रत्यय का लुप् ( लोप ) होता है। [ "फले लुक्" ४।३।१६३ से ] लुक् की प्राप्ति रहते इस सूत्र से लुप् के विधान करने में युक्तवद्भाव [ प्रकृति के समान लिङ्गवचन ] में और स्त्री प्रत्यय के सुनाई देने में अन्तर आता है। [ लुक् में ये दोनों कार्य नहीं होते हैं किन्तु लुप् में होते हैं--इसी लिये लुप् किया जा रहा है। ] उदा०--हरीतक्याः फलम्--हरीतकी। [ यहाँ फल अर्थ में औत्सर्गिक अण् होता है,

नेष्यते, वचनं त्वभिधेयवदेव भवति । हरीतक्याः फलानि हरीतक्यः ।

हरीतकी । कोशातकी । नखरजनी[1] । शष्कण्डी[2] । दाडी । दोडी । दीडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका । येषां[3] च फलपाकनिमित्तः शोषः । पुष्पमूलेषु बहुलम्[3] । हरीतक्यादिः ॥

**१७४१. कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६८ ॥ ( १५४७ )**

**'प्राक्क्रीताच्छः'** ( ५.१.१ )—कंसीयः । **'उगवादिभ्यो यत्'** ( ५.१.२ )—परशव्यः । कंसीयपरशव्यशब्दाभ्यां यथासंख्यं यञञौ प्रत्ययौ भवतः 'तस्य विकारः' इत्येतस्मिन्विषये, तत्सन्नियोगेन च कंसीयपरशव्ययोर्लुग्भवति । कंसीयस्य विकारः कांस्यः परशव्यस्य विकारः पारशवः ।

**न्यासः**

तेऽन्त्योदात्तत्वादनुदात्तादयः । तत्र काला, द्राक्षा, ध्राक्षा—इत्येतेभ्यः प्राग्ये पठ्यन्ते ते ङीषन्तत्वादन्तोदात्ताः । तत्र श्वेतपाकी, अर्जुनपाकी–इत्येतौ 'पाककर्पण' इत्यादिना ङीषन्तौ । शेषेभ्यस्तु गौरादित्वाद् 'गौरादिभ्यश्च' । कालाद्राक्षाध्राक्षाशब्देभ्यः प्रातिपदिकस्वरेणान्तोदात्तेभ्यष्टाप्, सवर्णदीर्घत्वम्, 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अतः कालादयोप्यन्तोदात्ताः ॥ १६७ ॥

**कंसीयपरशव्ययोर्यञञौ लुक् च ।** **कंसीय इति ।** उणादौ कंसशब्दः सप्रत्ययान्तो व्युत्पादितः । परशुशब्दोऽपि 'पॄभिदिव्यधिधृषिभ्यः कुः' इत्यनुवर्तमान 'आङ्परयोः खनिशॄभ्यां णिच्च' इति कुप्रत्ययान्तः तदनयोरपि धातुप्रत्यययोर्लुक्कस्मान्न भवति ? इत्याह—**प्रातिपदिकाधिकारादित्यादि ।** प्रातिपदिकादिति

**पदमञ्जरी**

**कंसीयपरशव्ययोर्यञञौ लुक् च ॥ प्राक् क्रीताच्छेन[4] कंसीय इति ।** 'प्राक् क्रीताच्छः' इत्यधिकारे 'तस्मै हितम्' इतिच्छप्रत्ययेन कंसीयशब्दो व्युत्पाद्यत इत्यर्थः । एतेनोगवादिभ्यो यता परशव्यशब्द इति व्याख्यातम् । **तत्सन्नियोगेन च कंसीयपरशव्ययोर्लुग्भवतीति ।** प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्तदवयवयोः प्रत्यययोर्लुक् भवतीत्यर्थः ।

अथ 'वृतॄहनिकषिकमिभ्यः सः' ( द० उ० ९.२१ ) इति सः, कंसशब्दे सप्रत्ययः । यश्च परान्शृणोतीति परशुः, 'आङ्परयोः खनिशॄभ्यां णिच्च'[5] ( दश० उ० १.११८ ) इति कुप्रत्ययस्तयोर्लुक्कस्मान्न भवति ? तत्राह-

**भावबोधिनी**

इसका लुप् कर देने पर "लुपि युक्तवद् वचने" से प्रकृति के समान लिङ्ग और वचन होते हैं । ] कोशातकी । नखरजनी । यहाँ व्यक्ति लिङ्ग तो युक्तवद्भाव द्वारा इष्ट है किन्तु वचन अभिधेय = फल के समान ही होते हैं—हरीतक्याः फलानि—हरीतक्यः । [ बहुवचन होता है । ]

[ इस गण में पठित शब्द—] हरीतकी । कोशातकी । नखरजनी । शष्कण्डी । दाडी । दोडी । दीडी । श्वेतपाकी । अर्जुनपाकी । काला । द्राक्षा । ध्वाङ्क्षा । गर्गरिका । कण्टकारिका । शेफालिका । [ और जो फल पकाने के लिए सूख जाती हैं । पुष्प और मूल अर्थों में बहुलरूप से होता है । इन दोनों से लुप् होता है ] ये हरीतक्यादि हैं ॥१६७॥

"प्राक्क्रीताच्छः" [ इसके अधिकार में "तस्मै हितम्" से छ = ईय प्रत्यय होकर ] कंसीयः । 'उगवादिभ्यो यत्" [ से परशु + यत् होकर ] परशव्यः । "तस्य विकारः" इस विषय में 'कंसीय' और 'परशव्य' शब्दों से क्रमशः यञ् और अञ् प्रत्यय होते हैं तथा इन प्रत्ययों के सन्नियोग से 'कंसीय' और 'परशव्य' [ के प्रत्ययों ] का लुक् हो

१. 'नखररजनी'–इति पाठा० । २. 'शाकण्डी'–इति पाठा० । ३-३. पाठोऽयं बहुत्र नास्ति ।
४. 'प्राक्क्रीताच्छः' इति काशिका० । ५. 'उच्च' इत्यपि पाठः ।

**प्रातिपदिकाधिकाराद्धातुप्रत्ययस्य न लुग्भवति। परशव्यशब्दादनुदात्तादित्वादेवाञि सिद्धे लुगर्थं वचनम्।**

**ननु च 'यस्येति च' ( ६.४.१४८ ) इति लोपे कृते 'हलस्तद्धितस्य' ( ६.४.१५० ) इति यलोपो भविष्यति ? नैतदस्ति; 'ईति' इति तत्र वर्त्तते ॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ॥**

**न्यासः**

वर्तते, तेन प्रातिपदिकेभ्यो यो विहितस्तस्य लुग् भवति। न चेमौ प्रातिपदिकाद् विहितौ, किं तर्हि ? धातोः 'अतोऽनयोर्लुग् न प्रवर्तते। **अनुदात्तत्वादेवेति।** परशव्यशब्दो हि 'तित्स्वरितम्' इत्यन्तस्वरितः। **तेनानुदात्तादिरिति। ईतीति तत्र वर्तत इति।** 'यस्येति च' इत्यतः ॥ १६८ ॥

**॥ बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ॥**

**पदमञ्जरी**

**प्रातिपदिकाधिकारादिति।** प्रातिपदिकाधिकारे हि ततः परयोश्छयतोर्लुग्भवति, न धातुप्रत्ययस्य, आह-- 'ङ्याप्प्रातिपदिकग्रहणमङ्गपदसंज्ञार्थं यच्छयोश्च लुगर्थम्' इति, ननु च 'अतः कृकमि' इत्यत्र कंसग्रहणं लिङ्गम्— नावयमुणादिषु व्युत्पत्तिकार्यं भवतीति, तेनोकारसकारयोर्लुग्न भविष्यति ? सत्यम्; वृद्धावृद्धावर्णस्वरद्व्यज्लक्षण-प्रत्ययविधौ तत्सम्प्रत्ययार्थमवश्यकर्तव्यस्य ङ्याप्प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम्। अत एव च 'ङ्याप्प्रातिपदिकात्' इत्यत्र नेदं **वृत्तिकृता दर्शितम्** ॥ १६८ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य तृतीयश्चरणः ॥

**भावबोधिनी**

जाता है। उदा०—कंसीयस्य विकारः—कांस्यः। [ कंस + छ = ईय = कंसीय से जब यञ् होता है तब छ = ईय का लुक् हो जाने से—कंस् + यञ्, आदिवृद्धि—कांस्यः। ] परशव्यस्य विकारः—पारशवः। [ परशु + यत् = परशव्य + अञ् करने पर 'यत्' का लुक्, आदिवृद्धि—पारशु + अ, उ का गुण, अवादेश— पारशवः। ]

यहाँ 'प्रातिपदिक' का अधिकार है अतः धातु मान कर किये गये प्रत्यय का लुक् नहीं होता है। [ भाव यह है कि 'कम्' धातु से 'स' प्रत्यय हुआ है और 'पर + शॄ' धातु से 'कु' प्रत्यय होकर 'परशु' बना है। अतः प्रत्ययलोप करते समय इन का भी लोप होना चाहिये ? इसका समाधान दिया गया कि यहाँ जो लुक् है वह प्रातिपदिक मान कर किये गये प्रत्यय का ही है अतः धातु मान कर किये गये प्रत्यय रहते ही हैं। ] 'परशव्य' शब्द अनुदात्तादि है अतः उससे [ "अनुदात्तादेश्च" सूत्र से ] अञ् सिद्ध ही है तब [ यत् प्रत्यय के ] लुक् के लिए यह वचन है।

क्यों, "यस्येति च" इस सूत्र से 'अ' का लोप कर देने पर "हलस्तद्धितस्य" सूत्र से 'य्' का लोप हो ही जायगा, इसके लिये इस वचन की क्या आवश्यकता ? ऐसा नहीं कह सकते, क्योंकि "हलस्तद्धितस्य" पा. सू. ६।४।१५० में "यस्येति च" ६।४।१४८ सूत्र से 'ईति' अर्थात् ईकार परे रहते—इसकी अनुवृत्ति होती है। [ अतः 'य्' लोप सम्भव नहीं है। इस लोप को करने के लिए इस सूत्र में 'परशव्य' का ग्रहण आवश्यक है। ] ॥ १६८ ॥

॥ इस प्रकार श्री जयादित्यविरचित 'काशिका'वृत्ति में चतुर्थ अध्याय का तृतीय पाद समाप्त हुआ ॥

**॥ इस प्रकार जयशङ्करलालत्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के चतुर्थ अध्याय का तृतीय पाद समाप्त हुआ ॥**

——:०:——

# अथ चतुर्थाध्याये चतुर्थः पादः

**१७४२. प्राग्वहतेष्ठक् ॥ १ ॥ ( १५४८ )**

**'तद्वहति रथयुगप्रासङ्गम्' ( ४.४.७६ ) इति वक्ष्यति। प्रागेतस्माद्वहतिसंशब्दनाद्यानर्थाननुक्रमिष्यामः ठक् प्रत्ययस्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—"तेन दीव्यति खनति जयति जितम्" ( ४.४.२ ) इति। अक्षैर्दीव्यति आक्षिकः।**

**❀ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् ❀ ( म० भा० ४.४.१ वा० १ ) माशब्द इत्याह माशब्दिकः। नैत्यशब्दिकः। कार्यशब्दिकः। वाक्यादेतत्प्रत्ययविधानम्।**

**न्यासः**

**प्राग्वहतेष्ठक् ॥** अथ प्राग्ग्रहणं किमर्थम्? अर्थविशेषे प्रत्ययान्तरेणापवादेन निवर्तितस्य ठक उत्तरस्मिन् ग्रन्थान्तरे पुनरुपस्थानं यथा स्यादित्येवमर्थम्। तद्यथा—'संस्कृतम्' इत्येतस्मिन्नर्थविशेषे 'कुलत्थकोपधात्' इत्यणा निवर्तितस्योत्तरत्रार्थान्तरे 'तरति' इत्येतस्मिन्नर्थे पुनरुपस्थानं यथा स्यादिति।

**ठक्प्रकरण इत्यादि।** तदिति कर्माभिधायिभ्य आहेत्येतस्मिन्नर्थे माशब्दादिभ्यष्ठक उपसंख्यानम्। **वाक्यादेतत् प्रत्ययविधानमिति।** स एव हि वाक्यार्थ इतिनावमृष्टः कर्मभावमुपगतः। तदाहेति निर्दिश्यते—तदभिधायिन एव वाक्यात् प्रत्यय इति। पदसमुदायो हि वाक्यमिति। 'मा' इत्येतस्य च 'शब्द' इत्येतस्य च पदस्य यः समुदायस्तद् वाक्यम्। एमन्यत्रापि वेदितव्यम्।

**पदमञ्जरी**

**प्राग्वहतेष्ठक् ॥ तदाहेति।** 'वाक्यादेतत्प्रत्ययविधानम्' इति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवति; अप्रातिपदिकत्वात्। तेन तदिति कर्ममात्रं निर्दिश्यते, न तु द्वितीयासमर्थविभक्तिः।

**माशब्द इत्याहेति।** शब्दो मा कारीत्याहेत्यर्थः। संसर्गरूपस्य वाक्यार्थस्येतिकरणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं सम्भवति, नान्यथेति मत्वैष विग्रहः। **वाक्यादेतत्प्रत्ययविधानमिति।** एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु, किं पृथग्वचनेन!

**भावबोधिनी**

[ अब चतुर्थ अध्याय में चतुर्थ पाद प्रारम्भ होता है— ]

"तद्वहति रथयुगप्रासङ्गम्" ( पा० सू० ४।४।७६ ) यह आगे कहा जायगा, इससे पहले 'वहति' शब्द का उच्चारण करके जिन अर्थों का प्रतिपादन करेंगे, उनमें 'ठक्' इस प्रत्यय का अधिकार समझना चाहिये। आगे कहा जायगा—"उससे खेलता है, खोदता है, जीतता है, जीता" ( पा० सू० ४।४।२ ) इन अर्थों में ठक् होता है। उदा०—अक्षैः दीव्यति। [ पांशो द्वारा खेलता है— ] इस विग्रह में—आक्षिकः। [ अक्ष + ठक्, ठ = इक, "किति च" पा० सू० ७।२।११८ से आदिवृद्धि करने पर रूप बनता है। ]

❀ ठक् प्रत्यय के प्रकरण में 'तत् आह' ( = उसे कहता है )—इस अर्थ में 'माशब्द' आदि से उपसंख्यान ( प्रतिपादन ) करना चाहिये। ❀ उदा०—माशब्द इत्याह—इस विग्रह में माशब्दिकः। [ शब्द मत करो—ऐसा कहने वाला। 'माशब्द' इस समुदाय से ठक् = इक किया जाता है ] नैत्यशब्दिकः [ नित्यः शब्द इत्याह—इस अर्थ में ठक् = इक, आदिवृद्धि। नित्य शब्द है—ऐसा कहने वाला। ] कार्यशब्दिकः। [ कार्यः शब्द—इत्याह—इस विग्रह में पूर्ववत् ठक् होता है। ] वाक्य = पदों के समुदाय से इस ठक् प्रत्यय का विधान है।

**❀ आहौ प्रभूतादिभ्यः ❀ (वा० २)। प्रभूतमाह प्राभूतिकः पार्याप्तिकः। क्रियाविशेषणात् प्रत्ययः।**
**❀ पृच्छतौ सुस्नातादिभ्यः ❀ (वा० ३)। सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः। सौखशायनिकः।**
**❀ गच्छतौ परदारादिभ्यः ❀ ( वा० ४ )। परदारान् गच्छति पारदारिकः। गौरुतल्पिकः॥**

## १७४३. तेन दीव्यति खनति जयति जितम् ॥ २ ॥ ( १५५० )

**'तेन' इति तृतीयासमर्थाद् दीव्यति खनति जयति जितमित्येतेष्वर्थेषु ठक प्रत्ययो भवति। अक्षैर्दीव्यति**

### न्यासः

कथं पुनः प्रातिपदिकाधिकारे वाक्यात् प्रत्ययविधिः ? इत्यत आह—**प्रभूतादिभ्य इति**। पुनर्वचनात्। यदि ह्यनेनापि प्रातिपदिकादेव प्रत्ययविधिः स्यादेवं सति 'आहौ प्रभूतादिभ्यः, इति पुनरुपसंख्यानमनर्थकं स्यात्; अनेनैव सिद्धत्वात्। प्रभूतादयोऽपि हि माशब्दादयो भविष्यन्ति, ते च कर्माभिधायिन एव प्रत्ययमुत्पादयन्ति; क्रियाविशेषणाभिधायित्वात्। क्रियाविशेषणानां हि कर्मत्वम् 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इत्यत्र प्रतिपादयिष्यते—प्रत्ययार्थोऽप्याहेति। स एव तस्मादाहेति प्रभूतादिभ्य इति पुनर्वचनाद् वाक्यादेव प्रत्ययविधानं विज्ञायते। **क्रियाविशेषणादिति**। प्रभूतादिशब्दः क्रियाविशेषणाभिधायित्वादभिधानेऽभिधेयोपचारं कृत्वा क्रियाविशेषण-शब्देनोक्तः॥ १॥

**तेन दीव्यति खनति जयति जितम्**। 'तेन' इति प्रत्येकमभिसम्बध्यते। **सर्वत्र करणे तृतीयेति**। दीव्यतीत्यादौ कर्तरि लकार इति तेनैव कर्तुरभिहितत्वात् कर्तरि तृतीया नोपपद्यते। तस्मात् करण एव तृतीया।

### पदमञ्जरी

**आहाविति**। आहेति पदे प्रकृतिभागस्यागन्तुकेनेकारेणेदमोऽनुकरणम्। तत्र शब्दे कार्यस्यासम्भवादर्थ-प्रत्ययविधिः। **क्रियाविशेषणादिति**। तदन्ताभिधायिन इत्यर्थः।

**पृच्छताविति**। तिङन्तानुकरणमेतत्। एवं **गच्छताविति**। तिङन्तार्थे तु प्रत्ययः। **सुस्नातं पृच्छतीति**। सुस्नातं भवता, सुस्नातो भवानित्येवं वा पृच्छतीत्यर्थः। **सौखरात्रिक इति**। सुखरात्रिं पृच्छति। एवं यः पृच्छति, स एवमुच्यते। एतेन सौखशायनिको व्याख्यातः। अनुशतिकादित्वादुभयपदवृद्धिः। **गौरुतल्पिक इति**। तल्पशब्देन भार्या लक्ष्यते॥ १॥

**तेन दीव्यति खनति जयति जितम्**॥ **सर्वत्र करणे तृतीयेति**। दीव्यत्यादावभिहितत्वात्कर्तरि तृतीया नोपपद्यत इति तत्साहचर्याज्जितमित्यनेनापि योगे करण एव तृतीयेति सर्वशब्दार्थः। तेन देवदत्तेन जितमित्यत्र

### भावबोधिनी

❀ आह=कहता है—इस प्रसङ्ग में 'प्रभूत' आदि शब्दों से भी ठक् कहना चाहिए। ❀ उदा०—प्रभूतम् आह—इस विग्रह में—प्राभूतिकः। [ प्रभूत + ठक्=इक, आदिवृद्धि। खूब बोलने वाला ] पार्याप्तिकः। [ प्रर्याप्तमाह—इस विग्रह में ठक्=इक, आदिवृद्धि। ] यह प्रत्यय क्रियाविशेषण=कर्मवाचक से होता है।

❀ पूछता है—इस अर्थ में 'सुस्नात' आदि शब्दों से ठक् कहना चाहिए। ❀ सुस्नातं पृच्छति इस विग्रह में सौस्नातिकः। [ सुस्नातं भवता – अथवा सुस्नातः भवान्—इति पृच्छति—ऐसा अभिप्राय है। ] सौखरात्रिकः। उदा०—[ सुखरात्रिं पृच्छति—यह विग्रह है ] सौखशयनिकः। [ सुखशयनं पृच्छति—यह विग्रह है। ]

❀ गच्छति— इस में 'परदारा' आदि से ठक् कहना चाहिये। ❀ उदा०—पारदारिकः। [ परदारान् गच्छति—इस विग्रह में परदार + ठक्=इक, आदिवृद्धि। ] गौरुतल्पिकः। [ गुरुतल्पं गच्छति—इस अर्थ में—गुरुतल्प + ठक्=इक, आदिवृद्धि। गुरुपत्नी का सम्भोग करने वाला। ]॥ १॥

'तेन' [ =उससे ] इस तृतीयासमर्थ से दीव्यति=खेलता है, खनति=खोदता है, जयति=जीतता है, जितम्=जीता—इन अर्थों में ठक् प्रत्यय होता है। उदा०—अक्षैर्दीव्यति—इस विग्रह में—आक्षिकः [ अक्ष + ठक्=

**आक्षिकः । शालाकिकः । अभ्र्या खनति आभ्रिकः । कौद्दालिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । शालाकिकम् । सर्वत्र करणे तृतीया समर्थविभक्तिः ।**

**देवदत्तेन जितमिति प्रत्ययो न भवति; अनभिधानात् । अङ्गुल्या खनतीति च । प्रत्ययार्थे संख्याकालयोरविवक्षा ।**

**न्यासः**

अथ हेतौ तृतीया कस्मान्न भवति ? अनभिधानात् । जितमित्यत्र कर्मणि निष्ठाविधानाद् यद्यपि कर्तर्यपि तृतीया सम्भवति, तथापि दीव्यतीत्यादिभिः साहचर्यात् करण एव तृतीया विज्ञायते । देवदत्तेन जितमित्यत्र कर्तरि तृतीया; तेन वाक्यमेव भवति; न प्रत्ययः ।

इह सूत्रे दीव्यतीत्यादिनैकवचनान्तेनैकसंख्यस्य प्रत्ययार्थस्य वर्तमानेन च कालेन निर्देशः । ततश्चैकस्मिन्नेव प्रत्ययः स्यात्, न द्विबह्वोः । तथा वर्तमान एव काले, न भूतभविष्यतोरिति यश्चोदयेत्, तं प्रत्याह—**प्रत्ययार्थे संख्याकालयोरविवक्षेति** । अविवक्षा तु तयोर्नान्तरीयकत्वात् । अवश्यं हि यया कयाचित् संख्यया येन केनचित् कालेन निर्देशः कर्तव्य इति । न तौ प्रधानम्, न च तयोर्विवक्षेति । यदि तर्हि संख्याकालयोरविवक्षेति साधनस्याप्यविवक्षा प्राप्नोति, एकप्रकरणत्वात् ? नैष दोषः; यस्य हि विवक्षामन्तरेण द्वितीयस्य पदस्योच्चारणमनर्थकं भवति तन्नियोगतो विवक्षितव्यम् । दीव्यतीत्यादिष्वन्वर्थमात्रे विवक्ष्यमाणे द्वितीयस्य पदस्योच्चारणमनर्थकमापद्येतेति न युक्ता साधनस्याप्यविवक्षा ।

**पदमञ्जरी**

न भवति । हेतुतृतीया तु नाशङ्किता; अनभिधानात् । न हि हेतुतृतीयान्तादुत्पद्यमानेन ठका विग्रहवाक्यार्थस्याभिधानमस्ति ।

**प्रत्ययार्थ इति** । निर्द्धारण एषा सप्तमी, सामान्यापेक्षमेकवचनम् । इह दीव्यतीत्यादौ तिपो बहवोऽर्थाः—एकत्वसङ्ख्या, वर्त्तमानकाले, युष्मदस्मद्व्यतिरेक इति, तेषु मध्य इत्यर्थः । तदेव दर्शितम्—**सङ्ख्याकालयोरविवक्षेति** । नान्तरीयकत्वात् । अवश्यं हि यया कयाचित्सङ्ख्यया येन केनचित्कालेन निर्देश इति तयोरुपादानम्, न तु तयोर्विवक्षा । तत आक्षिकौ आक्षिका इति द्विबह्वोरपि भवति, अक्षैरदीव्यदित्यादौ कालान्तरे चाक्षिक इति भवति, न्यायस्य तुल्यत्वात् पुरुषस्याप्यविवक्षा, तेनाक्षिकस्त्वम्, आक्षिकोऽहमित्यत्रापि भवति । यथैव तर्हि सङ्ख्याकालपुरुषाणामविवक्षा तथा कर्तुरपि प्राप्नोति, एकप्रत्ययवाच्यत्वात् ? नैष दोषः; कर्तुरविवक्षायामाख्यातोपादानमकिञ्चित्करं स्यात् । विपर्ययस्तु न भवति—कर्तुरविवक्षा कालादीनां विवक्षेति; कर्तुः प्रधानत्वात् । सङ्ख्यादिविशिष्टो हि कर्त्ताऽऽख्यातानां प्रधानभूतोऽर्थः, तेन स तावद्विवक्ष्यते, इतरेषां नान्तरीयकत्वादविवक्षा । किञ्च, साधनस्याप्यविवक्षायां जितमित्यस्योपादानमनर्थं स्यात् ।

**भावबोधिनी**

इक, आदिवृद्धि, भसंज्ञा, अलोप—आक्षिकः । पासों से खेलने वाला । ] शालाकिकः । [ शलाकाभिः दीव्यति—आदि विग्रह में—शलाका + ठक् = इक, आदिवृद्धि, भसंज्ञा, आलोप । शलाकों से खेलने वाला । ] आभ्र्या खनति—इस विग्रह में आभ्रिकः । [ पानी के जहाज आदि के कूड़े को हटाने वाला कुदालसदृश यन्त्र से खोदने वाला । ] कौद्दालिकः । [ कुदाल से खोदने वाला । ] अक्षैर्जयति—इस अर्थ में—आक्षिकः । [ पांशों से जीतने वाला ] अक्षैर्जितम् । [ पांशों से जीता ] शालाकिकः । [ शलाकाभिर्जितम् । ] इन सभी में करण में तृतीया समर्थ विभक्ति है ।

देवदत्तेन जितम्—इस अर्थ में यह प्रत्यय नहीं होता है क्योंकि अनभिधान है । अङ्गुल्या खननि—यह भी अनभिधान के कारण नहीं होता है । प्रत्यय के अर्थ में संख्या और काल की विवक्षा नहीं है । [ अतः बहुवचन और भूत

**क्रियाप्रधानत्वेऽपि चाख्यातस्य, तद्धितः स्वभावात्साधनप्रधानः ॥**

**१७४४. संस्कृतम् ॥ ३ ॥ ( १५५१ )**

**'तेन' इति तृतीयासमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। सत उत्कर्षाधानम् = संस्कारः। दध्ना संस्कृतं दाधिकम्। शाङ्गवेरिकम्। मारिचिकम्। योगविभाग उत्तरार्थः ॥**

**न्यासः**

इह दीव्यतीत्येमादौ 'क्रियाप्रधानमाख्यातम्' इति क्रियैव पदेन प्राधान्येनाख्यायते, कर्ता तु गुणीभूतः, तद्धितस्तु—आक्षिक इति प्राधान्येन कर्तारमेवात्र वक्ति, क्रियां तु गुणभावेन, एतच्चायुक्तम्; आख्यातेषूत्पन्नैः प्रत्ययैर्यथासौ तिङन्तेनाभिधीयते, तथैव प्रत्ययान्तेनापि युक्तोऽभिधातुमिति यश्चोदयेत्, तं प्रत्याह— **क्रियाप्रधानत्वेऽपि चेत्यादि**। अभिधानस्वभावश्चायम्, येन क्रियाप्राधानस्याप्यनुविधीयमानस्तद्धितः कर्तृप्रधानो भवति। तस्मात् कर्तृस्वभावोऽत्रापेक्षितव्यः। न हि स्वभावोऽपि पर्यनुयोगमर्हति ॥ २ ॥

**संस्कृतम्** ॥ योगविभाग उत्तरार्थः—'कुलत्थकोपधादण्' इत्ययमपवादः संस्कृत एव यथा स्याद्, 'दीव्यति' इत्यादौ मा भूदित्येवमर्थो योगविभागः ॥ ३ ॥

**पदमञ्जरी**

इहाख्यातेषु क्रिया प्रधानभूता, गुणभूतः कर्त्ता, अत एव किं करोति देवदत्त इति क्रियाप्रश्ने पचतीत्याख्यातेनोत्तरं दीयते, न तु कृदन्तेन पाचक इति; तस्य सत्त्वप्रधानत्वात्। किञ्च, यदि कृदन्तेष्विवाख्यातेष्वपि कर्ता प्रधानभूतः स्याद्, यथा—पाचकस्यापत्यमित्यपत्यादिभिर्योगो भवति, तथाऽऽख्यातवाच्यस्यापि स्यात् पचत्ययमिति, क्रियावेशः स्याद्, यथा—पाचकस्तिष्ठतीति। तस्मात्क्रियाप्रधानमाख्यातम्। ततश्च तदर्थे विधीयमानः प्रत्ययोऽपि क्रियाप्रधानः स्यादिति तदन्तस्यापत्यादिभिर्योगः क्रियावेशश्च न स्यात् - आक्षिकस्यापत्यमाक्षिकं पश्येति। तत्राह—**क्रियाप्रधानत्वेऽपि चाख्यातस्येति**। आख्यायतेऽनेन क्रिया प्रधानभूतेत्याख्यातस्तिङन्तः, 'कृत्यल्युटो बहुलम्' इति करणे क्तः, स्वनिकायप्रसिद्धिरेषा। **स्वभावादिति**। यथा 'तेनैकदिक्', 'तसिश्च' इत्येतस्मिन्नर्थे विधीयमानयोरण्तसोस्सत्त्वभूतार्थाभिधायित्वम्, विपर्ययश्च—सौदामनी विद्युत्सुदामतो विद्युदिति, तथात्रापि। न हि स्वभावः पर्यनुयोगमर्हति ॥ २ ॥

**संस्कृतम्** ॥ **योगविभाग उत्तरार्थ इति**। उत्तरोऽपवादः संस्कृत एव यथा स्यात् ॥ ३ ॥

**भावबोधिनी**

तथा भविष्यत् काल अर्थ में भी यह प्रत्यय होता है। ] आख्यात = तिङन्त में यद्यपि क्रिया प्रधान होती है तथापि तद्धित में स्वाभाविक रूप से साधक = कर्ता आदि प्रधान रहते हैं। [ इसी लिये—खेलने वाला, जीतने वाला—आदि अर्थ होते हैं। ] ॥ २ ॥

'तेन' ( उससे ) इस तृतीयासमर्थ से 'संस्कृत' ( संस्कार किया गया )—इस अर्थ में 'ठक्' प्रत्यय होता है। विद्यमान का उत्कर्ष करना = संस्कार है। उदा०—दध्ना संस्कृतम्—दाधिकम्। [ दही द्वारा संस्कारयुक्त किया गया। दधि + ठक् = इक, आदिवृद्धि, भसंज्ञा, इलोप ] शृङ्गवेरेण संस्कृतम्—शाङ्गवेरिकम्। [ शृङ्गवेर + ठक्, आदिवृद्धि ] मारीचिकम्। [ मरिचिकाभिः संस्कृतम् ]। [ पूर्व सूत्र में ही इसको न रखकर ] योग-विभाग = अलग सूत्र बनाना उत्तरवर्ती सूत्र [ में अनुवृत्ति ] के लिए है ॥ ३ ॥

**१७४५. कुलत्थकोपधादण् ॥ ४ ॥ ( १५५२ )**

**कुलत्थशब्दात्ककारोपधाच्छब्दाच्च प्रातिपदिकादण् प्रत्ययो भवति 'संस्कृतम्' इत्येतस्मिन्विषये। ठकोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। ककारोपधात्—तैत्तिडीकम्। दार्दभकम्[1] ॥**

**१७४६. तरति ॥ ५ ॥ ( १५५३ )**

**तेनेति तृतीयासमर्थात् 'तरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। तरति = प्लवते इत्यर्थः। काण्डप्लवेन तरति काण्डप्लविकः। औडुपिकः ॥**

**१७४७. गोपुच्छाट्ठञ् ॥ ६ ॥ ( १५५४ )**

**गोपुच्छशब्दाठ् ठञ्प्रत्ययो भवति 'तरति' इत्येतस्मिन्नर्थे। ठकोऽपवादः। स्वरे विशेषः। गौपुच्छिकः ॥**

**१७४८. नौद्व्यचष्ठन् ॥ ७ ॥ ( १५५५ )**

**नौशब्दाद् द्व्यचश्च प्रातिपदिकाट् ठन् प्रत्ययो भवति 'तरति' इत्येतस्मिन्नर्थे। ठकोऽपवादः। नावा तरति नाविकः। द्व्यचः खल्वपि—घटिकः। प्लविकः। बाहुकः।**

**न्यासः**

**कुलत्थकोपधादण् ॥ ४ ॥ तरति ॥ ५ ॥ गोपुच्छाट् ठञ् ॥ स्वरे विशेष इति।** ठकि हि सति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात्। ठञि सति ञित्स्वरेणाद्युदात्तत्वं भवति ॥ ६ ॥

**नौद्व्यचष्ठन् ॥** इह प्रकरणे केषुचित् सांहितिकः षकारो दृष्टः केषुचित् प्रत्ययस्यैवानुबन्धः, तदिह ठगधिकारे न ज्ञायते—कः सांहितिकः ? कः प्रत्ययानुबन्धः ? इति। अतोऽसन्देहार्थं परिगणनं कृतम्। तच्च

**पदमञ्जरी**

**कुलत्थकोपधादण् ॥** कुले तिष्ठति कुलत्थः, अस्मादेव निपातनात्सकारस्य तकारः केचित्पुनः सकारमेवाधीयते ॥ ४ ॥ ५ ॥ ६ ॥

**नौद्व्यचष्ठन् ॥** इह ठगधिकारे सूत्रे क्वचित्प्रत्ययस्यानुबन्धो ङीषर्थः। स हि किं सांहितिकः, किं वानुबन्धः ? इति तत्र सन्देहे विषयपरिगणनं करिष्यन्श्लोकवार्त्तिककारः सर्वानेव षितः परिगणयति—**आकर्षादिति**—यदि तु

**भावबोधिनी**

कुलत्थ शब्द से और ककारोपध प्रातिपदिक शब्दों से 'अण्' प्रत्यय होता है 'संस्कृत=संस्कार युक्त किया गया' इस विषय में। यह ठक् का अपवाद है। उदा०—कुलत्थैः संस्कृतम्—कौलत्थम्। [ कुलथी से संस्कारित= रंगा गया। ] ककार जिसकी उपधा में है उससे—उदा०—तैत्तिडीकम्। दार्दभकम्। [ तित्तिड्चा संस्कृतम्=इमली से संस्कृत। दर्दभकेन संस्कृतम्। ] ॥ ४ ॥

'तेन' [ उसके द्वारा ] इस तृतीयासमर्थ से 'तरति' ( तैरता है, पार जाता है ) इस अर्थ में ठक्' प्रत्यय होता है। तरति=पार जाता है—यह अर्थ है। उदा०—काण्डप्लवेन तरति—इस अर्थ में—काण्डप्लविकः। [ काण्डप्लव= बांस के टुकड़ों से बने बेड़े द्वारा पार करने वाला] औडुपिकः। [उडुपेन तरति—छोटी नौका से पार जाने वाला। ] ॥५॥

'तरति' इस अर्थ में 'गोपुच्छ' इस शब्द से 'ठञ्' प्रत्यय होता है। यह ठक् का अपवाद है। ठक् तथा ठञ् में स्वर में भेद है। [ ठक् में कित् होने से अन्तोदात्त होता है। ठञ् में ञित् होने से आद्युदात्त होता है। ] उदा०—गौपुच्छिकः। [ गोपुच्छेन तरति—इस अर्थ में गोपुच्छ + ठञ्=इक, आदिवृद्धि ] ॥ ६ ॥

'नौ' शब्द से और दो अचों वाले प्रातिपदिक से 'तरति' इस अर्थ में ठन् प्रत्यय होता है। यह ठक् का अपवाद है। उदा०—नावा तरति=नाव से पार होता है—इस अर्थ में—नाविकः। [ नौ + ठन्=इक, आव् आदेश। ] दो अचों

१. 'तैत्तिरीकम्'—इति पा०।

**षकारः सांहितिकः, नानुबन्धः—बाहुको स्त्री ।**

**आकर्षात्पर्पादिर्भस्त्रादिभ्यः　कुसीदसूत्राच्च ।**
**आवसथात्किशरादेः षितः षडेते ठगधिकारे ॥**

**विधिवाक्यापेक्षं च षट्त्वम्, प्रत्ययास्तु सप्त ( म० भा० ४.४.७ ) ॥**

## १७४९. चरति ॥ ८ ॥ ( १५५६ )

**'तेन' इति तृतीयासमर्थात् 'चरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । चरतिर्भक्षणे गतौ च ( धा० पा० ५५९ ) वर्त्तते । दध्ना चरति दाधिकः । हास्तिकः । शाकटिकः ॥**

**न्यासः**

**'आकर्षात् पर्पादिभ्यः'** इत्यादिना श्लोकेन करोति । 'आकर्षात् ष्ठल्', 'पर्पादिभ्यष्ठन्' 'भस्त्रादिभ्यष्ठन्' 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' 'आवसथात् ष्ठल्', 'किशरादिभ्यः ष्ठन्' इति षितः षडेते । ननु च 'अन्यतो ङीष्' इत्यादयोऽन्येभ्योऽपि षितः सन्त्येव । तत् किमुच्यते षडेते ? इत्यत आह—**ठगधिकार इत्यादि** । ठकः प्रकृतत्वात् तदधिकारे ये षितः त एव परिगृह्यन्त इति दर्शयति ।

नन्वेवमपि सति सप्त भवन्ति, कुसीदादिसूत्रे षित्प्रत्ययद्वयविधानात् ? इत्यत्राह—**विधिवाक्यापेक्षं तु षट्त्वमिति** । षितः [ षितां ] प्रत्ययानां सप्तत्वात् । एतेनैव योगाः षितः प्रयुक्ताः । षित्प्रत्ययार्थाः षडेते योगा इत्यर्थः ॥७॥

**पदमञ्जरी**

यत्र सन्देहस्तानेवोपादायैतावन्तष्ठगधिकारे षित इत्युच्येत, तदा आकर्षादिषु प्रत्ययस्याषित्त्वमनार्षमाशङ्क्येत । **कुसीदसूत्रादिति** । कुसीदादिकं सूत्रं यस्य तत्कुसीदसूत्रं कुसीदशब्दश्च, दशैकादशशब्दश्च ।

ननु सप्तैते भवन्ति, कुसीदादिसूत्रेण द्वयोः षितोर्विधानात् ? इत्यत आह—**विधिवाक्यापेक्षं च षट्त्वमिति** । सप्तानां प्रत्ययानां विधिवाक्यापेक्षमौपचारिकं षट्त्वमाश्रित्य 'षितः षडेते' इत्युक्तम् ॥ ७ ॥ ८ ॥

**भावबोधिनी**

वाले प्रातिपदिक से ठन् का उदा०—घटिकः [ घटेन तरति—इस अर्थ में घट + ठन्=इक् ] । प्लविकः [ प्लवेन तरति ] । बाहुकः । [ बाहुभ्यां तरति—इस अर्थ में बाहु + ठन्, 'इसुसुक्तान्तात्कः' पा० सू० ७।३।५१ से 'ठ' का 'क' आदेश होता है । ]

सूत्र में षकार सन्धि के कारण हुआ है न कि अनुबन्ध है अतः—'बाहुका स्त्री' [ बाहुभ्यां तरति स्त्री—इस अर्थ में ठन् होता है । अतः 'टाप्' ही होता है । यदि ष्ठन् प्रत्यय होता तो षित् मानकर ङीष् होने लगता । ]

[ कहाँ 'ष्' इत् है और कहाँ सन्धि के कारण 'स्' का 'ष्' हुआ है ? इस पर वार्त्तिककार ने निम्न वार्त्तिक प्रस्तुत किया है— ]

"आकर्षात् ष्ठल्" ( पा० सू० ४।४।९ ), "पर्पादिभ्यः ष्ठन्" ( पा० सू० ४।४।१० ), "भस्त्रादिभ्यः ष्ठन्" ( पा० सू० ४।४।१६ ), "कुसीददशैकादशात् ष्ठन्ष्ठचौ" ( पा० सू० ४।४।३१ ) "आवसथात् ष्ठल्" (पा० सू० ४।४।७४), और "किशरादिभ्यः ष्ठन्" ( पा० सू० ४।४।५३ ) इन छः सूत्रों से विहित छः प्रत्यय ठक् के अधिकार में षित् हैं । [ और कोई षित् नहीं है । अतः 'ष्ठन्' नहीं अपितु 'ठन्' प्रत्यय ही यहाँ समझना चाहिए । ]

सूत्र = विधिवाक्य मान कर छः कहा गया, वास्तव में प्रत्यय सात हैं । [ क्योंकि "कुसीददशैकादशात्" पा० सू० ४।४।३१ इस सूत्र से 'ष्ठन्' और 'ष्ठच्' ये दो प्रत्यय किये गये हैं । अतः प्रत्यय सात हैं, सूत्र छः हैं । ] ॥ ७ ॥

'तेन' ( उससे ) इस तृतीयासमर्थ से 'चरति' इस अर्थ में ठक् प्रत्यय होता है । 'चर' धातु भक्षण और गमन दोनों अर्थों में है । उदा०—दध्ना चरति—इस विग्रह में—दाधिकः; [ दही से खाने वाला ] । हास्तिकः । [ हस्तिना चरति = हाथी से जाने वाला ] शाकटिकः । [ शकटेन चरति = गाड़ी से जाने वाला ] ॥ ८ ॥

**१७५०. आकर्षात्ष्ठल् ॥ ९ ॥ ( १५५७ )**

**आकर्षशब्दात् ष्ठल् प्रत्ययो भवति 'चरति इत्येतस्मिन्नर्थे । ठकोऽपवादः । लकारः स्वरार्थः । षकारो ङीषर्थः । आकर्षेण चरति आकर्षिकः । आकर्षिकी । 'आकर्ष' इति=सुवर्णपरीक्षार्थो निकषोपल उच्यते ॥**

**१७५१. पर्पादिभ्यः ष्ठन् ॥ १० ॥ ( १५५८ )**

**'पर्प' इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति 'चरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पर्पिकः, पर्पिकी । अश्विकः, अश्विकी ।**

**पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल । ॐ पादः पच्च ॐ । पदिकः । पर्पादिः ॥**

**१७५२. श्वगणाट्ठञ्च ॥ ११ ॥ ( १५५९ )**

**श्वगणशब्दाट्ठञ् प्रत्ययो भवति, चकारात् ठन्, चरति' इत्येतस्मिन्नर्थे । ठकोऽपवादः । श्वगणेन चरति**

**न्यासः**

**चरति ॥ ८ ॥ आकर्षात् ष्ठल् ॥ लकारः स्वरार्थ इति ।** लिति प्रत्ययात् पूर्वस्योदात्तत्वं यथा स्यात् । **षकारो ङीषर्थ इति ।** 'षिद्गौरादिभ्यः' इति ङीष् यथा स्यात् । **आकर्षिकीति । स्वर्णपरीक्षार्थो निकषोपल उच्यत इति ।** आकृष्यते स्वर्णमिति कृत्वा ॥ ९ ॥

**पर्पादिभ्यः ष्ठन् ॥** पर्पादिषु **पादः पच्चेति** पठ्यते, तस्यायमर्थः—पादशब्दात् ष्ठन् प्रत्ययो भवति तत्सन्नियोगेन च पदित्ययमादेशः, पदिकः, पदिकी । यद्येवम्, 'पद्यत्यतदर्थे' इति पद्भावे 'इके चरतावुपसंख्यानम्' इति कस्मादुपसंख्यायते ? नैष दोषः; 'पादः पत्' इत्यस्यापौराणिकत्वात् ॥ १० ॥

**श्वगणाट्ठञ्च ॥ श्वागणिक इति ।** शुनां गणः श्वगणः । ननु च श्वन्शब्दो द्वारादिषु पठ्यत इति 'द्वारादीनाञ्च' इति वृद्धिप्रतिषेधेनैजागमेन भवितव्यम्, तत्र तदादिविधेरिष्टत्वात्, तत् कथं श्वागणिक इति

**पदमञ्जरी**

**आकर्षात् ष्ठल् ॥ आकर्षेति ।** 'पुंसि संज्ञायां घः प्रायेण' इति अधिकरणे घः ॥ ९ ॥

**पर्पादिभ्यः ष्ठन् ॥** पर्पादिषु 'पादः पत्' इति पठ्यते, पादाभ्यां चरति पदिकः, 'पद्यत्यतदर्थे' इत्यत्र वक्ष्यति—'पद्भाव इके चरतावुपसङ्ख्यानम्' ( वा० ७४० ) इति, सोऽस्यैव प्रपञ्चार्थः ॥ १० ॥

**श्वगणाट्ठञ् च ॥ श्वागणिक इति ।** ननु च श्वशब्दो द्वारादिषु पठ्यते, तदादिविधिश्च तत्रेष्यते, तत्कथं

**भावबोधिनी**

'तरति' इस अर्थ में 'आकर्ष' शब्द से 'ष्ठल्' प्रत्यय होता है। यह ठक् का अपवाद है। लकार [ प्रत्यय से पूर्व का उदात्त ] स्वर करने के लिए है। षकार [ स्त्रीलिङ्ग में "षिद्गौरादिभ्यश्च" से ] ङीष् करने के लिए है। उदा०—आकर्षिकः, आकर्षिकी । आकर्ष=कसौटी का पत्थर जिस पर सोने की परीक्षा की जाती है, उसे कहते हैं। [ उससे भोजन चलाने वाला सुनार । ]॥ ९ ॥

'चरति' इस अर्थ में 'पर्प' आदि शब्दों से 'ष्ठन्' प्रत्यय होता है। यह 'ठक्' का अपवाद है। नकार अनुबन्ध [ "ञ्नित्यादिर्नित्यम्" से आद्युदात्त ] स्वर करने के लिए है। षकार ङीष् करने के लिए है। उदा०—पर्पेण चरति—इस विग्रह में—पर्पिकः, पर्पिकी । [ अश्वेन चरति—इस विग्रह में ] अश्विकः, अश्विकी । [ इस गण में पठित शब्द— ] पर्प । अश्व । अश्वत्थ । रथ । जाल । न्यास । व्याल । ॐ पाद का 'पद्' आदेश होता है—पदिकः ॐ । ये पर्पादि हैं ॥१०॥

'चरति' इस अर्थ में 'श्वगण' शब्द से ठञ् प्रत्यय और 'च' के बल 'ष्ठन्' भी होता है। यह ठक् का अपवाद है। उदा०—श्वगणेन चरति—इस विग्रह में—श्वागणिकः श्वागणिकी । [ श्वगण+ठञ् ] ठञ् होने पर [ आदिवृद्धि नहीं होती

श्वागणिकः, श्वागणिकी । ठन्—श्वगणिकः, श्वगणिका । 'श्वादेरिञि' ( ७.३.८ ) इत्यत्र वक्ष्यति—'इकारादिग्रहणं च कर्त्तव्यं श्वागणिकाद्यर्थम्' ( वा० ७.३.८ ) इति । तेन ठञि द्वारादिकार्यं न भवति ॥

१७५३. वेतनादिभ्यो जीवति ॥ १२ ॥ ( १५६२ )

'तेन' इति तृतीयासमर्थेभ्यो वेतनादिभ्यः शब्देभ्यः 'जीवति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । वेतनेन जीवति वैतनिकः कर्मकरः । धनुर्दण्डग्रहणमत्र सङ्घातविगृहीतार्थम् । धानुर्दण्डिकः । धानुष्कः । दाण्डिकः ।

वेतन । वाह । अर्धवाह । धनुर्दण्ड । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेष । स्रक् । पाद । उपस्थान । वेतनादिः ॥

१७५४. वस्नक्रयविक्रयाट्ठन् ॥ १३ ॥ ( १५६३ )

वस्नक्रयविक्रयशब्दाभ्यां तृतीयासमर्थाभ्यां ठन् प्रत्ययो भवति 'जीवति' इत्येतस्मिन्विषये । ठकोऽपवादः । वस्नेन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम्—क्रयविक्रयिकः, क्रयिकः, विक्रयिकः ॥

**न्यासः**

भवति ? इत्याह—**श्वादेरिञीत्यादि** । द्वारादिकार्ये च प्रतिषिद्धे सत्यादिवृद्धिरेव भवति ॥ ११ ॥

**वेतनादिभ्यो जीवति** ॥ **वस्नक्रयविक्रयाट्ठन्** ॥ **क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति** । इह तन्त्रेण क्रयविक्रयशब्दावुच्चारितौ; तत्रैकस्य सङ्घातार्थंग्रहणम्, अपरस्य तु विगृहीतार्थं वेदितव्यम् ॥ १२ ॥ १३ ॥

**पदमञ्जरी**

श्वागणिक इति ? तत्राह—**श्वादेरिञीत्यत्रेति** ॥ ११ ॥

**वेतनादिभ्यो जीवति** ॥ **धनुर्दण्डग्रहणं सङ्घातविगृहीतार्थमिति** । तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् ॥ १२ ॥

**वस्नक्रयविक्रयाट्ठन्** ॥ वसेर्वस्नम् = मूल्यम् । **क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति** । उक्तोऽत्र हेतुः । क्रयविक्रयेणेति समाहारद्वन्द्वः ॥ १३ ॥

**भावबोधिनी**

है—] श्वगणिकः, श्वगणिकी । [ श्वा = कुत्ता, उनके समुदाय के साथ घूमने वाला या खाने वाला । ] "श्वादेरिञि" इस सूत्र में कहा जायगा "श्वागणिका आदि के लिए इकारादि का ग्रहण करना चाहिए ।" इस कारण 'ठञ्' प्रत्यय परे रहते "द्वारादीनाञ्च" सूत्र से वृद्धिप्रतिषेधरूपी कार्य नहीं होता है अर्थात् वृद्धि होती है ऐजागम नहीं होता है ॥ ११ ॥

'तेन' इस तृतीयासमर्थ 'वेतन' आदि शब्दों से 'जीवति' ( जीता है, जीवन चलाता है )— इस अर्थ में ठक् प्रत्यय होता है । उदा०—वेतनेन जीवति—इस विग्रह में वैतनिकः [ वेतन + ठक् = इक, आदिवृद्धि ] 'धनुर्दण्ड' इसका ग्रहण समुदाय और विगृहीत अलग-२ दोनों से प्रत्यय करने के लिए है । उदा०—धानुर्दण्डिकः । [ धनुर्दण्डेन जीवति—यह विग्रह है । यहाँ समुदाय से ठक् हुआ है । ] धानुष्कः [ धनुषा जीवति—यह विग्रह है । ] दाण्डिकः [ दण्डेन जीवति—यह विग्रह है । इनमें अलग-अलग से भी प्रत्यय होता है । ]

[ इस गण में पठित शब्द— ] वेतन । वाह । अर्धवाह । धनुर्दण्ड । जाल । वेस । उपवेस । प्रेषण । उपस्ति । सुख । शय्या । शक्ति । उपनिषत् । उपवेश । स्रक् । पाद । उपस्थान । ये वेतनादि हैं ॥ १२ ॥

तृतीयासमर्थ वस्न तथा क्रयविक्रय शब्दों से 'जीवति' इस अर्थ में 'ठन्' प्रत्यय होता है । यह ठक् का अपवाद है । उदा०—वस्नेन जीवति—इस अर्थ में—वस्निकः । [ वस्न = मूल्य से जीवित रहने वाला । ] 'क्रयविक्रय' का ग्रहण संघात = समुदाय और विगृहीत = अलग-अलग शब्दों के ग्रहण के लिए है । उदा०—क्रयविक्रयिकः । [ क्रयविक्रयाभ्यां जीवति—यह विग्रह है । ] क्रयिकः, विक्रयिकः [ क्रयेण जीवति, विक्रयेण जीवति = खरीददारी से जीने वाला बिक्री से जीने वाला । ] ॥ १३ ॥

**१७५५. आयुधाच्छ च ॥ १४ ॥ ( १५६४ )**

**आयुधशब्दाच्छप्रत्ययो भवति, चकाराट्ठँश्च 'जीवति' इत्येतस्मिन्विषये। आयुधेन जीवति आयुधीयः। आयुधिकः ॥**

**१७५६. हरत्युत्सङ्गादिभ्यः ॥ १५ ॥ ( १५६५ )**

**'तेन' इत्येव। उत्सङ्गादिभ्यस्तृतीयासमर्थेभ्यः 'हरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। हरतिर्देशान्तरप्रापणे वर्त्तते। उत्सङ्गेन हरति औत्सङ्गिकः। औडुपिकः।**

**उत्सङ्ग। उडुप। उत्पत। पिटक। उत्सङ्गादि[1] ॥**

**१७५७. भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥ ( १५६६ )**

**'भस्त्रा' इत्येवमादिभ्यस्तृतीयासमर्थेभ्यः 'हरति' इत्येतस्मिन्नर्थे ष्ठन्प्रत्ययो भवति। भस्त्रया हरति भस्त्रिकः, भस्त्रिकी। भरटिकः, भरटिकी।**

**भस्त्रा। भरट। भरण[2]। शीर्षभार। शीर्षेभार। अंसभार। अंसेभार। भस्त्रादिः।**

**न्यासः**

**आयुधाच्छ च ॥ १४ ॥ हरत्युत्सङ्गादिभ्यः ॥ १५ ॥ भस्त्रादिभ्यः ष्ठन् ॥** भस्त्रादिषु **शीर्षेभार** इति पठ्यते। तत्रास्मादेव निपातनाच्छिरसः शीर्षभावः, 'सप्तमी' इति योगविभागात् समासः, 'तत्पुरुषे कृति बहुलम्' इति पक्षे सप्तम्या अलुक् ॥ १६ ॥

**पदमञ्जरी**

**आयुधाच्छ च ॥** आयुध्यतेऽनेनेति **आयुधम्**, 'घञर्थे कविधानम्' ( वा० ३०६ ) इति कप्रत्ययः ॥ १४ ॥

**हरत्युत्सङ्गादिभ्यः ॥** हरति = नयति, उपादत्ते वा ॥ १५ ॥

**भस्त्रादिभ्यः ष्ठन् ॥** भस्त्रम् = चर्मविकारः, येन लोहादि ध्मायते, येन वा धान्यादिकं नीयते, 'हूयामाश्रुभसिभ्यस्त्रन्' ( दश० उ० ८.८४ ) इति करणे त्रन्। **शीर्षभारः, शीर्षेभार इति** पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् ॥ १६ ॥

**भावबोधिनी**

'आयुध' शब्द से 'छ' प्रत्यय होता है, 'च' के बल से 'ठन्' यह भी 'जीवति' इस विषय में होता है। उदा०—आयुधेन जीवति—इस विग्रह में—आयुधीयः, आयुधिकः। [ आयुध + छ = ईय, आयुध + ठन् = इक ] ॥ १४ ॥

'तेन' इसकी अनुवृत्ति होती है। तृतीयासमर्थ 'उत्सङ्ग' आदि शब्दों से 'हरति' इस अर्थ में 'ठक्' प्रत्यय होता है। 'हृ' धातु = दूसरे स्थान पर पहुँचाना अर्थ में है। उदा०—उत्सङ्गेन हरति—इस अर्थ में—औत्सङ्गिकः। [ गोद से ले जाने वाला। ] औडुपिकः। [ उडुपेन हरति—इस अर्थ में ठक् = इक, आदिवृद्धि। छोटी नाव से ले जाने वाला। ] [ इस गण में पठित शब्द— ] उत्सङ्ग। उडुप। उत्पत। पिटक। ये उत्सङ्गादि हैं ॥ १५ ॥

तृतीया समर्थ 'भस्त्रा' आदि शब्दों से 'हरति' इस अर्थ में 'ष्ठन्' प्रत्यय होता है। उदा०—भस्त्रया हरति—इस अर्थ में—भस्त्रिकः, भस्त्रिकी। भरटिकः, भरटिकी। [ भस्त्रा = चमड़े का पात्र। भरट भी एक पात्रविशेष है। इनके द्वारा ले जाने वाला। ]

[ इस गण में पठित शब्द- ] भस्त्रा। भरट। भरण। शीर्षभार। शीर्षेभार। अंसभार। अंसेभार—ये भस्त्रादि हैं ॥ १६ ॥

---

१. 'उडप, पिटाक'—एतौ शब्दावत्र गणे क्वचिदधिकौ।

२. 'भारण' इति पाठा०।

## १७७८. विभाषा विवधवीवधात् ॥ १७ ॥ ( १५६७ )

**'हरति' इत्येव। विवधवीवधशब्दाभ्यां तृतीयासमर्थाभ्यां विभाषा ष्ठन् प्रत्ययो भवति। तेन मुक्ते प्रकृतष्ठग्भवति। विवधेन हरति विवधिकः, विवधिकी। वीवधिकः, वीवधिकी। ठक् खल्वपि—वैवधिकः, वैवधिकी।**

**विवध-वीवधशब्दौ समानार्थौ पथि पर्याहारे च वर्त्तेते ॥**

## १७७९. अण् कुटिलिकायाः ॥ १८ ॥ ( १५६८ )

**'हरति' इत्येव। कुटिलिकाशब्दात्तृतीयासमर्थादण् प्रत्ययो भवति 'हरति' इत्येतस्मिन्नर्थे। कुटिलिकया हरति मृगो व्याधं कौटिलिको मृगः। कुटिलिकया हरत्यङ्गारान् कौटिलिकः कर्मारः।**

**कुटिलिका = वक्रगतिः, कर्माराणामायुधकर्षणी लोहमयी यष्टिश्चोच्यते ॥**

## १७८०. निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥ ( १५६९ )

**'तेन' इत्येव। अक्षद्यूतादिभ्यस्तृतीयासमर्थेभ्यः 'निर्वृते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। अक्षद्यूतेन निर्वृत्तम्, आक्षद्यूतिकं वैरम्। जानुप्रहृतिकम्।**

**न्यासः**

**विभाषा विवधवीवधात् ॥ पर्याहारे इति।** परितः स ह्रियत इति पर्याहारः, मण्डलादिकमुच्यते ॥ १७ ॥

**अण् कुटिलिकायाः ॥ १८ ॥ निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ १९ ॥**

**पदमञ्जरी**

**विभाषा विवधवीवधात् ॥ पर्याहारे चेति।** परित आह्रियतेऽनेन तण्डुलादिकोऽर्थ इति पर्याहारः = उभयतो बद्धशिक्योऽसवाह्यः काष्ठविशेष उच्यते।

वीवधशब्दो वार्त्तिके दर्शनात्सूत्रे प्रक्षिप्तः ॥ १७ ॥

**अण्कुटिलिकायाः ॥** कुटिलव्याधानामुपरमणम् = कुटिलिका, संज्ञायां कन् ॥ १८ ॥ १९ ॥

**भावबोधिनी**

'हरति' इसकी अनुवृत्ति होती है। तृतीयासमर्थ 'विवध' और 'वीवध' शब्दों से विकल्प से 'ष्ठन्' प्रत्यय होता है। जब 'ष्ठन्' नहीं होता है तब प्रकृत प्रत्यय 'ठक्' होता है। उदा०—विवधेन हरति—इस अर्थ में—विवधिकः, विवधिकी [ विवध + ष्ठन् = इक, स्त्रीलिङ्ग में षित् मानकर ङीष् होता है। ] वीवधिकः, वीवधिकी। [ विवध तथा वीवध इन दोनों का अर्थ हैं—बहंगी, कँवर, बोझ। इनको ढोने वाला पुरुष और स्त्री। ] ठक् भी होता है—वैवधिकः, वैवधिकी। [ ठक् होने पर आदिवृद्धि होती है और स्त्रीलिङ्ग में ङीप् होता है। ]

विवध और वीवध—ये दोनों समानार्थक हैं ये 'मार्ग' और 'पर्याहार' अर्थों में है। [ सभी ओर से ढोया जाता है जिससे ऐसे दोनों छोरों पर बँधे शीके वाले 'कँवर' को पर्याहार कहते हैं। ] ॥ १७ ॥

'हरति' इसकी अनुवृत्ति होती है। तृतीयासमर्थ 'कुटिलिका' शब्द से 'हरति' इस अर्थ में 'अण्' प्रत्यय होता है। उदा०—मृग कुटिलिका द्वारा व्याध = शिकारी को दूर ले जाता है—इस अर्थ में कौटिलिकः मृगः। कुटिलिका से अङ्गारों को ले जाता है—इस अर्थ में—कौटिलिकः कर्मारः।

कुटिलिका = टेढ़ी चाल और बासों की आयुधों को खींचने वाली लौहमयी यष्टि को कहते हैं। [ हिरन टेढ़ी चाल से शिकारी को भगाकर ले जाता है। टेढ़े बाँसों की लोहजटित छड़ी अंगारों को ले जाती है। अण् होने पर आदिवृद्धि, भसंज्ञा, आलोप होता है। ] ॥ १८ ॥

'तेन' इसकी अनुवृत्ति होती है। तृतीयासमर्थ 'अक्षद्यूतादि' शब्दों से 'निर्वृत्त' ( किया गया ) इस अर्थ में 'ठक्' प्रत्यय होता है। उदा०—अक्षद्यूतेन निर्वृत्तम्—इस अर्थ में—आक्षद्यूतिकं वैरम्। [ अक्षद्यूत + ठक् = इक,

**अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । अक्षद्यूतादिः ॥**

**१७६१. त्रेर्मम्नित्यम् ॥ २० ॥ ( १६७० )**

**'निर्वृत्ते' इत्येव, 'ड्वितः क्त्रिः' ( ३.३.८८ ) इत्ययं त्रिशब्दो गृह्यते । त्र्यन्तान्नित्यं मप् प्रत्ययो भवति 'तेन निर्वृत्ते' इत्येतस्मिन्नर्थे । 'डुपचष्पाके' ( धा० पा० ९९७ )—पक्त्रिमम् । डुवप् ( धा० पा० १००३ )—उप्त्रिमम् । 'डुकृञ्' ( धा० पा० १४७३ )—कृत्रिमम् ।**

**नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम् । तेन त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवति, विषयान्तरे न प्रयो-**

**न्यासः**

**त्रेर्मम् नित्यम् ॥ ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यते इति ।** संख्याशब्दः कस्मान्न गृह्यते ? अनभिधानात् । न हि त्रिरित्युक्ते विवक्षितार्थस्य प्रतीतिर्भवति । **उप्त्रिममिति** । 'वचिस्वपियजादीनां किति' इति संप्रसारणम् ।

**नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति** । केवलस्य त्रिप्रत्ययान्तस्य मप्प्रत्ययरहितस्य प्रयोगः स्वातन्त्र्यम्, तन्निवृत्त्यर्थं नित्यग्रहणम् । स्वातन्त्र्यनिवृत्त्यर्थे नित्यग्रहणे सति योऽर्थः सम्पद्यते तं **त्र्यन्त इत्यादिना** दर्शयति ।

**पदमञ्जरी**

**त्रेर्मम्नित्यम् ॥ ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यत इति ।** सङ्ख्यावचनस्त्वनभिधानान्न गृह्यते । **उप्त्रिममिति** । वच्यादिसूत्रेण सम्प्रसारणम् ।

**नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति** । प्रत्ययरहितस्य त्र्यन्तस्य प्रयोगः स्वातन्त्र्यम्, स्वातन्त्र्यनिवृत्तौ सत्यां यो गुणस्तं दर्शयति—**त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवतीति** । एवकारव्यवच्छेद्यं दर्शयति—**विषयान्तरे न प्रयोक्तव्यमिति** । ननु विभाषया वाक्ये प्रसक्ते नित्यग्रहणं क्रियमाणं निर्वृत्ताधिकारे तद्विषयमेव वाक्यं निवर्तयितुमर्हति—पक्त्रिणा निर्वृत्तमिति, यथा—'अन उपाधालोपिनोन्यतरस्याम्' 'नित्यं संज्ञाच्छन्दसोः' इति, ततश्च विषयान्तरगतत्र्यन्तस्य स्वातन्त्र्यं स्यादेव कृत्रिमर्हत्सुविहितमिति ? एवं मन्यते—योगविभागोऽत्र कर्तव्यः, 'त्रेर्मब्भवति निर्वृत्ते' इत्येको योगः, ततः 'नित्यम्' । अत्र त्रेर्मबित्येवापेक्ष्यते न निर्वृत्त इति; योगविभाग-

**भावबोधिनी**

आदिवृद्धि । ] जानुप्रहृतिकम् । [ जानुप्रहृतेन निर्वृत्तम् । जुर्ये से किया गया बैर । जानु के प्रहार से किया गया वैर ]

[ इस गण में पठित शब्द—] अक्षद्यूत । जानुप्रहृत । जङ्घाप्रहृत । पादस्वेदन । कण्टकमर्दन । गतागत । यातोपयात । अनुगत । ये अक्षद्यूतादि हैं ॥ १९ ॥

'निर्वृत्ते' ( किया गया ) इसकी अनुवृत्ति होती है । "ड्वितः क्त्रिः" ( पा० सू० ३।३।८८ ) इससे विहित 'क्त्रि' यहाँ लिया जाता है । 'तेन निर्वृत्ते' ( उसके द्वारा किया—) इस अर्थ में क्त्रिप्रत्ययान्त से 'मप्' प्रत्यय नित्य होता है अर्थात् इस प्रत्यय के साथ ही उसका प्रयोग होता है । 'डुपचष्' यह पकाना अर्थ में हैं' इससे पक्त्रिमम् । [ 'डुपचष्' में "आदिर्ञिटुडवः" सूत्र से 'डु' की इत्संज्ञा होने के कारण "ड्वितः क्त्रिः" सूत्र से 'क्त्रि=त्रि' प्रत्यय करने पर "पच्+त्रि' कुत्व 'पक्त्रि' बनाने के बाद प्रस्तुत सूत्र से 'मप्' प्रत्यय होता है—पाकेन निर्वृत्तम् इस अर्थ में 'पक्त्रिमम्' यह होता है । ] 'डुवप्' यह बोना अर्थ में हैं । 'वापेन निर्वृत्तम्' इस अर्थ में—उप्त्रिमम् । [ 'डु वप्' 'डु' की इत्संज्ञा लोप, 'क्त्रि' प्रत्यय कित् होने से 'व्' का सम्प्रसारण, 'अ' का पूर्वरूप —उप्त्रि + मप् ] 'डु कृञ्' यह करना अर्थ में है । [ करणेन निर्वृत्तम्—इस अर्थ में कृ + क्त्रि + मप्=] कृत्रिमम् = किया गया, बनाया गया । ]

'नित्यम्' का ग्रहण स्वातन्त्र्य की निवृत्तिके लिए है । इस कारण त्रिप्रत्ययान्त नित्य मप्प्रत्ययान्त ही होता

क्तव्यमिति ( म० भा० ) ॥

❀ भावप्रत्ययान्तादिमब्वक्तव्यः ❀ ( प्र० भा० ) । पाकेन निर्वृत्तं पाकिमम् । त्यागिमम् । सेकिमम् । कुट्टिमम् ॥

**१७६२. अपमित्ययाचिताभ्यां कक्कनौ ॥ २१ ॥ ( १५७१ )**

**'निवृत्ते' इत्येव । अपमित्ययाचितशब्दाभ्यां यथासंख्यं कक्, कन्—इत्येतौ प्रत्ययौ भवतः 'निर्वृत्ते' इत्येतस्मिन्नर्थे । आपमित्यकम् । याचितकम् ॥**

**न्यासः**

**विषयान्तर इत्यादिना** यदेवकारस्य व्यवच्छेद्यं तदाचष्टे । मप्प्रत्ययविषयार्थादन्यविषये यत्र प्रत्ययो न भवति तद्विषयान्तरम् । नित्यग्रहणं तन्निवृत्तिर्यथा स्यादित्येवमर्थं वेदितव्यम् ॥ २० ॥

**अपमित्ययाचिताभ्यां कक्कनौ ॥ अपमित्येति ।** 'उदीचां माङो व्यतीहारे' इति क्त्वा, तस्य ल्यबादेशे कृते, अपमित्येति भवति । तस्य च 'क्त्वातोसुन्कसुनः' इत्यव्ययसंज्ञा । तेन तृतीयासमर्थविभक्त्यधिकारेऽप्यविभक्तिकादेवास्मात् प्रत्ययविधिः ॥ २१ ॥

**पदमञ्जरी**

सामर्थ्यात् । तेन सर्वविषयस्वातन्त्र्यस्य नित्यग्रहणेन निवृत्तिः क्रियत इति । नन्वेवमपि 'नित्यम्' इत्यत्र निर्वृत्तमित्यस्यानपेक्षणात्स्वातन्त्र्यान्तरे नित्यमुपाधिः प्राप्नोति ? सत्यम्; अनभिधानात्तु तथानाश्रीयते ।

**भावप्रत्ययान्तादिमब् वक्तव्य इति ।** 'तेन निर्वृत्तम्' इत्येतस्मिन्नर्थे । **पाकेन निर्वृत्तं पाकिममिति ।** एवं च त्र्यन्तादपि भावाभिधायिन इमपि कृते यस्येति लोपे च कृत्रिममित्यादि सिद्धं भवति, स्वरेऽपि नास्ति विशेषः, उदात्तनिवृत्तिस्वरेणैवौदात्तत्वम् । सूत्रारम्भस्तु नित्यग्रहणेन स्वातन्त्र्यं निवर्तयिष्यामीत्येवमर्थं वेदितव्यः ॥२०॥

**अपमित्ययाचिताभ्यां कक्कनौ ॥ अपमित्येति ।** 'उदीचां माङो व्यतिहारे' इति क्त्वाप्रत्ययेऽपशब्देन समासे क्त्वो ल्यप्, 'मयतेरिदन्यतरस्याम्' इतीत्वम्, 'क्त्वातोसुन्कसुनः' इत्यव्ययसंज्ञा । तेन नात्र तृतीयासमर्थात्प्रत्ययः ॥ २१ ॥

**भावबोधिनी**

है, अन्यविषय में इसका प्रयोग नहीं करना चाहिए।

❀ भावप्रत्ययान्त से 'इमप्' प्रत्यय कहना चाहिए । ❀ उदा०—पाकेन निर्वृत्तम्—पाकिमम् । [ पाक से बनाया गया ] त्यागिमम् । [ त्यागेन निर्वृत्तम् । त्याग से बनाया गया । ] सेकिमम् । [ सेकेन निर्वृत्तम् । ] [ सींचने से बनाया गया ] कुट्टिमम् । [ कुट्ट्या निर्वृत्तम् + इसमें भावार्थक क्तिन् प्रत्ययान्त 'कुट्टि' से 'इमप्' होता है ।

[ भाष्य में ऐसा स्वतन्त्र वचन नहीं है अपितु 'मप्' के सन्दर्भ में 'इमप्' करके 'त्रि' प्रत्ययान्त से 'मप्' का विधान किया गया है "नित्यं त्र्यन्तमिपब्विषय एव यथा स्यात् केवलस्य प्रयोगो भा भूत् ।" म०भा० ४।४२० ] ॥ २० ॥

'निर्वृत्ते' इसकी अनुवृत्ति होती है । 'निर्वृत्ते' इस अर्थ में 'अपमित्य' और 'अयाचित' शब्दों से क्रमशः 'कक्' और 'कन्' प्रत्यय होते हैं । उदा०—आपमित्यकम् [ 'अपमित्य' यह ल्यप् प्रत्ययान्त होने से अव्यय है । अतः 'अपमित्य निर्वृत्तम्' यह विग्रह है—अपमित्य + कक्, आदिवृद्धि ] । 'उदीचां माङो व्यतीहारे" पा० सू० ३।४।१९ से व्यतीहार = विनिमय अर्थ में' 'माङ्' से क्त्वा होता है । 'अप' के साथ समास करने पर 'ल्यप्' हो जाता है । इसी का ग्रहण यहाँ है । ] याचितकम् । [ याचितेन निर्वृत्तम्—इस अर्थ में 'कन्' होता है । इन दोनों प्रत्ययों में स्वर का भेद है । ] ॥ २१ ॥

**१७६३. संसृष्टे ॥ २२ ॥ ( १५७२ )**

**'तेन इत्येव । तृतीयासमर्थात् 'संसृष्टे' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । संसृष्टम् = एकीभूतम्, अभिन्नमित्यर्थः । दध्ना संसृष्टं दाधिकम् । मारिचिकम् । शाङ्गवेरिकम् । पैप्पलिकम् ॥**

**१७६४. चूर्णादिनिः ॥ २३ ॥ ( १५७३ )**

**चूर्णशब्दादिनिः प्रत्ययो भवति संसृष्टे । ठकोऽपवादः । चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः । चूर्णिनो धानाः ॥**

**१७६५. लवणाल्लुक् ॥ २४ ॥ ( १५७४ )**

**'संसृष्टे' ( ४.३.२२ ) इत्यनेनोत्पन्नस्य ठको लवणशब्दाल्लुग्भवति । लवणः सूपः । लवणं शाकम् ।**

**न्यासः**

**संसृष्टे** ॥ ननु च 'संस्कृतम्' इत्येव संसृष्टे प्रत्ययो भविष्यति, यत् पुनर्येन संसृष्टं तत्तेन संस्कृतं भवति ? नैतत्; सतो ह्युत्कर्षाधानम् = संस्कारः, एकभावः = संसर्गः, न च तत्रोत्कर्षेण भवितव्यम्, स्वशुचिद्रव्यसंसर्गे स्वप्रकर्ष एव भवति, नोत्कर्षः । संसर्गमात्रे प्रत्यय इष्यते; तस्मात् संसृष्ट इति वक्तव्यमेतत्; एतदेव क्रियताम्; किं 'संस्कृतम्' इत्यनेन ? असत्यपि संसर्गे यत्र संस्कृतमस्ति तत्रापि प्रत्यय इष्यते —वैद्यिकः, न विद्यया संसर्ग उपपद्यते; संसर्गो द्रव्ययोरेव भवति, यथा—दण्डपुरुषयोः । मूर्तिमतस्तद्धर्मत्वात्, न तु विद्या मूर्तिमती । कुलत्थकोपधादणो विधानार्थं संस्कृतग्रहणं कर्तव्यम् । न हि संसृष्टमात्रे प्रत्यय इष्यते; किन्तु तत्कृतगुणाधाने ॥२२॥

**चूर्णादिनिः** ॥ ननु च चूर्णेन ये संसृष्टास्तेषां चूर्णमस्ति, तत्र मत्वर्थीयेनैवेनिना सिद्धमिति तदपार्थकमिदम् ? नैतत्; अस्तिविवक्षायां मत्वर्थीयेन सिद्धं स्यात्, संसृष्टविवक्षायां पुनर्न सिध्यति, तत्र हि ठक् स्यात् । ठको बाधनार्थत्वे कुतोऽस्यानर्थक्यम् ॥ २३ ॥

**लवणाल्लुक्** ॥ **द्रव्यवाचीत्यादि** ॥ लवणशब्दोऽयमस्त्येव गुणवचनो यो रसविशेषे वर्तते, रसस्य गुणत्वात् ।

**पदमञ्जरी**

**संसृष्टे** ॥ ननु यद्येन संसृष्टं तत्तेन संस्कृतं भवति; ततश्च संस्कृतमित्येव संसृष्टेऽपि प्रत्ययः सिद्धः ? न सिध्यति: सत उत्कर्षाधानम् = संस्कारः, एकीभावस्तु = संसर्गः, न च यत्रासौ तत्रावश्यमुत्कर्षोऽस्ति, अशुचिद्रव्यसंसर्गे हि प्रत्युतापकर्ष एव भवति । तस्मात्संसृष्ट इति वक्तव्यम् । यद्यस्य निबन्धनमस्त्येतदेवास्तु, मा भूत्संस्कृतमित्येतत् ? तदवश्यं कर्तव्यम्, इहापि यथा स्यात्—विद्यया संस्कृतो वैद्यक इति, न ह्यत्र संसर्गोऽस्ति; मूर्त्तिधर्मत्वात् । किञ्च 'कुलत्थकोपधादण्' संस्कृत एव यथा स्यात्संसृष्टे मा भूदित्येवमर्थं संस्कृतमित्येतद्भवतीति वक्तव्यम् ॥ २२ ॥

**चूर्णादिनिः** ॥ चूर्णेन ये संसृष्टास्तेषां चूर्णमस्तीति मत्वर्थीयेनैवेनिना सिद्धम् ? सत्यम्; तद्रूपविवक्षायां सिद्धम् । संसर्गविवक्षायां तु ठक् प्राप्नोति । अनभिधानं तु दुर्ज्ञानम् ॥ २३ ॥

**लवणाल्लुक** ॥ **लवणद्रव्यवाचीत्यादि** ।[1] लवणशब्दोऽयमस्त्येव गुणवचनः—षण्णां रसानामन्यतमस्य

**भावबोधिनी**

'तेन. इसकी अनुवृत्ति होती है । तृतीया-समर्थ शब्द से 'संसृष्टे' ( मिला हुआ ) इस अर्थ में 'ठक्' प्रत्यय होता है । संसृष्ट = एकीभूत, अभिन्न अर्थात् पूर्णरूप से मिला हुआ—यह अर्थ है । उदा०—दध्ना संसृष्टम्—इस अर्थ में दाधिकम् [ दधि + ठक्, दही से मिला हुआ ] मारीचिकम् । [ मरिच से मिला हुआ । ] शाङ्गवेरिकम् । [ शृङ्गवेर से मिला हुआ । ] पैप्पलिकम् । [ पीपल औषधि से मिला हुआ । ] ॥ २२ ॥

'संसृष्ट' अर्थ में 'चूर्ण' शब्द से 'इनि' प्रत्यय होता है । यह ठक् का अपवाद है । उदा०—चूर्णैः संसृष्टाः—इस अर्थ में 'चूर्णिन, अपूपाः, चूणिनः धानाः । [ चूर्ण से मिले हुये पूआ । चूर्ण से मिले हुये धान ]। । २३ ॥

'लवण' शब्द से 'संसृष्टे' ( पा. सू. ४।४।२२ ) इस सूत्र से किये गये 'ठक्' प्रत्यय का लुक् हो जाता है । उदा०

---

१. 'द्रव्यवाची लवणशब्दः' इति काशिकापाठः ।

**लवणा यवागूः । द्रव्यवाची लवणशब्दो लुकं प्रयोजयति, न गुणवाची ॥**

**१७६६. मुद्गादण् ॥ २५ ॥ ( १५७५ )**

**मुद्गशब्दादण् प्रत्ययो भवति 'संसृष्टे' इत्येतस्मिन्विषये। ठकोऽपवादः। मौद्ग ओदनः। मौद्गी यवागूः ॥**

**१७६७. व्यञ्जनैरुपसिक्ते ॥ २६ ॥ ( १५७६ )**

**'तेन' इत्येव। व्यञ्जनवाचिभ्यः प्रातिपदिकेभ्यस्तृतीयासमर्थेभ्यः 'उपसिक्ते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। दध्ना उपसिक्तं दाधिकम्। सौपिकम्। खारिकम्।**

**न्यासः**

अस्ति द्रव्यवचनः यथा—पञ्च लवणानीति। तत्र यो गुणवचनः स लुकं न प्रयोजयति। गुणैर्हि यद्यपि द्रव्यं न संसृज्यते, तथापि गुणशब्दाः 'सोऽयम्' इत्यभेदेन सम्बन्धाद् द्रव्ये वर्तन्ते, यथा—शुक्लः पटः, मधुरं क्षारम्, अम्लं दधीति; तथा लवणशब्दोऽपि वर्तिष्यते, ततः किं लुका? अवश्यं तदेवं विज्ञेयम्, अन्यथा हि मधुरादिभ्योऽपि लुग् वक्तव्यः स्यात्। द्रव्यशब्दास्त्वन्यत्र सोऽयमित्यभेदसमर्थनान्न वर्तन्ते। तस्माद् द्रव्यवाची लवणशब्दो लुकं प्रयोजयति ॥ २४ ॥

**मुद्गादण् ॥ व्यञ्जनैरुपसिक्ते ॥ व्यञ्जनैरिति।** बहुवचननिर्देशः स्वरूपविधिनिरासार्थः। तेनेत्यधिकारादेव तृतीयायां समर्थविभक्तौ वर्तमानायां तृतीयानुवादः सुखप्रतिपत्तये। 'संसृष्टे' इति वर्तमान उपसिक्तस्यैतत् प्रयोजनम्—ओदनादौ यथा स्यात् इह मा भूत्—सूपेन संसृष्टा स्थालीति, उदकेनोपसिक्त ओदन इति। उदकं व्यञ्जनं न भवति; व्यञ्जनशब्दस्य सूपादावेव रूढत्वात्। ननु यद् व्यञ्जनैरुपसिक्तं तत्तैः संस्कृतं भवति, तत्र संस्कृतमेव सिद्धम्? न सिध्यति; सतो ह्युत्कर्षाधानं संस्कारः, न चासौ सर्वत्रोपसिक्तः सम्भवति। तथा

**पदमञ्जरी**

वाचकः, अस्ति च द्रव्यवचनो यः सैन्धवादिषु वर्तते; तत्र यो गुणवचनः स न लुकं प्रयोजयति, मधुरादिशब्दवदभेदोपचारादेव द्रव्ये वृत्तिसिद्धेः। द्रव्यशब्दस्तु सोऽयमित्यभिसम्बन्धाद् द्रव्ये वर्तमानः। यद्यपि प्रष्ठी प्रचरी यष्टीः प्रवेशयेत्यादौ द्रव्यशब्दस्यापि क्वचिदभेदोपचारो दृष्टः, तथापि भेदविवक्षायां तत्स्थोऽपि दृश्यते—प्रष्ठस्येयं प्राष्ठी यष्टिमतः पुरुषानिति। तस्माद् द्रव्यवाच्येव लवणशब्दो लुकं प्रयोजयति, स च प्रयोजयत्येव ॥ २४ ॥ २५ ॥

**व्यञ्जनैरुपसिक्ते ॥** ओदनादिषु रसो येन व्यज्यते तद्व्यञ्जनम्। बहुवचननिर्देशः स्वरूपविधिनिरासार्थः।

**भावबोधिनी**

लवणः सूपः, लवणं शाकम्, लवणा यवागू। [ लवणेन संसृष्टः, संसृष्टम्, संसृष्टा—इन विग्रहों में "संसृष्टे" सूत्र से किये गये 'ठक्' प्रत्यय का लुक् हो जाने पर मूल शब्द हो बचता है और विशेष्यानुसारी लिङ्ग-वचन होते हैं। ]

द्रव्यवाची लवण शब्द ही लुक् का प्रयोजक होता है गुणवाची नहीं। [ अतः जहाँ गुणवाचक है, वहाँ लुक् नहीं होता है। ] ॥ २४ ॥

'संसृष्टे' इस विषय में 'मुद्ग' शब्द से 'अण्' प्रत्यय होता है। यह ठक् का अपवाद है। [मुद्गेन संसृष्टः ओदनः—इस अर्थ में 'अण्' आदिवृद्धि, । स्त्रीलिङ्ग में ङीप् होता है। मूंग मिला हुआ भात। मूंग मिला हुआ हलुआ। ] ॥ २५ ॥

'तेन' इसकी अनुवृत्ति होती है। व्यञ्जनवाची तृतीयासमर्थ प्रातिपदिकों से 'उपसिक्ते' इस अर्थ में 'ठक्' प्रत्यय होता है। उदा० दध्ना उपसिक्तम्—दाधिकम्। [ दधि+ठक्=इक, आदिवृद्धि। ] सौपिकम्। [सूपेन उपसिक्तम्। ] खारिकम्। [ यहाँ "तिग्मं तीक्ष्णं खरम्" अमरकोश १।३।३५ के अनुसार 'गर्म से उपसिक्त' अर्थ समझना चाहिये। यह उदा०—चिन्तनीय है। ]

**विमर्श**—'संसृष्ट' का अर्थ है=एकीभूत, मिश्रित। और उपसेचन से भी संसृष्टता होती है। तब दो अर्थों में अलग-२ सूत्रों की क्या आवश्यकता? समाधान यह है कि प्रस्तुत सूत्र नियमार्थ है—व्यंजन द्वारा उपसिक्त में ही संसृष्ट

**व्यञ्जनैरिति किम् ? उदकेनोपसिक्त ओदनः ॥**

**१७६८. ओजःसहोम्भसा वर्तते ॥ २७ ॥ ( १५७७ )**

**ओजस्, सहस्, अम्भस्—इत्येतेभ्यस्तृतीयासमर्थेभ्यः 'वर्त्तते' इत्यर्थे ठक्प्रत्ययो भवति । ओजसा वर्त्तते औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः ॥**

**१७६९. तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥ ( १५७८ )**

**'तत्' इति द्वितीया समर्थविभक्तिः । 'प्रति' 'अनु'—इत्येवम्पूर्वेभ्य ईप, लोम, कूल-शब्देभ्यो द्वितीया-समर्थेभ्यः 'वर्त्तते' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।**

**न्यासः**

हि—व्यगते स्वादुरसैः प्रतिभावापन्नैरुपसिक्तेष्वोदनादिष्वपकर्ष एव भवति, नोत्कर्षः । उपसिक्तमात्रेऽपि चेष्यते । तस्मात् प्राक् तस्य पृथगारम्भः ॥ २६ ॥

**ओजःसहोम्भसा वर्तते ॥ वर्तते इति ।** चेष्टत इत्यर्थः ॥ २७ ॥ **तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ तत्क्रिया-विशेषण[1]मित्यादि ।** अनेन हि वृत्त्यर्थस्य कर्तव्यतामाचष्टे । वर्तत इति वर्तमानं करोत्यर्थः । स हि वृत्यर्थः कर्तव्यतया सम्बध्यमानः कर्म सम्पद्यते । तत्सामानाधिकरण्याच्च तद्विशेषणमपि कर्तव्यतया युज्यते । तदपि कर्म च प्रसक्तम् । क्रियाविशेषणस्यैवाकर्मकेऽपि धातौ कर्मत्वमाख्यातम् । तदित्यनेन द्वितीयासमर्थविभक्तौ लब्धायामपि द्वितीयान्ता इह प्रकृतयो निर्दिष्टा विस्पष्टार्थम्; अन्यथा प्रत्ययविधौ पञ्चमी न्याय्येति तदन्ता एव निर्दिश्येरन् ।

**प्रातीपिक इति ।** प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः । ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः ।

**पदमञ्जरी**

उपसिक्तः = सेचनेन मृदूकृतः । इह यद्येनोपसिक्तं तत्तेन संसृष्टं भवति, तत्र संसृष्टं इत्येव सिद्धे नियमार्थं वचनम्—व्यञ्जनेभ्य उपसिक्त एव संसृष्टे यथा स्यात्संसृष्टमात्रे मा भूत्, दध्ना संसृष्टा स्थालीति ॥ २६ ॥ २७ ॥

**तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ क्रियाविशेषणमित्यादि ।** आख्यातं हि धात्वर्थस्य कर्तव्यतामाचष्टे—वर्तते = वर्तनं करोति, सुप्यते = स्वापः क्रियते, शोभनमोदनं पच्यते = ओदनकर्मकः पाकः शोभनः क्रियते

**भावबोधिनी**

में हो केवल संसृष्ट में यह प्रत्यय न हो; जैसे—दध्ना संसृष्टा स्थाली—यहाँ नहीं होता है । दूसरी बात यह है कि इसमें केवल व्यंजन लिया गया है । व्यञ्जन शब्द से 'रस के व्यंजक' दही, दूध आदि ही लिए जाते हैं । अतः जल का ग्रहण नही होता है । यही आगे लिख रहे हैं—]

व्यञ्जनैः—व्यञ्जन द्वारा—इसका क्या फल है ? उदकेन उपसिक्त ओदनः । [यहाँ प्रत्यय नहीं होता है ।]॥२६॥

'ओजस्', 'सहस्', और 'अम्भस्' इन तृतीयासमर्थ शब्दों से 'वर्तते ( = चेष्टा करता है) इस अर्थ में ठक्' प्रत्यय होता है । उदा० ओजसा वर्तते—औजसिकः शूरः [ ओजस् + ठक् = इक, आदिवृद्धि । ओज के साथ चेष्टा करने वाला शूर] सहसा वर्तते—साहसिकः चौरः । [ बिना सोंचे समझे चोरी करने वाला 'साहसिकः' है । प्राचीन काल में 'सहस्' का प्रयोग गर्हित अर्थ में किया जाता था । आजकल अच्छे अर्थ में किया जाने लगा है । ] आम्भसिकः मत्स्यः । [अम्भसा वर्तते—इस अर्थ में ठक् होता है । ] ॥ २७ ॥

'तत्' यह द्वितीया समर्थ विभक्ति है । 'प्रति' 'अनु' ये जिनके पूर्व में हैं, ऐसे 'ईप' 'लोम' तथा 'कूल' इन द्वितीया-समर्थ शब्दो से 'वर्तते' इस अर्थ में 'ठक्' प्रत्यय होता है ।

१. प्रकाशितसंस्करणे अग्रिमसूत्रस्य न्यासः पूर्वस्मिन्न सूत्रे प्रमादात् प्रदर्शितः । ग्रन्थसंगत्यै इत्थमेवावश्यकम् ।

**ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः ? क्रियाविशेषणमकर्मकाणामपि कर्म भवति। प्रतीपं वर्त्तते प्रातीपिकः। आन्वीपिकः। प्रातिलोमिकः। आनुलोमिकः। प्रातिकूलिकः। आनुकूलिकः॥**

**१७७०. परिमुखं च॥ २९॥ (१५७९)**

**परिमुखशब्दाद् द्वितीयासमर्थाद् 'वर्त्तते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। परिमुखं वर्त्तते पारिमुखिकः।**

**न्यासः**

एवञ्च 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम्। अपरत्र तु 'ऊदनोर्देशे' इति देशादन्यत्रोत्वमेव, ततष्ठक्। **प्रातिलोमिकम्, आनुलोमिकमिति।** प्रतिगतानि लोमान्यस्य, अनुगतानि लोमान्यस्येति बहुव्रीहिः। 'अच् प्रत्यनु' इत्यादिनाऽच् समासान्तः॥ २८॥

**परिमुखञ्च॥** 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः, ततष्ठक्। स्वामिमुखं वर्जयित्वा यः सेवको वर्तते स पारिमुखिकः। सर्वतोभावे वा परिः, तस्य 'कुगतिप्रादयः' इति प्रादि-

**पदमञ्जरी**

इति। पचिधात्वर्थः कर्तव्य एव सम्बध्यमानः कर्म सम्पद्यते, तस्य यत्समानाधिकरणं विशेषणं तदपि कर्मैव भवति।

**प्रातीपिकः, आन्वीपिक इति।** प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः, 'ऋक्पूरब्धू' इत्यकारः समासान्तः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इतीत्वम्। व्युत्पत्तिमात्रं चैतत्, प्रतिकूलानुकूलपर्यायौ त्वेतौ। 'ऊदनोर्देशे' इत्यूत्वमत्र न भवति; अदेशत्वात्, देशत्वे क्रियाविशेषणत्वासम्भवात्। सूत्रे ईप्शब्दस्य निर्देशात्। **प्रातिलोमिकः, आनुलोमिक इति।** पूर्ववद्बहुव्रीहिः, 'अच् प्रत्यन्ववपूर्वात्' इत्यच् समासान्तः। अत्रापि व्युत्पत्तिमात्रम्, अर्थस्तु पूर्वोक्त एव **प्रातिकूलिक इति।** पूर्ववद्बहुव्रीहिः। अत्रापि कूलार्थो नास्ति। प्रतिसरणं चैतयोरर्थः॥ २८॥

**परिमुखं च॥ पारिमुखिक इति।** परिरिह वर्जने, तस्य च 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, 'अपपरिबहिरञ्चवः' इत्यव्ययीभावः, अनेन ठक्। स्वामिनो मुखं वर्जयित्वा

**भावबोधिनी**

शंका—'वृत्' धातु तो अकर्मक है, अतः कर्म के साथ उसका सम्बन्ध कैसे होगा ? अकर्मक भी धातु का क्रिया-विशेषण कर्म हो जाता है। [ उसी को मानकर द्वितीया-समर्थता की उपपत्ति होती है। ]

उदा० प्रतीपं वर्तते—इस विग्रह में—प्रातीपिकः। [ प्रतीपम् + ठक् = इक् आदिवृद्धि। प्रतिगताः आपः अस्मिन् इस अर्थ में बहुव्रीहि करने पर 'ऋक्पूरब्धःपथामानक्षे" सूत्र से 'अ' प्रत्यय समासान्त में होता है। "द्व्यन्तरुपसर्गेभ्योऽप ईत्" सूत्र से 'आ' का 'ई' प्रति + ईप = प्रतीपम्। इस द्वितीयान्त से प्रत्यय होता है। ] अन्वीपं वर्तते—इस विग्रह में—आन्वीपिकः। [ अनुगताः आपः अस्मिन्—इस अर्थ में बहुव्रीहि करके पूर्ववत् 'अ' प्रत्यय अनु + आप् + अ 'आ' का 'ई' और यण् करने पर रूप बनता है—अन्वीपम् + ठक् = इक, आदिवृद्धि। प्रतीप = प्रतिकूल और अन्वीप = अनुकूल अर्थ में हैं। ] प्रातिलोमिकः, आनुलोमिकः। [ प्रतिगतानि लोमानि अस्य, अनुगतानि लोमानि अस्य—इस अर्थ में बहुव्रीहि करने के बाद "अच् प्रत्यन्ववपूर्वात्" सूत्र से 'अच् प्रत्यय, टिलोप। प्रतिलोपं वर्तते, अनुलोमं वर्तते—इस विग्रह में ठक्=इक, आदिवृद्धि। ये दोनों क्रमशः प्रतिकूल और अनुकूल के पर्याय हैं। ] प्रातिकूलिकः आनुकूलिकः। [ प्रतिगतं कूलं यस्य, अनुगतं कूलं यस्य—इस बहुव्रीहि को बनाने के बाद—प्रतिकूलं वर्तते, अनुकूलं वर्तते—इस विग्रह में ठक्=इक, आदिवृद्धि। प्रतिकूल रहने वाला, अनुकूल रहने वाला। ]॥ २८॥

द्वितीया-समर्थ 'परिमुख' शब्द से 'वर्तते' इस अर्थ में 'ठक्' प्रत्यय होता है। उदा०—परिमुखं वर्तते—इस अर्थ में—पारिमुखिकः। [ परिशब्द वर्जन अर्थ में है अतः "अपपरी वर्जने" सूत्र से कर्मप्रवचनीयसंज्ञा, "पञ्चम्यपाङ्-परिभिः" सूत्र से 'मुख' में पञ्चमी—मुखात् परि। "अपपरिबहिरञ्चवः पञ्चम्या" इससे अव्ययीभाव समास करने

**चकारोऽनुक्तसमुच्चयार्थः । पारिपार्श्विकः ॥**

**१७७१. प्रयच्छति गर्ह्यम् ॥ ३० ॥ ( १५८० )**

**'तत्' इति द्वितीयासमर्थात् 'प्रयच्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति, यद् द्वितीयासमर्थं गर्ह्यं चेत्तद्भवति । द्विगुणार्थम्=द्विगुणम्, तादर्थ्यात्ताच्छब्द्यम् । द्विगुणं प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।**

**❀ वृद्धेर्वृधुषिभावो वक्तव्यः ❀ ( म० भा० ५.४.३० वा ३ ) । वार्धुषिकः । प्रकृत्यन्तरं वा वृद्धिपर्यायो वृधुषिशब्दः ।**

**न्यासः**

समासः । यतो यतः स्वामिनो मुखं वर्तते ततस्ततो यः सेवको वर्तते स पारिमुखिकः ॥ २९ ॥

**प्रयच्छति गर्ह्यम् ॥ द्विगुणमिति ।** तादर्थ्यात् ताच्छब्द्यं दर्शयति । अद्विगुणार्थे वस्तुनि द्विगुणशब्दं वर्तयित्वा तत्र प्रत्ययं कुर्वतः कोऽभिप्रायः ? एवं मन्यते—द्वैगुणिक इति उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति, किं तर्हि ? स्कन्दयित्वा द्विगुणं गृह्णाति; अन्यथा हि विपर्यये सति प्रशस्यमेव स्यात्, न तु गर्ह्यम् । यदैकस्मिन्नर्थे तादर्थ्याद् द्विगुणशब्दो वर्तते तदैकमेव द्विगुणार्थं प्रयच्छतो द्विगुणमेव भवतीति गर्ह्यमिति । गर्हा पुनरिह प्रतिषिद्धस्य शास्त्रेण दीयमानस्य प्रत्यवायहेतुत्वाद्वेदितव्या । **प्रकृत्यन्तरमित्यादिनो**पसंख्यानं प्रत्याचष्टे । तत्रापि तादर्थ्याद् वृद्ध्यर्थं यद्दीयते तद् वृधुषिशब्देनोच्यते । ननु च तत्प्रत्याख्याने वृद्धिशब्दात् प्रत्यये सति वार्धिक इत्यपि स्यात् ? नैष दोषः; अव्यविकन्यायेन हि वृद्धिशब्देन वाक्यमेव भवति । वृधुषिशब्देन वाक्यं

**पदमञ्जरी**

यः सेवको वर्तते स पारिमुखिकः । सर्वतो भावे वा परिशब्दः, परितो मुखम्, प्रादिसमासः, यतो यतः स्वामिनो मुखं ततस्ततो वर्तत इत्यर्थः । एवं पारिपार्श्विकः ॥ २९ ॥

**प्रयच्छति गर्ह्यम् । द्विगुणार्थं द्विगुणमिति ।** द्वैगुणिक उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति, किं तर्ह्येकगुणं दत्त्वा द्विगुणं गृह्णाति, अत एव तद्गर्ह्यं भवतीति । तस्माद् द्विगुणार्थे द्विगुणशब्दो वर्तयितव्यः ।

**वार्धुषिक इति ।** वृद्ध्यर्थे धने वृद्धिशब्दः । **प्रकृत्यन्तरमेवेति ।** एतच्च वार्धुषिक इत्येतद्वृत्तिविषयमेव । नियतविषया अपि हि शब्दा भवन्ति, वृद्धिशब्दादनभिधानान्नैव भविष्यति, तेन वार्धिक इत्यनिष्टप्रसङ्गो नोद्भा-

**भावबोधिनी**

पर—परिमुखम् । इससे 'वर्तते' अर्थ में ठक् = इक, आदिवृद्धि । अपने स्वामी के मुख को छोड़कर पीछे या विपरीत रहने वाला सेवक । ]

सूत्र में चकार अनुक्त के समुच्चय के लिए है अतः—पारिपार्श्विकः । [ 'परि' शब्द सर्वतोभाव अर्थ में भी है । अतः जिधर जिधर स्वामी का मुख है उधर-उधर रहने वाला सेवक—यह भी अर्थ ''पारिमुखिकः' का हो सकता है । 'पारिपार्श्विकः' अति समीप रहने वाला नौकर । ] ॥ २९ ॥

'तत्' इस द्वितीया समर्थ से 'प्रयच्छति' ( देता है )—इस अथ में ठक् प्रत्यय होता है, यदि जो द्वितीया-समर्थ हो वह गर्ह्य=निन्दनीय हो । द्विगुणार्थ वस्तु भी 'द्विगुण' कही जाती है, क्योंकि—जो जिसके लिए होता है उसके लिए भी उस शब्द का प्रयोग होता है—''तादर्थ्यात् ताच्छब्दयम्' । उदा०—द्विगुणं प्रयच्छति इस विग्रह में—द्वैगुणिकः । त्रैगुणिकः । [ कर्ज देने वाला साहूकार अपना कर्जा लेने वाले को दुगुना वापस करने की शर्त पर देता है । अतः वह धन देना गर्ह्य है । इस तात्पर्य से धन देने वाला साहूकार 'द्वैगुणिकः' कहा जाता है । इसी प्रकार तीन गुना वापस करने की शर्त पर देने वाला—त्रैगुणिकः । ]

❀ वृद्धि का 'वृधिषु' भाव कहना चाहिए । ❀ उदा०—वार्धुषिकः । [ वृद्धि के लिए' इस अर्थ में 'वृद्धि' शब्द है । इससे ठक्=इक करने पर 'वृद्धि' का 'वृधुषि' आदेश, वृद्धि, रपर— वार्धुष्+इक । ] यदि यह आदेश न माना जाय तो वृद्धि का पर्याय 'वृधुषि' यह स्वतन्त्र दूसरा शब्द है ।

गर्ह्यमिति किम् ? द्विगुणं प्रयच्छत्यधमर्णः ॥

**१७७२. कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥ ( १५८१ )**

**'प्रयच्छति गर्ह्यम्' इत्येव । कुसीदम्=वृद्धिः, तदर्थं द्रव्यं कुसीदम् । एकादशार्था दश दशैकादशशब्देनोच्यते । कुसीद, दशैकादशशब्दाभ्यां यथासंख्यं ष्ठन्, ष्ठच्—इत्येतौ प्रत्ययौ भवतः 'प्रयच्छति गर्ह्यम्' इत्येतस्मिन्विषये । ठकोऽपवादौ । कुसीदं प्रयच्छति कुसीदिकः, कुसीदिकी । दशैकादशिकः, दशैकादशिकी ॥**

**१७७३. उञ्छति ॥ ३२ ॥ ( १५८२ )**

**'तत्' इति द्वितीयासमर्थात् 'उञ्छति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । बदराण्युञ्छति बादरिकः । श्यामाकिकः । भूमौ[1] पतितस्यैकैकस्य कणस्योपादानम्=उञ्छः । कणानुञ्छति काणिकः ॥[1]**

**न्यासः**

वृत्तिश्च ॥ ३० ॥

**कुसीददशैकादशात् ष्ठन्ष्ठचौ** ॥ तत्रापि कुसीदार्थे वस्तुनि दशैकादशार्थेषु च दशसु दशैकादशशब्दं वर्तयित्वा ततः प्रत्ययः । सर्वतः पूर्ववदभिप्रायो वेदितव्यः । दश चैकादश चेति समानाधिकरणसमासः । ननु च भिन्नविषययोः सामानाधिकरण्यं नोपपद्यते ? दशैकादशशब्दोऽप्येकादशार्थेषु दशस्वेवोपचाराद् वर्तत इत्यदोषः । यो दश प्रयच्छत्येकादश एव स्युरिति स दशैकादेश इत्युच्यते । दशैकादशादिति निर्देशादकारान्तत्वं निपात्यते, किमर्थम् ? वाक्येऽप्यकारान्तत्वश्रवणार्थं दशैकादशान् प्रयच्छतीति ॥ ३१ ॥

**उञ्छति ॥ उञ्छतीति उद्धुनोतीत्यर्थः ॥ ३२ ॥**

**पदमञ्जरी**

वनीयः । अथ कथम् 'वार्धुदासमकम्पत ववान्यस्य च वार्द्धुषेः' इति ? स्वच्छन्दवाच ऋषयः ॥ ३० ॥

**कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ तदर्थं द्रव्यं कुसीदमिति** । अत्रापि कुसीदिक इत्युत्तमर्णस्याभिधानमिष्यते, न चोत्तमर्णः कुसीदं प्रयच्छति, किं तर्हि ? अधमर्णः, न च तस्य वृद्धिप्रदानं गर्ह्यम्, तस्मात्तादर्थ्यात्ताच्छब्द्यमिति भावः । एकादशार्थं दश दशैकादशशब्देनोच्यन्त इति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, 'संख्याया अल्पीयस्याः' (वा० ११२) इति दशशब्दस्य पूर्वनिपातः । दशैकादशादिति निर्देशादकारः समासान्तः । एवं वाक्यमप्यकारान्तेनैव भवति--दशैकादशान्प्रयच्छतीति ॥ ३१ ॥ ३२ ॥

**भावबोधिनी**

गर्ह्य—इसका क्या लाभ है ? द्विगुणं प्रयच्छति अधमर्णः । [ कर्जा लेने वाला दुगुना धन वापस देता है । यहाँ गर्हा की प्रतीति नहीं है । अतः इस सूत्र की प्रवृत्ति नहीं होती है ] ॥ ३० ॥

"प्रयच्छति गर्ह्यम्" [ जो देता है, वह गर्ह्य हो—] इसकी अनुवृत्ति होती है । कुसीद = वृद्धि, बढ़त, कुसीद के लिए जो हो उसे भी 'कुसीद' कहते हैं । एकादश के लिए दश को 'दशैकादश' इस शब्द से कहा जाता है । इस प्रकार के 'कुसीद' और 'दशैकादश' इन शब्दों से क्रमशः 'ष्ठन्' और 'ष्ठच्' प्रत्यय होते हैं, 'गर्ह्य देता है' इस विषय में । ये ठक् के अपवाद हैं । उदा०—कुसीदं प्रयच्छति—इस अर्थ में 'कुसीदिकः ।' [ धन की वृद्धि के लिए देने वाला । ] कुसीदिकी । [ वृद्धि के लिए देने वाली । षित् होने से ङीष् होता है । दशैकादशिकः, दशैकादशिकी । [ दश रुपये जो व्याज सहित एकादश के रूप में वापस किये जाते हैं, उन्हें 'दशैकादश' कहते हैं । ऐसा रुपया देने वाला व्यक्ति । अधिक व्याज होने के कारण व्याज पर देना गर्हित हैं । ष्ठन् और ष्ठच् में केवल स्वर का भेद होता है । 'दशैकादशात्' इसमें समासान्त 'अ' प्रत्यय समझना चाहिए । ] ॥ ३१ ॥

'तत्' इस द्वितीया-समर्थ से 'उञ्छति' ( भूमि पर गिरे अन्न कणों को उठाता है । )—इस अर्थ में ठक् प्रत्यय होता है । उदा०—बदराणि उञ्छति—इस अर्थ में बादरिकः । [ बदर + ठक् = इक, आदिवृद्धि, बेर उठाने वाला ] श्यामाकिकः । [ श्यामाकान् उञ्छति—इस अर्थ में ठक् होता है । श्यामाक = साँवा धान ] जमीन पर गिरे

१–१ पाठोऽयं बहुषु पुस्तकेषु नास्ति ।

**१७७४. रक्षति ॥ ३३ ॥ ( १५८३ )**

**'तत्' इति द्वितीयासमर्थात् 'रक्षति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । समाजं रक्षति सामाजिकः । सान्निवेशिकः ॥**

**१७७५. शब्ददर्दुरं करोति ॥ ३४ ॥ (१५८४ )**

**'तत्' इति द्वितीयासमर्थाभ्यां शब्ददर्दुरशब्दाभ्यां 'करोति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । शब्दं करोति शाब्दिको वैयाकरणः । दार्दुरिकः कुम्भकारः ॥**

**१७७६. पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥ ( १५८५ )**

**'तत्' इत्येव । पक्ष्यादिभ्यो द्वितीयासमर्थेभ्यो 'हन्ति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति । स्वरूपस्य**

**न्यासः**

**रक्षति ॥ ३३ ॥ शब्ददर्दुरं करोति ॥** तदित्यनेनैव द्वितीयासमर्थविभक्तौ लब्धायां शब्ददर्दुरमिति द्वितीयानिर्देशो लौकिकवाक्यप्रदर्शनार्थः । शब्ददर्दुरं करोतीत्येतद् व्यावहारिकं वाक्यम् । अस्य प्रतिग्रहो यत्र लोके व्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यर्थं सूचयति, तेन शब्दं करोति खर इत्यत्र न भवति । लोके स शाब्दिक इत्युच्यते यः शब्दं वेत्ति; वैयाकरण एव शब्दं वेत्ति, तत्रैव प्रत्ययो भवति, न खरे । असौ वैयाकरणः प्रत्ययप्रकृत्यादिना सर्वं शब्दं जानाति ॥ ३४ ॥

**पक्षिमत्स्यमृगान् हन्ति ॥ स्वरूपस्य पर्यायाणाञ्च तद्विशेषणाञ्च ग्रहणमिष्यत इति ।** कथं पुनरिष्यमाणमपि पर्यायादीनां ग्रहणं लभ्यते ? अर्थप्रधानत्वान्निर्देशस्य । शब्दप्रधाने हि निर्देशे स्वरूपस्य ग्रहणं भवति,

**पदमञ्जरी**

**रक्षति ॥ सामाजिक इति ।** समाजः=समूहः, समजन्त्यस्मिन्निति कृत्वा, एवं सन्निवेशः ॥ ३३ ॥

**शब्ददर्दुरं करोति ॥ शब्दं करोतीति ।** करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः । एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति—शब्दं करोति खर इति । पात्रविशेषवाची दर्दुरशब्दः । अनुकरणशब्द इत्यन्ये ॥ ३४ ॥

**पक्षिमत्स्यमृगान्हन्ति ॥ स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यत इति ।** अत्र हेतुः 'स्वं रूपम्'

**भावबोधिनी**

हुए एक-एक कण का उठाना = 'उञ्छ' कहा जाता है । ] कणान् उञ्छति—इस अर्थ में—काणिकः । [ कण कण उठाने वाला । ] ॥ ३२ ॥

'तत्' इस द्वितीया समर्थ से 'रक्षति' ( रक्षा करता है )—इस अर्थ में 'ठक्' प्रत्यय होता है । उदा०—समाजं रक्षति—इस विग्रह में—सामाजिकः । [ समाज+ठक् = इक, आदिवृद्धि । समाज की रक्षा करने वाला । ] सान्निवेशिकः । [ सन्निवेशं रक्षति—यह विग्रह है । ] । ३३ ॥

'तत्' इस द्वितीया समर्थ 'शब्द' तथा 'दर्दुर' शब्दों से 'करोति' इस अर्थ में 'ठक्' प्रत्यय होता है । उदा०—शब्दं करोति—इस विग्रह में—शाब्दिकः वैयाकरणः [ शब्दं करोति यहाँ 'करोति' इसका अर्थ 'जानाति' है। वैयाकरण शब्द को नित्य मानते हैं । अतः वे शब्द के कर्ता = स्रष्टा नहीं हैं । वे केवल प्रकृति-प्रत्यय-विभागादि की प्रक्रिया जानते हैं । करोति का यही अर्थ है । इसी लिए 'शब्दं करोति खरः' यहाँ ठक् नहीं होता है । ] दर्दुरं करोति—इस विग्रह में—दार्दुरिकः कुम्भकारः । [ दर्दुर = मिट्टी के पात्रविशेष को बनाने वाला कुम्हार । ] ॥ ३४ ॥

'तत्' इसकी अनुवृत्ति होती है । 'पक्षी' आदि द्वितीयासमर्थ शब्दों से 'हन्ति' ( मार डालता है ) इस अर्थ में 'ठक्' प्रत्यय होता है । इस सूत्र में स्वरूप, पर्याय और इनके विशेषरूपों का ग्रहण इष्ट है । [ अतः पक्षी शब्द, इसके

**पर्यायाणां च तद्विशेषाणां च ग्रहणमिहेष्यते। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। मायूरिकः। तैत्तिरिकः। मत्स्य—मात्स्यिकः, मैनिकः, शाफरिकः, शाकुलिकः। मृग—मार्गिकः, हारिणिकः, सौकरिकः, सारङ्गिकः॥**

**१७७७. परिपन्थं च तिष्ठति॥ ३६॥ ( १५८६ )**

**परिपन्थशब्दात्तदिति द्वितीयासमर्थात् 'तिष्ठति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः।**

**न्यासः**

नार्थप्रधान इति प्रतिपादितमेतत् प्राक्। यदि तर्हि पर्यायाणामपि ग्रहणम्, अजिह्मान् हन्त्यनिमिषान् हन्तीत्यत्रापि प्राप्नोति? नैष दोषः; इह द्वितीयासमर्थविभक्तौ लब्धायां पुनर्द्वितीयासमर्थविभक्तिनिर्देशो लौकिकवाक्यप्रदर्शनार्थः। अस्य परिग्रहः—यत्र लौकिकवाक्यव्यवहारस्तत्र प्रत्ययो भवति नान्यत्रेत्यस्यार्थस्य सूचनार्थम्, तेनाजिह्मान् हन्तीत्यादौ प्रत्ययो न भवति। अजिह्मान् हन्त्यनिमिषान् हन्तीत्यस्यार्थस्य विवक्षायामाजिह्मिकः, आनिमिषिक इति लोके न व्यवहारोऽस्ति। तत्र पक्षिषु **पाक्षिक इति** स्वरूपस्योदाहरणम्। **शाकुनिक इति** पर्यायस्य। **मायूरिकः, तैत्तिरिक** इति विशेषस्य। मत्स्येषु **मात्स्यिक इति** स्वरूपस्य। मैनिक इति पर्यायस्य। **शाफरिकः शाकुलिक इति** विशेषस्य। मृगेषु **मार्गिक** इति स्वरूपस्य। **हारिणिक** इति पर्यायस्य। **सौकरिकः, सारङ्गिक इति** विशेषस्य॥३५॥

**परिपन्थञ्च तिष्ठति**॥ यथा परिमुखञ्चेति परिमुखशब्दस्याव्ययीभावत्वं तत्पुरुषत्वञ्च, तथेहापि परिपन्थशब्दस्य तद्द्वयं वेदितव्यम्। **तदिति द्वितीयासमर्थादिति**। ननु च तिष्ठतिरयमकर्मकः, तत् कथं द्वितीयया सह सम्बन्धः? नैष दोषः; अकर्मणामपि हि कालभावाध्वनां कर्मसंज्ञां प्रतिपद्यन्ते। तथा चोक्तम्—'कालभावाध्व-

**पदमञ्जरी**

इत्यत्रैवोक्तः। **मात्स्यिक इति**। 'सूर्यतिष्य' इति लोपो न भवति; मत्स्यस्य ङ्यामिति परिगणनात्। **हारिणिकः, सौकरिक इति**। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितम्, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यन्ते, हरिणपर्यायोऽपि मृगशब्दोऽस्ति, तदपेक्षया **हारिणिक** इति पर्यायोदाहरणम्॥ ३५॥

**परिपन्थं च तिष्ठति॥ तदिति द्वितीयासमर्थादिति**। परिपन्थशब्दः परिमुखशब्दवदव्ययीभावः तत्पुरुषो वा। तत्राप्यव्ययीभावपक्षे क्रियाविशेषणात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वम्; तत्पुरुषे तु परितः पन्थाः परिपन्थ इति 'कालभावाध्वगन्तव्याः' इति वचनात्कर्म, तदित्यधिकारसामर्थ्यादित्यन्ये। **पारिपन्थिकश्चोर इति**। यः पन्थानं वर्जयित्वा तिष्ठति यो वा पन्थानं व्याप्य तिष्ठति स एवमुच्यते।

**भावबोधिनी**

पर्यायवाची शब्द और पक्षीविशेषवाची—तीनों से यह ठक् होता है। ] उदा०—स्वरूप—पक्षिणः हन्ति—इस अर्थ में 'पाक्षिकः' [ पक्षिन् + ठक् = इक, आदिवृद्धि। ] पर्याय—शाकुनिकः। [ शकुनिम् हन्ति। पक्षी और शकुनि ये दोनों पर्याय हैं। विशेष—मायूरिकः। [मयूरं हन्ति—] तैत्तिरिकः। [तित्तिरं हन्ति - इस अर्थ में है।] मत्स्य का उदा० - मात्स्यकः। [ मत्स्यान् हन्ति—यह विग्रह है। ] पर्याय—मैनिकः [ मीनान् हन्ति। ] शाफरिकः, शाकुलिकः। [ शफरं हन्ति, शकुलं हन्ति ये विग्रह हैं। शफर और शकुल ये मछलियों के विशेष भेद हैं। ] मृग - मार्गिकः। [ मृगान् हन्ति—यह विग्रह है। मृग + ठक् = इक, आदिवृद्धि रपर ] हारिणिकः। [ हरिणं हन्ति ] सौकरिकः सारङ्गिकः। [ सूकर और सारङ्ग ये मृगों के विशेष भेद हैं। इस प्रकार (१) स्वरूप, (२) पर्याय और (३) विशेष—तीनों से प्रत्यय के उदाहरण दिये गये हैं। ]॥ ३५॥

'तत्' इस द्वितीयासमर्थ 'परिपन्थ' शब्द से 'तिष्ठति' इस अर्थ में 'ठक्' प्रत्यय होता है। उदा० --परिपन्थं तिष्ठति —इस अर्थ में—पारिपन्थिकः चौरः। [ पन्थानं परितः इस अर्थ में 'परिपन्थ' बनाकर ठक् होता है। चारों ओर से मार्ग को घेर कर बैठने वाला चोर। ]

**चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोति । परिपन्थं हन्ति पारिपन्थिकः ।**

**समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थम्, परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति, स विषयान्तरेऽपि प्रयोक्तव्यः ॥**

## १७७८. माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥ ( १५८७ )

**माथशब्दोत्तरपदात्प्रातिपदिकात् पदवी, अनुपद—इत्येताभ्यां च 'धावति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । दण्डमाथं धावति दाण्डमाथिकः । शौल्कमाथिकः । पादविकः । आनुपदिकः । माथशब्दः पथिन्पर्यायः ॥**

### न्यासः

गन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति । **पारपन्थिकश्चौर** इत्यव्ययीभावः । चौरो यः पन्थानं वर्जयित्वा तिष्ठति स पारिपन्थिकशब्देनोच्यते । तत्पुरुषपक्षे नु यश्चौरः सर्वान् पथो व्याप्य तिष्ठति स पारिपन्थिक उच्यते ।

**चकार इत्यादि** । तिष्ठति चेत्यत्र प्रत्ययार्थसमनन्तरमेव चकारो द्रष्टव्यः, तेन समानजातीयस्यैव प्रत्ययस्यार्थस्य समुच्चयं करोति । अथ प्रकृतेरेव समुच्चयः कस्मान्न विज्ञायते ? कर्मत्वानुपपत्तेः । तत्र हि द्वितीया समर्थविभक्तिरनुवर्तते, तिष्ठतेश्चाकर्मकत्वात् प्रकृताया मत्स्यादेः प्रकृतेः कर्मभावो नोपपद्यते । कालाभावाध्वनामेव ह्यकर्मकाणां कर्मसंज्ञेष्यते, न मत्स्यादीनाम् ।

लौकिकवाक्यप्रदर्शनार्थं तदेतद् द्वितीयोच्चारणं करोतीत्याह—**परिपथपर्याय इति** । किमेतस्य ज्ञापने प्रयोजनमित्याह—**स विषयान्तर इत्यादि** । असति ह्यस्मिन् ज्ञापने ठक्प्रत्ययसन्नियोगेन प्रकृतिर्निर्दिश्यमाना प्रत्ययाभावेन प्रसज्यते । ज्ञापने तु सति यत्रापि प्रत्ययो न भवति तत्रापि प्रयोग उपपद्यते ॥ ३६ ॥

**माथोत्तरपदपदव्यनुपदं धावति** ॥ दण्डभावो माथो दाण्डमाथः = ऋजुः पन्था उच्यते, तं धावति **दाण्डमाथिकः** । शुल्कस्य माथः शुल्कमाथः; **शौल्कमाथिकः** । पदस्य पश्चादनुपदम्, पश्चादर्थेऽव्ययीभावः, अनुपदं धावत्यानुपदिकः । प्रत्यासत्त्या धावतीत्यर्थः । द्वितीयायां समर्थविभक्तौ लब्धायां पुनर्द्वितीयानिर्देशः 'इष्टाद् द्वितीय

### पदमञ्जरी

**लौकिकवाक्यप्रदर्शनार्थमिति** । परिपन्थं तिष्ठतीत्येतल्लौकिकवाक्यं तस्य प्रदर्शनार्थं द्वितीयोच्चारणम्[1] । अथैवमर्थे द्वितीयोच्चारणे किं सिद्धं भवति ? इत्याह—**परिपथपर्याय[1] इत्यादि** । किमेतस्य ज्ञापने प्रयोजनम् ? इत्याह—**स विषयान्तरेऽपीति** । असति तु ज्ञापने प्रत्ययसन्नियोगेन परिपन्थशब्दस्य निपातनं विज्ञायेत, ततश्च ततोऽन्यत्र प्रयोगो न स्यात् ॥ ३६ ॥

**माथोत्तरपदपदव्यनुपदं धावति** ॥ **माथशब्दः पथिन् पर्याय[2] इति** । मथ्यते प्रशाद्यते गन्तृभिरिति कृत्वा । दण्डाकारो मथो दण्डमाथः ॥ ३७ ॥

### भावबोधिनी

चकार भिन्न क्रम वाला है अतः यह प्रत्यय के अर्थ को समुच्चित करता है । [ प्रत्यय को नहीं । ] उदा०—परिपन्थं हन्ति—इस अर्थ में पारिपन्थिकः । [ परिपन्थ = चोर को मार डालने वाला । ]

समर्थ विभक्ति का प्रकरण था इसमें पुनः द्वितीया का उच्चारण ( परिपन्थं ) लौकिक वाक्य के प्रदर्शन के लिए है—'परिपथ' इस शब्द का पर्याय 'परिपन्थ' यह है—इसको ज्ञापित करता है, वह शब्द दूसरे अर्थ में भी प्रयुक्त करना चाहिये । [ यदि यह ज्ञापन नहीं होता तो इस प्रत्यय के सन्नियोग से 'परिपन्थ' यह निपातन समझा जाता और अन्यत्र कहीं प्रयुक्त नहीं हो सकता जब 'परिपन्थम्' यह द्वितीयान्त लिख कर ज्ञापित किया गया तब सर्वत्र प्रयोग होने में बाधा नहीं है । ] ॥ ३६ ॥

'माथ' शब्द जिसका—उत्तरपद है ऐसे प्रातिपदिक से और 'पदवी' तथा 'अनुपद' इन शब्दों से 'धावति' ( दौड़ता है ) इस अर्थ में ठक् प्रत्यय होता है । उदा०—दण्डमाथं धावति—इस अर्थ में—दाण्डमाथिकः । [ माथ =

---

१. 'परिपथशब्दपर्यायः' इति काशिका । २. 'पथिपर्यायः' इति मुद्रितपाठः ।

**१७७९. आक्रन्दाट्ठञ्च ॥ ३८ ॥ ( १५८८ )**

आक्रन्दन्त्येतस्मिन्नित्याक्रन्दः = देशः, अथ वा—आक्रन्द्यत इत्याक्रन्दः—आर्त्तायनमुच्यते; विशेषाभावाद् द्वयोरपि ग्रहणम् । आक्रन्दशब्दात्तदिति द्वितीयासमर्थात् 'धावति' इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति, चकाराट्ठक्च । स्वरे विशेषः । आक्रन्दं धावति आक्रन्दिकः, आक्रन्दिकी ॥

**१७८०. पदोत्तरपदं गृह्णाति ॥ ३९ ॥ ( १५८९ )**

पदशब्द उत्तरपदं यस्य तस्मात्पदोत्तरपदशब्दात् 'तत्' इति द्वितीयासमर्थाद् 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः ।

पदान्तादिति नोक्तम्, बह्वच्पूर्वान्मा भूदिति ॥

**न्यासः**

यान्ताद् यथा स्याद्, अनिष्टाद् मा भूत्' इत्येवमर्थम् । तेन यः 'अनुर्यत्समया' 'यस्य चायामः' 'कुगतिप्र' इत्यादिभिर्योगैरनुशब्दस्य समासः, ततो न भवति ॥ ३७ ॥

**आक्रन्दाट्ठञ्च ॥** **आर्तायनमिति ।** परित्राणार्थमीयते = गम्यत इत्ययनम्, आर्तानामयनमार्तायनम् । शरणमित्यर्थः ॥ ३८ ॥

**पदोत्तरपदं गृह्णाति ॥** पदग्रहणेन स्वरूपमेव गृह्यते, न सुप्तिङन्तं पदम् । अतवाह—**पदशब्द उत्तरपदं यस्येति ।** एतच्च द्वितीयायां प्रकृतायां लौकिकवाक्यप्रदर्शनार्थत्वाद् द्वितीयानिर्देशाल्लभ्यते । पदोत्तरपदं गृह्णातीत्येतल्लौकिकं वाक्यम् । अस्य प्रदर्शनेनैतद् सूचितम्—लौकिकस्य हि पदस्य ग्रहणम्, न पारिभाषिकस्येति ।

अथ पदान्तादित्येव कस्मान्नोक्तम् ? इत्याह **पदान्तादिति नोक्तमित्यादि ।** गतार्थम् । पदमेवोत्तरपदं यस्य तस्माद् यथा स्यात् । इह तु श्लोकपादपदं गृह्णातीति वाक्यमेव भवतीति केचित् ॥ ३९ ॥

**पदमञ्जरी**

**आक्रन्दाट्ठञ्च ॥ आक्रन्दो देश इति ।** दुःखितानां रोदनस्यायनमार्त्तायनमुच्यते, आर्त्तैरीयते प्राप्यत इति कृत्वा । आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते = आर्त्तैराहूयत इति कृत्वा ॥ ३८ ॥

**पदोत्तरपदं गृह्णाति ॥** पदग्रहणेन स्वरूपं गृह्यते, न सुप्तिङन्तमुत्तरपदस्य पदत्वाव्यभिचाराद्, अत एवाह—**पदशब्द उत्तरपदं यस्येति** ॥ ३९ ॥

**भावबोधिनी**

मार्ग का प्रर्याय है । सीधे मार्ग की ओर दौड़ने वाला ] शुल्कमाथिकः । [ शुल्कमाथ = किराये के मार्ग की ओर दौड़ने वाला । ] पादविकः । [ पदवीं धावति —इस अर्थ में है । ] आनुपदिकः । [ अनुपदं धावति — यह अर्थ है । ] 'माथ' शब्द पथिन् का पर्याय है ।। ३७ ।।

आक्रन्दन्ति अस्मिन् = जिसमें लोग भूख आदि के कारण चिल्लाते हैं वह—आक्रन्द = देश है । अथवा —आक्रन्द्यते —इस अर्थ में 'आक्रन्द' है = आर्त लोगों का शरणस्थल कहा जाता है, कोई विशेष कारण न होने से दोनों का ग्रहण है। 'तत्' इस द्वितीया समर्थ 'आक्रन्द' शब्द से 'धावति' इस अर्थ में "ठञ्" प्रत्यय होता है और 'च' के कारण ठक् भी होता है । इन दोनों में केवल स्वर का भेद है । उदा०—आक्रन्दं धावति—इस अर्थ में - आक्रन्दिकः, आक्रन्दिकी । [ ठक् और ठञ् दोनों होने पर स्त्रीलिङ्ग में ङीप् होता है । जो रोते हुए लोगों के देश की ओर दौड़ता है अथवा उनके शरणस्थल की ओर दौड़ता है—उसे 'आक्रन्दिकः' कहा जाता है । स्त्रीलिङ्ग में ङीप् होता है आक्रन्दिकी । ] ।। ३८ ।।

'पद' शब्द जिसका उत्तर पद है उस पदोत्तरपद शब्द जो 'तत्' इस द्वितीया समर्थ है उससे 'गृह्णाति' (= लेता है ) इस अर्थ में 'ठक्' प्रत्यय होता है । उदा०—पूर्वपदं गृह्णाति —इस विग्रह में—पौर्वपदिकः । उत्तरपदं गृह्णाति— इस विग्रह में औत्तरपदिकः । [ पूर्वपदम् + ठक् = इक आदिवृद्धि, भसंज्ञा, अलोप । पूर्वपद का ग्रहण करने

**१७८१. प्रतिकण्ठार्थललामं च ॥ ४० ॥ ( १६९० )**

**प्रतिकण्ठार्थललामशब्देभ्यस्तदिति द्वितीयासमर्थेभ्यः 'गृह्णाति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः ॥**

**१७८२. धर्मं चरति ॥ ४१ ॥ ( १६९१ )**

**धर्मशब्दात्तदिति द्वितीयासमर्थात् 'चरति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति। चरतिरासेवायाम्, नानुष्ठानमात्रे। धर्मं चरति धार्मिकः।**

**❀ अधर्माच्च वक्तव्यम् ❀ ( म० भा० ४.४.४१ वा० १ )। आधर्मिकः ॥**

**न्यासः**

**प्रतिकण्ठार्थललामञ्च ॥** कण्ठं कण्ठं प्रति प्रतिकण्ठम्, यथार्थेऽव्ययीभावः, आभिमुख्ये वा—'लक्षणेनाभिप्रती आभिमुख्ये' इति। **कण्ठस्याभिमुख्य इति**। कण्ठस्याभिमुख्यं प्रतिकण्ठम्। प्रातिकण्ठिकः स उच्यते सर्वं कण्ठं यो गृह्णाति, यो वा कण्ठमाभिमुख्येन गृह्णाति। द्वितीयासमर्थप्रकरणे पुनर्द्वितीयान्तप्रकृतिनिर्देश इष्टाद् स्यात्, अनिष्टान्मा भूत्। तेन प्रतिगतः कण्ठमिति 'कुगतिप्रादयः' इति तत्पुरुषो यः प्रतिकण्ठशब्दस्ततो न भवति ॥ ४० ॥

**धर्मञ्चरति ॥ चरतिरासेवायामिति**। आसेवा=पौनःपुन्यम्।

**अधर्माच्च वक्तव्यमिति**। अधर्मशब्दाच्चरतीत्येतस्मिन्नर्थे ठग् भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्तते, स चानुक्तसमुच्चयार्थो वेदितव्यः, तेनाधर्मादपि भविष्यति ॥४१॥

**पदमञ्जरी**

**प्रतिकण्ठार्थललामं च ॥** कण्ठं कण्ठं प्रति प्रतिकण्ठम्, 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः। आभिमुख्ये वा, 'लक्षणेनाभिप्रती आभिमुख्ये' इति। यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्य ग्रहणं न भवति; अनभिधानात् ॥ ४० ॥

**धर्मं चरति ॥ अधर्माच्चेति वक्तव्यमिति**। ग्रहणवता प्रातिपदिकेन ( व्या० परि० ८९ ) तदन्तविधिप्रतिषेधात् वचनम्। **आधर्मिक इति**। नञत्र विरोधिवचनः, पापाचार इत्यर्थः ॥ ४१ ॥

**भावबोधिनी**

वाला, उत्तरपद का ग्रहण करने वाला ]

'पद' शब्द जिसके अन्त में है उससे—ऐसा तो नही कहा गया क्योंकि 'बहुच्' प्रत्यय जिसके पूर्व में है ऐसे 'बहुपद' शब्द से यह प्रत्यय न होने लगे। [ इसीलिये 'पदोत्तरपद' ऐसा कहा गया ] ॥ ३९ ॥

प्रतिकण्ठ, अर्थ और ललाम—इन द्वितीयासमर्थ शब्दों से 'गृह्णाति' इस अर्थ में ठक् प्रत्यय होता है। उदा०—प्रतिकण्ठं गृह्णाति—इस अर्थ में प्रातिकण्ठिकः। अर्थं गृह्णाति—आर्थिकः। ललामं गृह्णाति—लालामिकः। [ यहाँ कण्ठं कण्ठं प्रति यह यथा के अर्थ में अव्ययीभाव समास बना कर 'प्रतिकण्ठम्' है, इसी का ग्रहण है, प्रतिगतः कण्ठम्—प्रतिकण्ठः इसका ग्रहण नहीं होता है। ] ॥ ४० ॥

'धर्म' शब्द जो 'तत्' यह द्वितीयासमर्थ है, उससे 'चरति' (=आचरण करता है) इस अर्थ में ठक् प्रत्यय होता है। 'चरति' यह आसेवा=पुनः पुनः करना अर्थ में है, केवल अनुष्ठान अर्थ में नहीं है। उदा०—धर्मं चरति—इस अर्थ में धार्मिकः। [ धर्मम्+ठक्=इक, आदिवृद्धि, भसंज्ञा, अलोप ]।

❀ और अधर्म शब्द से भी कहना चाहिए। ❀ उदा०—आधर्मिकः। [ अधर्म चरति—इस अर्थ में ठक् है। यहाँ धर्म का विरोधी अधर्म है। अतः 'आधर्मिकः' का अर्थ है पापाचारी। ] ॥ ४१ ॥

## १७८३. प्रतिपथमेति ठँश्च ॥ ४२ ॥ ( १५९२ )

**प्रतिपथशब्दाद् द्वितीयासमर्थाद् 'एति' इत्यस्मिन्नर्थे ठन् प्रत्ययो भवति, चकाराट्ठक् च । प्रतिपथमेति प्रतिपथिकः, प्रातिपथिकः ॥**

## १७८४. समवायान् समवैति ॥ ४३ ॥ ( १५९३ )

**समवायवाचिभ्यः शब्देभ्यः 'तत्' इति द्वितीयासमर्थेभ्यः 'समवैति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति ।**

**समवायः समूह उच्यते, नसम्प्रधारणा । 'समवायान्' इति बहुवचनं स्वरूपविधिनिरासार्थम् । समवैति= आगत्य तदेकदेशीभवतीत्यर्थः ।**

**समवायान्समवैति सामवायिकः । सामाजिकः । सामूहिकः । सान्निवेशिकः ॥**

### न्यासः

**प्रतिपथमेति ठँश्च ॥ प्रतिपथिकमिति ।** पूर्ववद् वीप्सायाम्, आभिमुख्ये वाव्ययीभावः । पन्थानं पन्थानं प्रति प्रतिपथम् । आभिमुख्ये—पथ आभिमुख्यं प्रतिपथम् । यः सर्वान् पथ एति, आभिमुख्येन वा पन्थानमेति स प्रातिपथिक इति चाभिधीयते ॥ ४२ ॥

**समवायान् समवैति ॥ समवायः समूह उच्यते, न सम्प्रधारणेति ।** कुत एतत् ? तत्र समवैतीत्यस्य प्रत्ययार्थस्यायोगात् । आगत्य तदेकदेशीभवतीति समवैतिशब्दस्यार्थः । सम्प्रधारणा चामूर्त्तिः, चैतसिको धर्मः, न च तदेकदेशीभवितुं शक्यते । तस्मात् समूह एव समवायशब्दस्यार्थः, नैतीत्यस्यार्थः । एतीति वर्तमाने समवैतीति वचनमर्थविशेषप्रतिपत्त्यर्थम् । एतीति प्राप्तिमात्रं कुर्वन्नुच्यते । समवैतीत्यागत्य तदेकदेशीभवतीति ॥४३॥

### पदमञ्जरी

**प्रतिपथमेति ठँश्च ॥ प्रतिपथमिति ।** पूर्ववद्वीप्सायामव्ययीभावः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः ॥४२॥

**समवायान् समवैति ॥ समवायः समूह उच्यत इति ।** समवयन्ति तस्मिन्निति कृत्वा । **न सम्प्रधारणेति ।** समवपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोऽस्तीति मन्यते । **समागत्य तदेकदेशीभवतीत्यर्थ इति ।** तत्र गुणभूतसमागमापेक्षया समवायमिति द्वितीयानिर्देशः । लोके तु प्रायेण सप्तमी प्रयुज्यते—द्रव्ये गुणाः समवयन्तीति ॥४३॥

### भावबोधिनी

द्वितीयासमर्थ 'प्रतिपथ' शब्द से 'एति' (=जाता है ) इस अर्थ में ठन् प्रत्यय होता है और 'च' के बल से ठक् भी होता है । उदा०—प्रतिपथम् एति—इस अर्थ में —प्रतिपथिकः, प्रातिपथिकः । [ जब ठन् होता है तब आदिवृद्धि नहीं होती है । ठक् होने पर आदिवृद्धि होती है । इसीलिए दो रूप होते है । ] पन्थानं पन्थानं प्रति—यह वीप्सा = पौनः पुन्य अर्थ में अव्ययीभाव करके 'प्रतिपथ' शब्द बनता है । प्रत्येक रास्ता को जाने वाला—यह अर्थ होता है । ] ॥ ४२ ॥

समवाय-वाचक शब्द जो द्वितीयासमर्थ है से 'समवैति' ( मिलता है ) इस अर्थ में ठक् प्रत्यय होता है । [ समवयन्ति अस्मिन् यहाँ अधिकरण अर्थ में घञ् प्रत्यय करने से ] समवाय = समूह कहा जाता है, सम्प्रधारणा [ मानसिक भावना ] नहीं ली जाती है । 'समवायान्' यह बहुवचन स्वरूपविधि का निरास करने के लिए है अर्थात् 'समवाय' इस शब्दरूप से प्रत्यय का वारण करने के लिए बहुवचन है । समवैति = आकर उसका एकदेश=अवयव हो जाता है - यह अर्थ है । उदा० —समवायान् समवैति—इस अर्थ में— सामवायिकः [ समूह को प्राप्त करने = मिल जाने वाला ] सामाजिकः । [ समाजं समवैति —यह विग्रह है । समाज में मिलने = उसका एक अवयव बनने वाला । ] सामूहिकः । सान्निवेशिकः । समूहं समवैति । सन्निवेशं समवैति—ऐसा विग्रह है । इस सूत्र में इस अर्थ वालों का ग्रहण होता है । ] ॥ ४३ ॥

**१७८५. परिषदो ण्यः ॥ ४४ ॥ ( १५९४ )**

[1]परिषदो ण्यः प्रत्ययो भवति 'समवायान् समवैति' इत्येतस्मिन् विषये। ठकोऽपवादः। परिषदं समवैति पारिषद्यः ॥

**१७८६. सेनाया वा ॥ ४५ ॥ ( १५९५ )**

सेनाशब्दाद् वा ण्यः प्रत्ययो भवति 'समवायान्समवैति' इत्येतस्मिन्नर्थे। ठकोऽपवादः। पक्षे सोऽपि भवति। सेनां समवैति सैन्यः, सैनिकः ॥

**१७८७. संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४६ ॥ ( १५९६ )**

ललाट-कुक्कुटीशब्दाभ्यां तदिति द्वितीयासमर्थाभ्याम् 'पश्यति' इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवति संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्, न तु रूढ्यर्थम्। ललाटं पश्यति लालाटिकः सेवकः। कौक्कुटिको भिक्षुः।

**न्यासः**

**परिषदो ण्यः ॥ ४४ ॥ सेनाया वा ॥ ४५ ॥ संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ अभिधेयनियमार्थ इति।** अभिधेये सेवकविशेषे भिक्षुविशेषे च प्रत्ययान्तस्य नियमः। तत्रैव वृत्तिर्यथा स्यादित्येवमर्थम् **न तु रूढ्यर्थमिति।** लालाटिककौक्कुटिकशब्दयोः रूढ्यामेकत्वात्।

**पदमञ्जरी**

[1]**परिषदो ण्यः ॥** परितः सीदन्त्यस्यामिति परिषत्, सम्पदादित्वादधिकरणे क्विप्, 'सदिरप्रतेः' इति षत्वम् ॥ ४४ ॥ ४५ ॥

**संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥** संज्ञानं संज्ञा = प्रतीतिः, प्रसिद्धिरित्यर्थः। **अभिधेयनियमार्थमिति।** अभिधेये सेवकविशेषे भिक्षुविशेषे च नियमः, तत्रैव वृत्तिर्यथा स्यादित्येवमर्थमित्यर्थः। **न रूढ्यर्थमिति।** लालाटिक-कौक्कुटिकशब्दयोर्डित्थादिवदरूढत्वात् तन्नियोगेन वर्तते, यावद्योगे च वर्तते। योगेऽपि ललाटकुक्कुटीदर्शन-मात्रेण ठञ् न भवतीत्येतावत्संज्ञाग्रहणेन प्रसिद्ध्युपसंग्रहार्थे न क्रियते।

**भावबोधिनी**

'समवाय का एकदेश बनता है' इस अर्थ में 'परिषद्' शब्द से 'ण्य' प्रत्यय होता है। यह ठक् का अपवाद है। उदा०—परिषदं समवैति—इस विग्रहमें—पारिषद्यः। [ परिषद् + ण्य = य, आदिवृद्धि। परिषद् = सभा में बैठने वाला। ] ॥ ४४ ॥

'समवायान् समवैति' इस अर्थ में 'सेना' शब्द से विकल्प से 'ण्य' प्रत्यय होता है। यह सामान्य ठक् प्रत्यय का अपवाद है। पक्ष में यहाँ ठक् भी होता है। [ अतः दो रूप बनते हैं। ] उदा०—सेनां समवैति—इस विग्रह में—सैन्यः, सैनिकः। [ सेना + ण्य = य, 'भसंज्ञा' और आ का लोप होता है, आदिवृद्धि होती है—सैन्यः। सेना + ठक् = इक, आदिवृद्धि। ] ॥ ४५ ॥

'ललाट' और 'कुक्कुटी' इन द्वितीयासमर्थ शब्दों से 'पश्यति' इस अर्थ में, संज्ञाविषय में ठक् प्रत्यय होता है। संज्ञा का ग्रहण अभिधेय ( अर्थ ) का नियम करने के लिए है, रूढि के लिए नहीं है, अर्थात् सेवकविशेष और भिक्षुविशेष अर्थ नियमित करने के लिए 'संज्ञा' का ग्रहण है। उदा०—ललाटं पश्यति—इस अर्थ में लालाटिकः = सेवकः। [ जो दूर रहता हुआ अपने स्वामी के ललाट को ही देखा करता है, कोई काम नहीं करता है, ऐसे सेवक के लिए यह 'लालाटिकः' शब्द है। यहाँ 'ललाट' और 'दर्शन' की प्रतीति नहीं होती है अपितु ऐसे आचरण वाले सेवक की प्रतीति होती

---

१. अत्र 'परिषीदन्त्यस्मिन्नित्यधिकरणे क्विप्'—इत्यधिकः पाठः क्वचित्।

**सर्वावयवेभ्यो ललाटं दूरे दृश्यते, तदनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषः कार्येष्वनुपस्थायित्वं लक्ष्यते । लालाटिकः सेवकः । स्वामिनः कार्येषु नोपतिष्ठत इत्यर्थः ।**

**कुक्कुटीशब्देनापि कुक्कुटीपातो लक्ष्यते । देशस्याल्पतया हि भिक्षुरविक्षिप्तदृष्टिः पादविक्षेपदेशे चक्षुः संयम्य गच्छति स उच्यते कौक्कुटिक इति[1] ॥**

## १७८८. तस्य धर्म्यम् ॥ ४७ ॥ ( १५९७ )

**'तस्य' इति षष्ठीसमर्थाद् 'धर्म्यम्' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । धर्म्यं न्याय्यम् । आचारयुक्तमित्यर्थः । शुल्कशालाया धर्म्यं शौल्कशालिकम् । आकरिकम् । आपणिकम् । गौल्मिकम् ।**

**न्यासः**

**तदनेनेत्यादि** । यत एव सर्वावयवेभ्यो ललाटं दूरे दृश्यते, तस्मादनेन ललाटदर्शनेन सेवकस्य स्वामिनं प्रत्यनुपश्लेषो लभ्यते । न त्वत्र ललाटार्थो दर्शनं चास्ति । यादृशश्चानुपश्लेषो विवक्षितः, तं **कार्येष्वनुपस्थायित्वमित्यनेन** दर्शयति ।

**कुक्कुटीशब्देनापीत्यादि** । कुक्कुट्या ह्यल्पदेशविषयः पातो भवति । तदनेन कुक्कुटीपातदेशस्याल्पता लक्ष्यते । न त्वत्र कुक्कुटयर्थो देशश्च विद्यते ॥ ४६ ॥

**पदमञ्जरी**

यादृशस्तु योगोऽत्र विवक्षितस्तं दर्शयति—**सर्वावयवेभ्य इत्यादि** । अनुपश्लेषस्य विवरणं **कार्येष्वनुपस्थायित्वमिति**, दूरे स्थितो ललाटमेव पश्यति, न पुनः कार्येषूपतिष्ठत इत्यर्थः ।

**कुक्कुटीपातो लक्ष्यते इति** । यावति देशे कुक्कुटी पतति यावन्तं देशं समतीत्य निपतितुं समर्था स देशो लक्ष्यत इत्यर्थः । अनेनापि प्रकारेण देशस्याल्पत्वं लक्ष्यते, कुक्कुटी पततु मा वाऽपतदित्याह—**देशस्याल्पतयेति** । एतदेव स्पष्टयति—**यो हि भिक्षुरिति**[2] । भिक्षुः=संन्यासी ॥ ४६ ॥

**तस्य धर्म्यम्** ॥ धर्मः=अनुवृत्त आचारः, ततोऽनपेतं धर्म्यम्, 'धर्मपथ्यर्थन्यायादनपेते' इति वचनात् ।

**भावबोधिनी**

है । ] कौक्कुटिकः भिक्षुः । [ कुक्कुटीं पश्यति—यह विग्रह है । कुक्कुटी जितने स्थान पर गिरती है या गिर सकती है उतना स्थान लक्षित होता है । उसमें भी चल सकने वाला भिक्षुक । यहाँ भी स्थान की अल्पता लक्षित होती है । यही आगे स्पष्ट लिख रहे हैं— ]

शरीर के सभी अवयवों में ललाट = मस्तक दूर दिखाई देता है, इस ललाट को देखने से उस सेवक का स्वामी के प्रति अनुपश्लेष=कार्य में उपस्थित न होना—लक्षित होता है । लालाटिकः सेवकः, अपने स्वामी के कार्यों में उपस्थित न होने वाला [ कामचोर, धूर्त ] यह अर्थ है ।

'कुक्कुटी' शब्द से भी कुक्कुटी का पात = गिरना लक्षित होता है । स्थान के अतिशय कम होने के कारण सावधान दृष्टि वाला भिक्षु पैर रखने के स्थान पर आँख सम्भाल कर चलता है, उस भिक्षु को—'कौक्कुटिक' कहा जाता है । [ अत्यन्त सावधानीपूर्वक चलने वाला भिक्षुक 'कौक्कुटिक' कहा जाता है । ] ॥ ४६ ॥

'तस्य' ( = उसका ) इस षष्ठीसमर्थ से 'धर्म्य' इस अर्थ में ठक् प्रत्यय होता है । धर्म्य =न्याय्य । आचार से युक्त—यह अर्थ है । उदा०—शुल्कशालायाः धर्म्यम् इस विग्रह में—शौल्कशालिकम् । [ शुल्कशाला + ठक् = इक, आदिवृद्धि । शुल्कशाला के आचार से युक्त ] आकरिकम् । [ आकरस्य–धर्म्यम् ] आपणिकम् । [ आपणस्य–धर्म्यम् ] गौल्मिकम् । [ गुल्मस्य धर्म्यम् ]

---

१. 'तदमयभिधेये नियमः संज्ञाग्रहणेन क्रियते, कुक्कुटी=दाम्भिकचेष्टा'—इत्यधिकं क्वचित् ।

२. '०तया हि भिक्षुः' इति काशिका ।

**१७८९. अण् महिष्यादिभ्यः ॥ ४८ ॥ ( १५९८ )**

**'महिषी' इत्येवमादिभ्योऽण् प्रत्ययो भवति 'तस्य धर्म्यम्' इत्येतस्मिन् विषये। ठकोऽपवादः। महिष्या धर्म्यं माहिषम्। प्राजावतम्।**

**महिषी। प्रजावती। प्रलेपिका। विलेपिका। अनुलेपिका। पुरोहित। मणिपाली। अनुचारक। होतृ। यजमान। महिष्यादिः॥**

**१७९०. ऋतोऽञ् ॥ ४९ ॥ ( १५९९ )**

**ऋकारान्तात्प्रातिपदिकादञ् प्रत्ययो भवति 'तस्य धर्म्यम्' इत्येतस्मिन्विषये। ठकोऽपवादः। पोतुर्धर्म्यं पौत्रम्। औद्गात्रम्।**

**❀ नराच्चेति वक्तव्यम् ❀ ( म० भा० ४.४.४९ वा० १ )। नरस्य धर्म्या नारी।**

**❀ विशसितुरिड्लोपश्च ❀ ( वा० २ )। विशसितुर्धर्म्यं वैशस्त्रम्।**

**❀ विभाजयितुर्णिलोपश्च ❀ ( वा० ३ )। विभाजयितुर्धर्म्यं वैभाजित्रम्॥**

**न्यासः**

**तस्य धर्म्यम्॥ ४७॥ अण् महिष्यादिभ्यः॥ ४८॥ ऋतोऽञ्॥ ४९॥**

**पदमञ्जरी**

**दौवारिकमिति।** 'द्वारादीनां च' इति वृद्धिप्रतिषेधः, ऐजागमश्च॥ ४७॥ ४८॥

**ऋतोऽञ्॥ होतुर्धर्म्यं हौत्रमिति।** होतृशब्दस्य महिष्यादिषु पाठादपपाठोऽयम्। **पोतुर्धर्म्यमिति** तु पाठः। अपर आह—यजमानसाहचर्यादृत्विग्वचनस्य होतृशब्दस्य महिष्यादिषु पाठः, अयं तु क्रियाशब्द उदाहृत इति।

**नराच्चेति वक्तव्यमिति।** नृशब्दात्सूत्रेणैवाञि नारमिति सिद्धे नरशब्दाट्ठको निवृत्त्यर्थं वचनम्, अनभिधानं तु दुर्ज्ञानम्॥ ४९॥

**भावबोधिनी**

**विमर्श**—पदमंजरी में 'दौवारिकम्' यह शब्द भी प्राप्त होता है। द्वारस्य धर्म्यम्। द्वार के आचार से युक्त—यह अर्थ है। द्वार + ठञ् = इक, वृद्धि का अपवाद ऐच् आगम "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इस सूत्र से होता है। द्वार के आचार से युक्त को दौवारिक = द्वारपाल कहा जाता है। ]॥ ४७॥

'महिषी' आदि प्रातिपदिकों से 'तस्य धर्म्यम्' इस विषय में अण् प्रत्यय होता है। यह ठक् का अपवाद है। उदा०—महिष्या धर्म्यम्—इस विग्रह में माहिषम्। [ महिषी + अण्, आदिवृद्धि, भसंज्ञा, ईकारलोप ] प्राजावतम्। [ प्रजावत्या धर्म्यम्—यह है। पूर्ववत् अण् प्रत्यय, आदिवृद्धि, ईलोप होता है। ]

[ इस गण में पठित शब्द— ] महिषी। प्रजावती। प्रलेपिका। विलेपिका। अनुलेपिका। पुरोहित। मणिपाली। अनुचारक। होतृ। यजमान। ये महिष्यादि हैं॥ ४८॥

'तस्य धर्म्यम्' इस विषय में ऋकारान्त प्रातिपदिक से अण् प्रत्यय होता है। यह ठक् का अपवाद है। उदा०—पोतुर्धर्म्यम्—पौत्रम् [ पोतृ + अण्, आदिवृद्धि, ऋकार का यण् ] औद्गात्रम्। [ उद्गातुः धर्म्यम्—यह विग्रह है। ]

❀ नर शब्द से भी अञ् कहना चाहिये। ❀ नरस्य धर्म्या—इस विग्रह में 'नारी'। [ नर + अण्, आदिवृद्धि, ङीप् प्रत्यय, नर के धर्म = आचार से युक्त। ]

❀ विशसितृ शब्द से अण् और इट् का लोप कहना चाहिये। ❀ विशसितुः धर्म्यम्—इस विग्रह में वैशस्त्रम्। [ विशसितृ + अण्, इट् का लोप, आदिवृद्धि करने पर यह रूप बनता है। ]

❀ विभाजयितृ शब्द से अण् प्रत्यय और णि का लोप कहना चाहिये। ❀ उदा०—विभाजयितुः धर्म्यम्—इस अर्थ में वैभाजित्रम्। [ विभाजयितृ + अण्, णिलोप कर देने पर विभाजितृ + अण्, आदिवृद्धि, ऋ का यण्—वैभाजित्रम्। विभाजयिता के धर्मसे युक्त—यह अर्थ है। ]॥ ४९॥

**१७९१. अवक्रयः ॥ ५० ॥ ( १६०० )**

**'तस्य' इत्येव । षष्ठीसमर्थाद् 'अवक्रयः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । अवक्रीणीतेऽनेनेत्यवक्रयः = पिण्डक उच्यते । शुल्कशालाया अवक्रयः शौल्कशालिकः । आकरिकः[1] । आपणिकः । गौल्मिकः ।**

**नन्ववक्रयोऽपि धर्म्यमेव ? नैतदस्ति; लोकपीडया धर्मातिक्रमेणाप्यवक्रयो भवति ॥**

**१७९२. तदस्य पण्यम् ॥ ५१ ॥ ( १६०१ )**

**'तत्' इति प्रथमासमर्थादस्येति षष्ठयर्थे ठक् प्रत्ययो भवति यत्तत्प्रथमासमर्थं पण्यं चेत्तद्भवति । अपूपाः पण्यमस्य आपूपिकः । शाष्कुलिकः । मोदकिकः ।**

**न्यासः**

**अवक्रयः ॥ ५० ॥ तदस्य पण्यम् ॥** अपूपा पण्यमस्येति आपूपिकः । अथ यथा वाक्ये पण्यशब्दो युज्यते तथा वृत्तावपि कस्मान्न युज्यते ? इत्याह—**पण्यमिति । विशेषणमित्यादि ।** अथ य एवमवेक्ष्यमाणः पण्यार्थं

**पदमञ्जरी**

**अवक्रयः ॥ अवक्रीयतेऽनेनेत्यवक्रय इति ।** क्रयो नाम=स्वद्रव्यत्यागेन परद्रव्यस्वीकरणम्, तस्याव-मत्वमवशब्दो द्योतयति । वाणिज्यार्थं तैलधान्यादिकं देशान्तरं नयताऽस्मिन् शुल्कस्थाने प्रतिभारमेतावद् देयमिति तद्देशाधिपतिना यत्कल्पितं सोऽवक्रयः, पिण्डक इति चोच्यते । तत्र स्वद्रव्यमेव दत्वा स्वद्रव्यमेव स्वीक्रियते इत्ययमवक्रयो भवति, न तु मुख्यः ।

**नन्वित्यादि ।** अवक्रयस्याप्यनादिप्रवृत्तत्वादिति भावः । **लोकपीडयेति ।** अर्थलोभेन धर्मातिक्रमेण धर्मा-पेतत्वं दर्शयति ॥ ५० ॥

**तदस्य पण्यम् ॥ पण्यमिति विशेषणमित्यादि ।** इह यो विशेषणमुपाधिर्वोपादीयते द्योत्ये तस्मिंस्तेन भवितव्यम्, तद्यथा—'सास्य देवता', इन्द्रो देवता अस्य ऐन्द्रः स्थालीपाक इति देवतात्वं वृत्तावन्तर्भवति, तद्वद-

**भावबोधिनी**

'तस्य' इसकी अनुवृत्ति है । षष्ठीसमर्थ से 'अवक्रय' इस अर्थ में ठक् प्रत्यय होता है । जिससे खरीदता है—इस अर्थ में "अवक्रय" = पिण्डक को कहा जाता है । उदा०—शुल्कशालायाः अवक्रयः इस अर्थ में—शौल्कशालिकः । आकरिकः । [ आकरस्य अवक्रयः । ] आपणिकः [ आपणस्य अवक्रयः ] गौल्मिकः । [ गुल्मस्य अवक्रयः ]

प्रश्न—अवक्रय भी तो धर्म्य [ आचार से युक्त ] ही है ? [ उत्तर ] नहीं, ऐसा नहीं है । लोकपीडा से धर्म के अतिक्रमण से भी अवक्रय होता ही है । [ अतः यह अवक्रय धर्म्य - धर्मयुक्त नहीं भी होता है । ]

**विमर्श**—अपना एक द्रव्य = पदार्थ देकर दूसरा पदार्थ लेना क्रय=खरीदना कहा जाता है । किन्तु 'अवक्रय' वह होता है, जो अपना द्रव्य देकर अपना ही द्रव्य स्वीकार किया जाता है । जैसे कोई व्यापारी एक स्थान से दूसरे स्थान पर जब कोई सामान ट्रक या गाड़ी आदि से ले जाता है, तब उसे मार्ग में स्थान-स्थान पर भार = टैक्स चुंगी देकर अपना ही सामान लेने की अनुमति प्राप्त है, इसी को 'अवक्रय' या 'पिण्डक' कहा जाता है । अतः यह मुख्य क्रय न होने से अवक्रय कहा जाता है । कुछ लोग यह कहते हैं कि इच्छानुसार धनादि देकर नियतकाल के लिए किसी वस्तु को ले लेना भी अवक्रय है ॥ ५० ॥

'तत्' इस प्रथमा समर्थ से 'अस्य' इस षष्ठी के अर्थ में ठक् प्रत्यय होता है, यदि जो प्रथमा समर्थ है, वह पण्य = बिक्री के योग्य हो तो । उदा०—अपूपाः पण्यम् अस्य—इस विग्रह में—आपूपिकः [ पूआ जिसके बेचने योग्य हैं वह अर्थात् पुए की दूकान वाला । अपूप + ठक् = इक, आदिवृद्धि, भसंज्ञा, अलोप ] शाष्कुलिकः । [ शष्कुल्यः पण्यमस्य इस अर्थ में शष्कुली + ठक् । ] मौदकिकः । [ मोदकाः पण्यमस्य—इस अर्थ में —मोदक + ठक् = इक

१. 'आन्तरगारिकः' इति पाठा० ।

पण्यमिति विशेषणं तद्धितवृत्तावन्तर्भूतम्, अतः पण्यशब्दो न प्रयुज्यते ॥

**१७९३. लवणाट्ठञ् ॥ ५२ ( १६०२ )**

लवणशब्दाट्ठञ् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतस्मिन्विषये। ठकोऽपवादः। स्वरे विशेषः। लवणं पण्यमस्य लावणिकः ॥

**१७९४. किशरादिभ्यः ष्ठन् ॥ ५३ ॥ ( १६०३ )**

'किशर' इत्येवमादिभ्यः ष्ठन् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतस्मिन्विषये। ठकोऽपवादः। किशरादयो गन्धविशेषवचनाः। किशराः पण्यमस्य किशरिकः। किशरिकी। नरदिकः। नरदिकी।

किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुलु। उशीर। हरिद्रा। दरिद्रायणी। किशरादिः ॥

**१७९५. शलालुनोऽन्यतरस्याम् ॥ ५४ ॥ ( १६०४ )**

शलालुशब्दादन्यतरस्यां ष्ठन् प्रत्ययो भवति 'तदस्य पण्यम्' इत्येतद्विषये। ठकोऽपवादः। पक्षे सोऽपि भवति। शलालुशब्दो गन्धविशेषवचनः। शलालुपण्यमस्य शलालुकः, शलालुकी। शालालुकः, शालालुकी ॥

**न्यासः**

वृत्तावन्तर्भावयति तेन गतार्थत्वात् पण्यशब्दो न प्रयुज्यते ॥ ५१ ॥

लवणाट्ठञ् ॥ ५२ ॥ किशरादिभ्यः ष्ठन् ॥ ५३ ॥ शलालुनोऽन्यतरस्याम् ॥ शलालुक इति। 'इसुसुक्तान्तात् कः' ॥ ५४ ॥

**पदमञ्जरी**

त्रापि पण्यत्वमन्तर्भवतीति नात्रापूर्वं किञ्चित् ॥ ५१ ॥ ५२ ॥

किशरादिभ्यष्ठन् ॥ किशरादयो गन्धविशेषवचनास्तद्वति वर्तन्ते, गन्धान्पिनष्टीति यथा ॥ ५३ ॥

शलालुनोऽन्यतरस्याम् ॥ शलालुक इति। 'इसुसुक्तान्तात्कः' ॥ ५४ ॥

**भावबोधिनी**

आदिवृद्धि। शाष्कुलिकः = पूड़ी की दूकानवाला। मौदकिकः—लड्डू की दूकान वाला ]

'पण्य' [ = बिक्री योग्य ] यह विशेषण तद्धित वृत्ति में अन्तर्भूत है, इस कारण साथ में 'पण्य' शब्द का प्रयोग नहीं होता है। ] ॥ ५१ ॥

'तद् अस्य पण्यम्' [ वह उसके बेचने योग्य है ] इस अर्थ 'लवण' शब्द से ठञ् प्रत्यय होता है। [ ठक् और ] ठञ् में केवल स्वर का भेद है। [ ञित् होने से आद्युदात्त होता है। ] उदा०—लवणं पण्यम् अस्य—इस विग्रह में—लावणिकः। [ लवण + ठञ् = इक, आदिवृद्धि, भसंज्ञा, अलोप। नमक बेचने वाला दूकानदार। स्त्री अर्थ में ङीप् होने पर 'लावणिकी' यह रूप होता है। ] ॥ ५२ ॥

'तद् अस्य पण्यम्' इस विषय में किशर आदि शब्दों से ष्ठन् प्रत्यय होता है। यह ठक् का अपवाद है। किशरादि शब्द गन्धविशेष के वाचक हैं। [ अतः गन्धविशेषयुक्त द्रव्य के वाचक समझना चाहिए। ] उदा०—किशराः पण्यम् अस्य—इस विग्रह में—किशरिकः। [ किशराः पण्यमस्याः = इस अर्थ में ] किशरिकी। [ किशर + ष्ठन् = ठ = इक, स्त्रीलिङ्ग में षित् होने से ङीष् होता है। ]

[ इस गण में पठित शब्द—] किशर। नरद। नलद। सुमङ्गल। तगर। गुग्गुल। उशीर। हरिद्रा। हरिद्रायणी। ये किशरादि हैं ॥ ५३ ]

'तद् अस्य पण्यम्' इस विषय में 'शलालु' शब्द से विकल्प से ष्ठन् प्रत्यय होता है। यह ठक् का अपवाद है। पक्ष में वह ठक् प्रत्यय भी होता है। शलालु शब्द गन्धविशेष [ युक्त पदार्थ ] का वाचक है। उदा०—शलालु पण्यम् अस्य इस अर्थ में—शलालुकः, [ स्त्रीलिङ्ग में ] शलालुकी। ठक् होने पर आदिवृद्धि होती है। ] शालालुकः, शालालुकी। [ यहाँ "इसुसुक्तान्तात् कः" ( पा० सू० ७।३।५१ ) से 'ठ' का 'क' होता है। षित् होने से ङीष् होता है। ] ॥ ५४ ॥

## १७९६. शिल्पम् ॥ ५५ ॥ ( १६०५ )

**'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शिल्पं चेत्तद्भवति । शिल्पम् = कौशलम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणविकः । वैणिकः ( म० भा० ) ।**

**मृदङ्गवादने वर्त्तमानो मृदङ्गशब्दः प्रत्ययमुत्पादयति । शिल्पं तद्धितवृत्तावन्तर्भवति ॥**

## १७९७. मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥ ( १६०६ )

**'मड्डुक', 'झर्झर'—शब्दाभ्यामन्यतरस्यामण् प्रत्ययो भवति, 'तदस्य शिल्पम्' इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । मड्डुकवादनं शिल्पमस्य माड्डुकः, माड्डुकिकः । झार्झरः, झार्झरिकः ॥**

**न्यासः**

**शिल्पम् ॥ शिल्पं कौशलमिति ।** क्रियाभ्यासपूर्वको ज्ञानविशेषः । **मृदङ्गवादनं शिल्पमस्येति ।** मृदङ्गो वाद्यते येन शिल्पेन तन्मृदङ्गवादनम् । ननु च मृदङ्गवादनं शिल्पं यस्येति विगृह्य प्रत्यय उत्पद्यमानो मृदङ्गवादनशब्दादेव प्राप्नोति, न तु मृदङ्गशब्दात्, ततो मार्दङ्गवादनिक इति भवितव्यम्, तत् कथं मार्दङ्गिक इति भवति ? इत्याह -- **मृदङ्गवादनमित्यादि ।** मृदङ्गशब्द एव प्रत्ययमुत्पादयति, स तु मृदङ्गवादने वर्तमानः, न मृदङ्गे । अत्र शब्दशक्तिस्वाभाव्यं हेतुः । न चायं नियमः—येन विग्रहः क्रियते, तत एव प्रत्ययेन भवितव्यमिति । यथा ह्यवेरिदं मांसमाविकम् मांसमित्यविशब्देन विग्रहः क्रियतेऽविकशब्दादेव प्रत्ययो भवति, तथेहापि मृदङ्गवादनशब्देन विग्रहः क्रियते, प्रत्ययस्तु मृदङ्गशब्दाद् भवति । तेन तत्र गतार्थत्वाच्छिल्पशब्दो न प्रयुज्यत इत्यभिप्रायः ॥ ५५ ॥ **मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥**

**पदमञ्जरी**

**शिल्पम् ॥ कौशलमिति ।** क्रियाभ्यासपूर्वको ज्ञानविशेषः । **मृदङ्गवादनं शिल्पमस्येति ।** मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पम् भावसाधनस्य गौणं सामानाधिकरण्यम् । मृदङ्गवादनविषयं शिल्पमस्येत्यर्थः । **मार्दङ्गिक इति ।**

ननु मृदङ्गवादनं शिल्पमस्येति विग्रहः कृतः, ततश्च मार्दङ्गवादनिक इति भवितव्यम् ? तत्राह— **मृदङ्गेत्यादि ।** मृदङ्गवादनशब्दात्तु प्रत्ययो न भवत्यनभिधानात्, किं तूपचरितवृत्तेरपि मृदङ्गशब्दादेव भवति । अत एवानभिधानात् मृदङ्गनिष्पादनं शिल्पमस्य मार्दङ्गिकः कुम्भकार इत्यत्र न भवति ॥ ५५ ॥

**मड्डुकझर्झरादणन्यतरस्याम् ॥** अयमेव निर्देशो ज्ञापयति --'तद्वादनवृत्तिभ्यो मृदङ्गादिभ्यः प्रत्यय' इति । न हि मुख्यमड्डुकझर्झरयोः शिल्पेन सामानाधिकरण्यमुपपद्यते ॥ ५६ ॥

**भावबोधिनी**

'तत्' इस प्रथमा समर्थ प्रातिपदिक से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में ठक् प्रत्यय होता है यदि जो प्रथमा समर्थ है वह 'शिल्प' हो तो । शिल्प = कौशल । उदा०—'मृदङ्गवादनं शिल्पम् अस्य' इस अर्थ में – मार्दङ्गिकः । [ पणववादनं शिल्पम् अस्य—] पाणविकः । [ वेणुवादनं शिल्पम् अस्य—] वैणिकः ।

[ विग्रह में 'मृदंगवादन' है तब 'मृदंग' से प्रत्यय क्यों होता है ? ] मृदंगवादन अर्थ में विद्यमान मृदंग शब्द प्रत्यय का विधान कराता है । 'शिल्प' तद्धितवृत्ति के अन्तर्गत है । [ अतः उसका प्रयोग अलग से नहीं किया जाता है । अतः मृदंग बजाने की कुशलता वाला—ऐसा अर्थ करना चाहिए । ] ॥ ५५ ॥

'तद् अस्य शिल्पम्' इस विषय में 'मड्डुक' और 'झर्झर' इन शब्दों से विकल्प से अण् प्रत्यय होता है । ठक् का अपवाद है । अतः पक्ष में ठक् भी होता है । उदा० 'मड्डुकवादनं शिल्पम् अस्य' इस अर्थ में—माड्डुकः, माड्डुकिकः । [ झर्झरवादनं शिल्पम् अस्य—इस अर्थ में—] झार्झरः, झार्झरिकः । [ अण् और ठक् दोनों में आदिवृद्धि होती है । ये दोनों शब्द किसी वाद्यविशेष के वाचक है । इन वाद्यों का शिल्प के साथ सामानाधिकरण्य सम्भव नहीं है । अतः ये शब्द मड्डुकवादन और झर्झरवादन के प्रतिपादक होते हैं । इसी प्रकार पूर्वसूत्र में भी तत्तद्वाद्यवादन-

**१७९८. प्रहरणम् ॥ ५७ ॥ ( १६०७ )**

**'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थादस्येति षष्ठचर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं प्रहरणं चेत्तद्भवति । असिः प्रहरणमस्य आसिकः । प्रासिकः । चाक्रिकः । धानुष्कः ॥**

**१७९९. परश्वधाट्ठञ् च ॥ ५८ ॥ ( १६०८ )**

**परश्वधशब्दात् ठञ् प्रत्ययो भवति, चकारात् ठक् । स्वरे विशेषः । परश्वधः प्रहरणमस्य पारश्वधिकः ॥**

**१८००. शक्तियष्ट्योरीकक् ॥ ५९ ॥ ( १६०९ )**

**शक्ति, यष्टि-शब्दाभ्यामीकक्प्रत्ययो भवति, 'तदस्य प्रहरणम्' इत्येतस्मिन्विषये । ठकोऽपवादः । शक्तिः**

**न्यासः**

**प्रहरणम् ॥ धानुष्क इति ।** कादेशः । 'इणः षः' इति विसर्ज-नीयस्य षत्वम् ॥ ५७ ॥

**परश्वधाद् ठञ् ॥ ५८ ॥ शक्तियष्ट्योरीकक् ॥** अथ दीर्घोच्चारणं किमर्थम्, इकगेव नोच्येत, इकक्यपि सवर्णदीर्घत्वे कृते शाक्तीको याष्टीक इति सिध्यत्येव ? न सिध्यति; इकारस्य 'यस्येति च' इति लोपेन भवितव्यम् । तत् कुतः सवर्णदीर्घत्वम् ? इकारोच्चारणसामर्थ्यादेव लोपो न भविष्यति । ननु चावग्रहनिवृत्तिरिकारस्य प्रयोजनं स्यात् ? नैतत्, यदि ह्येतत् प्रयोजनं स्यात् सूत्रारम्भोऽनर्थकः स्यात्; ठकाप्यनवग्रहस्य सिद्धत्वात् ? नानर्थकः;

**पदमञ्जरी**

**प्रहरणम् ॥** प्रहरणमायुधम्, प्रह्रियतेऽनेनेति कृत्वा । **धानुष्क इति ।** पूर्ववत् कादेशः, 'इणः षः' इति विसर्जनीयस्य षत्वम् ॥ ५७ ॥

**परश्वधाट्ठञ् ॥** परश्वधः=परशुः ॥ ५८ ॥

**शक्तियष्ट्योरीकक् ॥** शक्यतेऽनया प्रहर्तुमिति शक्तिः, यष्टिशब्दोऽव्युत्पन्नं प्रातिपदिकम् । किमर्थमीकगुच्यते न कगेवोच्यते, का रूपसिद्धिः ? शक्तियष्टिशब्दाभ्यां बह्वादिङीषन्ताभ्यां लिङ्गविशिष्टपरिभाषया ( व्या० परि० २९ ) ककि कृते शाक्तीको याष्टीक इति सिद्धम्; न सिध्यति ? 'केऽणः' इति ह्रस्वत्वं प्राप्नोति । विभाषा ङीबुक्तः, तद्भावपक्षे दीर्घस्य शङ्कैव नास्ति ? एवं तर्हि इकगेवोच्येत, इकारेऽपि हि सवर्णदीर्घत्वे सिध्यति, यस्येति लोप इकारोच्चारणसामर्थ्यान्न भविष्यति । पदस्यावग्रहनिवृत्तिरिकारस्य प्रयोजनम् । एवं तर्हि सूत्रारम्भो निष्फलः स्यात्, पूर्वसूत्रविहितेन ठकैवावग्रहनिवृत्तेः सिद्धत्वात् ? नानर्थकम्; वाक्यनिवृत्त्यर्थत्वात् । एवमपि

**भावबोधिनी**

परक ही समझ कर 'शिल्प' के साथ सामानाधिकरण्य संभव होता है । तभी प्रत्यय का विधान होता है । ] ॥ ५६ ॥

'तद् अस्य' इनकी अनुवृत्ति है । 'तत्' इस प्रथमासमर्थ प्रातिपदिक से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'ठक्' प्रत्यय होता है यदि जो प्रथमासमर्थ है वह 'प्रहरण' [ प्रहार का साधन ] हो तो । उदा०—असिः प्रहरणम् अस्य—इस विग्रह में—आसिकः । [ असि + ठक् = इक, आदिवृद्धि, भसंज्ञा, इलोप । प्रासिः प्रहरणम् अस्य—इस विग्रह में—] प्रासिकः । चाक्रिकः । [ चक्रं प्रहरणमस्य ] धानुष्कः [ धनुः प्रहरणमस्य—यह विग्रह है । धनुः + ठक्, "इसुसुक्तान्तात् कः" ( पा० सू० ७।३।५१ ) से 'ठ' का 'क' आदेश, विसर्ग का षत्व । चक्र जिसमें प्रहार का साधन है । प्रह्रियतेऽनेन—इस प्रकार करण अर्थ में ल्युट्=अन होने से 'प्रहरण' यह शस्त्र का वाचक होता है । उन उन शस्त्रों का प्रहार करने वाला—यह अर्थ होता है । ] ॥ ५७ ॥

'परश्वध' शब्द से [ तद् अस्य प्रहरणम्—इस विषय में ] ठञ् प्रत्यय होता है, 'च' के बल से ठक् भी होता है, । दोनों में केवल स्वर का अन्तर होता है । [ ठञ् में ञित् होने से आद्युदात्त होता है । ] उदा०—परश्वधः प्रहरणम् अस्य—पारश्वधिकः । [ परश्वध = परशु जिसका प्रहारसाधन = शस्त्र है । ] ॥ ५८ ॥

'तद् अस्य प्रहरणम्' इस विषय में 'शक्ति' और 'यष्टि' इन शब्दों से 'ईकक्' प्रत्यय होता है । यह ठक् का अपवाद है । उदा०—शक्तिः प्रहरणम् अस्य—इस विग्रह में—शाक्तीकः [ यष्टिः प्रहरणम् अस्य—अर्थ में ] याष्टीकः ।

प्रहरणमस्य शाक्तीकः । याष्टीकः ॥

**१८०१. अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥ ( १६१० )**

**'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थेभ्यः 'अस्ति', 'नास्ति', 'दिष्ट'—इत्येतेभ्यः शब्देभ्यः 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं मतिश्चेत्तद्भवति । अस्ति मतिरस्य आस्तिकः । नास्ति मतिरस्य नास्तिकः । दैष्टिकः ।**

**न च मतिसत्तामात्रे प्रत्यय इष्यते, किं तर्हि ? परलोकोऽस्तीति यस्य मतिरस्ति स आस्तिकः, तद्विपरीतो नास्तिकः । प्रमाणानुपातिनी यस्य मतिः स दैष्टिकः । तदेतदभिधानशक्तिस्वभावाल्लभ्यते ।**

**न्यासः**

वाक्यनिवृत्त्यर्थत्वात् । एवमपि प्रत्ययग्रहणमनर्थकं स्यात्, ठक् प्रत्ययो हि प्रकृतः, तत्रैतावदेव वक्तव्यम्—शक्तियष्टचोरिति । एवं पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति, किमीकग्विधानेन ? तस्मादिकग्ग्रहणसामर्थ्याल्लोपो न भविष्यति । एवमपि ठकैव 'यस्येति च' इति लोपाभावेनानवग्रहे सिद्धे हीकग्ग्रहणमधिकविधानार्थं प्रतीयते । तेन यस्येति च' इति लोपो न भवति । यथा तस्मादकः सवर्णे दीर्घोऽपि न स्यादिति विगृहीतमेव श्रूयेत । तस्मादीकग्वक्तव्यः ॥ ५९ ॥

**अस्तिनास्तिदिष्टं मतिः** ॥ किं तर्हि परलोकोऽस्तीति मतिर्यस्येति, कथं पुनरसति विशेषोपादान एतल्लभ्यते ? इत्याह—**तदेतदित्यादि** । अभिधानशक्तिस्वाभाव्याल्लभ्यते । ननु चास्तीति तिङन्तम्, नास्तीति वाक्यम् । अत एताभ्यां न प्राप्नोति प्रत्ययः प्रातिपदिकाधिकारात् ? इत्यत आह—**अस्तिनास्तिशब्दावित्यादि ।**

**पदमञ्जरी**

प्रत्ययान्तरमनर्थकं शक्तियष्ट्योरित्येतावद्वक्तव्यम्, ठक् प्रकृतः, तस्य पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति, किमीकको विधानेन, तद्विधानात्तु यस्येति लोपो न भविष्यति । यथैव तर्हि यस्येति लोपो न भवति एवं सवर्णदीर्घत्वमपि न स्यात्; यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, यस्येतिलोपं च प्रति इकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥ ५९ ॥

**अस्तिनास्तिदिष्टं मतिः** ॥ यद्यस्ति मतिर्यस्य स आस्तिकः, चोरोऽपि प्राप्नोति, तस्यापि मतिसद्भावात् ? तत्राह—**न चेति । तद्विपरीत इति** । परलोको नास्तीति मतिर्यस्य तन्नास्तिकः=लौकायतिकः, न त्वचेतनः पदार्थः, मत्यभावमात्रे प्रत्ययस्यानिष्टत्वात् । दिष्टम्=दैवम्, तद्विषया मतिर्यस्य स दैष्टिकः, वृत्तावपि प्रमाणानुपातिनी मतिर्यस्येति दैववित्, प्रमीयते तेभ्यो दैवमिति । प्रमाणशब्देनेतिहासपुराणादिविवक्षितम् ।

**भावबोधिनी**

[ 'शक्ति' प्राचीन काल में एक अमोघ शस्त्र होता था । यष्टि=छड़ी । ये जिसके शस्त्र हों वह व्यक्ति ] ॥ ५९ ॥

'तद् अस्य' इसकी अनुवृत्ति होती है । 'तत्' इस प्रथमासमर्थ—'अस्ति', 'नास्ति' और 'दिष्ट'—इन शब्दों से षष्ठी के अर्थ में ठक् प्रत्यय होता है यदि जो प्रथमासमर्थ है वह 'मति' हो तो । उदा०—अस्ति मतिः अस्य—इस अर्थ में 'आस्तिकः । नास्ति मतिः अस्य—इस अर्थ में—नास्तिकः । दिष्टं मतिः अस्य—इस अर्थ में—दैष्टिकः ।

यहाँ केवल मति [ वृद्धि=स्वीकृति ] की सत्ता रहने पर प्रत्यय नहीं होता है, तो फिर कैसे ? 'परलोकः अस्ति मतिः यस्य सः' [ परलोक है—इस प्रकार की मति=ज्ञान जिसका है वह—] आस्तिकः । इसके विपरीत [ परलोकः नास्ति इति मतिः यस्य सः—] नास्तिकः । [ वेदपुराणज्योतिषादि—] प्रमाण का अनुपतन=अनुसरण करने वाली मति जिसकी होती है वह—'दैष्टिकः' । यह उपर्युक्त प्रतीति अभिधानशक्तिस्वभाव से प्राप्त होती है । [ अर्थात् लोक में इन शब्दों से ऐसे अर्थ ही प्रतीत होते हैं । अतः शास्त्र भी इन्हों अर्थों में प्रत्यय विधान करता है । ]

[ तद्धित प्रत्यय प्रातिपदिक से होते हैं, ये तो तिङन्त है ? ] 'अस्ति' और 'नास्ति' ये शब्द निपात है [ अतः

**अस्ति, नास्ति-शब्दौ निपातौ, वचनसामर्थ्याद्वा आख्याताद्वाक्याच्च प्रत्ययः ॥**

**१८०२. शीलम् ॥ ६१ ॥ ( १६११ )**

**'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं शीलं चेत्तद्भवति । शीलम् = स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । शाष्कुलिकः । मौदकिकः ।**

**भक्षणक्रिया तद्विशेषणं च शीलं तद्धितवृत्तावन्तर्भवति ॥**

**१८०३. छत्रादिभ्यो णः ॥ ६२ ॥**

**'छत्र'—इत्येवमादिभ्यः प्रातिपदिकेभ्यो णः प्रत्ययो भवति, 'तदस्य शीलम्' इत्येतस्मिन्विषये ।**

**न्यासः**

अभ्युपगम्यापि तिङन्तत्वं वाक्यत्वञ्च परिहारान्तरमाह—**वचनादाख्याताद् वाक्याच्च प्रत्यय इति** ॥ ६० ॥

**शीलम् ॥ अपूपभक्षणं शीलमस्येति** । शीलविषयत्वादुपचारात् तथा व्यपदेशः । भक्षणक्रिया तद्विषयञ्च शीलं तद्धितवृत्तावन्तर्भवति । तेन तत्र प्रतीयमानत्वाद् भक्षणशीलशब्दौ न प्रयुज्येते इति भावः ॥ ६१ ॥

**छत्रादिभ्यो णः** ॥ छत्रशीलत्वं शिष्यस्य प्रतिपादयितुमाह—**छादनादपवारणाच्छत्रमित्यादि** । अपवारणादित्यनेन च्छादनादित्यस्यार्थं व्यक्तीकरोति । आच्छादयति हि यत् तच् छत्रमित्युच्यते, तेन शिष्योऽपि गुरु-

**पदमञ्जरी**

**अस्तिनास्तिशब्दौ निपाताविति** । तेन प्रातिपदिकाधिकारो न बाध्यते इति भावः । वचनसामर्थ्यात् चेत्यभ्युपगम्यवादः ॥ ६० ॥

**शीलम् ॥ शीलं स्वभाव इति** । शील्यते पुनःपुनः क्रियतेऽनेनेति कृत्वा । **अपूपभक्षणं शीलमस्येति** । शीलविषये शीलत्वमारोप्य सामानाधिकरण्येन व्यपदेशः । **भक्षणक्रियेत्यादि** । शीलं तावदुपात्तत्वादन्तर्भवति, क्रियाविषयत्वाच्च शीलस्य क्रियाप्यन्तर्भवति, स्वभावाच्च भक्षणक्रिया, न निष्पादिका ॥ ६१ ॥

**छत्रादिभ्यो णः** ॥ छत्रशीलता शिष्यस्य दर्शयितुमाह—**छादनादावरणाच्छत्रमिति** । छादयतेः ष्ट्रनि 'इस्मन्त्रन्क्विषु च' इति ह्रस्वः । **छत्रशील इति** । छत्रसहचरिता छादनक्रिया शीलमस्येत्यर्थः । यदि त्वपूपभक्षणं

**भावबोधिनी**

प्रातिपदिक हैं । ] अथवा इस वचन = सूत्र का प्रणयन किया गया है । इस कारण 'आख्यात' से और वाक्य से भी प्रत्यय हो जाते हैं ॥ ६० ॥

'तद् अस्य' इसकी अनुवृत्ति होती है । 'तत्' इस प्रथमासमर्थ से 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'ठक्' प्रत्यय होता है यदि जो प्रथमा-समर्थ है वह 'शील' हो तो । शील = स्वभाव ( आदत ) । उदा०—अपूपभक्षणं शीलमस्य—इस विग्रह में—आपूपिकः [ पुआ खाना जिसकी आदत है । ] शाष्कुलिकः । [ शष्कुलीभक्षणं शीलम् अस्य—यह विग्रह है । पूड़ी खाने के स्वभाववाला । ] मौदकिकः । [ मोदकभक्षणं शीलमस्य—यह विग्रह है । लड्डू खाने के स्वभाव वाला । ]

भक्षण क्रिया और इसका विशेषण 'शील' ये दोनों तद्धितवृत्ति में अन्तर्भूत हैं । [ अतः अलग से प्रयुक्त नहीं होते हैं । ] ॥ ६१ ॥

'छत्र' आदि प्रातिपदिकों से 'तद् अस्य शीलम्' ( यह इसका स्वभाव है )—इस अर्थ में 'ण' प्रत्यय होता है । यह ठक् का अपवाद है । उदा०—छत्त्रं शीलम् अस्य—इस विग्रह में 'छात्त्रः ।' छादन = ( गुरु के दोषों का ) आवरण करने से 'छत्र' कहा जाता है । गुरु के कार्यों में पूरी तरह सावधान रहने वाला, उस गुरु के छिद्र = दोष का आवरण

**ठकोऽपवादः। छत्त्रं शीलमस्य छात्त्रः। छादनादावरणाच्छत्त्रम्। गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तश्छत्त्र-शीलः शिष्यश्छात्त्रः।**

**स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वो गृह्यते—आस्था, संस्था, अवस्थेति।**

**छत्त्र। बुभुक्षा। शिक्षा। पुरोह। स्था। चुरा। उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस्। सत्य। अनृत। शिबिका। छत्त्रादिः॥**

**१८०४. कर्माध्ययने वृत्तम्॥ ६३॥ (१६१४)**

**'तदस्य' इत्येव। 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं कर्म चेत्तद्वृत्तमध्ययनविषयं भवति। एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः। द्वैयन्यिकः। त्रैयन्यिकः।**

**न्यासः**

कार्यतत्परो गुरोर्यानि च्छिद्राणि गोपयति तेषामावरणाय प्रवृत्तस्तत्र युक्तः सच्छत्त्रसहचरितां क्रियामाचरँश्छत्त्र-शीलो भवति।

**स्थाशब्दोऽत्र पठ्यते, स चोपसर्गपूर्वो गृह्यत इति।** ततश्च तस्य 'आतश्चोपसर्गे' इत्यङ्प्रत्ययमुत्पाद्याप्यु[1]-त्पादितत्वात्। केवलस्य तु पाठः सर्वोपसंग्रहार्थः।

**चुरेति** पठ्यते, तत्र निपातनादकारप्रत्ययो गुणाभावश्च॥ ६२॥

**कर्माध्ययने वृत्तम्॥** क्रियया यद् व्याप्यमानमीप्सिततममनीप्सिततमं वा तत् कर्म। इह त्वनीप्सिततमं गम्यते। अत एवाह—**यस्याध्ययनप्रयुक्तस्येत्यादि**। न हि कस्यचिदध्ययने युक्तस्य परीक्षाकाले पठतः स्खलित-

**पदमञ्जरी**

शीलमस्यापूपिक इतिवत् छत्त्रावरणं शीलमस्य छात्त्रिक इति व्युत्पाद्यते, तदा दासेऽपि प्राप्नोति; अभिधान-स्वाभाव्यात्तु तथा नाश्रीयते।

**उपसर्गपूर्वो गृह्यते इति।** ततश्च तस्य 'आतश्चोपसर्गे' इत्यादिना व्युत्पत्तिः; केवलस्य स्थाशब्दस्याभावात्। केवलस्य तु पाठः सर्वोपसर्गग्रहार्थः। **चुरेति** पठ्यते, तत्र चोरयतेः 'ण्यासश्रन्थो युच्' इति युचि प्राप्तेऽस्मादेव निपातनादकारः, गुणाभावश्च। न च युचोऽन्यत्र बाधः, चोरणेऽप्यपि भवति॥ ६२॥

**कर्माध्ययने वृत्तम्॥** कर्म = क्रिया, तच्च स्खलितमपचाररूपं विवक्षितम्, न तच्छीलं कर्म, तेनेह न

**भावबोधिनी**

करने में प्रवृत्त = छत्त्रशील शिष्य 'छात्त्र' [ कहा जाता ] है। [ आच्छादति यत् तत् 'छत्त्रम्' यहाँ 'छादि' णिजन्त से ष्ट्रन् = त्र प्रत्यय 'इस्मन्त्रन्क्विषु' इससे उपधा का ह्रस्व करने पर 'छद् त्र' चर्त्व—छत्त्र। इस आधार पर देखा जाय तो शिष्य भी गुरु के दोषों को ढँकने का कार्य करता है, छत्त्रसहचरित क्रिया को करता है, अतः इसे भी छत्त्रशील = छात्त्र समझा जाता है। ]

इस गण में 'स्था' शब्द का पाठ है और वह उपसर्गपूर्वक लिया जाता है—आस्था, संस्था, अवस्था। [ अकेला 'स्था' नहीं लिया जाता है। ]

[ इस गण में पठित शब्द—] छत्त्र। बुभुक्षा। शिक्षा। पुरोह। स्था। चुरा [ चुरा शीलमस्य—इस अर्थ में ण = अ करने पर 'चौरः' बनता है। ] उपस्थान। ऋषि। कर्मन्। विश्वधा। तपस् [ 'ण' करने पर—'तापसः' बनता है। ] सत्य। अनृत। शिबिका। ये छत्त्रादि हैं॥ ६२॥

'तद् अस्य' इसकी अनुवृत्ति होती है। 'तत्' इस प्रथमासमर्थ से 'अस्य' इस षष्ठी के अर्थ में 'ठक्' प्रत्यय होता है यदि जो प्रथमासमर्थ कर्म = क्रिया वृत्त = हो चुकी है, वह अध्ययनविषयक हो तो। [ 'अध्ययन' इसमें भाव या करण किसी अर्थ में ल्युट् है, अतः अध्ययन = अधीत ( पढ़ा गया ) अथवा 'अधीयते यत् तत्' ( जो पढ़ा जाय। )

१. व्युत्पादितत्वादिति उचितः पाठः।

**एकमन्यदिति विगृह्य 'तद्धितार्थ' पा० सू० २।१।५१ इति समासः, ततश्च ठक् प्रत्ययः। 'अध्ययने कर्म वृत्तम्' इत्येतत्सर्वं तद्धितवृत्तावन्तर्भवति। यस्याध्ययनप्रयुक्तस्य परीक्षाकाले पठतः स्खलितमपपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति। एवं द्वैयन्यिकः, त्रैयन्यिक इति॥**

**१८०९. बह्वच्पूर्वपदाट्ठच्॥ ६४॥ ( १६१९ )**

**बह्वच् पूर्वपदं यस्य तस्माद्बह्वच्पूर्वपदात्प्रातिपदिकाट्ठच् प्रत्ययो भवति 'तदस्य कर्माध्ययने वृत्तम्' इत्येतस्मिन्नर्थे। ठकोऽपवादः। द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। त्रयोदशान्यिकः।**

**न्यासः**

पाठरूपमीप्सितं भवति। अध्ययनशब्दो भावसाधनः, कर्मसाधनो वा। अधीतम्, अधीयते वाऽध्ययनम्। वृत्तम्= भूतम्, उत्पन्नमित्यर्थः।

**एकमन्यदित्यादि**। सम्यक् पाठापेक्षयान्योऽर्थो वेदितव्यः। **द्वैयन्यिकः, त्रैयन्यिक इति**। 'न य्वाभ्यां पदान्ताभ्याम्' इत्यैजागमः। **अध्ययने कर्म वृत्तमित्येतत् सर्वं तद्धितवृत्तावन्तर्भवतीति**। तेन तत्राध्ययनवृत्त-शब्दोऽवगतार्थत्वान्न प्रयुज्यत इति भावः॥ ६३॥

**बह्वच्पूर्वपदाट्ठच्॥ द्वादशान्यिक इति**। द्वादशशब्दो बह्वच्पूर्वपदम्। द्वौ च दश चेति द्वन्द्वः। 'द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः' इत्यात्त्वम्, ततो द्वादशान्यानीति विगृह्य 'तद्धितार्थ' इति समासः। ननु चैकादेशे कृते पूर्वोत्तरपदाभावाद् बह्वच्पूर्वपदं न भवति, न चान्तादिवद्भावोऽस्ति—'उभयत आश्रये नान्तादिवत्' इति?

**पदमञ्जरी**

भवति—अध्ययने जपो वृत्तोऽस्येति। एतच्चाभिधानस्वाभाव्याल्लभ्यते। तदेतद्वक्ष्यति—**यस्याध्ययने नियुक्तस्ये-त्यादि**[1]**। एकमन्यदिति इति**। सम्यक्पाठापेक्षया॥ ६३॥

**बह्वच्पूर्वपदाट्ठच्**॥ स्वरभेदेऽप्यन्यत्वं भवति, न वर्णभेद एवेत्याह—**उदात्ते कर्त्तव्ये इति**। उदात्तग्रहणं

**भावबोधिनी**

कर्म=क्रिया। वृत्त=हो चुका। उदा०—एकम् अन्यद् अध्ययने कर्म वृत्तम् अस्य (=एकम् अन्यद् वृत्तम् अस्य)—यह विग्रह है [ यहाँ विग्रह करके पहले ''तद्धितार्थोत्तरपदसमाहारे च'' इस सूत्र से समास, विभक्तिलोप, सवर्णदीर्घ करने पर—'एकान्य' यह बनाने के बाद ठक्=इक प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप ] [ द्वे अन्ये कर्मणी वृत्ते अस्य अध्ययने—इस विग्रह में भी पूर्ववत् पहले समासादि कार्य करके तब ठक्=इक होता है। और आदिवृद्धि का अपवाद ऐच् आगम होता है—] द्वैयन्यिकः। [ त्रीणि अन्यानि कर्माणि वृत्तानि अस्य—इसमें भी पूर्ववत् समास, ठक्,=इक, ऐच् आगम ] त्रैयन्यिकः।

[ परीक्षाकालादि में जो एक बार गलत=अशुद्ध उच्चारणादि करता है उसे 'ऐकान्यिकः, इसी प्रकार दो अशुद्धियों वाले को 'द्वैयन्यिकः' और तीन 'अशुद्धियों वाले को 'त्रैयन्यिकः' कहा जाता है। ]

'एकम् अन्यत्' यह विग्रह करके ''तद्धितार्थोत्तरपद'' इस सूत्र से समास, इसके बाद 'ठक्' प्रत्यय होता है। 'अध्ययने कर्म वृत्तम्' यह सभी तद्धितवृत्ति में अन्तर्भूत है। [ अतः अलग से प्रयुक्त नहीं होता है। ] अध्ययन में लगे हुये जिस शिष्यादि की परीक्षा के समय पढ़ते समय अपपाठ रूप स्खलित एक होता है उसे 'ऐकान्यिकः' ऐसा कहा जाता है। इसी प्रकार स्खलित के अनुसार 'द्वैयन्यिकः' 'त्रैयन्यिकः' कहा जाता है॥ ६३॥

बहुत अचों वाला जिसका पूर्वपद है ऐसे बह्वच् पूर्वपद वाले प्रातिपदिक से 'तद् अस्य कर्म अध्ययने वृत्तम्' इस अर्थ में 'ठच्' प्रत्यय होता है। उदा०—द्वादशान्यानि कर्माणि अध्ययने वृत्तानि अस्य—इस विग्रह में द्वादशान्यिकः। [ त्रयोदशान्यानि कर्माणि अध्ययने वृत्तानि अस्य—इस विग्रह में ] त्रयोदशान्यिकः। [ चतुर्दशान्यानि कर्माणि अध्ययने

---

१. यस्याध्ययनप्रयुक्तस्य इति काशिकापाठः।

चतुर्दशान्यिक इति । चतुर्दशापपाठा अस्य जाता इत्यर्थः ।

"उदात्ते कर्त्तव्ये योऽनुदात्तं करोति स उच्यतेऽन्यत्त्वं करोषीति ॥"

**१८०६. हितं भक्षाः ॥ ६५ ॥ ( १६१६ )**

**'तदस्य' इत्येव । 'तत्' इति प्रथमासमर्थात् 'अस्य' इति षष्ठ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति, तच्च भक्षाः ।**

**ननु च हितयोगे चतुर्थ्या भवितव्यम्, तत्र कथं षष्ठ्यर्थे प्रत्ययो विधीयते ? एवं तर्हि सामर्थ्याद्विभक्ति-विपरिणामो भविष्यति ।**

**अपूपभक्षणं हितमस्मै आपूपिकः । शाष्कुलिकः । मौदकिकः । हिता[1]र्थक्रिया च तद्धितवृत्तावन्तर्भवति ॥**

**न्यासः**

नैष दोषः; 'नेन्द्रस्य परस्य' इति ज्ञापकादेकादेशात् पूर्वं प्रत्ययः । **त्रयोदशान्यिक इति** । त्रयश्च दश चेति द्वन्द्वः, 'त्रेस्त्रयः' इति त्रय आदेशः । अन्यशब्दोऽत्र सम्यक् पाठापेक्षयापपाठे वर्तत इत्यत आह—**चतुर्दशापपाठा इत्यादि** । कथं पुनर्ज्ञायतेऽपपाठेऽन्यशब्दो वर्तते ? इत्याह—**उदात्त इत्यादि** । उदात्ते कर्तव्येऽनुदात्तकरणमपपाठः । तत्र य उदात्ते कर्तव्येऽनुदात्तं करोति स यस्मादन्यं करोषीत्युच्यते ततो ज्ञायतेऽन्यशब्दोऽपपाठे वर्तत इति ॥ ६४ ॥

**हितं भक्षाः** ॥ ननु हितशब्दयोगे चतुर्थ्या भवितव्यम्, 'हितयोगे चतुर्थी भवति' इत्युपसंख्यानात् 'तस्मै हितम्' इति निर्देशात् ? **सामर्थ्याद् विभक्तिविपरिणामो भविष्यतीति** । सामर्थ्यं पुनस्तदेवोपसंख्यानम् । लिङ्गञ्च—हितार्था क्रिया तद्धितवृत्तावन्तर्भवति, तेन न प्रयुज्यत इति ॥ ६५ ॥

**पदमञ्जरी**

सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥ ६४ ॥

**हितं भक्षाः** ॥ हितम्, भक्षाः—इति पदयोः पर्यवसानेन सम्बन्धः । अत्र 'हितम्' इति सामान्योपक्रमत्वादेक-वचनं नपुंसकत्वं च । 'भक्षाः' इत्यपूपादिविशेषेषूपसंग्रहात्पुंल्लिङ्गं बहुवचनं च । अत एवाह—**यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षा इति** ।

**एवं तर्हीति** । एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे । कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति ? एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम् । अपर आह—'हितं भक्षास्तदस्मै' इति सूत्रच्छेदः, ततः 'दीयते नियुक्तम्' इति तस्या एवेति ।

**हितार्थः क्रिया चेति** । हितार्थस्तावदुपात्तत्वादन्तर्भवति । भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥ ६५ ॥

**भावबोधिनी**

वृत्तानि अस्य—इस विग्रह में ] चातुर्दशान्यिकः । इसके चौदह अपपाठ = अशुद्धोच्चारण हुये—ऐसा अर्थ है ।

जहाँ उदात्त करना चाहिए था वहाँ जो अनुदात्त करता है उसके लिए कहा जाता है—'तुम दूसरा बोल रहे हो ।' अर्थात् अशुद्ध उच्चारण कर रहे हो । [ इसी प्रकार के स्थलों पर यह प्रत्यय होता है । ] ॥ ६४ ॥

'तद् अस्य' इसकी अनुवृत्ति होती है । 'तद्' इस प्रथमासमर्थ से 'अस्य' इस षष्ठी के अर्थ में ठक् प्रत्यय होता है, यदि जो प्रथमासमर्थ है वह 'हित' हो और वह भक्ष = भक्षणीय पदार्थ हो ।

प्रश्न—हित के योग में [''चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः'' और 'तस्मै हितम्' निर्देश से] चतुर्थी होनी चाहिये ? उत्तर—यदि ऐसा है तब तो सूत्रविधान-सामर्थ्य से विभक्ति का विपरिणाम हो जायगा ।

उदा०—अपूपभक्षणं हितम् अस्मै—इस विग्रह में—आपूपिकः । [ अपूप + ठक् = इक, शेष प्रक्रिया पूर्ववत् । पुआ खाना जिसके लिए हितकारी है ऐसा व्यक्ति । ] शाष्कुलिकः । [ शष्कुलीभक्षणं हितमस्य—यह विग्रह है । ] मौद-किकः । [ मोदकभक्षणं हितमस्य—यह विग्रह है । ]

१. हितार्थः क्रिया च—इति पदमञ्जर्याः व्यस्तः पाठः समीचीनः ।

**१८०७. तदस्मै दीयते नियुक्तम् ॥ ६६ ॥ ( १६१७ )**

**'तत्' इति प्रथमासमर्थाद् 'अस्मै' इति चतुर्थ्यर्थे ठक् प्रत्ययो भवति, यत्तत्प्रथमासमर्थं तच्चेद् दीयते नियुक्तम्। नियोगेनाव्यभिचारेण दीयत इत्यर्थः। अव्यभिचारः = नियोगः। अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः। आपूपिकः। शाष्कुलिकः।**

**केचित्तु नियुक्तम् = नित्यमाहुः। अपूपा नित्यमस्मै दीयन्ते आपूपिकः॥**

**१८०८. श्राणामांसौदनाट्टिठन् ॥ ६७ ॥ ( १६१८ )**

**'श्राणा', 'मांसौदन'—शब्दाभ्यां टिठन् प्रत्ययो भवति, 'तदस्मै दीयते नियुक्तम्' इत्येतस्मिन्नर्थे।**

**न्यासः**

**तदस्मै दीयते नियुक्तम्** ॥ ननु च 'तदस्य पण्यम्' इत्यतस्तदिति प्रथमा समर्थविभक्तिरनुवर्तिष्यते, तदपार्थकं पुनः प्रथमासमर्थविभक्त्युपादानम्; **'अस्मै'** इति प्रत्ययार्थोऽप्यपार्थक एव। तथा हि 'अस्य' इत्यनुवर्तते, तत्र 'दीयतो' इत्यभिसम्बन्धात्तु सम्प्रदानत्वेन भवितव्यम्। ततश्च शेषसम्बन्धे निवृत्ते चतुर्थ्यत्र विपरिणम्यते, तस्मात् 'दीयते नियुक्तम्' इत्येतावदेव वक्तव्यम्? अत्रोच्यते—समर्थविभक्त्युपादानं तावत् पूर्वसूत्रे समर्थविभक्तिविशेषः प्रत्ययमुत्पादयतीत्यस्य सूचनार्थम्। तेनेह न भवति—दुःखमस्याध्ययने वृत्तम्, अजयोऽस्याध्ययने वृत्त इति। अपपाठ एव हि वृत्ते प्रत्यय इष्यते। दीयमाने न सर्वस्मात् चतुर्थी—अरेः पृष्ठं ददातीति। च स षष्ठ्या एव प्रत्ययो विज्ञायते, चतुर्थ्यन्ताद् यथा स्यात्। एवम् 'अस्मै' इति प्रत्ययार्थो निदिश्यते ॥ ६६ ॥

**श्राणामांसौदनाट्टिठन् ॥ अथ ठञेव कस्मान्नोक्त इति।** एवं हि लघु सूत्रं भवतीति भावः। स्यादेतत्—ठञ्टिठनोर्विशेषोऽस्ति, अतष्टिठन्नुक्तो **न** ठञ्? इति आह—**न ह्यत्रेत्यादि।** द्वयोरप्यनयोर्वृद्धत्वान्नास्ति विशेषः।

**पदमञ्जरी**

**तदस्मै दीयते नियुक्तम् ॥ अव्यभिचारो नियोग इति।** अस्मिन्पक्षे नियुक्तमिति क्रियाविशेषणत्वात्कर्मणि द्वितीया। **अग्रभोजनमस्मै नियुक्तं दीयत इति।** यद्यग्रभोजनं दीयते तदास्मै एवेत्येष नियोगार्थः। तेन कदाचिल्लोपेऽपि न नियुक्तताया हानिः।

**केचित्त्विति।** अत्र पक्षे नियुक्तमित्यन्तसंयोगे द्वितीया ॥ ६६ ॥

**श्राणामांसौदनाट्टिठन् ॥** 'श्रा पाके' ( धा० पा० १०५३ ) क्तः, क्षीरहविषोरेव निपातनाच्छृभावाभावे 'संयोगादेरातो धातोः' इति निष्ठातकारस्य नकारः। श्राणा = यवागूः। मांसमिश्र ओदनो मांसौदनः।

**भावबोधिनी**

हित अर्थ और [ भक्षण ] क्रिया तद्धितवृत्ति में अन्तर्भूत रहती है। [ अतः इनका प्रयोग नहीं किया जाता है। ] ॥ ६५ ॥

'तत्' इस प्रथमासमर्थ से 'अस्मै' इस चतुर्थी के अर्थ में 'ठक्' प्रत्यय होता है यदि जो प्रथमासमर्थ है वह नियुक्त रूप से दिया जाता हो तो। नियोग से = विना व्यभिचार के दिया जाता है, यह अर्थ है। अव्यभिचार = नियोग। उदा०—अग्रे भोजनम् अस्मै नियुक्तं दीयते—इस विग्रह में—आग्रभोजनिकः। [ अग्रभोजन + ठक् = इक, आदिवृद्धि। जो भोजन आगे = सबसे पहले दिया जाता है वह इसको ही दिया जाता है, यही नियोग = अवधारण है। अतः यदि कभी नहीं भी दिया जाय तो कोई हानि नहीं है। ] आपूपिकः। शाष्कुलिकः। [ अपूपाः दीयन्ते नियुक्तम् अस्मै। शाष्कुल्यः दीयन्ते नियुक्तम अस्मै इस प्रकार के अर्थ हैं ]

कुछ लोग—नियुक्त = नित्य को कहते हैं। अपूप = पुआ जिसे नित्य दिये जाते हैं वह 'आपूपिक' है ॥ ६६ ॥

'तत् अस्मै दीयते नियुक्तम्'—इस अर्थ में 'श्राणा' और 'मांसौदन' इन शब्दों से टिठन् प्रत्यय होता है। यह ठक् का अपवाद है। इकार केवल उच्चारण की सुविधा के लिए है। टकार टित् मान कर ङीप् करने के लिए है।

ठकोऽपवादः । इकार उच्चारणार्थः । टकारो ङीबर्थः । श्राणा नियुक्तमस्मै दीयते श्राणिकः, श्राणिकी । मांसौदनिकः, मांसौदनिकी ।

अथ ठञेव कस्मान्नोक्तः, न ह्यत्र ठञष्टिठनो वा विशेषोऽस्ति ? मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति, तत्र वृद्ध्यभावो विशेषः—ओदनिकः, ओदनिकी ॥

## १८०९. भक्तादणन्यतरस्याम् ॥ ६८ ॥ ( १६१९ )

भक्तशब्दादण् प्रत्ययो भवत्यन्यतरस्यां 'तदस्मै दीयते नियुक्तम्' इत्येतस्मिन्विषये । ठकोऽपवादः । पक्षे सोऽपि भवति । भक्तमस्मै दीयते नियुक्तं भाक्तः, भाक्तिकः ॥

## १८१०. तत्र नियुक्तः ॥ ६९ ॥ ( १६२० )

'तत्र' इति सप्तमीसमर्थात् 'नियुक्तः' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । नियुक्तः = अधिकृतः, व्यापारित

### न्यासः

योऽपि 'वृद्धिनिमित्तस्य' इत्यादिना ठञि पुंवद्भावप्रतिषेधः, तस्य 'न कोपधायाः' इति टिठन्यप्यभावान्नात्र ठञ्टिठनोः कश्चिद्विशेषोऽस्ति । मांसौदनेत्यादिना विशेषं दर्शयति ।

केचिदिति वचनाद् विगृहीतग्रहणं केचिन्नेच्छन्तीत्येतदुक्तं भवति । तन्मते ठञेव वक्तव्यः । टिठन्वचनं वैचित्र्यार्थं वेदितव्यम् ॥ ६७ ॥

भक्तादणन्यतरस्याम् ॥ ६८ ॥ तत्र नियुक्तः ॥ अथ 'नियुक्तः' इति वर्तमाने पुनर्नियुक्तग्रहणं कस्मात्

### पदमञ्जरी

ठञेव कस्मान्नोक्त इति । लाघवात्स एव युक्तो वक्तुमिति भावः । न ह्यत्रेति । द्वे अप्येते प्रकृती पूर्वमेव वृद्धे, योऽपि 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधः, स टिठन्यपि 'न कोपधायाः' इति भवति । मांसौदनग्रहणमित्यादि । ठञ्येव वक्तव्ये टिठनो वचनमेवात्र प्रमाणमिति तेषां भावः ॥ ६७ ॥

भक्तादणन्यतरस्याम् ॥ भजेर्भक्तम् = अन्नम् ॥ ६८ ॥

तत्र नियुक्तः ॥ नियुक्तमिति प्रकृते पुनर्नियुक्तग्रहणमर्थभेदार्थमेव, तमेवार्थभेदं दर्शयति—नियुक्तोऽधिकृत

### भावबोधिनी

उदा०—श्राणा नियुक्तं दीयते अस्यै—इस विग्रह में—श्राणिकः, श्राणिकी । [ श्राणा = लप्सी जिसको नियमित रूप से दी जाती है, ऐसा पुरुष और स्त्री अर्थ में ङीप् होने से 'श्राणिकी' बनता है । ] मांसौदनिकः, मांसौदनिकी । [ मांसौदनं नियुक्तं दीयते अस्मै—इस विग्रह में पुंलिङ्ग में बनता है । मांसौदनं नियुक्तं दीयते अस्यै—यह विग्रह स्त्रीलिंग में है । ]

यहाँ ठञ् प्रत्यय ही क्यों नहीं कहा गया क्योंकि ठञ् और टिठन् में कोई अन्तर नहीं है ? [ दोनों शब्दों में आदिवृद्धि की आवश्यकता नहीं है । ] [ समाधान ] कुछ लोग मांसौदन का ग्रहण संघात और विगृहीत अर्थात् समुदाय और अलग-अलग के लिए मानते हैं । तब वृद्धि न होना टिठन् का प्रयोजन समझना चाहिये—ओदनिकः, ओदनिकी । [ ओदनः अस्मै दीयते नियुक्तम्—यह विग्रह है । ओदन + टिठन् = ठ = इक । आदिवृद्धि नहीं होती है । ] ॥ ६७ ॥

'तद् अस्मै दीयते नियुक्तम्' इस विषय में 'भक्त' शब्द से विकल्प से अण् प्रत्यय होता है । यह ठक् का अपवाद है । पक्ष में ठक् भी होता है । उदा०—भक्तम् अस्मै दीयते नियुक्तम्—इस विग्रह में—भाक्तः, भाक्तिकः [ दो रूप ] होते हैं । [ जिसे भात नियमित रूप से दिया जाता है वह व्यक्ति । ] ॥ ६८ ॥

'तत्र' इस सप्तमीसमर्थ से 'नियुक्तः' इस अर्थ में 'ठक्' प्रत्यय होता है । नियुक्त = अधिकृत = व्यापारित ( लगाया गया ) यह अर्थ है । उदा०—शुल्कशालायां नियुक्तः—इस विग्रह में—शौल्कशालिकः । [ शुल्कशाला = कर वसूली के

इत्यर्थः । शुल्कशालायां नियुक्तः शौल्कशालिकः । आकरिकः[1] । आपणिकः । गौल्मिकः । दौवारिकः ॥

**१८११. अगारान्ताट्ठन् ॥ ७० ॥ ( १६२१ )**

अगारशब्दान्तात्प्रातिपदिकाट्ठन् प्रत्ययो भवति, 'तत्र नियुक्तः' इत्येतस्मिन्विषये । ठकोऽपवादः । देवागारे नियुक्तो देवागारिकः । कोष्ठागारिकः । भाण्डागारिकः ।

**१८१२. अध्यायिन्यदेशकालात् ॥ ७१ ॥ ( १६२२ )**

'तत्र' इत्येव । सप्तमीसमर्थाददेशवाचिनः प्रातिपदिकादकालवाचिनश्चाध्यायिन्यभिधेये ठक् प्रत्ययो भवति । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते, तत इदं प्रत्ययविधानम् ।

**न्यासः**

क्रियते ? अर्थभेदात् । न तस्य ह्यव्यभिचारलक्षणो नित्यभावोऽर्थः । अस्य तु ततोऽन्य एवार्थो यदाह—**नियुक्तोऽधिकृत इत्यादि** ॥ ६९ ॥

**अगारान्ताद् ठन्** ॥ ७० ॥ **अध्यायिन्यदेशकालात्** ॥ अध्येतुं शीलमस्येत्यत्यध्यायी, ताच्छीलिको णिनिः । **अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति** । अप्रतिषिद्धाभ्यां देशकाल-

**पदमञ्जरी**

**इत्यादि** । किञ्च-प्रकृतं नियुक्तग्रहणं प्रकृत्यर्थविशेषणस्य दीयत इत्यस्योपाधिः, न तस्येह प्रत्ययार्थत्वं शक्यं विज्ञातुम् ॥ ६९ ॥ ७० ॥

**अध्यायिन्यदेशकालात्** ॥ अधीते इत्यध्यायी, आवश्यके णिनिः, ग्रह्यादिलक्षो वा । **अध्यनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति** । अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्यास्पर्शनीयवत् । तद्यथा—शूद्रादिप्राणिभिर्भक्ष्यमाणमपि लशुनमभक्ष्यमित्युच्यते, स्पृश्योऽपि चण्डालोऽस्पृश्य इत्युच्यते, अप्रतिषिद्धाभ्यां भक्ष्यस्पृश्याभ्यामन्यत्वात्; तद्वदिहापि श्मशानचतुर्दश्यौ स्वरूपेण

**भावबोधिनी**

स्थान पर नियुक्त किया गया पुरुष । ] आकरिकः । [ आकरे नियुक्तः यह विग्रह है । ] आपणिकः । [ आपणे नियुक्तः ] गौल्मिकः । [ गुल्मे नियुक्तः ] दौवारिकः । [ द्वारे नियुक्तः—इस अर्थ में ठक् = इक, आदिवृद्धि का अपवाद ऐच् आगम द्औवार् + इक = दौवारिकः । दरवाजे पर नियुक्त चपरासी आदि । ] ॥ ६९ ॥

'तत्र नियुक्तः' इस विषय में अगार—शब्दान्त प्रातिपदिक से ठन् प्रत्यय होता है । ठक् का अपवाद है । उदा०—देवागारे नियुक्तः—इस अर्थ में देवागारिकः । [ कोष्ठागारे नियुक्तः – इस अर्थ में ] कोष्ठागारिकः । [ भाण्डागारे नियुक्तः —इस अर्थ में ] भाण्डागारिकः । [ इन स्थानों पर नियुक्त कर्मचारी के लिए ये शब्द है । वृद्धि का निमित्त न होने से आदिवृद्धि नहीं होती है । ] ॥ ७० ॥

'तत्र' इसकी अनुवृत्ति है । सप्तमीसमर्थ जो अदेशवाची और अकालवाची प्रातिपदिक हैं उनसे अध्यायिनी= पढ़नेवाला अर्थ में ठक् प्रत्यय होता है । जो देश = स्थान और काल अध्ययन के लिए शास्त्र द्वारा प्रतिषिद्ध हैं वे यहाँ 'अदेश, अकाल' शब्द से कहे जाते हैं, इस प्रकार के शब्दों से यह प्रत्यय किया जा रहा है । उदा०—श्मशाने अधीते—श्माशानिकः । चतुष्पथे अधीते—चातुष्पथिकः । [ श्मशान और चौराहा अध्ययन के लिए वर्जित स्थान है, इनमें जो अध्ययन करता है उसके लिए ये शब्द प्रयुक्त होते हैं । इसी प्रकार ] वर्जित कालवाचक से—चतुर्दश्याम् अधीते—इस अर्थ में चातुर्दशिकः । [ अमावास्यायाम् अधीते—इस विग्रह में ] आमावास्यिकः । [ शास्त्रीय विधान के अनुसार इन

---

१. 'आन्तरिकः' इति पाठा० ।

श्मशानेऽधीते श्माशानिकः। चातुष्पथिकः। अकालात्—चतुर्दश्यामधीते चातुर्दशिकः। आमावास्यिकः।
अदेशकालादिति किम्? स्रुघ्नेऽधीते। पूर्वाह्णेऽधीते॥

१८१३. कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति॥ ७२॥ (१६२३)

'तत्र' इत्येव। कठिनशब्दान्तात्सप्तमीसमर्थात् प्रस्तारसंस्थानशब्दाभ्यां च ठक् प्रत्ययो भवति, 'व्यवहरति' इत्येतस्मिन्नर्थे। व्यवहारः=क्रियातत्त्वम्, यथा—लौकिकव्यवहार इति। वंशकठिने व्यवहरति

न्यासः

अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात् पर्युदासवृत्त्याऽभक्ष्यास्पर्शनीयवदध्ययनस्येति। अत आह—तस्याध्यायिना प्रत्ययार्थेन सन्निधापितत्वात्। न हि विनाध्ययनेनाध्याय्युपपद्यते॥ ७१॥

**कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति॥** अल्पाच्तरस्य प्रस्तारशब्दस्य च पूर्वनिपातमकुर्वन्नेतत् सूचयति—अन्यदपि कार्यं लक्षणप्राप्तं न भवति। तेन कठिनान्तशब्दस्य ग्रहणं न भवतीति कठिनशब्दान्तं प्रातिपदिकं गृह्यते। व्यवहरतिरयमस्ति पणिना समानार्थः—यस्य 'व्यवहृपणोः समर्थयोः' इत्यत्र ग्रहणम्, अस्ति विवादे—व्यवहारे परिहृतमिति, अस्ति च विक्षेपे शलाकां व्यवहारतीति, अस्ति च लौकिके क्रियातत्त्वे—लौकिको व्यवहार इति; इह तु क्रियातत्त्वे वर्तमानस्य ग्रहणमित्येतद्दर्शयितुमाह—**व्यवहारः क्रियातत्त्वमिति।** क्रियाया अविपरतस्वभावत्वादि क्रियातत्त्वम्। **यथेत्यादि।** लौकिको व्यवहार इत्यत्र यथा व्यवहारः क्रियातत्त्वे

पदमञ्जरी

देशकालावेव सन्तावप्रतिषिद्धाभ्यां देशकालाभ्यामन्यत्वाददेशकालशब्देनोच्येते। 'अध्ययनस्य' इत्येतदध्यायिना प्रत्ययार्थेन सन्निधापितत्वाल्लभ्यते॥ ७१॥

**कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति॥** व्यवहरतिः सम्भवति पणिना समानार्थः, आह हि—'व्यवहृपणोः समर्थयोः' इति; अस्ति विवादे—व्यवहारे पराजित इति, अस्ति विक्षेपे—शलाकां व्यवहरतीति, अस्ति क्रियातत्त्वे; तदिह चरमस्य ग्रहणं तद्धितस्वभावादित्याह—**व्यवहारः क्रियातत्त्वमिति।** यत्र देशे या क्रिया यथानुष्ठेया तत्र तस्यास्तथानुष्ठानमित्यर्थः। वंशा=वेणवः कठिना यस्मिन्वंशकठिनो देशः। वर्ध्री=चर्मविकारः

भावबोधिनी

तिथियों में व्याकरणादि शास्त्रों का अध्ययन शास्त्रनिषिद्ध है। अतः जो पुरुष चतुर्दशी में अध्ययन करता है, उसे 'चातुर्दशिकः'। जो अमावास्या में अध्ययन करता है, उसे 'आमावास्यिकः' कहा जाता है।]

वर्जित देश और काल के वाचक से ही यह प्रत्यय होता है—इसका क्या फल है? स्रुघ्नेऽधीते। पूर्वाह्णे अधीते। [ये स्थान और काल वर्जित नहीं हैं, अतः इनमें अध्ययन करने वाले के लिए यह प्रत्यय नहीं होता है।]॥ ७१॥

'तत्र' इसकी अनुवृत्ति होती है। 'कठिन' शब्द जिसके अन्त में है ऐसे सप्तमी समर्थ प्रातिपदिक से तथा 'प्रस्तार' और 'संस्थान' इन शब्दों से 'व्यवहरति' [व्यवहार करता है]—इस अर्थ में ठक् प्रत्यय होता है। व्यवहार=क्रियातत्व है, जैसे—लौकिक व्यवहार [इसमें देखा जाता है।] उदा०—वंशकठिने व्यवहरति—इस अर्थ में—वांशकठिनिकः चक्रचरः। [वंशाः=वेणवः कठिनाः यस्मिन् देशे सः—वंशकठिनः। जहाँ कठोर बांस होते हैं उस देश को 'वंशकठिन' कहा जाता है। वहाँ समुचित व्यवहार करने वाला पुरुष 'वांशकठिनिकः' कहा जाता है। यहाँ "वाऽऽहिताग्न्यादिषु" सूत्र से विशेषणवाची का परनिपात होने से 'कठिन' शब्द बाद में है। आगे के उदाहरणों में भी यही स्थिति समझनी चाहिए।] वार्ध्रकठिनिकः। [वर्ध्री=चमड़े का बना पात्रविशेष=मशक। वर्ध्री कठिना अस्मिन् देशे सः—वर्ध्रकठिनः, तत्र व्यवहरति—इस विग्रह में यह रूप है। कठोर चर्मपात्रवाले देश में समुचित व्यवहार करने वाला।] प्रास्तारिकः

**वांशकठिनिकश्चक्रचरः । वार्धकठिनिकः । प्रास्तारिकः । सांस्थानिकः ॥**

**१८१४. निकटे वसति ॥ ७३ ॥ ( १६२४ )**

**निकटशब्दात्सप्तमीसमर्थाद् 'वसति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति । यस्य शास्त्रतो निकटवासस्तत्रायं विधिः । 'आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्यम्' इति शास्त्रम् । निकटे वसति नैकटिको भिक्षुः ॥**

**१८१५. आवसथात् ष्ठल् ॥ ७४ ॥ ( १६२५ )**

**'तत्र' इत्येव । आवसथशब्दात्सप्तमीसमर्थाद् 'वसति' इत्येतस्मिन्नर्थे ष्ठल् प्रत्ययो भवति । लकारः स्वरार्थः, षकारो ङीषर्थः । आवसथे वसति आवसथिकः । आवसथिकी ।**

**ठकः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययो विधीयते ॥**

**न्यासः**

वर्तते, तथेहापि दर्शयति । क्रियातत्त्वे वर्तमानस्य ग्रहणम् । 'तत्र' इति सप्तम्यधिकारे सप्तमीनिर्देशात् प्रसिद्धयुपसंग्रहणं लभ्यते । **वांशकठिनिकश्चक्रचर इति ।** यश्चक्रचरः सन्ननुष्ठेयां क्रियां शास्त्रोक्तमविगीतां वंशकठिनेऽतिष्ठति स एवमुच्यते ॥ ७२ ॥

**निकटे वसति** ॥ निकटे समीप इत्यर्थः । यत्र शास्त्रतो निकटवासस्तयायं विधिः । एतच्च सप्तम्यां समर्थविभक्तौ लब्धायां पुनः सप्तमीनिर्देशात् प्रसिद्धयुपसंग्रहणेन लभ्यते । स ह्येवमर्थः क्व:—इष्टे विषये सप्तम्यन्ते यथा स्यात्, अनिष्टान् मा भूत् । स पुनः शास्त्रतो निकटवास आरण्यकस्य भिक्षोरिति दर्शयति—**आरण्यकेन भिक्षुणेत्यादि** ॥ ७३ ॥

**पदमञ्जरी**

कठिना अस्मिन्वध्रं कठिनः, आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः । चक्रयुक्तेन शकटेन चरतीति **चक्रचरः**, स देशाननुक्रमेण चरन् तत्रानुष्ठेयक्रियाविपरीतं चरन्नेवमुच्यते । संस्थानप्रस्तारौ सन्निवेशौ ॥ ७२ ॥

**निकटे वसति** ॥ अरण्यं निवासो यस्य स आरण्यकः, 'अरण्यान्मनुष्ये' इति वुञ् । भिक्षुः = संन्यासी । **ग्रामात्क्रोशे इति** । 'यतश्च निर्द्धारणम्' इति पञ्चमी अयं च विशेषोऽभिधानस्वभावाल्लभ्यते ॥ ७३ ॥

**आवसथात् ष्ठल्** ॥ आवसन्त्येतमिति आवसथः, 'उपसर्गे वसेः' ( दश० उ० ६.३९ ) इत्यथप्रत्ययः ।

**भावबोधिनी**

[ प्रस्तारेषु व्यवहरति—यह अर्थ है । ] संस्थानेषु व्यवहरति—यह अर्थ है । प्रस्तार और संस्थान दोनों शब्द अवयव-संन्निवेश के वाचक हैं । कुछ के अनुसार 'प्रस्तार' यज्ञवाची है । इनमें जैसा अपेक्षित हो वैसा व्यवहार करने वाला पुरुष । ] ॥ ७२ ॥

सप्तमीसमर्थ 'निकट' शब्द से 'वसति' ( रहता हैं ) इस अर्थ में ठक् प्रत्यय होता है । जो शास्त्र से निकट रहता है, उसके विषय में यह सूत्र विधान करता है क्योंकि "आरण्यक भिक्षु को गाँव से एक कोस पर रहना चाहिए ।" ऐसा शास्त्रवचन है । उदा०—निकटे वसति—नैकटिकः भिक्षुः । [ भिक्षु को दूर रहना शास्त्रविहित है । यदि वह ग्रामादि के निकट रहता है तब यह प्रत्यय किया जाता है ] ॥ ७३ ॥

'तत्र' इसकी अनुवृत्ति होती है । सप्तमीसमर्थ 'आवसथ' शब्द से 'वसति' इस अर्थ में ष्ठल् प्रत्यय होता है । लकार [ "उपोत्तमं लिति" से ] स्वर करने के लिए है, षकार [ "षिद्गौरादिभ्यश्च" से ] ङीष् करने के लिए है । उदा० —आवसथे वसति —इस अर्थ में आवसथिकः । आवसथिकी । [ रहने योग्य वस्ती को आवसथ कहा जाता है । ]

यहाँ ठक् प्रत्यय की अवधि पूरी होती है, इसके आगे अब दूसरे प्रत्ययों का विधान किया जा रहा है ॥ ७४ ॥

१८१६. प्राग्घिताद्यत् ॥ ७५ ॥ ( १६२६ )

'तस्मै हितम्' (५.१.५) इति वक्ष्यति । प्रागेतस्माद्धितसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामो यत्प्रत्ययस्तेष्वधिकृतो वेदितव्यः । वक्ष्यति—'तद्वहति रथयुगप्रासङ्गम्' (४.४.७६)। रथ्यः । युग्यः । प्रासङ्ग्यः ॥

१८१७. तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥ ( १६२७ )

'तत्' इति द्वितीयासमर्थेभ्यो रथयुगप्रासङ्गेभ्यः 'वहति' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ।

'रथसीताहलेभ्यो यद्विधौ ( कात्या० वा० १ ) इति तदन्तविध्युपसंख्यानात् परमरथ्य इत्यपि भवति ॥

न्यासः

आवसथात् ष्ठल् ॥ ७४ ॥ प्राग्घिताद् यत् ॥ ७५ ॥ तद्वहति रथयुगप्रासङ्गम् ॥ तदिति द्वितीयासमर्थविभक्तौ लब्धायां रथादीनां द्वितीयानिर्देश इष्टाद् यथा स्यात्, अनिष्टान्मा भूत् । तेनेहैव भवति—गौर्युग्य इति, इह न भवति—युगं वहति राजा कलिं द्वापरं वेति । तथा प्रासज्यत इति प्रासङ्गः, यत् काष्ठं दमनकाले वत्सानां कण्ठ आसज्यते तत्प्रासङ्गः, तं वहति प्रासङ्ग्यः । इह न भवति—प्रसङ्गादागतं प्रासङ्गम् । 'युग्यञ्च पत्त्रे' इति निपातनाद् युग्यशब्दे सिद्धे युगग्रहणं स्वरार्थम् । न युग्यमयुग्यमित्यत्र नञो गुणप्रतिषेधे 'सम्पाद्यर्हहितालमर्थास्तद्धिताः' इत्यतो नञ इत्यनुवर्तमाने 'ययतोश्चातदर्थे' इति नञ उत्तरस्यान्तोदात्तत्वं यथा स्यात् ।

पदमञ्जरी

ठकः पूर्णो विधिरिति[1] । प्राग्वहतीयस्य ठको विधानं पूर्णमित्यर्थः, अवधिरिति पाठे पूर्णः प्राप्त इत्यर्थः ॥७४॥७५॥

तद्वहति रथयुगप्रासङ्गम् ॥ ननु य एवार्थो रथं वहतीति स एव रथस्य वोढवि, तत्र तस्येदं रथाद्यदित्येव सिद्धं नार्थो रथग्रहणेन ? ननु तत्रोक्तं रथाङ्ग एवेष्यत इति; वोढर्यपि प्रयोगदर्शनादिष्यताम् ? इदं तर्हि प्रयोजनम्—द्वौ रथौ वहति द्विरथ्यः, 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुग्मा भूत्, 'रथसीताहलेभ्यो यद्विधौ' ( वा० ४७३ ) इति तदन्तविधिः । 'युग्यं च पत्त्रे' इत्येव सिद्धम् । इह युगग्रहणमयुग्यमित्यत्र 'ययतोश्चातदर्थे' इति स्वरार्थम्, निपातनस्य तु क्यबन्तत्वादेष स्वरो न स्यात् । रथाङ्गवचनोऽयं युगशब्दः, इह न भवति—युगं वहति राजा कलिं द्वापरं वेति । प्रासङ्गशब्दो वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते तद्वाची गृह्यते, प्रासज्यते इति प्रासङ्गः, इह न भवति—प्रसङ्गादागतः प्रासङ्गस्तं वहतीति । एतच्चाभिधान-

भावबोधिनी

"तस्मै हितम्" ( पा. सू. ५।१।५ ) यह सूत्र आगे कहा जायगा । इस 'हित' शब्द के उच्चारण से पहले यहाँ से आगे जिन प्रत्ययों का विधान किया जायगा, उनमें 'यत्' प्रत्यय का अधिकार समझना चाहिए । आगे "तद् वहति रथयुगप्रासङ्गम्" यह सूत्र कहा जा रहा है—[ इसके उदा० ] रथ्यः । युग्यः । प्रासङ्ग्यः । [ इनकी व्युत्पत्ति अगले सूत्र की व्याख्या में दी जायगी । ] ॥ ७५ ॥

'तत्' इस द्वितीयासमर्थ 'रथ युग और प्रासङ्ग—' इन शब्दों से 'वहति' ( ढोता है ) इस अर्थ में 'यत्' प्रत्यय होता है । उदा०—रथं वहति—इस अर्थ में—रथ्यः । [ रथ + यत् = य, भसंज्ञा, अलोप । रथ ढोने वाला घोड़ा आदि ] । युग्यः । प्रासङ्ग्यः । [ युगं वहति—जुआ ढोता है, यह अर्थ है । प्रारम्भिक अवस्था में बछड़े या बैल आदि को भागने से रोकने के लिए उनके गले में जो बड़ी सी लकड़ी बाँध कर लटका दी जाती है जिससे वे अपनी इच्छानुसार नहीं भाग सकते, उस काष्ठ को 'प्रासङ्ग' कहा जाता है । उसे ढोने वाला जो बैल आदि हैं उसे 'प्रासङ्ग्यः' कहा जाता है । ] "रथ, सीता और हल—इन शब्दों से यत् प्रत्यय की विधि में तदन्तविधि का उपसंख्यान करना चाहिए ।" इस

१. 'पूर्णोऽवधिः' इति काशिकापाठः ।

**१८१८. धुरो यड्ढकौ ॥ ७७ ॥ ( १६२८ )**

'तद्वहति' इत्येव। 'धुर्' इत्येतस्माद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे यत् ढक्—इत्येतौ प्रत्ययौ भवतः। धुरं वहतीति धुर्यः, धौरेयः ॥

**१८१९. खः सर्वधुरात् ॥ ७८ ॥ ( १६३० )**

'तद्वहति' इत्येव। सर्वधुराशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति। सर्वधुरां वहति सर्वधुरीणः।

स्त्रीलिङ्गे न्याय्ये 'सर्वधुरात्' इति प्रातिपदिकमात्रोपेक्षो निर्देशः। 'खः' इति योगविभागः कर्त्तव्य

**न्यासः**

तेन न ह्येकस्वरो लभ्यते। तस्य क्यबन्तत्वात् ॥ ७६ ॥

**धुरो यड्ढकौ** ॥ अथ 'धुरो ढक् च' इत्येवं कस्मान्नोक्तम्, चकारो समुच्चयार्थः, यथाभिहिते प्रत्यये विज्ञायमाने यदेव भविष्यति ? नैतदेवम्; यो हि धुरं वहति धुरोऽसौ वोढा भवति। तस्य यथाविहिते प्रत्यये विज्ञायमाने 'तस्येदम्' इत्यणपि स्यात्। यद्ग्रहणात् तस्येदंविवक्षायामपि यदेव भवति ॥ ७७ ॥

**खः सर्वधुरात्** ॥ **सर्वधुरमिति**। सर्वा चासौ धूश्चेति 'पूर्वकालैक' इत्यादिना समासः। 'ऋक्पूरब्धूः' इत्यादिना समासान्तः।

**स्त्रीलिङ्गे न्याय्य इति**। तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति धूःशब्दस्य यल्लिङ्गं तदेव न्याय्यमिति। तत्र 'सर्वधुरायाः' इति सूत्रे कर्त्तव्ये यतः सर्वधुरादिति नपुंसकलिङ्गेन निर्देशः

**पदमञ्जरी**

स्वभावाल्लभ्यते ॥ ७६ ॥

**धुरो यड्ढकौ** ॥ धूर्धूर्वतेः 'भ्राजभास' इति क्विप्, 'राल्लोपः'। **धुरं वहतीति धुर्य इति**। 'न भकुर्छुराम्' इति प्रतिषेधात् 'हलि च' इति दीर्घाभावः। ढञत्र विधीयते, न तु ढकञ्। धौरेयो भविता पितुरिति च दृश्यते, धौरेयक इति स्वार्थिके कनि भवति।

इह 'धुरो ढक् च' इति वक्तव्यम्, चकारात्प्राग्घितीयो यद्भविष्यति ॥ ७७ ॥

**खः सर्वधुरात्** ॥ **स्त्रीलिङ्गनिर्देशो न्याय्य[1] इति**। सर्वा चासौ धूश्चेति 'पूर्वकाल' इत्यादिना समासः, 'ऋक्पूरब्धूः' इत्यकारः समासान्तः, तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति वचनात्

**भावबोधिनी**

वचन के अनुसार तदन्तविधि होने से 'परमरथ्यः' यह भी बनता है। अर्थात् तदन्तविधि मान कर 'परमरथ' से भी यत् होता है ॥ ७६ ॥

'तद् वहति' इसकी अनुवृत्ति होती है। द्वितीयासमर्थ 'धुर्' इस शब्द से 'वहति' इस अर्थ में 'यत्' और 'ढक्' दो प्रत्यय होते हैं। उदा०—धुरं वहति—इस अर्थ में—धुर्यः, धौरेयः। [ धुर् = भार, उत्तरदायित्व का वहन करने वाला, अग्रणी। ]

[इस सूत्र को केवल 'ढक्' का वैकल्पिक विधान करना चाहिए था क्योंकि 'यत्' तो सामान्यतः प्राप्त ही है] ॥७७॥

'तद् वहति' इसकी अनुवृत्ति होती है। द्वितीयासमर्थ 'सर्वधुरा' शब्द से 'वहति' इस अर्थ में 'ख' प्रत्यय होता है। उदा० सर्वधुरां वहति—इस विग्रह में—सर्वधुरीणः। [ सर्वधुरा + ख, "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" सूत्र से 'ख' का 'ईन' आदेश, भसंज्ञा आलोप। ]

[ सूत्र में 'सर्वधुरायाः' ऐसा स्त्रीलिङ्ग प्रयोग करना उचित था अतः 'सर्वधुरात्' यह निर्देश केवल प्रातिपदिक को मान कर किया गया है। [ सर्वा चासौ धूश्च—इसका समास करके "ऋक्पूरब्धूःपथामानक्षे" इस सूत्र से 'अ'

---

१. 'स्त्रीलिङ्गे न्याय्ये' इति काशिकापाठः।

इष्टसंग्रहार्थः । उत्तरधुरीणः । दक्षिणधुरीणः ॥

**१८२०. एकधुराल्लुक् च ॥ ७९ ॥ ( १६३१ )**

'तद्वहति' इत्येव । एकधुराशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे खः प्रत्ययो भवति तस्य च लुग्भवति । वचनसामर्थ्यात्पक्षे लुग्भवति । एकधुरां वहति एकधुरीणः । एकधुरः ॥

**१८२१. शकटादण् ॥ ८० ॥ ( १६३२ )**

'तद्वहति' इत्येव । शकटशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति । शकटं वहति

**न्यासः**

स शब्दरूपापेक्षः, अर्थापेक्षे हि निर्देशे परवल्लिङ्गता भवति । अयन्तु शब्दरूपापेक्षः, शब्दरूपञ्च नपुंसकमिति नपुंसकेनैव निर्देशो युक्तः । अर्थविवक्षायां तु स्त्रीलिङ्गमेव भवति—सर्वधुरां वहतीति ॥ ७८ ॥

**एकधुराल्लुक् च ॥** 'एकधुरात्' इत्ययमपि शब्दरूपापेक्षया निर्देशः । अर्थापेक्षया हि परवल्लिङ्गता भवति । अत्रापि पूर्ववत् समाससमासान्तौ वेदितव्यौ । वचनसामर्थ्यात् पक्षे लुग् विधीयते । यदि हि नित्यो लुक् स्यात् खस्य विधानमनर्थकं स्यात्, यत एव हि लुकं विदध्यात् । ननु चैकधुरशब्दात् केनचिद् विहितो न स्यात्, तस्य कथं लुक् शक्यते विज्ञातुम् ? लुग्वचनादेव यतोऽपि विधिरनुगम्यते इत्यदोषः ॥ ७९ ॥

**शकटादण् ॥** रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम्; 'तस्येदम्' इत्यनेव सिद्धत्वात् । शब्दभेदा-

**पदमञ्जरी**

स्त्रीलिङ्गनिर्देशस्य न्याय्यत्वम्, यथा—'बन्धुनि बहुव्रीहौ' इत्यत्र । **दक्षिणधुरीणः ।** दक्षिणां धुरं वहति, उत्तरां धुरं वहतीति तद्धितार्थे समासः, ततोऽकारः समासान्तः ॥ ७८ ॥

**एकधुराल्लुक् च ॥ एकधुरादिति** निर्देशः सर्वधुरादित्यनेन व्याख्यातः । चकारेण खोऽनुकृष्यते, तेन स तावद्विधेयः, प्रत्ययादर्शनस्य च लुक् संज्ञा । न चान्योऽत्र प्रत्ययः, तेन खस्यैव लुग्विज्ञायते, तस्य यदि लुक् स्याच्चकारेणानुकृष्य विधानमनर्थकं स्यात् । एकधुराल्लुगिति वक्तव्यम्, लुक् स्वभावादनन्तरस्य खस्य प्राकरणिकस्य यतो वा विधिरनुमास्यते, तदाह—**तस्य च लुग्भवतीति । एकधुरीण इति ।** एकां धुरं वहतीति तद्धितार्थे समासः, तत्रोक्तोऽकारः समासान्तः ततः खः ॥ ७९ ॥

**शकटादण् ॥** शकटादण्विधानमनर्थकम् । कथं शाकट इति ? 'तस्येदम्' इत्यण् भविष्यति, यो हि शकटं

**भावबोधिनी**

समासान्त प्रत्यय और 'टाप्' करने पर स्त्रीलिङ्ग में 'सर्वधुरा' ऐसा बनता है । सूत्र में 'सर्वधुरात्' यह निर्देश उचित नहीं है, इस शंका का समाधान यह है कि यहाँ प्रातिपदिकमात्र को मान कर लिख दिया गया है । ]

इष्टरूपों का संग्रह करने के लिए इस सूत्र में 'ख' ऐसा योग-विभाग [ अलग सूत्र ] करना चाहिए । अतः उत्तरधुरीणः । दक्षिणधुरीणः । [ उत्तरधुरां वहति, दक्षिणधुरां वहति—ये विग्रह हैं । तदन्तविधि का निषेध होने से यह कल्पना आवश्यक है । ] ॥ ७८ ॥

'तद् वहति' इसकी अनुवृत्ति होती है । द्वितीयासमर्थ 'एकधुरा शब्द से 'वहति' इस अर्थ में 'ख' प्रत्यय होता है और उसका लुक् होता है । इस वचन के सामर्थ्य से पाक्षिक लुक् होता है । उदा०—एकधुरां वहति—इस विग्रह में—एकधुरीणः, एकधुरः । [ जब ख = ईन होता है तब प्रथम रूप और जब लोप होता है तब दूसरा रूप । ] ॥ ७९ ॥

'तद् वहति' इसकी अनुवृत्ति होती है । द्वितीया समर्थ 'शकट' शब्द से 'वहति' इस अर्थ में अण् प्रत्यय होता

शाकटो गौः ॥

**१८२२. हलसीराट्ठक् ॥ ८१ ॥ ( १६३३ )**

'तद्वहति' इत्येव। हलसीरशब्दाभ्यां द्वितीयासमर्थाभ्यां 'वहति' इत्येतस्मिन्नर्थे ठक् प्रत्ययो भवति। हलं वहति हालिकः। सैरिकः॥

**१८२३. संज्ञायां जन्याः ॥ ८२ ॥ ( १६३४ )**

'तद्वहति' इत्येव। जनीशब्दाद् द्वितीयासमर्थाद् 'वहति' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते। जनीं वहति जन्या = जामातुर्वयस्या। सा हि विवाहादिषु जामातृसमीपं प्रापयति। जनी = वधूरुच्यते।

**न्यासः**

द्विधानमिति चेदन्यो हि शब्दो रथं वहतीति, अन्यो हि रथस्य वोढेति। तदाऽर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात् सिद्धम्। न हि कश्चिद् रथ्यमित्युक्ते रथस्यायमित्येवावैति, वहत्यर्थः प्रतीयते। तस्मात् स्यादेव रथाद् यत् ॥ ८० ॥

**हलसीराट्ठक्** ॥ शकटादणेवोत्सर्गः कर्तव्यः। एवञ्च वाक्यं करिष्यामः, यथा—रथस्य वोढा रथ्य इति। न तत्र विधीयते; तत्र प्रत्ययविधाने 'द्विगोर्लुगनपत्ये' इत्यनेन लुक् प्राप्नोति। अनेन पुनर्न प्राप्नोति, कस्मात्? 'प्राग्दीव्यतोऽण्' इत्यधिकारात्। ननु च क्रियमाणेऽपीह द्विगोरण् प्रत्ययो न प्राप्नोति, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति? न; एतदेव हि 'शकटादण्' इत्येवमादिकं ज्ञापकं भवति तदन्तविधेरिति। तेन द्वैहलिकः, द्वैशकटः, द्वैसीरिक इत्येवमादिकं सिद्धं भवति ॥ ८१ ॥

**संज्ञायां जन्याः** ॥ अस्त्यत्र गर्भ इति 'इन् सर्वधातुभ्यः', जनयतीति वा। अत्र 'कृदिकारादक्तिनः' 'सर्वतोऽक्तिन्नर्थात्' इति ङीप्—जनी, तां वहन्ति जन्याः = जामातुर्वयस्याः। विवाहमानिताभिधीयते। केचित्

**पदमञ्जरी**

वहति शकटस्यासौ वोढा भवति? तत्राहुः—आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वे शकटे वहति, द्वैशकट इति प्राग्दीव्यतीयो लुग्न भवति ॥ ८० ॥

**हलसीराट्ठक्** ॥ इह यो हलं वहति सीरं च, तस्यासौ वोढा भवति, तत्र तस्येदं हलसीराट्ठगित्येव हालिकः सैरिक इति सिद्धम्, नार्थोऽनेन? अत्राहुः—आरम्भसामर्थ्यादत्रापि तदन्तविधिः, द्वैहालिकः, द्वैसीरिकः, त्रैसीरिक इति लुङ् न भवतीति ॥ ८१ ॥

**संज्ञायां जन्याः** ॥ **जामातुर्वयस्येति**। सा हि प्रणयकलहादौ जनीं जामातुः समीपं प्रापयति। **जनी**

**भावबोधिनी**

है। उदा०—शकटं वहति—इस अर्थ में—शाकटः गौः। [ गाड़ी ढोने वाला बैल। गो शब्द गाय और बैल दोनों का वाचक है। ] ॥ ८० ॥

'तद् वहति' इसकी अनुवृत्ति होती है। द्वितीयासमर्थ 'हल' और 'सीर' इन शब्दों से 'वहति' इस अर्थ में 'ठक्' प्रत्यय होता है। उदा०—हलं वहति—इस अर्थ में—हालिकः। [ हल ढोने वाला बैल ] सीरं वहति—इस अर्थ में—सैरिकः [ हल को सीर कहते हैं। ] ॥ ८१ ॥

'तद् वहति' इसकी अनुवृत्ति है। द्वितीया समर्थ 'जनी' शब्द से 'वहति' इस अर्थ में 'यत्' प्रत्यय होता है यदि समुदाय शब्द से संज्ञा अर्थ की प्रतीति हो रही हो तो। उदा०—जनीं वहति—इस अर्थ में 'जन्या' यह बनता है। जन्या = जमाता = दामाद की सखी। वह विवाहादि में वधू को जामाता (= उसके अपने पति ) के पास

## १८२४. विध्यत्यधनुषा ॥ ८३ ॥ ( १६३५ )

**'तत्' इति द्वितीयासमर्थाद् 'विद्धयति' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति, न चेद्धनुष्करणं भवति। पादौ विद्धयन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः।**

**अधनुषेति किम् ? पादौ विद्धयति धनुषा।**

**न्यासः**

कर्तरि जायतेऽस्यां गर्भ इति 'कृत्यल्युटो बहुलम्' इति ल्युटि जननशब्दाच्च ङीपि नकाराकारयोर्लोपेन साधयन्ति। ननु च जनीशब्दादेव यद् विधेयः ? सर्वकालार्थं निपातनमित्येके ॥ ८२ ॥

**विध्यत्यधनुषा ॥ पद्या इति।** 'पद्यत्यतदर्थे' इति पादशब्दस्य पद्भावः। **ऊरव्या इति।** 'वान्तो यि प्रत्यये' इत्यवादेशः।

**ननु चेत्यादि।** धनुरत्र प्रकृत्यर्थः, प्रत्ययार्थेन वाह्यं करणमपेक्ष्यते, तेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यम् ? ननु च व्यधनमेवात्र सापेक्षम्, क्रियया करणं सम्बध्यत इति कृत्वा, तच्च व्यधनं क्रियाप्रधानत्वादाख्यातस्य प्रधानं भवति, प्रधानस्य सापेक्षस्य भवत्येव वृत्तिः, यथा—राजपुरुषोऽयमभिरूप इति ? नैवदस्ति; यद्यपि क्रियाप्रधानमाख्यातम्, तथापीह प्रत्ययार्थ एव प्रधानम्। प्रत्ययार्थस्य साधनं व्यद्धा। तथा च प्रागुक्तम्[1]—

**पदमञ्जरी**

**वधूरुच्यत इति।** जायतेऽस्यां गर्भ इति कृत्वा। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधे 'कृद्रिकारादक्तिनः' ( ग० सू० ५० ) इति ङीष् ॥ ८२ ॥

**विध्यत्यधनुषा ॥ पादौ विध्यन्ति पद्या इति।** तुदन्तीत्यर्थः[2]। 'पद्यत्यतदर्थे इति पद्भावः। **ऊरव्या इति।** 'ओर्गुणः', 'वान्तो यि प्रत्यये'।

**नन्वसमर्थत्वादिति।** सापेक्षमसमर्थं भवतीत्यसामर्थ्यम्। प्रत्ययार्थो ह्यत्र बाह्यम् करणं धनुरपेक्षते। ननु व्यधनमत्र सापेक्षम्, करणक्रिययोः सम्बन्धात्, व्यधनं च प्रधानम्, क्रियाप्रधानत्वादाख्यातस्य, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, यथा—राजपुरुषः शोभन इति ? भवतु क्रियाप्रधानमाख्यातम्, तद्धितस्तु स्वभावात्साधन-

**भावबोधिनी**

पहुँचाती है। जनी = वधू। [ विवाहादि में दामाद की कोई स्त्री सखी जो कि नव वधू को दामाद के पास ले जाती है, उस स्त्री के लिये 'जन्या' यह शब्द प्रयुक्त होता है। ] ॥ ८२ ॥

'तत्' इस द्वितीया समर्थ से 'विध्यति' ( बींधता है ) इस अर्थ में 'यत्' प्रत्यय होता है यदि उस वेधन का करण = साधन धनुष् न हो तो। उदा०—पादौ विध्यन्ति—इस अर्थ में—पद्याः शर्कराः। [ जो छोटे-छोटे कंकण या बालुकाकण पैरों को बींध डालते हैं, घावयुक्त बना देते हैं उन्हें 'पद्याः' कहा जाता है। ] ऊरू विध्यन्ति—इस विग्रह में—ऊरव्याः कण्टकाः [ ऊरुओं को बींधने वाले कांटे। पाद + यत्, "पद्यत्यतदर्थे" इस सूत्र से 'पाद' का 'पद्' आदेश होता है और 'शर्करा का विशेषण होने से टाप् होता है। ऊरु + यत् भसंज्ञा "ओर्गुणः" ( पा० सू० ६।४।१४६ ) से गुण होता है और "वान्तो यि प्रत्यये" ( पा० सू० ६।१।७९ ) से 'ओ' का 'अव्' आदेश होता है। ]

धनुष् करण न हो—इसका क्या प्रयोजन है ? पादौ विध्यति धनुषा। [ धनुष् से पैर बींधता है—यहाँ यत् प्रत्यय नहीं होता है क्योंकि धनुष् करण है। ]

---

१. 'तेन दीव्यति' ( पा. सू. ४।४।२ ) इत्यत्र वृत्तौ।

२. 'तदन्तीत्यर्थः' इति मुद्रितपाठोऽसमीचीनः।

**नन्वसमर्थत्वादनभिधानाच्च प्रत्ययो न भवति, न हि धनुषा पद्य इत्युक्ते विवक्षितोऽर्थः प्रतीयते। एवं तर्हि धनुष्प्रतिषेधेन व्यधनक्रिया विशेष्यते, यस्यां धनुष्करणं न सम्भाव्यते इति । तेनेह न भवति—चौरं विध्यति, शत्रुं विध्यति देवदत्त इति ॥**

**न्यासः**

'क्रियाप्रधानत्वेऽपि चाख्यातस्य तद्धितः स्वभावात् साधनप्रधानः' इति। अथ क्रियाद्वारेण व्यद्धुरपि करणं प्रत्यपेक्षा भवतीति कल्प्यते, तथा च सति प्रकृत्यर्थस्यापि क्रिया द्वारेणैव करणं प्रत्यपेक्षा भवतीति केन वार्यते ! न हि पादौ विध्यति धनुषेति करणविवक्षायां व्यधनमात्रस्य पादौ कर्म धनुष्करणविशिष्टस्य। तस्माद् व्यधनस्यापि क्रियाकरणे प्रत्यपेक्षेत्यसामर्थ्यात् प्रत्ययो न भविष्यति। **अनभिधाच्चेति**। अत्रैवोपपत्त्यन्तरम्। कथं पुनरुपपत्त्यन्तरमित्याह—**न हीत्यादि**। धनुषा पद्य इत्युक्ते धनुषः पद्यं प्रत्युपलक्षणभावः सम्भाव्यते, यथा शिखया परिव्राजकमद्राक्षीदित्यत्र शिखया परिव्राजकं प्रति। धनुषा सह दृष्टः पद्य इत्येषोऽप्यर्थश्चाशङ्क्यते । न तु पादौ विध्यति धनुषेत्यमर्थो विवक्षितः प्रतीयते। **एवं तर्हीत्यादिना** क्रियाविशेषणपरो धनुषेति निर्देशः, न धनुषः करणत्वप्रतिषेधः। प्रतिषेधे प्रधानमिति दर्शयति—**तेनेत्यादिना**। क्रियत एव धनुषः प्रतिषेधः, तेन क्रिया विशेष्यते। तेन चौरं विध्यतीत्यादौ न भविष्यति। सम्भाव्यते हि चौरादिव्यधनक्रियया धनुषः करणत्वम् ॥ ८३ ॥

**पदमञ्जरी**

प्रधानः। क्रिया तु गुणभूतेत्युक्तम् सा च धनुरपेक्षत इत्यसामर्थ्यम्। **अनभिधानाच्चेति**। अत्रैवोपपत्यन्तरमनभिधानमेव दर्शयति। **न हीति**। 'धनुषा पद्यः' इत्युक्ते इत्थम्भूतलक्षणा सहयोगलक्षणा वा तृतीया गम्यते, न तु पादौ धनुषा विध्यतीत्ययं विवक्षितोऽर्थः। अवश्यं चैतदेवं विज्ञेयम्—असमर्थत्वादनभिधानाच्चात्र प्रत्ययो न भवतीति। यो हि मन्यते—'अधनुषेति प्रतिषेधात्प्रत्ययो न भवति' इति, तस्य शर्कराभिः पादौ विद्ध्यति कण्टकैरूरू विद्ध्यतीत्यत्र प्रत्ययः स्यादेव ? एवं तर्हि विशेषोपलक्षणपरोऽत्र धनुषेति निर्देशः, न तु धनुषः करणत्वप्रतिषेधपर इत्यर्थः। **धनुष्प्रतिषेधेनेति**। 'नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वमुपलक्षणत्वमेव प्रतिपादयति। **यस्यामिति**। तेनेह न भवति—चौरं विद्ध्यतीति। सम्भाव्यते हि [1]प्रच्यवच्छेदनादिकायां चोरस्य व्यधनक्रियायां धनुषः करणत्वम् ॥ ८३ ॥

**भावबोधिनी**

[ पादौं विध्यति धनुषा—इस उदाहरण में प्रत्ययार्थ = वेधन को बाह्य करण धनुष् की अपेक्षा है। और सापेक्ष को असमर्थवत् माना जाता है, अतः इस अवस्था में प्रत्यय की प्राप्ति नहीं है। तब 'अधनुषा' के ग्रहण का क्या प्रयोजन ? इसी को स्पष्ट कर रहे हैं—]

असमर्थ होने से अथवा ऐसे प्रयोग का अनभिधान होने से उक्त उदाहरण में प्रत्यय नहीं होगा, क्योंकि 'धनुषा पद्यः' ऐसा कहने पर विवक्षित अर्थ की प्रतीति नहीं होती है ? यदि ऐसी बात है तब तो धनुष् के प्रतिषेध के द्वारा व्यधन क्रिया को विशेषित किया जा रहा है—जिस वेधन क्रिया में धनुष् करण सम्भव नहीं होता है। इसलिए इन उदाहरणों में यत् नहीं होता है—चौरं विध्यति, शत्रुं विध्यति देवदत्तः । [ यहाँ वेधन में धनुष् करण हो सकता है। अतः यहाँ प्रत्यय नहीं होता है। ]

**विमर्श**—प्रस्तुत सूत्र पर महाभाष्य में यह विचार है कि 'अधनुषा' यह करणमात्र का प्रतिषेध करता है ऐसा मानकर 'धनुषा विध्यति' आदि में प्रत्यय का वारण करना चाहिए। अथवा ऐसे प्रयोगों का अनभिधान ही समझना चाहिए क्योंकि 'शर्कराभिः पद्यः' ऐसा प्रयोग नहीं होता है ॥ ८३ ॥

१. प्रत्यवच्छेदन-इत्युचितः पाठः ।

**१८२५. धनगणं लब्धा ॥ ८४ ॥ ( १६३६ )**

**'तत्' इत्येव । धनगणशब्दाभ्यां द्वितीयासमर्थाभ्याम् 'लब्धा' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । धन्यः । गण्यः । लब्धेति तृनन्तम्, तेन द्वितीया समर्था विभक्तिर्युज्यते ॥**

**१८२६. अन्नाण्णः ॥ ८५ ॥ ( १६३७ )**

**अन्नशब्दात् 'तत्' इति द्वितीयासमर्थात् 'लब्धा' इत्येतस्मिन्नर्थे णः प्रत्ययो भवति । अन्नं लब्धा आन्नः ॥**

**१८२७. वशं गतः ॥ ८६ ॥ ( १६३८ )**

**वशशब्दात् 'तत्' इति द्वितीयासमर्थात् 'गतः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । वंशं गतः वश्यः= कामप्राप्तः, विधेय इत्यर्थः ॥**

**न्यासः**

**धनगणं लब्धा ॥** कथं पुनरत्र द्वितीया समर्थविभक्तिः, यावता 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यम् ? इत्याह—**लब्धेति तृन्नन्तमित्यादि**। तृन्नन्तस्य हि प्रयोगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधेन द्वितीया भवति ॥ ८४ ॥

**अन्नाण्णः** ॥ ८५ ॥ **वशं गतः** ॥ वशः = कामः, इच्छा । वशेर्धातोरत एव निपातनादप्रत्ययः । द्वितीयासमर्थविभक्तौ प्रकृतायां वशमिति द्वितीयानिर्देश इष्टे विषये द्वितीयान्ताद् यथा स्यात्, अनिष्टान्मा भूत् । तेनेहैव भवति—वशं गतः = इच्छाप्राप्तः, विधेय इत्यत्र न भवति ॥ ८६ ॥

**पदमञ्जरी**

**धनगणं लब्धा**॥ लब्धेति तृन्नन्तमेतत्, तृजन्ते तु 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यम् । तृनन्ते तु 'न लोकाव्ययनिष्ठा' इति प्रतिषेधाद् द्वितीयैव भवति ॥ ८४ ॥ ८५ ॥

**वशङ्गतः** ॥ 'वश कान्तौ' ( धा० पा० १०८० ), वशनं वशः, 'वशिरण्योरुपसङ्ख्यानम्' ( वा० ३०५ ) इत्यच् । कामः = इच्छा, तां प्राप्त इति । परेच्छानुगामीत्यर्थः ॥ ८६ ॥

**भावबोधिनी**

'तत्' की अनुवृत्ति होती है। द्वितीया समर्थ 'धन' और 'गण' शब्दों से 'लब्धा' [ प्राप्त करने वाला ] इस अर्थ में 'यत्' प्रत्यय होता है । उदा०—धन्यः, गण्यः । [ धनं लब्धा, गणं लब्धा —ये विग्रह हैं । यत् प्रत्यय करने पर भसंज्ञा, अलोप होने पर रूप बनता है । ]

[ लब्धा—यहाँ तृच् प्रत्यय प्रत्यय होने पर 'कर्तृकर्मणोः कृति' सूत्र से षष्ठी होनी चाहिए । तब विग्रह में द्वितीया का प्रयोग कैसे होता है ? ] 'लब्धा' यह 'लभ्' धातु का तृन्-प्रत्ययान्त रूप है [ और तृन्नन्त के साथ षष्ठी का निषेध "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इस सूत्र से हो जाता है । अतः कर्म में द्वितीया ही रहती है । ] इस कारण द्वितीया को समर्थ विभक्ति मानना उचित ही है ॥ ८४ ॥

'तत्' इस द्वितीया समर्थ 'अन्न' शब्द से 'लब्धा' ( प्राप्त करने वाला ) इस अर्थ में 'ण' प्रत्यय होता है । उदा०—अन्नं लब्धा—इस विग्रह में—आन्नः । [ अन्न प्राप्त करने वाला ] ॥ ८५ ॥

'तत्' इस द्वितीया समर्थ 'वश' शब्द से 'गतः' ( गया, प्राप्त हुआ ) इस अर्थ में 'यत् प्रत्यय होता है । उदा०—वशं गतः —इस विग्रह में—वश्यः = कामप्राप्त, ( इच्छा को प्राप्त ) विधेय = दूसरे की इच्छा के अनुसार काम करने वाला—यह अर्थ है ॥ ८६ ॥

## १८२८. पदमस्मिन् दृश्यम् ॥ ८७ ॥ ( १६३९ )

**निर्देशादेव प्रथमा समर्थविभक्तिः । पदशब्दात्प्रथमासमर्थाद् दृश्यार्थोपाधिकादस्मिन्निति सप्तम्यर्थे यत्प्रत्ययो भवति । पदं दृश्यमस्मिन् पद्यः कर्दमः । पद्याः पांसवः । शक्यार्थे कृत्यत्ययः । शक्यते यस्मिन् पदं द्रष्टुं प्रतिमुद्रोत्पादनेन स पद्यः कर्दमः । कर्दमस्यावस्थोच्यते—नातिद्रवो नातिशुष्क इति ॥**

## १८२९. मूलमस्यावर्हि ॥ ८८ ॥ ( १६४० )

**मूलशब्दात्प्रथमासमर्थाद् 'आर्बार्हि' इत्येवमुपाधिकादस्येति षष्ठ्यर्थे यत्प्रत्ययो भवति । मूलमेषामार्वाह मूल्या माषाः । मूल्या मुद्गाः । 'वृहू उद्यमे' ( धा० पा० १३४८ ), येषां मूलमावृह्यते उत्पाटयते ते मूल्याः,**

### न्यासः

**पदमस्मिन् दृश्यम्** ॥ कर्मणः कृतैवाभिहितत्वाद् द्वितीया सम्भवति । न च द्वितीयाप्रथमाभ्यामन्यत्र विभक्तौ पदमिति रूपमुपपद्यते । तस्मात् प्रथमान्तमेवैतदिति निश्चित्याह—**निर्देशादेवेत्यादि** ॥ ८७ ॥

**मूलमस्यावर्हि** ॥ आवर्हणमावर्हः, उत्पाटनमित्यर्थः । वृहेराङ्पूर्वाद्भावे घञ्, आवर्होऽस्यास्तीत्यावर्हीति । द्वितीयाविभक्तिरिह नास्ति । न च प्रथमाद्वितीयाभ्यामन्यस्यां विभक्तौ मूलमित्येतद्रूपमुपपद्यते । तस्मात्

### पदमञ्जरी

**पदमस्मिन् दृश्यम्** ॥ **निर्देशादेव प्रथमा समर्थविभक्तिरिति** । द्वितीया तु न भवति; दृश्यमिति क्यपा कर्मणोऽभिहितत्वात् । **शक्यार्थे कृत्यप्रत्यय इति** । तेन योग्यत्वे सति पदस्पर्शनाभावेऽपि पद्यः कर्दम इति प्रयोग उपपद्यत इति भावः । मुद्रा=सन्निवेशः, प्रतिरूपा मुद्रा **प्रतिमुद्रा** । **नातिद्रवो नातिशुष्क इति** । पांसवोऽपि नात्यल्पा नातिबहुलाः पद्याः ॥ ८७ ॥

**मूलमस्यावर्हि** ॥ **प्रथमासमर्थादिति** । द्वितीयाया निमित्ताभावान्निर्देशादेव प्रथमैव भवतीति भावः । 'वृहू उद्यमने' ( धा० पा० १३४७ ), वादिरयं न बादिः । दृश्यते हि—'उद्वृह रक्षः सहमूलमिन्द्र ह्यस्सुष्मिक् प्रवृहाण' ( ऋ० ३.३०.१७ ) 'तद्ववर्हातमनोदेवा' इति च । आवर्हणमावर्हः=उत्पाटनम्, आवर्होऽस्यास्तीत्यावर्हि,

### भावबोधिनी

सूत्रस्थ निर्देश से ही यहाँ प्रथमा यह समर्थ विभक्ति है । प्रथमा समर्थ 'पद' शब्द जो दृश्यार्थोपाधिक [ दृश्य अर्थ जिसका उपाधि है ऐसा ] है उससे 'अस्मिन्' इस सप्तमी के अर्थ में यत् प्रत्यय होता है । उदा०—पदं दृश्यम् अस्मिन् सः—इस विग्रह में 'पद्यः कर्दमः' । [ कुछ-कुछ सूखा हुआ ऐसा कीचड़ जिसमें रखने पर पैरचिह्न दिखाई पड़ सकते हैं उसे 'पद्यः कर्दमः' कहा जाता है । ] पद्याः पांसवः । [ पदं दृश्यम् अस्मिन्—यह विग्रह है । ऐसी धूल जिसमें रखने पर पैर का चिह्न दिखाई पड़ता है । ] जिसमें प्रत्येक बार रखने पर पैर [ का चिह्न ] दिखाई पड़ सकता है, ऐसा कीचड़ । [ मुद्रा=सन्निवेश=रखना, प्रतिरूपा मुद्रा—प्रतिमुद्रा । ] यह कीचड़ की अवस्था बताई जा रही है—जो कीचड़ न तो अत्यधिक गीला है और न अत्यधिक सूखा । [ उसे 'पद्यः कर्दमः' कहा जाता है । क्योंकि उसमें रखने पर पैर का निशान साफ-साफ दिखाई पड़ता है । ] ॥ ८७ ॥

प्रथमा समर्थ 'मूल' शब्द जिसको उपाधि 'आर्वाहि' है उससे 'अस्य' ( इसका ) इस षष्ठी के अर्थ में 'यत्' प्रत्यय होता है । उदा०—'मूलम् आबर्हि येषां ते'—इस विग्रह में 'मूल्याः माषाः । [ जड़ से उखाड़ने योग्य उड़द ] मूल्याः मुद्गाः । [ मूल से उखाड़ने योग्य मूँग । ] 'वृहू' यह धातु 'उद्यम' अर्थ में है—मूलम् आवृह्यते=उखाड़ा जाता है जिनका वे—'मूल्याः' हैं, अच्छी तरह से [ पक और सूखकर खेत में ] तैयार हो चुके जड़ को उखाड़े बिना जिनको पकड़ सकना सम्भव नहीं है, [ वे 'मूल्य' हैं ] यह अर्थ है । [ 'वृहू' इस धातु का अर्थ 'उद्यमन=उत्पादन=उखाड़ना है । आङ् उपसर्ग के साथ 'आबर्ह' यह बना । इसका अर्थ है—उखाड़ना । 'आबर्हः=आवर्हणम् अस्ति

**सुष्ठु निष्पन्नाः। मूलोत्पाटनेन विना ग्रहीतुं न शक्यन्ते इत्यर्थः॥**

**१८३०. संज्ञायां धेनुष्या ॥ ८९ ॥ ( १६४१ )**

**'धेनुष्या' इति निपात्यते संज्ञायां विषये। संज्ञाग्रहणमभिधेयनियमार्थम्। धेनोः षुगागमो यश्च प्रत्ययो निपात्यते। अन्तोदात्तोऽपि ह्ययमिष्यते। वा धेनुरुत्तमर्णाय ऋणप्रदानाद्दोहनार्थं दीयते सा धेनुष्या। पीतदुग्धेति यस्याः प्रसिद्धिः। धेनुष्यां भवते ददामि॥**

**१८३१. गृहपतिना संयुक्ते ञ्यः ॥ ९० ॥ ( १६४२ )**

**निर्देशादेव तृतीया समर्थविभक्तिः। गृहपतिशब्दात् तृतीयासमर्थात् 'संयुक्ते' इत्येतस्मिन्नर्थे ञ्यः प्रत्ययो भवति। गृहपतिना संयुक्तः गार्हपत्योऽग्निः।**

**न्यासः**

प्रथमान्तमेवैतत्। निर्देशादेव प्रथमा समर्थविभक्तिरुपपद्यते इति मत्वाऽऽह—**मूलशब्दात् प्रथमासमर्थादिति** ॥ ८८ ॥

**संज्ञायां धेनुष्या ॥ यश्च प्रत्यय इति।** किमर्थं पुनर्यप्रत्ययो निपात्यते? इत्याह—**अन्तोदात्तो ह्ययमपीष्यत इति।** यति सति तित्स्वरेणान्तस्वरितत्वात्। अन्तोदात्तश्चेष्यते। तस्माद् यप्रत्यय एव न्याय्यः। न केवलं संज्ञाविषय एवेष्यते; अपि त्वन्तोदात्तोऽपीत्येषोऽपिशब्दस्यार्थः ॥ ८९ ॥

**गृहपतिना संयुक्ते ञ्यः ॥ संयुक्ते इति।** सम्बद्ध इत्यर्थः।

**पदमञ्जरी**

सुष्ठु पक्वा न शक्यन्ते संग्रहीतुम्। मध्यतो लूयमाने कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ता इत्यर्थः ॥ ८८ ॥

**संज्ञायां धेनुष्या ॥ यश्च प्रत्ययो निपात्यत इति।** कुत्र? अनिर्दिष्टार्थत्वात्स्वार्थे, तदाह **या धेनुरुत्तमर्णायेति।** कथं पुनर्यति प्रकृते यप्रत्ययो निपात्यते? तत्राह—**अन्तोदात्तोऽपि ह्ययमिष्यति इति।** यति हि 'तित्स्वरितम्' इति स्वरितः स्याद्, अन्तोदात्तश्चेष्यते, न केवलं संज्ञायाम्, अपि त्वन्तोदात्तोऽपीत्यपिशब्दस्यार्थः ॥ ८९ ॥

**गृहपतिना संयुक्ते ञ्यः ॥ अन्यस्यापीत्यादि।** गृहपतिर्हि यजमानः, स यथा गार्हपत्ये कार्याणि करोति तथा दक्षिणाग्नावाहवनीये च, भूयो वाऽऽहवनीये; तस्मादन्यस्यापि गृहपतिना योगोऽस्ति। यद्येवम्, तत्राप्यति-

**भावबोधिनी**

अस्य—इस मतुबर्थ में 'इनि' प्रत्यय करने पर—'आबर्हि' यह नपुंसक लिङ्ग में है। अतः 'उखाड़ना जिसका होता है उसे 'आबर्ही' कहा जाता है। मूल जिनका आबर्ही है वे 'मूल्याः' कहे जाते हैं। खेत में उड़द मूँग आदि जब पककर सूख कर तैयार हो जाते हैं तब उन्हें मूलसहित उखाड़ लिया जाता है। ] ॥ ८८ ॥

'संज्ञाविषय में धेनुष्या यह निपातित होता है। संज्ञा का ग्रहण अभिधेय का नियम करने के लिये है। 'धेनु' शब्द से 'षुक्' आगम होता है और 'य' प्रत्यय होता है। यह अन्तोदात्त भी इष्ट है। जो गाय साहूकार द्वारा दिये गये कर्जा के कारण उसे दुहने के लिए दी जाती है उस गाय की यह 'धेनुष्या' संज्ञा है। 'पीतदुग्धा' यह जिसका प्रसिद्ध नाम है। उदा०—"धेनुष्यां भवते ददामि।" [ जब कोई कर्जदार ऋण के बदले में अपनी गाय केवल दूध के लिए साहूकार को दे देता है उसे 'धेनुष्या' कहा जाता है। अमरकोश में यह लिखा है "धेनुष्या बन्धके स्थिता।" अमर० २।९।७२ ] ॥ ८९ ॥

[ सूत्र में ] निर्देश से ही तृतीया समर्थ विभक्ति है। तृतीया-समर्थ 'गृहपति' शब्द से 'संयुक्ते' इस अर्थ में 'ञ्य' प्रत्यय होता है। उदा०—गृहपतिना संयुक्तः अग्निः=गार्हपत्यः। [ यह एक अग्निविशेष का वाचक है। गृहपति + ञ्य = य, आदिवृद्धि, भसंज्ञा, इलोप। ]

अन्यस्यापि गृहपतिना संयोगोऽस्ति, तत्र संज्ञाधिकारादतिप्रसङ्गनिवृत्तिः ॥

## १८३२. नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ॥ ९१ ॥ ( १६४३ )

नावादिभ्योऽष्टभ्यः शब्देभ्योऽष्टस्वेव तार्यादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति । प्रत्ययार्थद्वारेण तृतीया समर्थविभक्तिर्लभ्यते । नावा तार्यं नाव्यमुदकम् । नाव्या नदी । शक्यार्थे कृत्यः ।

वयसा तुल्यो वयस्यः सखा । संज्ञाधिकारोऽभिधेयनियमार्थः, तेन वयसा तुल्ये शत्रौ न भवति ।

### न्यासः

**अन्यस्यापीत्यादि** । यथैव हि गृहपतिर्यजमानो गार्हपत्ये कार्यं करोति, तथा दक्षिणाग्नावाहवनीये च । तस्मादन्यस्यापि दक्षिणादेर्गृहपतिना संयोगोऽस्ति । यद्येवम्, अतिप्रसङ्गोऽन्यत्र प्राप्नोति ? इत्याह—**तत्र संज्ञाधिकारादित्यादि** । अभिधेयनियमार्थं संज्ञाग्रहणमनुवर्तते, तेनेह न भवत्यतिप्रसङ्गः ॥ ९० ॥

**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु** ॥ कथं पुनरिहापि समर्थविभक्तिर्लभ्यते, यावता नेहोपात्ता, नाप्यनुवर्तते ? इत्याह—**प्रत्ययार्थद्वारेणेत्यादि** । द्वारम् = उपायः, कारकमित्यर्थः । इह तार्यादयः प्रत्ययार्थाः । तत्सम्बन्धे कर्तरि करणे हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति । ततः समर्थविभक्तिर्लभ्यते । **नाव्यमिति** । 'वान्तो यि प्रत्यये' इत्यवादेशः अत्र नावस्तरणक्रियायां कर्तृत्वं करणत्वञ्च विवक्षावशाद् भवतीति करणे, कर्तरि वा तृतीया । एवमन्यत्रापि यथायोगं वेदितव्यम् ।

### पदमञ्जरी

प्रसङ्गः ? इत्यत आह—**तत्रेति** । अपर आह—गृहपतिरग्निविशेषः, तेन संयोगो गार्हपत्यस्यैवाग्निहोत्रेऽपि गार्हपत्ये अग्नये गृहपतये प्रजापतये, पत्नीसंयाजेषु च तत्रैवेज्यते इति, तत्रापि गृहपतिरग्निगृह्यते न यजमान इत्यत्र संज्ञाधिकार एव शरणम् ॥ ९० ॥

**नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु** ॥ तत्र नावादीनां प्रथममूलान्तानां पञ्चानां द्वितीयमूलादीनां च त्रयाणां पूर्वं पृथक्पृथक् द्वन्द्वं कृत्वा ततो द्वयोरपरो द्वन्द्वः कृतः, न त्वष्टानां युगपत्सहविवक्षा; किं सिद्धं भवति ? न मूलयोः सारूप्यादेकशेषो भवति । का पुनरत्र समर्थविभक्तिः ? इत्यत आह –**प्रत्ययार्थद्वारेणेति** । द्वारम् = मुखम्, उपायः । इह तार्यादयः प्रत्ययार्थाः, तत्सम्बन्धे करणे कर्तरि हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति । **नाव्यमिति** । अत्र नावस्तरणक्रियायां करणत्वम् ।

**वयसा तुल्य इति** । तत्र हेतुमाह—यो येन वयस्तुल्यः स तं प्रति वयस्यः । **शत्रौ न भवतीति** । किं तु मित्र एव भवति ।

### भावबोधिनी

अन्य पदार्थ का भी गृहपति से संयोग होता है, [ अतः यह प्रयोग नियत अर्थ में नहीं हो सकता ? ] इस सूत्र में भी 'संज्ञायाम्' इसका अधिकार है अतः [ आहवनीय आदि अर्थों में ] अतिप्रसङ्ग नहीं आता है। [ अतः दक्षिणाग्नि और आहवनीय से भिन्न यह पश्चिम दिशा में स्थापित होने वाली आग समझी जाती है। ] ॥ ९० ॥

( १ ) 'नौ' आदि [=( २ ) वयस्, ( ३ ) धर्म, ( ४ ) विष, ( ५ ) मूल, ( ६ ) मूल, ( ७ ) सीता, ( ८ ) तुला—इन ] आठ [ तृतीया समर्थ ] शब्दों से—( १ ) तार्य आदि [ ( २ ) तुल्य, ( ३ ) प्राप्य, ( ४ ) वध्य, ( ५ ) आनाम्य, ( ६ ) सम, ( ७ ) समित, ( ८ ) सम्मित ]—इन आठ अर्थों में ही क्रमशः 'यत्' प्रत्यय होता है। प्रत्ययार्थ के द्वार = उपाय ( माध्यम ) से [ अर्थात् उसके सम्बन्ध में करण और कर्ता कारक में तथा हेतु और तुल्यार्थ योग में ] तृतीया समर्थ विभक्ति ज्ञात हो जाती है। उदा०—( १ ) नावा तार्यम् इस विग्रह में—नाव्यम् उदकम् । [ नौ + यत्=य, "वान्तो यि प्रत्यये" सूत्र से 'औ' का 'आव्' आदेश । नौका द्वारा पार करने योग्य जल ] नाव्या

**धर्मेण प्राप्यं धर्म्यम्। ननु च 'धर्मादनपेते' ( ४.४.९२ ) इति वक्ष्यमाणेनैव सिद्धम् ? नैतदस्ति; धर्मं यदनुवर्त्तते तद्धर्मादनपेतमित्युच्यते, फलं तु धर्मादपेत्यैव; कार्यविरोधित्वाद्धर्मस्य।**

**विषेण वध्यो विष्यः। विषेण वधमर्हतीत्यर्थः।**

**मूलेनानाम्यं मूल्यम्। आनाम्यम् = अभिभवनीयम्। पटादीनामुत्पत्तिकारणं मूलम्, तेन तदभिभूयते**

**न्यासः**

**धर्मेण प्राप्यं धर्म्यमिति।** तत् पुनर्धर्मस्य फलं स्वर्गाद्युच्यते। **ननु चेत्यादि।** ननु च धर्मेण यत्प्राप्यं तद्धर्मादनपेतं भवतीति भावः।

**विष्य इति।** विषेण वधमर्हतीत्यर्थः। वध्यशब्दस्य 'दण्डादिभ्यो यः' इत्यर्हार्थे व्युत्पादितत्वात्।

**आनाम्यमभिभवनीयमिति।** अनेकार्थत्वाद् धातूनामत्र नमिरभिभवे वर्तते। पटादीनामुत्पत्तिकारणं मूलमिति। दत्तेन हिरण्येन पटादीनामुत्पत्तिर्भवति। **तेनेति।** मूलेन। **तदिति।** मूल्यम्। **शेषीक्रियत इति।** अनेनाभि-

**पदमञ्जरी**

**ननु चेति।** धर्मेण प्राप्यं सुखादि, फलमपि धर्मादनपेतमेव; कार्यस्य कारणाविनाभावादिति प्रश्नः। **धर्मं यदनुवर्तत इति।** अनादिः शिष्टसमाचारस्तज्जन्यो वाऽऽत्मगुणो धर्मः, यदनुष्ठानमनुवर्तते तद्धर्मादनपेतम्, फलं तु धर्मादपैत्येवेति कुतः ? इत्याह—**कार्यविरोधित्वादिति।** धर्मस्य कार्यं सुखानुभवः, कार्यं विरोधि = नाशकं यस्य स कार्यविरोधी, तस्य भावः कार्यविरोधित्वं तस्मादित्यर्थः। उत्पन्ने हि फले धर्मो नश्यति, अन्यथा सकृद्धर्मे कृते स्वर्गमनुभवतः प्रभवो न स्यात्।

**वधमर्हतीत्यर्थ इति।** वध्यशब्दस्य 'दण्डादिभ्यो यः' इत्यत्रार्थे व्युत्पादितत्वात्।

**भावबोधिनी**

नदी। [ नावा तार्या—इस विग्रह में नौ + यत्, टाप्। ] शक्य अर्थ में कृत्य प्रत्यय [ करने पर 'तार्यम्' बनता है। ] ( २ ) वयसा तुल्यः—इस विग्रह में—वयस्यः सखा [ आयु में बराबरी वाला मित्र ]। यहाँ संज्ञा का अधिकार अभिधेय [ अर्थ ] का नियम करने के लिए है इस कारण वय [ = अवस्था ] से तुल्य शत्रु अर्थ में [ वयस्यः—यह ] नहीं होता है।

( ३ )—धर्मेण प्राप्यम्—इस अर्थ में—धर्म्यम् [ धर्म द्वारा प्राप्त होने योग्य ]।

[ धर्म्यम्—यह तो "धर्मादनपेते" ( पा० सू० ४।४।९२ ) इस आगे कहे जाने वाले सूत्र से ही सिद्ध हो जाता है [ तब इस सूत्र में कहने की क्या आवश्यकता ]? ऐसा बात नहीं है क्योंकि धर्म [ = शिष्टसम्मत सदाचारादि ] का अनुवर्तन जो करता है वह 'धर्म से अनपेत' कहा जाता है, परन्तु [ उसका ] फल तो धर्म से अलग ही होता है, क्योंकि धर्म कार्यविरोधी होता है। [ भाव यह है कि धर्म का कार्य = फल सुखादिप्राप्ति है, जब कार्य = फल उत्पन्न हो जाता है तब धर्म = अपूर्व नष्ट हो जाता है। अतः वह धर्म से अनपेत न होकर अपेत = पृथक् ही होता है। कार्यं विरोधि = नाशकं यस्य सः—कार्यविरोधी, तस्य भावः कार्यविरोधित्वम्, तस्मात्—कार्यविरोधित्वात्। ]

(४) विषेण वध्यः—इस विग्रह में—विष्यः। विष द्वारा वध प्राप्त करने योग्य है, यह अर्थ है।

(५) मूलेन आनाम्यम्—इस विग्रह में 'मूल्यम्' बनता है। आनाम्य = अभिभव करने योग्य। पट आदि का उत्पत्ति ( निर्माण ) कारण मूल है, उसके द्वारा जो अभिभूत किया जाता है = शेष किया जाता है। क्योंकि मूल्य मूल को सगुण [ गुण = भाग, उससे युक्त ] करता है। "पोरदुपधात्" ( पा० सू० ३।१।९८ ) से यत् प्राप्त रहने पर 'आनाम्यम्' इस शब्द रूप में निपातन से ण्यत् ( य ) प्रत्यय होता है। [ इसी कारण 'नम्' की वृद्धि होकर 'नाम्य' बनता है। 'आङ्' उपसर्ग है। ]

**विमर्श**—बनिया व्यापारी लोग कपड़ा आदि को बनाने में जो द्रव्यराशि खर्च करते थे उसे प्राचीनकाल में

**शेषीक्रियते। मूलं हि सगुणं मूल्यं करोति। 'पोरदुपधात्' ( ३.१.९८ ) इति यति प्राप्ते आनाम्यमिति निपातनाद् ण्यत्। मूलेन समो मूल्यः पटः। उपादानेन समानफल इत्यर्थः।**

**सीतया समितं सीत्यं क्षेत्रम्। समितम्=सङ्गतमित्यर्थः॥**

**'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरपीष्यते। परमसीत्यम्। उत्तमसीत्यम्। द्विसीत्यम्।**

**न्यासः**

भूयत इत्यस्यार्थमाचष्टे। शेषीक्रियते=गुणभावमापाद्यते, अप्रधानीक्रियत इत्यर्थः। अप्रधानीकरणमेव= अभिभवः। कथं पुनस्तेन तच्छेषीक्रियते? इत्याह—**मूल्यं हीत्यादि**। हिशब्दो हेतौ। मूल्यमिह कर्तृ, मूलं कर्म। तत्प्रणयेन हिरण्येन पटादयो विक्रीयन्ते। तत्र यन्मूलातिरिक्तं हिरण्यं लाभः, तन्मूल्यं गुणो भागः। सह तेन वर्तत इति सगुणः। गुणः पुनरिह तदेव मूल्यं वेदितव्यम्। तदेतदुक्तं भवति—यस्मान् मूल्यभागेनैव भागभूतेन सभागं मूलं करोति न न्यूनं तन्मूल्यमभिधीयत इति। मूल्ये सति तत् तत्र द्विगुणं करोतीत्युच्यते। का पुनरियं युक्तिः, यदि नाम सगुणं मूलं करोतीत्युच्यते तत् कथं मूल्यमभिभूयते? यथेयं युक्तिस्तदाख्यायते—इह हि शास्त्रे यत् सिद्धमुपकारि तदङ्गमप्रधानम्, यच्चोपकारसाध्यमनुपकारकं तदङ्गि प्रधानमित्येषा व्यवस्था। तथा चोक्तम्—

शास्त्रे द्वयमेवेह स्यादङ्गमथवा भवेदङ्गि तत्र।
उपकारि सिद्धमङ्गं साध्यानुपकारकमङ्गीति॥ इति।

एवञ्च मूल्येन मूलं सगुणं क्रियमाणमुपकार्यत्वात् प्रधानं सम्पद्यते, मूल्यं त्वनुपकार्यत्वादप्रधानं सम्पद्यते। तन्मूलेन मूल्यमभिभूयते, तदपेक्षया तस्याः प्रधानभावापत्तेः।

**पदमञ्जरी**

**आनाम्यमभिभवनीयमिति**। अनेकार्थत्वाद्धातूनामापूर्वो नमिरभिभवे वर्तते।

**पटादीनामुत्पत्तिकारणमिति**। पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं यद्वस्तु तन्मूलशब्दवाच्यमित्यर्थः। **तेनेति**। मूलेन। **तदिति**। मूल्यम्। **शेषीक्रियत इति**। शेषीकरणमेवात्राभिभव इत्यर्थः। गुणभावमापद्यते कथमित्याह—**मूलं हि सगुणं मूल्यं करोतीति**। मूल्यमिह कर्तृ, मूलं कर्म, पटादिषु विक्रीयमाणेषु यन्मूलातिरिक्तं वस्तु लाभो नाम तन्मूल्यम्, गुणो भागः, स पुनरिह मूल्यमेव, तेन सह वर्तते सगुणः, हिशब्दो हेतौ। एतदुक्तं भवति—यस्मान्मूल्यमात्मनैव भागभूतेन सभागं मूलं करोति तस्मान्मूले मूल्यमभिभूयते शेषीक्रियते, मूल्ये सति तेन गुणेन सगुणं मूलं भवति; इयमेव चावनतिः, अयमेवाभिभवः, इदमेव शेषीकरणम्। लोके तु यावता द्रव्येण पटादिको विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धः, न मूलातिरिक्ते भागे, स च मूल्यसम्भवादौपचारिकः। एवं च यत्रापि मूल्यं नास्ति दायप्रतिग्रहादिलब्धे क्षेत्रे क्रीयमाणे, तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगः सिद्धो भवति।

सीता=हलाग्रम्, सम्पूर्वादिणः क्तः, समितम्=सङ्गतम्, निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत्। **द्विसीत्यमिति**। द्वाभ्यां सीताभ्यां समीकृतमिति तद्धितार्थे समासः, ततः प्रत्ययः।

**भावबोधिनी**

'मूल' कहा जाता था। उस मूल के द्वारा, अपने खर्चा किये गये धन से अधिक, जो धनादि प्राप्त होता था, अपने लिए मिलता था, अर्थात् जो अतिरिक्त लाभ रूप में प्राप्त होता था उसे ही 'मूल्य' कहा जाता था। परन्तु आज-कल जितने धनादि से किसी वस्तु को बेचा जाता है उसीको 'मूल्य' कहा जाता है। अतः 'प्राचीनकाल में लाभांश' ही 'मूल्य' था आजकल मूल और लाभांश दोनों मिलाकर 'मूल्य' कहा जाता है।

(६) मूलेन समः—इस विग्रह में मूल्यः पटः। उपादान [ द्रव्यादि ] के समान फल वाला है—यह अर्थ है। [ अतिरिक्त फल नहीं मिलता है। ]

(७) सीतया समितम्—इस विग्रह में 'सीत्यम्'=खेत। समित=संगत=ऊंचाई-निचाई से रहित, अर्थात्

**त्रिसीत्यम् ।**

**तुलया सम्मितं तुल्यम् । सम्मितम् = समानम्, सदृशमित्यर्थः । यथा—तुला परिच्छिनत्ति परम्, एवं तदपीति ॥**

## १८३३. धर्मपथ्यर्थन्यायादनपेते ॥ ९२ ॥ ( १६४४ )

**निर्देशादेव पञ्चमी समर्थविभक्तिः । धर्मादिभ्यः पञ्चमीसमर्थेभ्यः—'अनपेतः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । नाय्यम् ।**

**न्यासः**

**तुलया सम्मितं तुल्यमिति ।** अत्र तुल्यार्थयोगे तृतीया । यद्यपि तुल्यार्थयोगे षष्ठ्यपि विधीयते, तथापि नौप्रभृतिभ्यस्तृतीयासमर्थेभ्यः प्रत्ययविधानात् तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययो विज्ञायते । **यथेत्यादिना** तुलया सादृश्यं दर्शयति । ननु च 'तुल्यास्यप्रयत्नम्' इति निपातनादेव तुल्यशब्दस्य साधुत्वं भविष्यति, स च सदृश एव लोके प्रसिद्ध इति नार्थस्तुलाशब्दात् सम्मिते प्रत्ययविधानेन ? स्वरार्थं तु प्रत्ययविधानम् । 'यतोऽनावः' इत्याद्युदात्तत्वं यथा स्यात् । न हि निपातने सत्याद्युदात्तत्वं तुल्यशब्दस्य शक्यते विज्ञातुम् ॥ ९१ ॥

**धर्मपथ्यर्थन्यायादनपेते ॥ निर्देशादेव पञ्चमी समर्थविभक्तिरिति ।** यद्येवम्, 'धुरो यड्ढकौ' इत्येवमादावपि निर्देशादेव समर्थविभक्तिर्विज्ञेया ? नैष दोषः, तत्र हि द्वितीया समर्थविभक्तिः । एवं ज्ञानं स्याद्—द्वितीयानुवृत्तिरपार्थिका स्यात् । इह तु न काचिद् विभक्तिरनुवर्तते, पञ्चमी च सूत्रे श्रूयते । तस्मात् सैव समर्थविभक्ति-

**पदमञ्जरी**

**तुलया सम्मितं तुल्यमिति ।** अत्र तुल्यार्थयोगे तृतीया । यद्यपि तद्योगे षष्ठ्यपि भवति, तथापि नावादिभिस्साहचर्यात्तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययः । अत एव पूर्वमुक्तम्—'तृतीयासमर्थविभक्तिर्लभ्यते' इति । षष्ठ्यन्तादपि न कश्चिद्दोषः, न्यायस्तु कथितः । कथं पुनस्तुल्यस्य तुलया सदृशत्वमत आह—**यथेति । एवं तदपीति ।** तदपि तुल्यं प्रतियोगिनं सादृश्येन परिच्छिनत्ति, एतद् व्युत्पाद्यत्वेन प्रदर्शितम् । सदृशपर्यायस्तुल्यशब्दः, नावयवार्थः कश्चित्, अत एव 'तुल्यास्यप्रयत्नं सवर्णम्' इत्यत्रोक्तम्—'तुल्यशब्दः सदृशपर्यायः' इति ॥ ९१ ॥

**धर्मपथ्यर्थन्यायादनपेते ॥ निर्देशादेवेति ।** सत्यर्थसम्भवेऽर्थान्तरस्य वा सम्भवे सति निर्देशादिति द्रष्टव्यम्

**भावबोधिनी**

समतल । [ सीता = हल के अग्रभाग द्वारा जो खेत समतल किया जाता है उसे 'सीत्यं क्षेत्रम्' कहा जाता है । ]

"रथ, सीता और हल—इनसे तदन्तविधि भी इष्ट है" इस वचन से तदन्तविधि होती है । अतः 'परमसीत्यम् । उत्तमसीत्यम् । द्विसीत्यम् । त्रिसीत्यम् । [ द्वाभ्यां सीताभ्यां समितम्, तिसृभिः सीताभिः समितम्—दो हलों से समतल किया गया, तीन हलों से समतल किया गया खेत यह अर्थ है । ]

(८) तुलया संमितम्—इस विग्रह में—तुल्यम् । सम्मित = समान, सदृश—यह अर्थ है । जिस प्रकार तराजू ( तुला ) दूसरी वस्तु का परिच्छेद ( नाप ) करती है उसी प्रकार वह 'तुल्य' भी प्रतियोगी को सादृश्य के द्वारा परिच्छिन्न = अलग करता है । [ यह 'तुल्य' शब्द सदृश का पर्याय है ] ॥ ९१ ॥

[ सूत्र में ] निर्देश के कारण पञ्चमी समर्थ विभक्ति है । पञ्चमीसमर्थ 'धर्म' आदि शब्दों से 'अनपेत' ( अप्रच्युत = युक्त ) इस अर्थ में 'यत्' प्रत्यय होता है । उदा०—धर्मात् अनपेतम्—इस विग्रह में—धर्म्यम् । [ धर्म + यत् = य, भसंज्ञा, अलोप । ] पथ्यम् । [ पथः अनपेतम्—यह विग्रह है । पथिन् + यत् भसंज्ञा के कारण टि= इन् का लोप । ] अर्थ्यम् । [ अर्थात् अनपेतम् । ] न्याय्यम् । [ न्यायात् अनपेतम्—यह अर्थ है । ]

संज्ञाधिकारादभिधेयनियमः ॥

**१८३४. छन्दसो निर्मिते ॥ ९३ ॥ ( १६४५ )**

प्रत्ययार्थसामर्थ्यलभ्या समर्थविभक्तिः । छन्दःशब्दात् तृतीयासमर्थात् 'निर्मिते' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । निर्मितः = उत्पादितः । छन्दसा निर्मितश्छन्दस्यः । इच्छया कृत इत्यर्थः ।

इच्छापर्यायश्छन्दः शब्द इह गृह्यते ॥

**१८३५. उरसोऽण् च ॥ ९४ ॥ ( १६४६ )**

उरःशब्दात्तृतीयासमर्थात् 'निर्मिते' इत्येतस्मिन्नर्थेऽण् प्रत्ययो भवति, चकाराद्यच्च । उरसा निर्मित औरसः पुत्रः, उरस्यः पुत्रः ।

संज्ञाधिकारादभिधेयनियमः ॥

**न्यासः**

रनुकल्पयितुं युक्ता ॥ ९२ ॥

**छन्दसो निर्मिते ॥ प्रत्ययार्थसामर्थ्यलभ्येति । निर्मिते इति** प्रत्ययार्थः । तत्र च्छन्दसः करणत्वमिति सामर्थ्यात् तृतीया समर्थविभक्तिर्लभ्यते । छन्दःशब्दोऽयं वेदे त्रिष्टुबादौ, इच्छायाञ्च वर्तते; इह त्विच्छायां वर्तमानो गृह्यते, अत एवाह—**इच्छया कृत इति** । इच्छावृत्तिस्तु संज्ञाग्रहणस्याभिधेयनियमार्थस्यानुवृत्तेर्लभ्यते ॥ ९३ ॥

**उरसोऽण् च ॥ संज्ञाधिकारादभिधेयनियम इति** । तेनोरसा निर्मितं सुखमित्यादौ न भवतीति भावः ॥ ९४ ॥

**पदमञ्जरी**

'धुरो यड्ढकौ' इत्यत्रातिप्रसङ्गो नोद्भावनीयः । **संज्ञाधिकारादभिधेयस्य नियत**[1] **इति** । शास्त्रीयात् पथो यदनपेतं तत् पथ्यम्, न तु तस्मादनपेतश्चोरः ॥ ९२ ॥

**छन्दसो निर्मिते ॥ प्रत्ययार्थसामर्थ्यं लभ्यते**[2] **इति** । निर्माणे छन्दसः करणत्वात् । इष्टपर्यायश्छन्दःशब्दो गृह्यते इति न वेदवचनः, नापि त्रिष्टुबादिवचनः । एतच्च संज्ञाधिकाराल्लभ्यते । यद्यपि स्वच्छन्दतो हि वचसां प्रवृत्तिः, 'छन्दानुवृत्तिर्दुस्साध्या' इत्यादावकारान्तश्छन्दशब्द इच्छापर्यायः, तथापि तस्यैव धातोरसुन्नन्तस्येच्छा-वाचित्वमविरुद्धं चेति मन्यते ॥ ९३ ॥

**उरसोऽण् च ॥ औरसः पुत्र इति** । आत्मनोत्पादित इत्यर्थः । **संज्ञाधिकारादभिधेयनियम इति** । उरसा निर्मितं सुखमित्यादौ न भवति ॥ ९४ ॥

**भावबोधिनी**

यहाँ 'संज्ञायाम्' का अधिकार होने से अभिधेय अर्थ का नियम होता है । [ इस कारण ये शब्द विशेष अर्थ में ही प्रयुक्त होते हैं । अतः 'शास्त्रीय पन्था से 'अनपेत' को ही 'पथ्य' कहा जाता है न कि सामान्य पन्था से 'अनपेत' चोर आदि को ] ॥ ९२ ॥

प्रत्ययार्थ के सामर्थ्य से समर्थ विभक्ति का लाभ होता है । तृतीयासमर्थ 'छन्दस्' शब्द से 'निर्मित' ( बनाया हुआ ) इस अर्थ में 'यत्' प्रत्यय होता है । निर्मित = उत्पन्न कराया गया । उदा०—छन्दसा निर्मितः—इस विग्रह में—छन्दस्यः । इच्छा से बनाया गया—यह अर्थ है । यहाँ 'इच्छा' का पर्याय 'छन्दस्' शब्द लिया जाता है ॥ ९३ ॥

तृतीयासमर्थ 'उरस्' शब्द से 'निर्मित' ( बनाया हुआ ) इस अर्थ में 'अण्' प्रत्यय और 'च' के बल से 'यत्' प्रत्यय होता है । उदा०—उरसा निर्मितः—इस अर्थ में—'औरसः, औरस्यः पुत्रः' यह होता है ।

'संज्ञायाम्' का अधिकार होने से विशेष अर्थ [ पुत्र ] में ही इसके प्रयोग का नियम है । [ अतः 'उरसा निर्मितं सुखम्—आदि में ये प्रत्यय नहीं होते हैं ] ॥ ९४ ॥

---

१. 'अभिधेयनियमः' इति काशिकापाठः । २. ०सामर्थ्यलभ्या इति काशिकापाठः ।

**१८३६. हृदयस्य प्रियः ॥ ९५ ॥ ( १६४७ )**

**निर्देशादेव समर्थविभक्तिः । हृदयशब्दात्षष्ठीसमर्थात् 'प्रियः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । हृदयस्य प्रियो हृद्यो देशः । हृद्यं वनम् ।**

**संज्ञाधिकारादभिधेयनियमः । इह न भवति—हृदयस्य प्रियः पुत्र इति ॥**

**१८३७. बन्धने चर्षौ ॥ ९६ ॥ ( १६४८ )**

**'हृदयस्य' इत्येव । 'बन्धने' इति प्रत्ययार्थः । तद्विशेषणमृषिग्रहणम् । बद्धचते येन तद् बन्धनम् । हृदयशब्दात्षष्ठीसमर्थाद् बन्धने ऋषावभिधेये यत् प्रत्ययो भवति । ऋषिः=वेदो गृह्यते । हृदयस्य बन्धनमृषिः हृद्यः । परहृदयं येन बद्धचते=वशीक्रियते स वशीकरणमन्त्रः=हृद्य इत्युच्यते ॥**

**१८३८. मतजनहलात् करणजल्पकर्षेषु ॥ ९७ ॥ ( १६४९ )**

**मतादिभ्यस्त्रिभ्यः शब्देभ्यस्त्रिष्वेव करणादिष्वर्थेषु यथासंख्यं यत्प्रत्ययो भवति । प्रत्ययार्थसामर्थ्याल्लब्धा**

**न्यासः**

**हृदयस्य प्रियः ॥ हृद्य इति ।** 'हृदयस्य हृल्लेख' इत्यादिना हृद्भावः ॥ ९५ ॥

**बन्धने चर्षौ ॥** ऋषिशब्दोऽयमस्त्येव गुणवति पुरुषविशेषे, अस्ति च वेदे; इह संज्ञाधिकारादेव न मनुष्यग्रहणमिति दर्शयति—**ऋषिर्वेदो गृह्यते** ॥ ९६ ॥

**मतजनहलात् करणजल्पकर्षेषु ॥ प्रत्ययार्थसामर्थ्यलभ्येति ।** करणादयः प्रत्ययार्थाः । तत्र करणादयः

**पदमञ्जरी**

**हृदयस्य प्रियः ॥** हृदयम्=अन्तःकरणम्, प्रियम्=प्रीतिकरम् । **हृद्यमिति ।** 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः ॥ ९५ ॥

**बन्धने चर्षौ ॥ षष्ठीसमर्थादिति ।** बन्धनयोगे कृद्योगलक्षणा कर्मणि षष्ठी । **ऋषिर्वेदो गृह्यते इति ।** 'तदुक्तमृषिणा' इत्यादौ दर्शनात् । यस्त्वाध्यानसम्पन्ने वसिष्ठादावृषिशब्दः, तस्य ग्रहणं न भवति संज्ञाधिकारात् ॥ ९६ ॥

**मतजनहलात्करणजल्पकर्षेषु ॥ प्रत्ययार्थसामर्थ्यलब्धेति ।**[1] करणादयः प्रत्ययार्थाः, तद्वचनाः करणादयः

**भावबोधिनी**

[ सूत्रस्थ ] निर्देश से ही षष्ठी समर्थ विभक्ति समझ ली जाती है। षष्ठीसमर्थ 'हृदय' शब्द से 'प्रिय' इस अर्थ में 'यत्' प्रत्यय होता है । उदा०—हृदयस्य प्रियः—इस विग्रह में—हृद्यः देशः । हृद्यं वनम् । [ हृदय+यत्=य, ''हृदयस्य हृल्लेखयदण्लासेषु'' (पा.सू. ६।३।५०) सूत्र से हृदय का 'हृद्' आदेश करनेपर रूप बनता है । मन को अच्छा लगने वाला।]

'संज्ञायाम्' का अधिकार होने से अभिधेय अर्थ का नियम होता है। अतः यहाँ नहीं होता है—'हृदयस्य प्रियः पुत्रः' ॥ ९५ ॥

'हृदयस्य' इसकी अनुवृत्ति है। 'बन्धने' यह प्रत्यय का अर्थ है। इसके विशेषण रूप में 'ऋषि' का ग्रहण है। 'जिससे बांधा जाय उसे बन्धन कहते हैं।' षष्ठीसमर्थ 'हृदय' शब्द से बन्धन अर्थ में, ऋषि अभिधेय रहने पर 'यत्' प्रत्यय होता है। ऋषि=वेद का ग्रहण होता है। उदा०—हृदयस्य बन्धनम् ऋषिः—इस विग्रह में 'हृद्यः' बनता है। जिस ऋषि=वेदमन्त्र के द्वारा दूसरे का हृदय बांधा जाता है=वश में किया जाता है उस वशीकरण मन्त्र को 'हृद्यः' कहा जाता है। [ 'ऋषि' शब्द पुरुष और वेद दोनों का वाचक है। यहाँ संज्ञा के अधिकार से केवल 'वेद' अर्थ लिया जाता है ] ॥ ९६ ॥

मत, जन और हल—इन तीन शब्दों से क्रमशः—करण, जल्प और कर्ष इन अर्थों में 'यत्' प्रत्यय होता है।

---

१. 'सामर्थ्याल्लब्धा' इति काशिका ।

**षष्ठी समर्थविभक्तिः । मतम् = ज्ञानम्, तस्य करणं मत्यम्, भावसाधनं वा । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । द्विहल्यः । त्रिहल्यः । कर्षणं कर्षः, भावसाधनं वा ॥**

**१८३९. तत्र साधुः ॥ ९८ ॥ ( १६५० )**

**'तत्र' इति सप्तमीसमर्थात् 'साधुः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । सामसु साधुः सामन्यः । वेमन्यः । कर्मण्यः । शरण्यः ।**

**साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकारकः; तत्र हि परत्वात् 'तस्मै हितम्' ( ५.१.५ ) इत्यनेन विधिना भवितव्यम् ॥**

**न्यासः**

शब्दा भावे करणे च व्युत्पाद्यन्त इति सामर्थ्यादेवोपलभ्यमाना षष्ठीविभक्तिर्विज्ञायते । यद्यपि कर्षशब्दः परिमाणवचनोऽप्यस्ति, तथापि करणादीनां साहचर्यात् कियाशब्द एव गृह्यते । करणशब्दो भावसाधनः । यदा तु करणसाधनः, तदा क्रियतेऽनेनेति करणम्, 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरत्रेष्यते । तस्योदाहरणम्—'द्विहल्यः' इति दर्शयति । **भावसाधनञ्चेति** । अत्रापि पूर्ववद् विभागो वेदितव्यः ॥ ९७ ॥

**तत्र साधुः ॥ सामन्य इति** । 'ये चाभावकर्मणोः' इति प्रकृतिभावः । साधुरिह निपुणः, योग्य इति भावः ॥ ९८ ॥

**पदमञ्जरी**

शब्दाः कृदन्ताः, तद्योगे यथायथम् 'कर्तृकर्मणोः कृति' इति षष्ठी भवति । संज्ञाधिकाराद्धलसम्बन्धाच्च कर्षशब्दोऽपि क्रियावचनो गृह्यते, न परिमाणशब्दः । **मतस्य करणमिति** कर्मणि षष्ठी । **जनस्य जल्प इति** कर्त्तरि । जल्पशब्दो भावसाधनः, अत एवात्र भावः साधनं वेति नोक्तम् । **हलस्य कर्ष इति** कर्मणि षष्ठी, करणस्य वा कर्तृत्वविवक्षायां कर्तरि । **द्विहल्य इति** । 'रथसीताहलेभ्यो यद्विधौ' (वा० ४७३) इति तदन्तविधिः ॥ ९७ ॥

**तत्र साधुः ॥ सामन्य इति** । 'ये चाभावकर्मणोः' इति प्रकृतिभावः । **प्रवीणः** = निपुणः, **योग्यः** = समर्थः । **तत्र हि परत्वादिति** । 'तस्मै हितम्' इत्यनेन चतुर्थीसमर्थात्प्रत्ययो विधीयते, अनेन तु सप्तमीसमर्थात्तेन नात्र 'विप्रतिषेधे परम्' इत्येतत्परत्वापरत्वं विवक्षितम्, किं तर्हि ? इष्टवाची परशब्दः, उपकारलक्षणे साधौ प्राक्क्रीतीयानामेवेष्टत्वात् 'तस्मै हितम्' इत्यनेन विधिना भवितव्यमित्यर्थः । एतच्च संज्ञाधिकाराल्लभ्यते ॥ ९८ ॥

**भावबोधिनी**

प्रत्ययार्थ के सामर्थ्य से षष्ठी समर्थ विभक्ति है। मत = ज्ञान, उसका करण—मत्यम् । [ 'करण' शब्द 'क्रियते'—इस भाव अर्थ में अथवा 'क्रियते अनेन' इस करण अर्थ में । यहाँ दोनों का ग्रहण है। इसलिये लिखते हैं—] अथवा भावसाधन = भाव अर्थ में ल्युट् होकर 'करण' बना है । ] जनस्य जल्पः—इस अर्थ में—जन्यः । [जल्प शब्द केवल भाव अर्थ में बना है । ] हलस्य कर्षः—इस अर्थ में—हल्यः । [ 'रथसीताहलेभ्यो यद्विधौ' सूत्र के अनुसार यहाँ तदन्त विधि हो जाने से] द्विहल्यः, त्रिहल्यः ये भी होते हैं। 'कर्ष' शब्द में कर्षणम्—भाव अर्थ में [अथवा करण अर्थ में] प्रत्यय है ।

**विमर्श** मतस्य करणम्—यहाँ 'कर्तृकर्मणोः कृति' सूत्र से कर्म में षष्ठी है। अतः 'मत = ज्ञान का करण = मननक्रिया यह अर्थ है। जनस्य जल्पः यहाँ उक्त सूत्र से ही कर्ता अर्थ में षष्ठी है। अतः 'लोगों का जल्प' यह अर्थ है। हलस्य कर्षः—यहाँ कर्म अर्थ में षष्ठी है। अतः 'हल का खींचना' यह अर्थ है। जल्प में केवल भाव अर्थ में प्रत्यय है किन्तु 'करण' और 'कर्ष' में करण अर्थ में भी प्रत्यय संभव है ।

अतः 'मत्यम् = ज्ञान की उत्पत्ति का साधन ।' 'हल्यम् = हल के खींचने का साधन'—ये अर्थ भी होते हैं ॥९७॥

'तत्र' इस सप्तमीसमर्थ से 'साधु' इस अर्थ में 'यत्' प्रत्यय होता है। उदा०—सामसु साधुः—इस विग्रह में—सामन्यः । [ सामन् + यत् "ये चाभावकर्मणो" ( पा० सू० ६।४।१६८ ) से प्रकृतिभाव होने से टिलोप नहीं होता है ।

## १८४०. प्रतिजनादिभ्यः खञ् ॥ ९९ ॥ ( १६६१ )

**प्रतिजनादिभ्यः शब्देभ्यः खञ् प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन्नर्थे । यतोऽपवादः । प्रतिजने साधुः प्रातिजनीनः । जनेजने साधुरित्यर्थः । ऐदंयुगीनः । सांयुगीनः ।**

**प्रतिजन । इदंयुग । संयुग । समयुग । परयुग । परकुल । परस्यकुल । अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । महाजन । प्रतिजनादिः ।**

**यत्र हितार्थ एव साध्वर्थः, तत्र वचनात्प्राक्क्रीतीया बाध्यन्ते ॥**

**न्यासः**

**प्रतिजनादिभ्यः खञ्** ॥ जनं जनं प्रति प्रतिजनम्, 'यथार्थेऽव्ययम्' इत्यव्ययीभावः । **परस्यकुलम्, अमुष्यकुलमिति** । निपातनादलुक् । 'षष्ठ्या आक्रोशे' इति वा, यदा परकुलत्वेनाक्रुश्यते ।

**यत्रेत्यादि** । 'प्रतिजन', 'सर्वजन'—इत्येवमादिषु केषुचिद्धितार्थ एव प्रतीयते न तु प्रवीणो योग्य-शब्दस्यार्थः । तेन तत्र वचनसामर्थ्यात् परेऽपि प्राक्क्रीतीयाः प्रत्यया बाध्यन्ते; अन्यथा हि वचनमनर्थकं स्यात् ॥ ९९ ॥

**पदमञ्जरी**

**प्रतिजनादिभ्यः खञ्** ॥ जनं जनं प्रति प्रतिजनमिति 'यथार्थे यदव्ययम्' इति वीप्सायामव्ययीभावः । **प्रतिजने साधुरिति** । 'तृतीयासप्तम्योर्बहुलम्' । **परस्यकुलम्, अमुष्यकुलमिति** । षष्ठीसमासेऽस्मादेव निपातनात् षष्ठ्या अलुक् । पूर्वसूत्र उक्तम्—'साधुः प्रवीणो योग्यो वा गृह्यते, नोपकारकः,' तत्र प्राक्क्रीतीयानामेवेष्टत्वा-दिति, इह तु न तथेत्याह—**यत्रेति** । **प्राक्क्रीतीया बाध्यन्ते इति** । अप्राप्तिरत्र बाधः; न हि चतुर्थ्यन्ताद्विधीय-मानानां सप्तम्यन्तेभ्यः प्राप्तिरस्ति । तत्र प्राक्क्रीतीया न भवन्तीति वक्तव्ये बाध्यत इत्युक्तम्—'चतुर्थ्यन्तेभ्यो-ऽप्यनभिधानात्प्राक्क्रीतीया न भवन्ति' इति दर्शयितुम् ॥ ९९ ॥

**भावबोधिनी**

साम = सामवेद में साधु = निपुण । ] वेमन्यः । [ वेमनि साधुः—यह अर्थ है । ] कर्मण्यः । शरण्यः । [ कर्मणि साधुः, शरणे साधुः—ये विग्रह हैं । ]

यहाँ 'साधु' का अर्थ प्रवीण या योग्य लिया जाता है, न कि उपकारक । क्योंकि उपकारक अर्थ में "तस्मै हितम्" इस सूत्र से यत् प्रत्यय होता है ॥ ९८ ॥

'तत्र साधुः' [ उसमें योग्य ]—इस अर्थ में 'प्रतिजन' आदि शब्दों से 'खञ्' प्रत्यय होता है । यह 'यत्' का अपवाद है । उदा०—प्रातिजनीनः । प्रतिजने साधुः—यह विग्रह है । जन जन अर्थात् प्रत्येक व्यक्ति के विषय में साधु = कुशल—यह अर्थ है । [ प्रतिजन + खञ् = ईन, आदिवृद्धि । ] ऐदंयुगीनः [ इदंयुगे साधुः—इस अर्थ में है । ] सांयुगीनः [ संयुगे साधुः—इस युग में कुशल, संयुग = युद्ध में निपुण यह अर्थ है । ]

[ जनं जनं प्रति—यह यथार्थ = वीप्सा में अव्ययीभाव है । "तृतीयासप्तम्योर्बहुलम्" सूत्र से सप्तमी का वैकल्पिक अम् आदेश न होने पर—'प्रतिजने' यह रूप होता है । ]

[ इस गण में पठित शब्द— ] प्रतिजन । इदंयुग । संयुग । समयुग । परयुग । परकुल । परस्यकुल । अमुष्यकुल । सर्वजन । विश्वजन । पञ्चजन । महाजन । ये प्रतिजनादि हैं । [ परस्यकुल, अमुष्यकुल—ये समस्त प्रयोग हैं । निपात के कारण षष्ठी का लुक् नहीं होता है । ]

जहाँ 'हित' अर्थ ही 'साधु' अर्थ होता है वहाँ वचन = सूत्रप्रणयन के कारण 'प्राक्क्रीतीय' [ "प्राक्क्रीताच्छः" ( पा. सू. ५।१।१ ) से पहले वाले ] प्रत्ययों का बाध होता है ॥ ९९ ॥

**१८४१. भक्ताण्णः ॥ १०० ॥ ( १६६२ )**

भक्तशब्दाद् णः प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन्विषये। यतोऽपवादः। भक्ते साधुः भाक्तः शालिः। भाक्तास्तण्डुलाः॥

**१८४२. परिषदो ण्यः ॥ १०१ ॥ ( १६६३ )**

परिषद्-शब्दाद् ण्यः प्रत्ययो भवति, 'तत्र साधुः' इत्येतस्मिन् विषये। यतोऽपवादः। परिषदि साधुः पारिषद्यः।

णप्रत्ययोऽप्यत्रेष्यते। तदर्थं योगविभागः क्रियते—'परिषदः', णो भवति। परिषदि साधुः पारिषदः, ततः 'ण्यः', परिषद इत्येव॥

**१८४३. कथादिभ्यष्ठक् ॥ १०२ ॥ ( १६६४ )**

कथादिभ्यः शब्देभ्यष्ठक् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये। यतोऽपवादः। कथायां साधुः काथिकः। वैकथिकः।

कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्गृह। गुण। गण। आयुर्वेदः। कथादिः॥

**१८४४. गुडादिभ्यष्ठञ् ॥ १०३ ॥ ( १६६५ )**

गुडादिभ्यः शब्देभ्यष्ठञ् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये। यतोऽपवादः। गुडे साधुः गौडिक इक्षुः। कौल्माषिको मुद्गः। साक्तुको यवः।

**न्यासः**

भक्ताण्णः ॥ १०० ॥ परिषदो ण्यः ॥ १०१ ॥ कथादिभ्यष्ठक् ॥ १०२ ॥ गुडादिभ्यष्ठञ् ॥ १०३ ॥

**पदमञ्जरी**

भक्ताण्णः ॥ भाक्तास्तण्डुला इति। भक्तयोग्याः, त्रिफलीकृतत्वात् ॥ १०० ॥

परिषदो ण्यः ॥ णप्रत्ययोऽप्यत्रेष्यते इति। 'पारिषदा कृतिरेषा तत्रभवताम्,' 'सर्ववेदपारिषदं हीदं शास्त्रम्' इति च भाष्यकारप्रयोगात् ॥ १०१ ॥ १०२ ॥ १०३ ॥

**भावबोधिनी**

'तत्र साधुः' इस विषय में 'भक्त' शब्द से 'ण' प्रत्यय होता है। यह यत् का अपवाद है। उदा०—भक्ते साधुः—इस विग्रह में भाक्तः शालिः। [ भात के लिये साधु=अच्छे धान को 'भाक्तः शालिः' कहते हैं। ] भाक्ताः तण्डुलाः। [ भक्ते साधवः—यह विग्रह है। भात के लिये अच्छे चावल—यह अर्थ है ] ॥ १०० ॥

'तत्र साधुः' इस विषय में 'परिषद्' शब्द से 'ण्य' प्रत्यय होता है। यह यत् का अपवाद है। उदा०—परिषदि साधुः—इस विग्रह में—पारिषद्यः बनता है। [ परिषद् + ण्य = य, आदिवृद्धि। ]

यहाँ 'ण' प्रत्यय भी इष्ट है। [ क्योंकि "पारिषदा कृतिरेषा तत्रभवताम्।" "सर्ववेदपारिषदं हीदं शास्त्रम्" ऐसे प्रयोग महाभाष्य में प्राप्त होते हैं। ] इसके लिए योग-विभाग किया जाता है—( १ ) "परिषदः" [ 'परिषद्' शब्द से ] 'ण' प्रत्यय होता है। उदा०—परिषदि साधुः—इस अर्थ में—पारिषदः। इसके बाद दूसरा योग है—( २ ) 'ण्यः'। 'परिषद्' शब्द से ही 'ण्य' भी होता है। [ पारिषद्यः यह रूप भी बनता है। ] ॥ १०१ ॥

कथा आदि शब्दों से 'तत्र साधुः' इस विषय में 'ठक्' प्रत्यय होता है। यह 'यत्' का अपवाद है। उदा०—कथायां साधुः—इस विग्रह में 'काथिकः'। [ विकथायां साधुः—इस अर्थ में ] वैकथिकः।

[ इस गण में पठित शब्द—] कथा। विकथा। वितण्डा। कुष्टचित्। जनवाद। जनेवाद। वृत्ति। सद्ग्रह। गुण। गण। आयुर्वेद। ये कथादि हैं ॥ १०२ ॥

'तत्र साधुः' इस विषय में 'गुड' आदि शब्दों से 'ठञ्' प्रत्यय होता है। यत् का अपवाद है। उदा०—गुडे साधुः—इस विग्रह में गौडिकः इक्षुः। [ गुड के लिए अच्छा गन्ना। ] कौल्माषिको मुद्गः। [ कुल्माषे साधुः—

गुड । कुल्माष । सक्तु । अपूप । मांसौदन । इक्षु । वेणु । संग्राम । सङ्घात । प्रवास । निवास । उपवास । गुडादिः ॥

**१८४५. पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥ ( १६५६ )**

**पथ्यादिभ्यः शब्देभ्यो ढञ् प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये । यतोऽपवादः । पथि साधु पाथेयम् । आतिथेयम् । वासतेयम् । स्वापतेयम् ॥**

**१८४६. सभाया यः ॥ १०५ ॥ ( १६५७ )**

**सभाशब्दाद्यः प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । सभायां साधुः सभ्यः ॥**

**१८४७. ढश्छन्दसि ॥ १०६ ॥ ( ३४५९ )**

**सभाशब्दाड्ढः प्रत्ययो भवति 'तत्र साधुः' इत्येतस्मिन्विषयये छन्दसि । यस्यापवादः । 'सभेयोयुवाऽस्य यजमानस्य वीरो जायताम् ( वा० सं० २२. २२ ) ॥**

**न्यासः**

**पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥**

**सभाया यः ॥ स्वरे विशेष इति ।** यति सति 'यतोऽनावः' इत्याद्युदात्तत्वं स्यात्, ये तु सति प्रत्ययस्वरेणान्तोदात्तत्वं स्यात् ॥ १०५ ॥ **ढश्छन्दसि ॥ १०६ ॥**

**पदमञ्जरी**

**पथ्यतिथिवसतिस्वपतेर्ढञ् ॥** पतन्त्यनेनेति पन्थाः, 'गमेरिनिः' ( दश० उ० ६.५७ ) 'पतेस्थ च' ( दश० उ० ६.६३ ); अतति सततं गच्छतीत्यतिथिः, न विद्यते तिथिर्यस्य सोऽप्यतिथिः, एकमपि दिनमत्रास्थित इत्यर्थः । वसनं वसतिः, वसेश्च' ( दश० उ० ८.५१ ) इत्यतिप्रत्ययः[1], तत्र योग्या वासतेयी रात्रिः । स्वपतिराढ्यः, स्वपतेर्योग्यं स्वापतेयं धनम् ॥ १०४ ॥ १०५ ॥ १०६ ॥

**भावबोधिनी**

इस विग्रह में बनता है । ] साक्तुको यवः । [ सक्तौ साधुः—इस अर्थ में ठञ् प्रत्यय, आदिवृद्धि "इसुसुक्तान्तात् कः" सूत्र से 'ठ' का 'क' आदेश करने पर रूप बनता है । ]

[ इस गण में पठित शब्द—] गुड । कुलमाष । सक्तु । अपूप । मांसौदन । इक्षु । वेणु । संग्राम । संघात । प्रवास । निवास । उपवास । ये गुडादि हैं ॥ १०३ ॥

"तत्र साधुः" इस विषय में पथिन्, अतिथि, वसति और स्वपति—इन शब्दों से 'ढञ्' प्रत्यय होता है । यह 'यत्' का अपवाद है । उदा०—पथि साधु—इस अर्थ में—पाथेयम् । [ पथिनि साधु इस अर्थ में पथिन्+ढञ् = ढ=एय, आदिवृद्धि, भसंज्ञा, टिलोप—पाथेयम् । मार्ग में साधु ] आतिथेयम् [ अतिथौ साधु ] वासतेयम् । वसतौ साधु । ] स्वापतेयम् [ स्वपतौ साधु ] । [ क्रमशः अर्थ—( १ ) मार्ग में भोजनादि के लिये जो अच्छा है । ( २ ) अतिथि के लिए जो अच्छा है । ( ३ ) रहने में जो अच्छा है । ( ४ ) स्वस्य = धन का पति = स्वामी अर्थात् धनवान के योग्य जो धन है । ] ॥ १०४ ॥

'तत्र साधुः' इस विषय में 'सभा' शब्द से 'य' प्रत्यय होता है । यह 'यत्' का अपवाद है । स्वर में भेद होता है । [ 'यत्' करने पर "यतोऽनावः" सूत्र से आद्युदात्त होता है । 'य' करने पर "प्रत्ययाः" सूत्र से अन्तोदात्त होता है । ] उदा—सभायां साधुः इस विग्रह में—सभ्यः । [ सभा + य, भसंज्ञा, आ का लोप । सभा में निपुण, उसमें बैठना, बोलना जानने वाला पुरुष ] ॥ १०५ ॥

वेदविषय में 'तत्र साधुः' इस विषय में 'ढ' प्रत्यय होता है । पूर्वोक्त 'य' प्रत्यय का अपवाद है । उदा०—

---

१. किन्तु दशपाद्युणाद्यन्तर्गतप्रथमपादगतेन 'बहिवस्यर्तिभ्यश्चित्' ( १.२९ ) इत्यनेन 'अति'—प्रत्ययो भवति । तत्र 'वसेश्च' ( ८.५१ ) इति सूत्रेण 'वसेः' सरन् प्रत्ययो विहितः । तेन 'वत्सरः' इति रूपं सिध्यति । अतः पदमञ्जरीकारस्य व्याख्यानमत्र चिन्त्यम् ।

**१८४८. समानतीर्थे वासी ॥ १०७ ॥ ( १६६८ )**

**'साधुः' इति निवृत्तम्। 'वासी' इति प्रत्ययार्थः। समानतीर्थशब्दात्तत्रेति सप्तमीसमर्थाद् 'वासी' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। समाने तीर्थे वासीति सतीर्थ्यः। समानोपाध्याय इत्यर्थः। तीर्थशब्देनेह' गुरुरुच्यते। समानस्य सभावः, तीर्थे यः' ॥**

**१८४९. समानोदरे शयित ओ चोदात्तः ॥ १०८ ॥ ( १६६९ )**

**समानोदरशब्दात्सप्तमीसमर्थात् 'शयितः' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति, ओकारश्चोदात्तः। शयितः= स्थित इत्यर्थः। समानोदरे शयितः समानोदर्यो भ्राता ॥**

**न्यासः**

**समानतीर्थे वासी ॥** वसतीति वासी। निपातनादेव णिनिः, ग्रहादिलक्षणो वा। अथ वा—वसनं वासः, सोऽस्यास्तीति वासी, मत्वर्थीय इनिः। अथ तत्रेति वर्तमाने पुनः 'समानतीर्थे' इति सप्तम्युपादानं किमर्थम्? प्रकृतित्वेनेष्टात् सप्तम्यन्ताद् यथा स्यात्, अनिष्टान् मा भूत्। एतेन गुरुवचनो यस्तीर्थशब्दस्तदन्तात् सप्तमीसमर्थात् प्रत्ययो भवति, न तु यः प्रयोगादिवचनस्तदन्तात्। अमुमेवार्थं चेतसि कृत्वाऽऽह—**तीर्थशब्देन गुरुरुच्यत इति** ॥ १०७ ॥

**समानोदरे शयित ओ चोदात्तः ॥ ओकारश्चोदात्त इति।** यतः स्वरे प्राप्त ओकारस्योदात्तत्वं विधीयते। **शयित स्थित इत्यर्थः।** अनेकार्थत्वात् तस्य स्थितावपि वृत्तेः, तथा हि—आमाशयः, जलाशय इति। **समानोदर्य इति।** समानश्च तदुदरञ्चेति समानाधिकरणसमासं कृत्वा ततः प्रत्ययः ॥ १०८ ॥

**पदमञ्जरी**

**समानतीर्थे वासी ॥** वसतीति वासी, निपातनाण्णिनिः, ग्रह्यादेराकृतिगणत्वाद्वा साधुरिति। **निवृत्तमिति।** तेन किं सिद्धं भवति? इत्याह—**वासीति प्रत्ययार्थ इति।** साधुरित्यस्यानुवृत्तौ तु तस्यैव विशेषणं वासिग्रहणं स्यात्। **तीर्थशब्देनेह गुरुरुच्यत इति।** प्रयागादितीर्थसाधर्म्यात्। तरन्त्यनेनेति तीर्थम्, तरतेः क्थन्। मुख्यस्य तीर्थस्य ग्रहणं न भवति; संज्ञाधिकारात् ॥ १०७ ॥

**समानोदरे शयित ओ चोदात्तः ॥ ओकारश्चोदात्त इति।** तित्स्वारितस्यापवादः। **शयितः स्थितः इति।** शेतेः स्थितावपि वृत्तेः, आमाशयः, जलाशय इति यथा। **समानोदर्य इति।** उद्दीर्यत इत्युदरम्, उदि दृणातेरलचौ पूर्वपदान्तलोपश्चेत्यलचोरन्यतरः। समानं च तदुदरं च समानोदरम्, 'पूर्वापरप्रथम' इत्यादिना समासः, ततः प्रत्ययः ॥ १०८ ॥

**भावबोधिनी**

"सभेयोऽस्य युवा यजमानस्य वीरो जायताम्"। [ वा० सं० २२।२२। ] सभा+ढ=एय, भसंज्ञा, आलोप करने पर रूप बनता है। ] १०६ ॥

"साधुः' इसकी निवृत्ति हो जाती है। वासी=रहनेवाला—यह प्रत्यय का अर्थ है। सप्तमीसमर्थ 'समानतीर्थ' शब्द से 'वासी' ( रहने वाला ) इस अर्थ में 'यत्' प्रत्यय होता है। उदा०—समाने तीर्थे वासी—इस विग्रह में—'सतीर्थ्यः' यह बनता है। समान उपाध्याय=गुरु वाला। 'तीर्थ' शब्द से यहाँ 'गुरु' कहा जाता है। "तीर्थे ये" ( पा० सू० ६।३।८७ ) से 'समान' का 'स' आदेश हो जाता है ॥ १०७ ॥

सप्तमीसमर्थ 'समानोदर' शब्द से 'शयितः' इस अर्थ में 'यत्' प्रत्यय होता है और 'ओकार' उदात्त हो जाता है। शयित=स्थित [ रहा हुआ ] यह अर्थ है। उदा०—समानोदरे शयितः—इस विग्रह में—समानोदर्यः भ्राता। [ समाने उदरे शयितः इस विग्रह में पहले "पूर्वापर०" इत्यादि सूत्र से' समास बनाकर 'यत्' प्रत्यय होता है। भ संज्ञा, अ का लोप। एक ही माता के उदर=गर्भ में रहने वाला सगा भाई। ] ॥ १०८ ॥

---

१–१. पाठोऽयं क्वचिन्नास्ति।

**१८९० सोदराद्यः ॥ १०९ ॥ ( १६६० )**

**सोदरशब्दात्सप्तमीसमर्थात् 'शयितः' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। 'विभाषोदरे' ( ६-३-८८ ) इति सूत्रेण यकारादौ प्रत्यये विवक्षिते प्रागेव समानस्य सभावः। समानोदरे शयितः सोदर्यो भ्राता। 'ओ चोदात्तः' ( ४-४-१०८) इति नानुवर्त्तते। यकारे स्वरः ॥**

**१८५१ भवे छन्दसि ॥ ११० ॥ ( ३४५६ )**

**'तत्र' इत्येव। सप्तमीसमर्थाद् 'भवे' इत्येतस्मिन्नर्थे छन्दसि विषये यत्प्रत्ययो भवति। अणादीनां घादीनां चापवादः। सति दर्शने तेऽपि भवन्ति; सर्वविधीनां छन्दसि व्यभिचारात्। 'नमो मेध्याय च विद्युत्याय च नमः'। (तै० सं० ४-५-७१७)।**

**आपादपरिसमाप्तेश्छन्दोऽधिकारः। भवाधिकारश्च 'समुद्राभ्राद्घः' ( पा. सू. ४।४।११८ ) इति यावत् ॥**

**न्यासः**

**सोदराद् यः ॥** एकदेशविकृतस्यानन्यत्वात् सोदर्यशब्दादपि पूर्वेण यत्येव प्राप्ते यो विधीयते। 'विभाषोदरे' इति विषयसप्तमीति मत्वाऽऽह—**यकारादौ प्रत्यय इत्यादि। ओ चोदात्त इति नानुवर्तत इति।** प्रत्ययविधान-सामर्थ्याद् य उदात्तः ॥ १०९ ॥

**भवे च्छन्दसि ॥ अणादीनां घादीनाञ्चापवाद इति।** 'तत्र भवः' इति प्राप्तानाम्। यद्येवम्, यता बाधितत्वाच्छन्दसि तेषामभावः स्यात्, ततश्च मुञ्जावत्यं[1] मौञ्जावतं[1] वेत्येवमादि न सिध्यति? इत्याह—**सति दर्शन इत्यादि।** कथं पुनरेवं लभ्यते? इत्याह—**सर्वविधीनामित्यादि।** सर्वविधिव्यभिचारस्तु 'बहुलं छन्दसि' इति बहुलग्रहणाल्लभ्यते। मुञ्जावान्[2] नाम पर्वतः; तत्र भवोऽसौ मौञ्जावतः[2] ॥ ११० ॥

**पदमञ्जरी**

**सोदराद्यत् ॥ यकारादौ प्रत्यये विवक्षित इति।** 'विभाषोदरे' इत्यत्र 'तीर्थे ये' इत्यतो य इत्यनुवर्तते, तत्र य इत्येषा विषयसप्तमीति दर्शयति। **ओ चोदात्त इति तु[3] नानुवर्त्तत इति।** यविधानसामर्थ्यात् ॥ १०९ ॥

**भवेच्छन्दसि ॥ अणादीनां घादीनां चापवाद इति।** 'तत्र भवः' इति प्राप्तानाम्। **सति दर्शने तेऽपि भवन्तीति।** तद्यथा—मुञ्जवान्नाम पर्वतस्तत्र भवो मौञ्जवतस्तस्येति भक्षः। **मेध्यायेति।** अत्र 'यतोऽनावः' इत्याद्युदात्तत्वं प्राप्नोति, अन्तस्वरितं चाधीयत इति ॥ ११० ॥

**भावबोधिनी**

सप्तमी-समर्थ 'सोदर' शब्द से 'शयितः' ( रह चुका ) इस अर्थ में 'य' प्रत्यय होता है। यकारादि प्रत्यय के विवक्षित होने पर पहले से ही "विभाषोदरे" ( पा० सू० ६।३।८६ ) सूत्र से 'समान' का 'स' आदेश हो जाता है। उदा०—समानोदरे शयितः—इस विग्रह में—सोदर्यः भ्राताः। [ समानोदर + य में पहले समान का 'स' हो जाने से सोदर + य में 'अ' का लोप हो जाता है। ] 'ओ चोदात्तः' इसकी अनुवृत्ति नहीं होती है। यकार में [ उदात्त ] स्वर होता है ॥ १०९ ॥

'तत्र' इसकी अनुवृत्ति होती है। सप्तमीसमर्थ शब्द से 'भव' अर्थ में वेद-विषय में 'यत्' प्रत्यय होता है। यह अणादि और घादि प्रत्ययों का अपवाद है। यदि किसी प्रयोग में उनका दर्शन हो तो वे प्रत्यय भी होते हैं क्योंकि वेद में सभी विधियाँ वैकल्पिक होती हैं, व्यभिचरित हैं। उदा०—"नमो मेध्याय च विद्युत्याय च नमः"। [ तै० सं० ४।५।७।१६ ]।

पाद की समाप्ति तक छन्दः = वेद का अधिकार है। 'भव' इसका अधिकार 'समुद्राभ्राद घः' ( पा० सू० ४।४।११८ ) तक है ॥ ११० ॥

---

१. क्वचित् 'मुञ्जीरात्यं मौञ्जीरातम्'–इति पाठः।

२. मुञ्जीरातो नाम......मौञ्जीरातः'–इति पाठा०।

३. 'तु' इति नास्ति काशिकान्यासयोश्च।

## १८९२ पाथोनदीभ्यां ड्यण् ॥ १११ ॥ ( ३४५७ )

पाथःशब्दान्नदीशब्दाच्च ड्यण् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्नर्थे । यतोऽपवादः । पाथसि भवः 'पाथ्यो वृषा' (ऋ० ६. १६. १५) 'च नो' दधीत नाद्यो गिरो मे ( ऋ. ५।३५।१ ) प्रयच्छति । पाथोऽन्तरिक्षम् ॥

## १८९३. वेशन्तहिमवद्भ्यामण् ॥ ११२ ॥ ( ३४५८ )

वेशन्तशब्दाद्धिमवच्छब्दाच्चाण् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । 'वैशन्तीभ्यः स्वाहा' ( तै० सं० ७.४.१३.९ ) । हैमवन्तीभ्यः स्वाहा ( शौ० १९.१.१ ) ॥

## १८९४. स्रोतसो विभाषा ड्यड्ड्यौ ॥ ११३ ॥ ( ३४५९ )

स्रोतश्शब्दाद्विभाषा 'ड्यत्', 'ड्य'—इत्यतौ प्रत्ययौ भवतः' 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । पक्षे सोऽपि भवति । स्रोतसि भवः 'स्रोत्यः' (ऋ० १०. १०४. ८) । 'स्रोतस्यः' (अथर्व० १९.२.४) । ड्यड्ड्ययोः स्वरे विशेषः ॥

### न्यासः

**पाथोनदीभ्यां ड्यण्** ॥ १११ ॥ **वेशन्तहिमवद्भ्यामण्** ॥ ११२ ॥

**स्रोतसो विभाषा ड्यड्ड्यौ** ॥ ड्यड्ड्ययोः स्वरे विशेषः । ड्यति हि सति 'तित् स्वरितम्' इत्यन्तस्वरितः स्यात्, ड्ये तु प्रत्ययस्वरेणान्तो दात्तत्वं भवति ॥ ११३ ॥

### पदमञ्जरी

**पाथोनदीभ्यां ड्यण्** ॥ **पाथोऽन्तरिक्षमिति** । पाति भूताद्यवकाशदानेनेति कृत्वा । यद्यपि 'पातेर्बलेजुट्' ( दश० उ० ९.६३ ), 'उदके थुट्' ( दश० ९.६४ ), 'अन्ने च' ( दश० ९.६५ ) इति अन्नोदकयोः पाथःशब्दोऽसुनि व्युत्पाद्यते, तथापि बाहुलकादन्तरिक्षेऽपि भवति ॥ १११ ॥

**वेशन्तहिमवद्भ्यामण्** ॥ वेशन्तः=पल्वलम्, 'विशेर्झ च' ( दश० उ० ६.१७ ), तत्र भवा आपः वैशन्त्यः ॥ ११२ ॥

**स्रोतसो विभाषा ड्यड्ड्यौ** ॥ 'स्रुरीभ्यां तुट् च' (दश०उ० ९.६२) इत्यसुन् । स्रोतः = नदीप्रवाहः॥११३॥

### भावबोधिनी

'तत्र भवः' [ वहाँ होने वाला ] इस अर्थ में 'पाथस्' और 'नदी' शब्दों से [ वेदविषय में ] 'ड्यण्' ( य ) प्रत्यय होता है । यह यत् का अपवाद है । उदा०—पाथसि भवः—इस अर्थ में—"पाथ्यः वृषा ।" ( ऋ०६।१६।१५ ), [ पाथस्+ड्यण्=य, णित् होने से आदिवृद्धि और डित् होने से टिलोप—पाथ्+य ] 'नाद्यो गिरो में प्रयच्छतु' । ( ऋ० २।१५।१ ) [ नदी+ड्यण्=य, शेष कार्य पूर्ववत् ] पाथस्=अन्तरिक्ष । [ पाथ्यः = अन्तरिक्ष में होने वाला । नाद्यः=नदी में होने वाला ] ॥ १११ ॥

'तत्र भवः' इस विषय में 'वेशन्त' और 'हिमवत्' शब्दों से [ वेदविषय में ] 'अण्' प्रत्यय होता है । 'यत्' का अपवाद है । उदा०—"वैशन्तीभिः स्वाहा ।" [ तै० सं० ७।४।१३।९ ] "हैमवन्तीभिः स्वाहा ।" [ शौ० १९।२।१ ] [ वेशन्त=पल्वल=तालाब, उसमें होने वाले जल । हिमवान्=हिमालय में होने वाले जल ] ॥ ११२ ॥

'तत्र भवः' इस विषय में 'स्रोतस्' शब्द से विकल्प से 'ड्य' और 'ड्यत्' प्रत्यय होते हैं । यह 'यत्' का अपवाद है । पक्ष में वह 'यत्' प्रत्यय भी होता है । उदा०—स्रोतसि भवः—स्रोत्यः [ स्रोतस्+ड्य, ड्यत्=य, डित् होने से टि=अस् का लोप । जब ये दोनों नहीं होते हैं, तब 'यत्' होता है—]स्रोतस्यः [ स्रोतस्+यत् ] ड्य और ड्यत् में केवल स्वर में भेद होता है । [ तित् होने से स्वरित हो जाता है । रूप एक समान ही रहता है । स्रोतस्=नदीजल का प्रवाह, उसमें होने वाला ] ॥ ११३ ॥

**१८५५. सगर्भसयूथसनुताद्यन् ॥ ११४ ॥ ( ३४६० )**

**'सगर्भ', 'सयूथ', 'सनुत'—शब्देभ्यो यन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । स्वरे विशेषः । 'अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः ( तै० सं० १.२.४.२ ) 'यो नः सनुत्यः (ऋ० २.३०.९) सर्वत्र 'समानस्य छन्दसि' ( ६.३. ८४ ) इति सभावः ॥**

**१८५६. तुग्राद् घन् ॥ ११५ ॥ ( ३४६१ )**

**तुग्रशब्दाद् घन् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । यतोऽपवादः । 'त्वमग्ने वृषभस्तुग्रियाणाम्' । अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः ॥**

**१८५७. अग्राद्यत् ॥ ११६ ॥ (३४६२ )**

**अग्रशब्दाद्यत् प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्विषये । अग्रे भवम् 'अग्रयम् ( खि० १.३.७ ) ।**

**न्यासः**

**सगर्भसयूथसनुताद् यन् ।** समानो गर्भः, समानो यूथ इति कर्मधारयः । 'णु स्तुतौ', भावे क्तः, समानं नुतमस्येति बहुव्रीहिः । समानञ्च तन्नुतञ्चेति कर्मधारयो वा । **स्वरे विशेष इति ।** यति सति 'तित् स्वरितम्' इत्यन्तस्वरितत्वं स्यात्, यनि सति नित्स्वरेणाद्युदात्तत्वं स्यात् । **सर्वत्र समानस्य च्छन्दसीति ।** 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' इत्यस्योपलक्षणपर एकदेश उपात्तः ॥ ११४ ॥**तुग्राद् घन् ॥** ११५ ॥

**अग्राद् यत् ॥ सामान्येन यद्विहित इति ।** 'भवे च्छन्दसि' इत्यनेन । अथ यद्ग्रहणं किमर्थम्, न यथा-

**पदमञ्जरी**

**सगर्भसयूथसनुताद्यन् ॥** 'अर्त्तिगृभ्यां भन्' ( दश० ७.२४ ), गिरति गीर्यते वा गर्भः । युता भवन्त्यस्मिन्यूथम्, 'तिथपृष्ठगूथयूथप्रोथाः' ( दश० उ० ६.३७ ) इति क्थन्प्रत्ययान्तो निपातितः । नुतिर्नुतम्, 'नपुंसके भावे क्तः' । सगर्भादयस्त्रोऽपि कर्मधारयाः ॥ ११४ ॥

**तुग्राद् घन् ॥** 'तुरुस्तुशम्यमः सार्वधातुके' इत्यत औणादिको रन् गुडागमः ॥ ११५ ॥

**अग्राद्यत् ॥** 'ऋज्रेन्द्राग्र' ( दश० उ० ८.४६ ) इत्यग्रशब्दो निपातितः । **सामान्येनेति ।** 'भवे छन्दसि' इति । **ताभ्यां बाधा मा भूदिति पुनर्विधीयत इति ।** एवमपि यद्ग्रहणमनर्थकम्, अग्रादित्येवास्तु, प्राकरणिको

**भावबोधिनी**

'सगर्भ', 'सयूथ', और 'सनुत, इन शब्दों से 'तत्र भवः' इस विषय में 'यन्' प्रत्यय होता है । यह 'यत्' का का अपवाद है । [ 'यत्' में तित् होने से स्वरित और 'यन्' में नित् होने से आद्युदात्त होता है । ] यह स्वरों में अन्तर है । उदा०—अनुभ्राता सगर्भ्यः [ समानो गर्भः—इस विग्रह में कर्मधारय करने पर 'यन्' प्रत्यय में 'समान' का 'स' आदेश—सगर्भ + य, भसंज्ञा, अलोप । छोटा भाई 'सगर्भ्य' होता है । ] अनुसखा सयूथ्यः ।" [ समानो यूथः—यह कर्मधारय करके 'समान' का 'स' आदेश सयूथ + यत्, भसंज्ञा, अलोप, समान समूह में होने वाला मित्र । ] "यो नः सनुत्यः ।" ['समानं नुतमस्य' = यह बहुव्रीहि है अथवा 'समानं च नुतं च—' यह कर्मधारय करके 'सनुत' बनता है । सनुते भवः—इस अर्थ में सनुत + यन् = य, भसंज्ञा, अलोप । ] इन तीनों शब्दों में "समानस्य छन्दसि" ( पा. सू. ६।३।८४ ) सूत्र से 'समान' का 'स' आदेश होता है ।। ११४ ।।

'तत्र भवः' इस विषय में 'तुग्र' शब्द से 'घन्' प्रत्यय [ वेद में ] होता है । यत् का अपवाद है । उदा०—त्वमग्ने वृषभस्तुग्रियाणाम् ।" [ तुग्रे भवः—इस अर्थ में तुग्र + घन् = घ = इय, भसंज्ञा, अलोप—तुग्रिय । षष्ठीबहुवचन का रूप है । ] अन्न, आकाश, यज्ञ और वरिष्ठ—इन अर्थों में 'तुग्र' शब्द [ प्रयुक्त होता है । ] ।। ११५ ।।

'तत्र भवः' इस विषय में 'अग्र' शब्द से 'यत्' प्रत्यय वेदविषय में होता है । उदा०—अग्रे भवम्—इस विग्रह में 'अग्र्यम् ।' यह सूत्र किस लिए बनाया गया, क्योंकि सामान्य रूप से 'यत्' प्रत्यय किया ही गया है ? आगे "घच्छौ

**किमर्थमिदम्, यावता सामान्येन यद्विहित एव ? 'घच्छौ च' (४.४.११७) इति वक्ष्यति, ताभ्यां बाधा मा भूदिति पुर्नविधीयते ॥**

**१८५८. घच्छौ च ॥ ११७ ॥ ( ३४६३ )**

**अग्रशब्दाद्यत्, घच्छौ प्रत्ययौ भवन्ति, 'तत्र भवः' इत्येतस्मिन्विषये। 'अग्रयम्', ( खि० १.३.७ ) अग्रियम्, ( ऋ० १.१३.१० ) अग्रीयम् ( मै० सं० २.५.१३.१३ )।**

**चकारः 'तुग्राद्घन्' ( ३.४. ११५ ) इत्यस्यानुकर्षणार्थः। अग्रियम्। स्वरे विशेषः ॥**

**१८५९. समुद्राभ्राद् घः ॥ ११८ ॥ ( ३४६४ )**

**समुद्रशब्दाद्, अभ्रशब्दाच्च घः प्रत्ययो भवति 'तत्र भवः' इत्येतस्मिन्नर्थे। यतोऽपवादः। समुद्रियाणां नदीनाम्' ( ऋ० ७. ८७.१ )। अभ्रियस्येव घोषः ( ऋ० १०.६८.१ )।**

**न्यासः**

विहितमेवोच्येत ? नैवं शक्यम्; 'अग्रपश्चाड्डिमच्' इत्येवाग्रशब्दाड् डिमजप्युक्तः, तत्र यथाविहिते प्रत्यय उच्यमाने डिमजपि स्यात्। तस्माद् यद्ग्रहणं कर्तव्यम् ॥ ११६ ॥

**घच्छौ च ॥ स्वरे विशेष इति।** घे विहितेऽन्तोदात्तत्वं स्यात्, घनि तु सत्याद्युदात्तत्वं भवति ॥ ११७ ॥

**समुद्राभ्राद् घः ॥** ननु च 'अजाद्यदन्तम्, 'अल्पाच्तरम्' इत्यभ्रशब्दस्य पूर्वनिपातेन भवितव्यम्, तत्

**पदमञ्जरी**

यद्भविष्यति; अथ वा 'अग्राद् घच्छौ च' इति चकाराद्भविष्यति, 'अग्रपश्चाड्डिमच्' ( वा० ४४८ ) इत्यस्य समुच्चयो न शक्यः; विदेशस्थत्वात्? एवमप्यनन्तरस्य घनः समुच्चयो विज्ञायेत। योगविभागे पुनरनन्तरो घनेव स्यात्, योगविभागसामर्थ्यान्न भविष्यति। अथ कथम् 'ताश्च एव चाग्रचजननः', 'एतच्छिवे विजानीहि ब्राह्मणाग्रचस्य लक्षणम्' इति भाषायां प्रयोगः ? छन्दोवदृषयः कुर्वन्ति ॥ ११६ ॥

**घच्छौ च ॥ चकारस्तुग्राद्घनित्यस्यानुकर्षणार्थ इति।** पूर्वमेव विहितस्य यतोऽनुकर्षणे प्रयोजनाभावात्॥११७॥

**समुद्राभ्राद् घः ॥** समुनत्तीति समुद्रः, उन्देः 'स्फायितञ्चि' ( दश० उ० ८.३१ ) इति रक्प्रत्ययः। अपो बिभर्त्तीत्यभ्रम्, मूलविभुजादित्वात्कः। **तस्य लक्षणस्येति।** तस्य पूर्वनिपातस्य यल्लक्षणं तस्येत्यर्थः।

**भावबोधिनी**

च" यह सूत्र कहा जायगा। इन दोनों प्रत्ययों से 'यत्' का बाध न हो जाय, इसलिये इस सूत्र से पुनः विधान किया जा रहा है। [ अतः औत्सर्गिक यत् से निर्वाह नहीं हो सकता, यह सूत्र आवश्यक है। ] ॥ ११६ ॥

'तत्र' भवः' इस विषय में 'अग्र' शब्द से 'घ' और 'छ' प्रत्यय [ वेदविषय में ] होते हैं। उदा०—अग्रयम्, अग्रियम्, अग्रीयम्। [ अग्र + यत् = य, भसंज्ञा अलोप करने पर प्रथम रूप बनता है। अग्र + घ = इय्, करने पर दूसरा रूप बनता है। अग्र + छ = ईय् करने पर तीसरा रूप बनता है। सभी का एक अर्थ है—अग्रे भवम्। ]

'च' कार यह 'तुग्राद्घन्' ( पा. सू. ४।४।११५ ) इसके अनुकर्षण = अनुवृत्ति के लिये है—अग्रियम्। [ अग्र + घन् = इय। यद्यपि 'घ' से भी यह रूप बनता है परन्तु ] दोनों में स्वर का भेद है। [ क्योंकि 'घ' अनुदात्त है और 'घन्' यह नित् होने से आद्युदात्त है ] ॥ ११७ ॥

'तत्र भवः' इस अर्थ में 'समुद्र' और 'अभ्र' शब्दों से 'घ' प्रत्यय [ वेदविषय में ] होता है। यह यत् का अपवाद है। उदा०—"समुद्रियाणां नदीनाम्।" [ ऋ० ७।८७।१ ] "अभ्रियस्येव घोषः।" [ ऋ० १०।६८।१ ] [ समुद्रे भवा—इस अर्थ में 'घ' प्रत्यय, इय् आदेश। अभ्रे भवम्—इस अर्थ में—अभ्र + घ = इय्। ]

'अभ्र' शब्द का पूर्वनिपात नहीं होता है, क्योंकि [ "अजाद्यदन्तम्" ( पा. सू. २।२।३३ ) "अल्पाच्तरम्"

**अभ्रशब्दस्यापूर्वनिपातः; तस्य लक्षणस्य व्यभिचारित्वात् ॥**

**१८६०. बर्हिषि दत्तम् ॥ ११९ ॥ ( ३४६५ )**

**'भवः' इति निवृत्तम्। बर्हिः शब्दात्सप्तमीसमर्थात् 'दत्तम्' इत्येतस्मिन्नर्थे यत् प्रत्ययो भवति। 'बर्हिष्ये॑षु नि॒धिषु॑ प्रि॒येषु॑' ( ऋ० १०.१५.५ ) ॥**

**१८६१. दूतस्य भागकर्मणी ॥ १२० ॥ ( ३४६६ )**

**निर्देशादेव समर्थविभक्तिः। दूतशब्दात् षष्ठीसमर्थाद्भागे कर्मणि चाभिधेये यत्प्रत्ययो भवति। भागः = अंशः। कर्म = क्रिया। यद॑ग्ने॒ यासि॑ दू॒त्य॑म् ( ऋ० १.१२.४ )। दूतभागः, दूतकर्म वा ॥**

**१८६२. रक्षोयातूनां हननी ॥ १२१ ॥ ( ३४६७ )**

**निर्देशादेव समर्थविभक्तिः। रक्षःशब्दाद्यातुशब्दाच्च षष्ठीसमर्थात् 'हननी' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। हन्यतेऽनयेति हननी। 'या वां॑ मित्रावरुणौ। र॒क्षस्या॑ त॒नूः ( मै० सं० २.३.१ )। रक्षसां हननी।**

**न्यासः**

कथमपूर्वनिपातः ? इत्याह—**अभ्रशब्दस्येत्यादि** ॥ ११८ ॥ **बर्हिषि दत्तम्** ॥ ११९ ॥

**दूतस्य भागकर्मणी** ॥ भावे 'तस्येदम्' इत्यणि प्राप्ते 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञि यतो विधानम्। येषाम् 'सख्युर्यः' इत्यत्र 'दूतवणिग्भ्याञ्च' इत्युपसंख्यायते, तेषां कर्मणि ये प्राप्ते ॥ १२० ॥

**रक्षोयातूनां हननी** ॥ **निर्देशादेव समर्थविभक्तिः**। सा पुनः षष्ठी 'कर्तृकर्मणोः कृति' इति कर्मणि द्रष्टव्या। योग्यतामात्रे विवक्षिते हन्यतेऽनयेति हननी, करणे ल्युट् 'टिड्ढाणञ्' इति ङीप्। ननु च रक्षोयातु-

**पदमञ्जरी**

**व्यभिचारित्वादिति**। व्यभिचारस्य चायमेव निर्देशो लिङ्गम् ॥ ११८ ॥

**बर्हिषि दत्तम्** ॥ 'बृहेर्नलोपश्च' ( दश० उ० ३१ ) इतीसिप्रत्ययः, बर्हिः ॥ ११९ ॥

**दूतस्य भागकर्मणी** ॥ दूताद्भागे 'तस्येदम्' इत्यणि प्राप्ते वचनम्, कर्मणि तु दूतवणिग्भ्यां चेत्यौपसंख्यानिके ये ॥ १२० ॥

**रक्षोयातूनां हननी** ॥ रक्षेरसुनि रक्षः 'कमिमनिजनि' ( दश० उ० १.१२५ ) इत्यादिना। यातेस्तौ यातुः। यातुशब्दो रक्षःपर्यायः। 'विरूपाणामपि समानार्थानाम्' इत्येकशेषस्तु न भवति; बह्वर्थाभिधायिस्वरूप-

**भावबोधिनी**

(पा. सू. २।२।३४) ये ] सूत्र व्यभिचारी हैं। [ समुद्र और अभ्र के द्वन्द्व में 'अभ्र' का पूर्वनिपात इसलिये नहीं होता है, क्योंकि इसके नियम अपरिहार्य नहीं हैं। ] ॥ ११८ ॥

'भवः' ( होने वाला ) इसकी निवृत्ति हो जाती है। सप्तमीसमर्थ 'बर्हिः' इस शब्द से 'दत्तम्' [ दिया हुआ ] इस अर्थ में 'यत्' प्रत्यय [ वेदविषय में ] होता है। उदा०—बर्हिष्येषु निधिषु प्रियेषु। [ ऋ० १०।१५।५। बर्हिषि दत्तम्—इस अर्थ में यत् प्रत्यय होता है। ] ॥ ११९ ॥

[सूत्रस्थ] निर्देश से ही समर्थ विभक्ति [ समझ लेनी चाहिए ]। षष्ठी समर्थ 'दूत' शब्द से 'भाग' और 'कर्म' अर्थ रहने पर 'यत्' प्रत्यय होता है। भाग=अंश, हिस्सा। कर्म=क्रिया, काम। उदा०—"यत्ते अग्ने दूत्यम्।" दूत का भाग अथवा दूत का कर्म। [ दूत + यत्, भसंज्ञा, अलोप। यहाँ भाग अर्थ में "तस्येदम्" इस सूत्र से अण् प्राप्त है और कर्म अर्थ में "दूतवणिग्भ्यां च" इससे 'य' प्राप्त है, किन्तु प्रस्तुत सूत्र यत् करता है। 'य' और 'यत्' में रूप समान होने पर भी अत्तोदान्त और स्वरित ये स्वर होते हैं। अतः स्वरितार्थ यह स्वतन्त्र विधान है। ] ॥ १२० ॥

[ सूत्रस्थ ] निर्देश से ही समर्थ विभक्ति [ का ज्ञान हो जाता ] है। 'रक्षस्' शब्द और 'यातु' शब्द जो षष्ठी-समर्थ हैं, उनसे 'हननी' इस अर्थ में 'यत्' प्रत्यय होता है। हन्यतेऽनया=वध किया जाता है, जिसके द्वारा वह 'हननी'

**'यातव्या' (मै० सं० २.३.१ )। यातूनां हननी।**

**बहुवचनं स्तुतिवैशिष्टच-ज्ञापनार्थम्। बहूनां रक्षसां हननेन तनूः स्तूयते॥**

**१८६३. रेवतीजगतीहविष्याभ्यः प्रशस्ये॥ १२२। ( ३४६८ )**

**रेवत्यादिभ्यः षष्ठीसमर्थेभ्यः प्रशस्ये वाच्ये यत्प्रत्ययो भवति। प्रशंसनं प्रशस्यम्, भावे क्यप् प्रत्ययो भवति। 'यद्वो रेवती रेवत्यम्' ( काठ० सं० १.८ )। 'यद्वो जगती जगत्यम्' ( काठ० सं० १.८ )। 'यद्वो हविष्या हविष्यम्' ( काठ० सं० १.८ )। हविषे हिता हविष्याः, तासां प्रशंसनं हविष्यम्। 'यस्येति च ( ६.४.१४८ ) इति लोपे कृते 'हलो यमां यमि' ( ८.४.६४ ) इति लोपः॥**

**न्यास**

शब्दयोर्द्वित्वाद् द्विवचनेन भवितव्यम्, तत् कथमिदमुक्तम्? वचनसामर्थ्यात्। सम्भावनमेव स्तुतिरिति दर्शयितुमाह—**बहुवचनमित्यादि**। योगश्चायम् 'तस्येदम्' इत्यणि प्राप्ते वेदितव्यः॥ १२१॥

**रेवतीजगतीहविष्याभ्यः प्रशस्ये॥ षष्ठीसमर्थेभ्य इति**। सामर्थ्याद्धि षष्ठ्येव समर्थविभक्तिर्विज्ञायते। यथा हि—'शंसु स्तुतौ' इत्यतोऽस्मादेव निपातनाद् भावे क्यप्प्रत्ययः; 'कृत्यल्युटो बहुलम्' इति बहुलवचनात्। तत्रावश्यं कृद्योगलक्षणया षष्ठ्या भवितव्यम्। अयमपि योगः पूर्ववदणि प्राप्ते वेदितव्यः॥ १२२॥

**पदमञ्जरी**

परत्वेन सूत्रे भिन्नार्थयोर्निर्देशात्। **निर्देशादेव समर्थविभक्तिरिति**। सा पुनः 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। **बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थमिति**। तद्धि बहुवचनात्प्रत्ययविध्यर्थम्, अन्यथा द्वित्वाद् द्विवचनमेव न्याय्यं स्यात्। कथं बहुवचनेन स्तुतिवैशिष्टचं ज्ञाप्यते? तत्राह—**बहूनामिति**। बहुवचनान्तात्प्रत्यये बहूनां रक्षसां हनने सामर्थ्यमुद्भाव्यते मन्त्रे। तथा च स्तुतिविशिष्टा सम्पूर्णा भवति। योगश्चायं शैषिकयोरण्छयोरपवादः॥ १२१॥

**रेवतीजगतीहविष्याभ्यः प्रशस्ये॥** रयिरस्यास्तीति **रेवती**, 'रयेर्मतौ बहुलम्' ( वा० ६६५ ) इति बहुलवचनात्सम्प्रसारणम्। उगित्त्वान्ङीप्, नक्षत्रे तु गौरादित्वान्ङीष्। जगच्छब्दाच्छतृवद्भावान्ङीप्। **षष्ठीसमर्थेभ्य इति**। 'शंसु स्तुतौ' ( धा० पा० ७२८ ) इत्यस्मात् 'कृत्यल्युटो बहुलम्' इति भावे क्यप् तद्योगे कर्मणि षष्ठी भवति, हविषे हिता हविष्या, 'उगवादिभ्यो यत्'॥ १२२॥

**भावबोधिनी**

है। उदा०—"अग्ने रक्षस्या तनूः।" [ मै० २।३।१ ] [ रक्षस् + यत् = य, टाप्। इसका अर्थ है— ] राक्षसों को मारने वाली। "यातव्या।" [ मैसं. २।३।१ ] यातुओं को मारने वाली।

बहुवचन स्तुति के वैशिष्टच के लिए है—बहुत से राक्षसों का वधसाधन होने से 'तनु' की स्तुति की जाती है। [ भाव यह है कि सूत्र में 'रक्षस्' और 'यातु' दो का उल्लेख होने से द्विवचन का प्रयोग उचित था किन्तु बहुवचन का प्रयोग विग्रह में बहुवचन का ज्ञान कराने के लिए है, इस कारण बहुत से राक्षसों के वध की साधन तनु की स्तुति की जाती है। ]॥ १२१॥

रेवती, जगती और हविष्या—इन षष्ठीसमर्थ शब्दों से 'प्रशस्य' [ अच्छा होना ] अर्थ में 'यत्' प्रत्यय होता है। प्रशंसन = प्रशस्य है, भाव में क्यप् = य प्रत्यय होता है। उदा०—"यद्वो रेवती रेवत्यम्।" [ काठक सं० १।८ ] "यद्वो जगती जगत्यम्।" [ काठक सं० १।८ ] यद्वो हविष्या हविष्यम्।" [ काठक सं० १।८ ] [ रेवती + यत् = य, भसंज्ञा, ईलोप। जगती + यत् = य, भसंज्ञा, ईलोप। दोनों में 'प्रशंसन' अर्थ की प्रतीत होती है। ] हविषे हिता—इस विषय में 'हविष्या' बनता है। उनका 'प्रशंसन' इस अर्थ में—'हविष्यम्'। [ हविष्या + यत् = य, भसंज्ञा के बाद ] "यस्येति च" ( पा. सू. ६।४।१४८ ] सूत्र से आलोप कर देने पर "हलो यमां यमि" ( पा. सू. ८।४।६४ ) सूत्र से हविष्य + य, के 'य्' का लोप हो जाता है॥ १२२॥

**१८६४. असुरस्य स्वम् ॥ १२३ ॥ ( ३४६९ )**

असुरशब्दात्षष्ठीसमर्थात् 'स्वम्' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। अणोऽपवादः। असुर्यं वा एतत्पात्रम्, यत् यच्चक्रवृत्तम् कुलालकृतम् ( मै० सं० १.८.३ ) ॥

**१८६५. मायायामण् ॥ १२४ ॥ ( ३४७० )**

असुरशब्दात्षष्ठीसमर्थात् 'मायायाम्' स्वविशेषेऽणप्रत्ययो भवति। पूर्वस्य यतोऽपवादः। 'आसुरी माया स्वधया कृतासि' ( वा० सं० ११.६९ ) ॥

**१८६६. तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ १२५ ॥ ( ३४७१ )**

'तद्वान्' इति निर्देशादेव समर्थविभक्तिः। मतुबन्तात्प्रातिपदिकात् प्रथमासमर्थादासामिति षष्ठ्यर्थे यत्प्रत्ययो भवति, यत्प्रथमासमर्थमुपधानो मन्त्रश्चेत्स भवति, यत्तदासामिति निर्दिष्टमिष्टकाश्चेत्ता भवन्ति।

**न्यासः**

**असुरस्य स्वम् ॥ षष्ठीसमर्थादिति।** 'असुरस्य' इति निर्देशादेव षष्ठी समर्थविभक्तिर्लभ्यते। **स्वमिति।** आत्मीयमित्यर्थः। **अणोऽपवाद इति।** 'तस्येदम्' इति प्राप्तस्य ॥ १२३ ॥

**मायायामण् ॥** मायायां नेति वक्तव्येऽण्ग्रहणं विस्पष्टार्थम् ॥ १२४ ॥

**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ स विवक्षितोऽवयवोऽस्मिन्निति तद्वान्।** कः पुनरसौ? समुदायः। अत एवाह—**तद्वानित्यवयवेन समुदायो निर्दिश्यत इति।** एतेनैकदेशादिदं प्रत्ययविधानमित्युक्तं भवति। **वर्चः शब्दोऽस्मिन् मन्त्रेऽस्तीत्यादिना** तत्समुदायं प्रदर्शयति। **चयनवचन इति।** चिनोतेरेव करणे लुप्।

**पदमञ्जरी**

**असुरस्य स्वम् ॥** सुरोऽसुरः=सुरप्रतिपक्षः। अथ वा 'असेरुरन्' ( दश० उ० ८.२४ ) अस्यत्यस्यते वेत्यसुरः ॥ १२३ ॥

**मायायामण् ॥** मीयतेऽनयेति माया=असदर्थप्रकाशनशक्तिः। माङ औणादिको यः। नेति वक्तव्येऽण्ग्रहणं लाघवे विशेषाभावात् ॥ १२४ ॥

**तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥** मतुनिर्ह्रासः=मतोरपचयः। **तद्वानित्यवयवेन समुदायो निर्दिश्यत इति।** स विवक्षितो वर्चःशब्दादिरवयवोऽस्मिन्मन्त्रलक्षणे समुदायेऽस्तीत्येवमेकदेशार्थाभिधायिनः सर्वनाम्नः समुदाये मतुबयं विहित इत्यर्थः। **वर्चःशब्दो यस्मिन्मन्त्रेऽस्तीति।** स ततः कुम्भेष्टकोपधानमन्त्रः—

**भावबोधिनी**

षष्ठीसमर्थ 'असुर' शब्द से 'स्वम्' इस अर्थ में 'यत्' प्रत्यय होता है। यह [ "तस्येदम्" सूत्र से प्राप्त ] अण् का अपवाद है। उदा०—"असुर्यं वा एतत् पात्रं यच्चक्रवृतं कुलालकृतम्।" [ मै. सं. १-८-३ असुर+यत्, भसंज्ञा, अलोप। स्वम्=धनादि से भिन्न अर्थ में अण् होने से आसुरम्, आसुरी आदि रूप होते हैं। ] ॥ १२३ ॥

षष्ठीसमर्थ 'असुर' शब्द से 'माया' रूप स्वविशेष अर्थ में 'अण्' प्रत्यय होता है। पूर्ववर्ती यत् का अपवाद है। उदा०—आसुरी माया स्वधया कृतासि। [वा. सं. ११।६९] [असुर+अण्=अ, आदिवृद्धि, भसंज्ञा, स्त्रीलिङ्ग में ङीप्=ई होता है। यहाँ "मायायां न" यही सूत्र करना चाहिए था जो पूर्व से प्राप्त 'यत्' का निषेध कर देता। अण् तो "तस्येदम्" सूत्र से प्राप्त ही है। अतः अण्ग्रहण केवल स्पष्टता के लिए समझना चाहिए। आसुरी=असुरों की ] ॥१२४॥

'तद्वान्' इस निर्देश से ही समर्थविभक्ति [ प्रथमा ] है। मतुप् प्रत्ययान्त प्रातिपदिक जो प्रथमासमर्थ है, उससे 'आसाम्' [ इनका ] इस षष्ठी के अर्थ में 'यत्' प्रत्यय होता है यदि जो प्रथमासमर्थ है वह उपधान मन्त्र हो तो, और 'आसाम्' इस षष्ठ्यन्त से जो निर्दिष्ट हैं वे यदि 'इष्टका' हों तो, और 'मतुप्' का लुक् होता है' इसके द्वारा प्रकृति का

**'लुक्च मतोः' इति प्रकृतिनिर्ह्रासः। इतिकरणस्ततश्चेद्विवक्षा। 'तद्वान्' इत्यवयवेन समुदायो निर्दिश्यते। वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स वर्चस्वान्। उपधीयते येन स उपधानः। चयनवचन इत्यर्थः। वर्चस्वानुपधानमन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुकि कृते—'वर्चस्या' ( तै० ब्रा० १.८.०.१ ) उपदधाति, तेजस्या' ( तै० ब्रा० १.८.९.१ ) उपदधाति। पयस्याः ( तै० सं० २.३.१३. १ )। 'रेतस्याः' (व० वि० २१)।**

**तद्वानिति किम् ? मन्त्रसमुदायादेव मा भूत्। उपधान इति किम् ? वर्चस्वानुपस्थानमन्त्र आसामित्यत्र**

### न्यासः

**तेजस्या इति।** तेजःशब्दोऽस्य मन्त्रस्यास्तीति तेजस्वानुपधानमन्त्रः। शेषं विग्रहवाक्यादि पूर्ववत्। मन्त्रादेव, समुदायान्मा भूत्। यद्यपि समुदायः प्रातिपदिकं न भवति, तथापि वचनसामर्थ्यादपि स्यात्। किं हि वचनान्न लभ्यत इत्यभिप्रायः।

**इतिकरणो नियमार्थ इति।** असतीहेतिकरणे मन्त्रे बहूनां पदानां सम्भवे सर्वेण पदेन तद्वान् मन्त्रो गृह्यते। अस्मिंस्तु सति तेन नियमार्थेन येनैव पदेन तद्वता मन्त्रेणेष्टकोपलभ्यते, तेनैव सर्वो मन्त्रो ग्रह्यत इत्येतदुपपन्नं भवति।

### पदमञ्जरी

'भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवः' ( काठ० सं० ३९.१ ) इत्यादिकः। **वर्चस्या उपदधातीति।** यथा वर्चस्या भवन्ति तथोपदधातीत्यर्थः। तेजस्वान्मन्त्रः—'वसु च स्थ वाम च स्थ देवस्य वः सवितुः' ( का० सं० ३१.१ ) इत्यादिकः। वयस्वन्तो मन्त्राः—'त्र्यविर्वयस्त्रिष्टुब्' ( काठ० सं० १७.२ ) इत्यादिकाः, ऋतुमन्तो मन्त्राः—'मधुश्च माधवश्च' ( तै० सं० १.४,१४.१ ) इत्यादिकाः। **मन्त्रसमुदायादेव मा भूदिति।** ननु तद्वानित्यस्मिन्नसति 'समर्थानां प्रथमाद्वा' इति वचनादासामिति प्रथमं निर्दिष्टत्वात् षष्ठ्यन्तादिष्टकावाचिन उपधाने मन्त्रे प्रत्ययविधिः प्रसञ्जनीयः ? सत्यम्; आसामिति प्रथमं न करिष्यत इति मत्वा प्रश्नप्रतिवचने, ततश्च तद्वानित्यस्याभावे 'त्र्यविर्वयस्त्रिष्टुप्छन्दः' इत्ययमुपधानमन्त्र आसामिष्टकानामिति वाक्यं स्यात्, ततश्चेतिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोति। **वर्चस्वानुपस्थानमन्त्र इत्यादि।** उपस्थानं मन्त्रेणाभिमन्त्रणं विवक्षितम्, 'शिवेन मा चक्षुषा' ( अथर्व० १.३३.४ ) इत्यादिकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। **अङ्गुलिमानित्यादि।** यद्यपि सर्वासामिष्टकानामङ्गुलिमान्हस्त उपधानः, तथापि यास्तूष्णीमुपधेया इष्टकास्तासु मन्त्रव्यावृत्त्यर्थतया विशेषणमर्थवत्—एषां कपालानामित्यत्र मा भूदिति। स्त्रीलिङ्गनिर्देशादत्राप्रसङ्ग इति चेत् ? एवमपि शर्करासु प्रसङ्गः।

### भावबोधिनी

निर्ह्रास होता है अर्थात् मतुप् का लोप होने से प्रकृति लघुरूप की रह जाती है। 'इति' का प्रयोग इसलिये है—"यदि उससे अभीष्ट अर्थ कहने की इच्छा हो तो।' 'तद्वान्' इस अवयव से तद्घटित समुदाय ( मन्त्र ) लिया जाता है। उदा०—वर्चः शब्दः अस्ति यस्मिन् स मन्त्रः—वर्चस्वान्। उपधीयते येन सः—उपधानः = चयनवाची—यह इसका अर्थ है। 'वर्चस्वान्' उपधानमन्त्र है इन इष्टकाओं का—ऐसी विग्रह करके—वर्चस्वत् + यत् प्रत्यय करने पर 'मतुप्' का लुक् हो जाने पर—"वर्चस्या उपदधाति, तेजस्या उपदधाति।" [ तै० ब्रा० १।८।९।१। "तेजस्वान् उपधानमन्त्र आसामिष्टकानाम्—यह विग्रह करके—तेजस्वत् + यत्, मतुप् का लुक् और टाप् करने पर 'तेजस्या' रूप बनता है। ] "पयस्याः।" [ तै० सं० २।३।१३।१ ] "रेतस्याः।" [ षड्विं० ब्रा० २१ ] [ इनमें 'पयस्वान् उपधानमन्त्र आसामिष्टकानाम्, रेतस्वान् उपधानमन्त्र आसामिष्टकानाम्—यह विग्रह है। जिन इष्टकाओं के चयन में तत्तद्-शब्दघटित उपधान मन्त्र होता है उनके लिए ऐसे प्रयोग होते हैं। ]

तद्वान् [ उससे घटित ] हो—इसका क्या प्रयोजन है ? मन्त्रसमुदाय से प्रत्यय न हो। [ केवल मतुप्प्रत्ययान्त से

**मा भूत्। मन्त्र इति किम्? 'अङ्गुलिमानुपधानो हस्त आसाम्' इत्यत्र मा भूत्। इष्टकास्विति किम्? अङ्गुलिमानुपधानो हस्त आसामित्यत्र मा भूत्।**

**इतिकरणो नियमार्थः। अनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते, न सर्वेण॥**

## १८६७. अश्विमानण्॥ १२६॥ ( ३४७२ )

**अश्वि शब्दो यस्मिन्मन्त्रेऽस्ति सोऽश्विमान्। अश्विमच्छब्दादण् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। अश्विमानुपधानो मन्त्र आसामिष्टकानामिति विगृह्याण्विधीयते, तत्र मतुपो लुकि कृते 'इनण्यनपत्ये' ( ६. ४.१६४ ) इति प्रकृतिभावः। 'आश्विनीरुपदधाति' (श० ब्रा० ८.२.१.११ )॥**

**न्यासः**

अथ मतुब्ग्रहणं किमर्थम्, यावता मतुबन्तादयं विधीयते, तत्र प्रत्ययस्य लुग् विज्ञायमानो विधानसामर्थ्याच्च मतुप एव भविष्यतीत्यपार्थकं मतुब्ग्रहणम्? नैवम्; उत्तरत्र 'अश्विमानण्' इत्यत्र ह्युपधानमात्रावयवे द्वौ मत्वर्थीयौ—इनिमतुपौ, तत्रासति मतुब्ग्रहणे द्वयोरपि लुक् स्यात्; अस्मिन् शति मतुप एव भवति॥ १२५॥

**अश्विमानण्॥ आश्विनीरिति।** 'टिड्ढाणञ्' इति ङीप्॥ १२६॥

**पदमञ्जरी**

**अनेकपदसम्भवेऽपीति।** असति त्वितिकरणे मन्त्रे बहूनां सम्भवाद्येन केनचित्पदेन तद्वान्मन्त्रो गृह्येत तथा पदैकदेशेन वर्णसमुदायेन, इतिकरणात्त्वयमतिप्रसङ्गो न भवति।

मतुब्ग्रहणमुत्तरार्थम्—आश्विमानित्यत्र मतुप एव लुग्यथा स्यात्, इनेर्मा भूदिति। इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुग्भविष्यति। वर्चःशब्दादावसुप्रभृतेरप्रसङ्गः, उणादीनामव्युत्पन्नत्वात्। इह 'प्राणभृत उपदधाति' इत्यादावभेदोपचारात्प्रत्ययाभावः॥ १२५॥

**अश्विमानण्॥ सोऽश्विमानिति।** यद्यपि बहवोऽश्विमन्तो मन्त्राः 'ध्रुवक्षितिः' ( मै० सं० १.२.८ ) इत्यादिकाः, तथापि सामान्यापेक्षमेकवचनम्॥ १२६॥

**भावबोधिनी**

हो।] उपधान ( चयनवाची ) हो—इसका क्या फल है? 'वर्चस्वान्' यह उपस्थान मन्त्र है इनका—इस विग्रह में यह न हो। मन्त्र हो—इसका क्या प्रयोजन है? 'अङ्गुलिमान् उपधान हाथ है जिनका—इसमें भी न होने लगे। इष्टिकाओं के विषय में—इसका क्या प्रयोजन है? 'अङ्गुलिमान् उपधान हाथ है जिनका—' इसमें न होने लगे।

'इति' का प्रयोग नियम करने के लिए है। अनेक पद सम्भव रहने पर भी किसी एक पद से ही 'तद्वान्' मन्त्र का ग्रहण होता है, सभी पदों से नहीं लिया जाता है। [ मतुप् का ग्रहण आगे सूत्र में अनुवृत्ति के लिए है। ]॥ १२५॥

'अश्वि' शब्द है जिस मन्त्र में वह मन्त्र—'अश्विमान्' है। 'अश्विमत्' शब्द से 'अण्' प्रत्यय होता है। पूर्ववर्ती 'यत्' का अपवाद है। उदा०—अश्विमान् उपधान मन्त्र है इन इष्टकाओं का—ऐसा विग्रह करके—अश्विमत् + अण् किया जाता है। यहाँ मतुप् का लुक् कर देने पर "इनण्यनपत्ये" ( पा० सू० ६।४।१६४ ) से प्रकृतिभाव हो जाता है। [ अतः टि=इन् का लोप नहीं होता है ] अश्विन् + अण् = अ, आदिवृद्धि, ङीप्, द्वितीया बहुवचन का रूप है—] "आश्विनीरुपदधाति।" ( श० ब्रा० ८।२।१।११ )॥ १२६॥

## १८६८. वयस्यासु मूर्ध्नो मतुप् ॥ १२७ ॥ (३४७३)

**वयस्वानुपधानो मन्त्रो यासां ता वयस्याः, तास्वभिधेयासु मूर्ध्नो मतुप् प्रत्ययो भवति। पूर्वस्य यतोऽपवादः। यस्मिन्मन्त्रे वयःशब्दो मूर्द्धन्शब्दश्च विद्यते, स वयस्वानपि भवति, मूर्द्धन्वानपि; यथा-'मूर्द्धा वयः प्रजापतिश्छन्दः' (वा० सं० १४.९) इति। तत्र वयस्वच्छब्दादिव मूर्द्धन्वच्छब्दादपि यति प्राप्ते मतुब् विधास्यते-'मूर्द्धन्वतीर्भवन्ति' ( तै० सं० ५.३.८.३ ) वयस्या एव मूर्द्धन्वत्यः।**

**वयस्यास्विति किम्? यत्र मूर्द्धन्शब्द एव केवलो न वयःशब्दः, तत्र मा भूत्।**

### न्यासः

**वयस्यासु मूर्ध्नो मतुप्॥ मूर्धन्वतीरिति।** 'उगितश्च' इति ङीप्। वयस्यास्ता मूर्धन्वत्यश्चेति वयस्वानुपधानो मन्त्रः, तासामिति वयस्याः। मूर्धन्वानुपधानो मन्त्रः, तासामिति मूर्धन्वत्यः।

**यत्रेत्यादि।** न ह्येवंविधो यासामुपधानो मन्त्रस्ततो वयस्यास्विति वचनात्। अत्र मूर्धशब्द एवास्ति, न वयःशब्दः, ततो न भवति—मूर्धन्वत्य इति।

### पदमञ्जरी

**वयस्यासु मूर्ध्नो मतुप्॥ वयस्यास्विति।** छन्दसि या वयस्या इष्टका उच्यन्ते तास्वित्यर्थः। ताश्च बह्वचः, तास्बन्तश्चतस्रो मूर्धन्वत्यः, 'विष्टम्भो वयः' ( राज० सं० १.४.९ ) इत्यादिवयस्वद्भिर्मन्त्रैरुपधेयाः, तत्र च यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्तिम एकस्मिन्नेव मन्त्रे मूर्द्धशब्दोऽति तथापि साहचर्याद् 'विष्टम्भो वयः' इत्याद्याश्चत्वारो मूर्धन्वन्त उच्यन्ते, यथा—छत्रिणो यान्तीति, तेन मूर्द्धन्वतीरुपदधातीति बहुवचनम्। **मूर्द्धन्वानपि भवतीति।** ननु 'अनो नुट्' इति छन्दसि नुड् विधीयते? सत्यम्; यथा सूत्रकारेण छान्दसमेव पदं प्रयुक्तम्—'वयसस्यासु' इति, तथेदमपि वृत्तिकारेण, मूर्धन्वानपि भवति छन्दसीत्यर्थः। 'वयस्याश्च ताः मूर्धन्वत्याश्च' इति 'उभयथापि छन्दस्यभिधीयते' इत्युक्तं भवति।

**यत्र मूर्द्धन्शब्द एव केवल इति।** यथा—'अग्ने यशस्विन्यशसे समर्पय' ( तै० सं० ४.७.४.३ ) इत्यादिके मन्त्रे। **ततो मा भूदिति।** तदभिधायिनो मूर्द्धन्शब्दादित्यर्थः। **मूर्द्धन्वत इति वक्तव्यमिति।** 'तद्वान्' इति च 'लुक्

### भावबोधिनी

वयस्वान् उपधान मन्त्र है जिनका वे 'वयस्याः' हैं, ये अभिधेय अर्थ रहने पर 'मूर्धन्' शब्द से मतुप् प्रत्यय होता है। पूर्ववर्ती 'यत्' का अपवाद है। जिस मन्त्र में 'वयस्' शब्द और 'मूर्धन्' शब्द दोनों हैं, वह मन्त्र 'वयस्वान्' भी है और 'मूर्धन्वान्' भी। जैसा कि "मूर्धा वयः प्रजापतिश्छन्दः। [ वा० सं० १४।९ ] इसमें जिस प्रकार 'वयस्य' शब्द से उसी प्रकार 'मूर्धन्वत्' शब्द से 'यत्' प्राप्त है, उसमें मतुप् का विधान किया जाता है—"मूर्धन्वतीरुपदधाति [ मूर्धन्वतीर्भवन्ति ]" [ तै० सं० ५।३।८।३ ] 'वयस्या' ही 'मूर्धन्वत्यः' है।

'वयस्या' इष्टकाओं में—इसका क्या फल है? जहाँ अकेला मूर्धन् शब्द है, 'वयः' शब्द नहीं है, वहाँ न हो।

'मूर्धन्वतः' ऐसा [ मतुबन्त ] कहना चाहिये था, किन्तु जो 'मूर्ध्नः' ऐसा कहा है, वह "मतुप् के भावी लुक् को ध्यान में रखकर कहा गया है।"

**विमर्श**—इष्टकाओं = ईंटों के चयन में प्रयुक्त होने वाले मन्त्र के लिए यहाँ विधान है। जिस मन्त्र में 'वयस्' शब्द है, वह मन्त्र 'वयस्वान्' है, ऐसा 'वयस्वान्' मन्त्र जिन ईंटों के चयन में है, वे ईंटें—'वयस्याः' हैं—वयस्वत् + यत्—ऐसा "तद्वानासाम्" पा० सू० ४।४।१२५ से करने पर मतुप् का लोप करने पर 'वयस्याः' बनता है। वयस्याः इष्टिकाः।

यदि कोई ऐसा उपधान है, जिसमें 'वयस्' और 'मूर्धन्' दोनों शब्द हैं, तब वह मन्त्र 'वयस्वान्' और 'मूर्धवान्' दोनों है। ऐसी दशा में दोनों शब्दों से 'यत्' प्राप्त है। उसमें यह सूत्र 'मूर्धन्वान्' से पुनः मतुप् प्रत्यय कर देता है—

**'मूर्द्धन्वतः' इति वक्तव्ये 'मूर्ध्नः' इत्युक्तम्-मतुपो लुकं भाविनं चित्ते कृत्वा ॥**

**१८६९. मत्वर्थे मासतन्वोः ॥ १२८ ॥ ( ३४७४ )**

**यस्मिन्नर्थे मतुब्विहितस्तस्मिंश्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः। प्रथमासमर्थादस्त्युपाधिकात्षष्ठ्यर्थे सप्तम्यर्थे च यत्प्रत्ययो भवति। मत्वर्थीयानामपवादः। नभांसि विद्यन्ते यस्मिन्मासे नभस्यो' ( तै० सं० १.४.१४.१ ) मासः। 'सहस्यः' ( तै० सं० १.४.१३.१ )। 'तपस्यः' ( तै० सं० १.४.१३.१ )। मधव्यः ( तै० सं० ५.२.९.३ )। नभःशब्दोऽभ्रेषु वर्त्तते। तन्वां खल्वपि-ओजोऽस्यां विद्यते 'ओजस्या तनूः रक्षस्या तनूः' ( मै० सं० २.३.१ )।**

**मासतन्वोरिति किम्? मधुमता पात्रेण चरति।**

**❀ मासतन्वोरनन्तरार्थे वा ❀ ( म०भा० )। मध्वस्मिन्नस्ति, मध्वस्मिन्ननन्तरमिति वा मधव्यो मासः।**

**न्यासः**

**वक्तव्य इति**। तद्वानित्यधिकाराद् मतुबन्ताद् मूर्धशब्दाद् प्रत्ययेन भवितव्यम्। अतः 'मूर्धन्वतः' इति युक्तं वक्तुम्, तन्मतुपो भाविनं लुकं चेतसि कृत्वा। एवं लघु सूत्रं भवति ॥ १२७ ॥

**मत्वर्थे मासतन्वोः** ॥ मत्वर्थे मासतन्वोरिति प्रत्ययार्थविशेषणम्। मत्वर्थग्रहणादेव प्रथमा समर्थविभक्तिरस्त्युपाधिका लभ्यते? इत्याह—**प्रथमासमर्थादस्त्युपाधिकादिति**।

**अनन्तरार्थे चेति**। न केवलं मत्वर्थ एव प्रत्ययो वक्तव्यः।

ननु च तपः-प्रभृतीनां प्रत्ययार्थमासादिवचनानामभिधेयलिङ्गवचनानि भवन्तीति पुंल्लिङ्गता प्राप्नोति, तस्याञ्च सत्याम् 'अत्वसन्तस्य चाधातोः' इति दीर्घेण भवितव्यम्, तत् कथं तपश्च सहश्च नभश्चेति प्रयोगः? इत्यत आह—**नपुंसकलिङ्गं छान्दसत्वादिति**। अयं हि च्छान्दसः प्रयोगः। तत्रेति पुंल्लिङ्गेऽभिधेये नपुंसकलिङ्ग-

**पदमञ्जरी**

च मतोः' इति चानुवर्तते, ततश्च मूर्द्धन्वत इति युक्तं वक्तुमिति भावः। इह तु गायत्रीः पुरस्तादुपदधाति, 'तेजो वै गायत्री तेज एव मुखतो धत्ते मूर्द्धन्वती भवति' इति मुख्यो गायत्रीषु मूर्धन्वतीशब्दः प्रथमं मतुबन्तः प्रयुक्तः, किं कारणम्? तदुपधानमन्त्रेषु 'अग्निर्मूर्धा भुवः' ( ऋ० ८.४४.१३ ) इत्यादिषु वयःशब्दस्याभावात्॥१२७॥

**मत्वर्थे मासतन्वो** ॥ मत्वर्थग्रहणाल्लब्धमर्थं दर्शयति—**प्रथमासःमर्थादित्यादि**। मासतन्वोरिति 'कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्य ऊः' ( दश० उ० १.१६४ ) इत्यूकारान्तस्तनूशब्दः सूत्रे निर्दिष्टः, न तु भृमृशीङ् तृचरित्सरितनिमिमस्जिभ्य उः' ( दश० उ० १.९२ ) इत्युकारान्त; 'द्वन्द्वे घि' इति पूर्वनिपातप्रसङ्गात्। **अनन्तरार्थे चेति**। न केवलं मत्वर्थमात्र इति चशब्दस्यार्थः।

**भावबोधिनी**

'मूर्धन्वत् + मतुप्'। चूँकि पूर्वसूत्र की अनुवृत्ति होती है, अतः प्रकृतिगत मतुप् का लुक् हो जाता है—मूर्धन् + मत्। "मादुपधायाश्च" ( पा० सू० ८।२।९ ) से 'म्' का 'व्' आदेश। इष्टकाओं का विशेषण है, अतः ङीप् करने पर 'मूर्धन्वतीः' यह रूप द्वितीया बहुवचन में होता है ॥ १२७ ॥

जिस अर्थ में मतुप् किया गया है, उसी अर्थ में वेद में 'यत्' प्रत्यय होता है यदि 'मास' और 'तनु' प्रत्ययार्थ के विशेषण हों तो। प्रथमासमर्थ जिसकी 'अस्ति' यह उपाधि है उससे षष्ठी के अर्थ में और सप्तमी के अर्थ में 'यत्' प्रत्यय होता है। यह मत्वर्थीय प्रत्ययों का अपवाद है। उदा०—नभांसि विद्यन्ते = सन्ति यस्मिन् मासे सः—नभस्यः मासः। [ नभस्+यत् ] सहस्यः। [ सहांसि विद्यन्ते यस्मिन् मासे सः—इस अर्थ में—सहस् + यत् ] तपस्यः [ तपांसि विद्यन्ते यस्मिन् मासे सः—इस अर्थ में तपस् + यत्। ] मधव्यः। [ मधूनि सन्ति अस्मिन् मासे सः—इस विग्रह में—मधु + यत्, 'ओगुणः' सूत्र से 'उ' का गुण ओ, "वान्तो यि प्रत्यये" से 'ओ' का 'अव्' आदेश। ] नभस् शब्द

**❀ लुगकारेकाररेफाश्च वक्तव्याः ❀ ( म० भा० )। लुक् तवत्-तपश्च तपस्यश्च' नभश्च नभस्यश्च। सहश्च सहस्यश्च। ( तै० सं० १.४.१४.१ ) नपुंसकलिङ्गं छान्दसत्वात्। अकारः-'इषो मासः'। ऊर्जो मासः। इकारः-शुचिर्मासः। रेफः 'शुक्रो मासः ( तै० सं० १.४.१४.१ )॥**

**न्यासः**

मुपपद्यते। 'व्यत्ययो बहुलम्' इति लिङ्गव्यत्ययस्य च्छन्दसि विधानात्। इडस्मिन् मासेऽस्तीति इषः। ऊर्गस्मिन् मासेऽस्तीति ऊर्जः। शुगस्मिन् मासेऽस्तीति शुचिः। शुग् वास्मिन् मासेऽस्तीति शुक्रः, 'चोः कुः' इति कुत्वम्।

अर्थग्रहणं किमर्थम्, यावता 'मतौ छः सूक्तसाम्नोः' इत्यत्र यथा 'मतौ' इत्युच्यमाने मत्वर्थे प्रत्यय उच्यते, तथेहापि लभ्यते, तस्माद् 'मतौ' इत्येवं कस्मान्नोक्तम्? सत्यमेतत्; विस्पष्टार्थमर्थग्रहणम्॥ १२८॥

**पदमञ्जरी**

**लुगकारेकाररेफाश्चेत्यादि**। 'रादिफः' ( वा० ३२१ ) इत्यत्र वर्णादिति न सम्बध्यते, तेन समुदायनिर्देशेऽपि इफः कृतः। अन्ये तु **रशब्दा** इति पठन्ति, प्रत्यय इत्यधिकारोऽकारादिभिः सम्बध्यते, न तु लुका। तपनं तपः, सहनं सहः, भावोऽसुन्, 'तदस्मिन्नस्ति' इति सूत्रेण विहितस्य यतो लुक्। कथं पुनरत्र नपुंसकत्वम्, यावता तद्धितलुकि सत्यभिधेयवल्लिङ्गेन भवितव्यम्? अत आह—**नपुंसकलिङ्गं छान्दसत्वादिति**। इट्=अन्नम्, इत्यमाणत्वात्। ऊर्क्=बलम्, 'ऊर्जबलप्राणनयोः' ( धा० पा० १५४९ ), ताभ्यामकारः प्रत्ययः—इषः, ऊर्जः। शोचनं शुक्, पूर्ववत्क्विप्, आतपातिरेकेण शरीरादेः शोषः, तद्वान्मासः शुचिः। एवं शुक्रः।

अत्र छान्दसत्वादेवायस्मयादित्वद्भत्वाज्जश्त्वाभावः, तदेव छन्दोऽधिकारे लुगादीनां विधानाद्भाषायां शुचिशुकादीनामन्याय्यः प्रयोगः स्यात्, व्युत्पत्यन्तरेण वा, अव्युत्पन्ना वा नभस्यादयः शब्दा मासेषु वर्तन्ते। इषोर्जशब्दावर्शआद्यच्प्रत्ययान्तौ, मत्वर्थीये रप्रत्यये पृषोदरादित्वाज्जश्त्वाभावे शुक्र इति भवति, शोचतेरन्तर्भावितण्यर्थादौणादिके किप्रत्यये कृते शुचिरिति भवति, शोचयति संतापयति प्राणिन इति कृत्वा। अभेदोपचारान्नभःप्रभृतीनां मासेषु वृत्तिः, नभस्यप्रभृतयस्तु 'तत्र साधुः' इति यदन्ताः, 'मतौ छः सूक्तसाम्नोः' इत्यत्र यथान्तरेणाप्यर्थग्रहणं मत्वर्थे प्रत्ययो लभ्यते, तथेहापि लप्स्यते; नार्थोऽर्थग्रहणेन॥ १२८॥

**भावबोधिनी**

मेघ अर्थ में है। तनु अर्थ में उदा०—'ओजः अस्यां विद्यते सा—ओजस्या तनूः। [ ओजस्+यत्=य, टाप्। ] रक्षस्या तनुः। [ रक्षांसि विद्यन्ते यस्यां सा—इस अर्थ में ]।

मास और तनु—इन अर्थों में होता है—इसका क्या फल है? मधुमता पात्रेण चरति। [ यहाँ पात्र का विशेषण है। अतः 'यत्' न होकर 'मतुप्' होता है। ]

❀ मास तथा तनु अर्थों में और अनन्तर अर्थ में अर्थात् केवल मत्वर्थक न होकर 'अनन्तर अर्थ में भी होता है।❀ उदा०—(१) मधु अस्मिन् अस्ति, और (२) मधु अनन्तरम् अस्मिन् अस्ति—इन दोनों विग्रहों में—मधव्यः मासः [ यह होता है ]।

❀ यत् प्रत्यय का लुक्, अकार, इकार और रेफ प्रत्यय होते हैं। ❀ (१) लुक् के उदा०—"तपश्च तपस्यश्च"। [ तै० सं० १।४।१४।१ ] "नभश्च नभस्यश्च।" [ तै० सं० १।४।१४।१ ] "सहश्च सहस्यश्च।" [ तै० सं० १।४।१४।१ ] [ इन सभी में तपांसि विद्यन्ते अस्मिन्—आदि विग्रह करके सूत्र से जो 'यत्' प्रत्यय मतुबर्थ में किया जाता है, उसका लोप इस वार्तिक से हो जाता है। उदाहरणों में एक लुक् वाला और दूसरा यत् प्रत्यय वाला रूप है। ] वैदिक प्रयोग होने से यहाँ नपुंसक लिङ्ग है। (२)—'अ' प्रत्यय के उदा० "इषो मासः।" [ तै० सं० १।४।१४।१ ] "ऊर्जो मासः।" [ तै० सं० १।४।१४।१ ] [ एषणम् इस अर्थ में क्विप् करने पर—'इट्' यह प्रथमान्त रूप होता है—इट् अस्ति अस्मिन् स मासः—इषः [ इष्+अ ]। ऊर्क् अस्ति अस्मिन् मासे सः—ऊर्जः। [ ऊर्ज्+अ ] (३)—इकार का उदा०—"शुचिः मासः।" [ तै० सं० १।४।१४।१ ] [ शोचनम्=शुक्, साऽस्ति अस्मिन् मासे सः—शुचिः। शुच्+इ ] (४)—रेफ का

१८७०. मधोर्ञ च ॥ १२९ ॥ ( ३४७५ )

**मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति, चकाराद्यच्च । उपसंख्यानाल्लुक्च । माधवः ( तै० सं० १.४.१४.१ ) मधव्यः ( तै० सं० ५.२.९.३ ), 'मधु': ( तै० सं० १.४.१४.१ ) । तन्वां खल्वपि — माधवा, मधव्या, मधुः तनूः ॥**

१८७१. ओजसोऽहनि यत्खौ ॥ १३० ॥ ( ३४७६ )

**'मत्वर्थे' इत्येव । ओजःशब्दान्मत्वर्थे यत्खौ प्रत्ययौ भवतोऽहन्यभिधेये । ओजस्यमहः । ओजसीनमहः ॥**

१८७२. वेशोयशआदेर्भगाद्यल् ॥ १३१ ॥ ( ३४७७ )

**'मत्वर्थे' इत्येव । वेशोयशसी आदौ यस्य प्रातिपदिकस्य तस्माद् वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् प्रत्ययो भवति । लकारः स्वरार्थः । वेशोभगो विद्यते यस्य स वेशोभग्यः । यशोभग्यः ।**

**वेशः = इति बलमुच्यते । श्रीकामप्रयत्नमाहात्म्यवीर्ययशस्सु भगशब्दः । वेशश्चासौ भगश्च श्रीप्रभृतिर्वेशोभगः, सोऽस्यास्तीति वेशोभग्यः ॥**

**न्यासः**

**मधोर्ञ च ॥ १२९ ॥ ओजसोऽहनि यत्खौ ॥** असन्तत्वाद् 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्यये प्राप्ते मतुपोऽपवादैः सह समावेशात् मतुपि यत्खौ विधीयेते । अथ यद्ग्रहणं किमर्थम्, ननु 'ओजसोऽहनि खं च' इत्येवोच्येत, चकारेण यथाविहिते प्रत्यये विज्ञायमाने यदिति च भविष्यति ? नैवं शक्यम्; चकारेण हि सन्देहः स्यात्—किमनेनानन्तरसूत्रविहितो ञोऽनुकृष्यते ? अथ प्रकृतो यदिति ? तस्मादसन्देहार्थं यद्ग्रहणं कर्तव्यम् ॥१३०॥

**वेशोयशआदेर्भगाद् यल् ॥** लित्करणं स्वरार्थम् ॥ १३१ ॥

**पदमञ्जरी**

**मधोर्ञ च ॥** अत्रापि भाषायां मधुयोगान्मासो मधुः, तस्य प्रज्ञादिषु पाठादाद्युदात्तत्वम् ॥ १२९ ॥

**ओजसोऽहनि यत्खौ ॥** यद्ग्रहणमनर्थकम्, 'खश्च' इत्येव वक्तव्यम्, चकारात्प्राकरणिको यद्भविष्यति ? नैवं शक्यम्; 'खश्च' इत्युच्यमानेऽनन्तरसूत्रविहितस्य ञस्य समुच्चयो विज्ञायेत, तस्माद्यद्ग्रहणम् ॥ १३० ॥१३१॥

**भावबोधिनी**

उदा०—[ शोचनम् = शुक् । साऽस्ति अस्मिन् मासे सः—शुक्रः । शुच् + र, "अयस्मयादीनि च" सूत्र के आधार पर जश्त्व नहीं होता है "चोः कुः" सूत्र से कुत्व हो जाने पर—शुक्रः बनता है । 'शुचि' और 'शुक्र' का एक ही अर्थ है—जिस महीना में धूपादि की प्रचण्डता से शरीर सूख जाता है वह महीना । ] ॥ १२८ ॥

'मधु' शब्द से मत्वर्थ में 'ञ' प्रत्यय होता है और 'च' के बल से 'यत्' भी होता है, उपसंख्यान से लुक् भी होता है । उदा०—मधु अस्ति अस्मिन् सः—इस विग्रह में—(१) माधवः, (२) मधव्यः, (३) मधुः । [ मधु + ञ = अ, आदिवृद्धि, उकार का गुण, अवादेश । मधु + यत्, गुण, अवादेश । लुक् करने पर 'मधुः' ] तनु अर्थ में भी—उदा०—माधवा, मधव्या, मधुः तनुः । [ 'ञ' होने से ङीप् नहीं होता है । ] ॥ १२९ ॥

'मत्वर्थे' इसकी अनुवृत्ति होती है 'ओजस्' शब्द से मतुबर्थ में 'यत्' और 'ख' प्रत्यय होते हैं अहन् = दिन अर्थ रहने पर । उदा०—ओजस्यम् अहः । ओजसीनम्—अहः । [ ओजः अस्ति अस्मिन् तत्—इस विग्रह में ओजस् + यत्, ओजस् + ख = ईन ] ॥ १३० ॥

'मत्वर्थे' इसकी अनुवृत्ति है । "वेशस्" और 'यशस्' हैं आदि में जिसके ऐसा प्रातिपदिक—'वेशोयश-आदिः' तथा 'भग' जिसके अन्त में है, ऐसा जो प्रातिपदिक उससे मतुबर्थ में 'यल्' प्रत्यय होता है । [ यहाँ आदि और अन्त दोनों पर ध्यान रखना है । ] लकार [ "उपोत्तमं लिति" सूत्र से ] स्वर करने के लिए है । उदा०—वेशोभगो विद्यते यस्य सः—वेशोभग्यः । [ यशोभगो विद्यते यस्य सः—] यशोभग्यः ।

**१८७३. ख च ॥ १३२ ॥ ( ३४७८ )**

**वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे खः प्रत्ययो भवति। योगविभागो यथासंख्यनिरासार्थ उत्तरार्थश्च। चकाराद्यत्। वेशोभग्यः, वेशोभगीनः। यशोभग्यः। यशोभगीनः॥**

**१८७४. पूर्वैः कृतमिनयौ च ॥ १३३ ॥ ( ३४७९ )**

**'मत्वर्थे' इति निवृत्तम्। निर्देशादेव समर्थविभक्तिः। पूर्वशब्दात् तृतीयासमर्थात्कृतमित्येतस्मिन्नर्थे 'इन', 'य'-इत्येतौ प्रत्ययौ भवतः। चकारात्ख च। 'गम्भीरेभिः पथिभिः पूर्विणेभिः' ( काठ० सं० ९.६.१९ )। पूर्व्यैः ( तै० सं० १.८.५.२)। पूर्वीणैः।**

**'पूर्वैः' इति बहुवचनान्तेन पूर्वपुरुषा उच्यन्ते। तत्कृताः पन्थानः प्रशस्ता इति पथां प्रशंसा॥**

**न्यासः**

**ख च ॥ योगविभाग इत्यादि।** यदि पूर्वसूत्र एव खग्रहणं क्रियते; द्वे प्रकृती, प्रत्ययावपि द्वावेवेति सामर्थ्याद् यथासंख्यं प्रसज्येत। तस्मात् तन्निरासार्थो योगविभागः। ननु 'यथासंख्यमनुदेशः समानाम्' इत्यत्र इह कस्मान्न भवति—'वेशोयशआदेर्भगाद् यल् ख च' इति दर्शयित्वा स्वरितेन लिङ्गेन यथासंख्यमित्युक्तम्? तदेकयोगतामभ्युपेत्य। भवतु नामैकयोगः, तथापि यथासंख्यं न भवतीति दर्शनार्थम्, तत् कुतो यथासंख्यनिरासार्थो योगविभाग इति? अत आह—**उत्तरार्थश्चेति** ॥ १३२ ॥

**पूर्वैः कृतमिनयौ च** ॥ पूर्वैः कृतमिनयौ चेति। ख एव यथा स्यात्, यन्मा भूत्। **पूर्वैरिति बहुवचनान्तेनेत्यादि।** 'पथिभिः पूर्वैः' इत्येवमादिभिर्वेदवाक्यैः पूर्वपुरुषकृतत्वेन यदा प्रशंसा प्रतिपादयितुं निष्ठा साध्वेव शक्यते विज्ञातुम्, तदा पूर्वपुरुषाभिधायिनः पूर्वशब्दात् प्रत्यय उपपद्यते। तस्मात् पूर्वैरिति बहुवचनान्तेन पूर्वपुरुषा अभिधीयन्ते। छन्दसामर्थपरत्वाद् बहुवचनस्य। तेन पूर्वपुरुषाणां पन्था आस्थित सम्पद्यत इति दर्शयितुमाह—**तत्कृताः पन्थान इति** ॥ १३३ ॥

**पदमञ्जरी**

**ख च ॥ योगविभाग इत्यादि।** केचित्पुनरेकमेव योगमधीयते। तथा च—'यथासंख्यमनुदेशः समानाम्' प्रत्ययविध्यर्थो बहुवचननिर्देशः, बहुवचनान्तात् प्रत्ययोत्पत्तौ यथासंख्यमिष्यत इति। **उत्तरार्थश्चेति।** उत्तरत्र खस्यैवानुवृत्तिर्यथा स्यात्, यतो मा भूदिति ॥ १३२ ॥

**पूर्वैः कृतमिनियौ च ॥ बहुवचनान्तेनेत्यादि।** बहुवचनान्तात्प्रत्ययविध्यर्थो बहुवचननिर्देशः।

**भावबोधिनी**

वेश = बल को कहा जाता है। "श्री, 'काम' प्रयत्न, महात्म्य, वीर्य और यश—इन अर्थों में 'भग' शब्द है। वेशश्चासौ भगश्च = लक्ष्मी आदि—यह कर्मधारय करने पर – वेशोभगः, 'वह है, जिसका वह पुरुष = 'वेशोभग्यः।' [ इसी प्रकार 'यशोभग्यः का भी अर्थ है। ] ॥ १३१ ॥

'वेशः' या 'यशः' जिसके आदि में है और 'भग' जिसके अन्त में है, ऐसे प्रातिपदिक से 'मत्वर्थ' में 'ख' प्रत्यय होता है। योग-विभाग [ इस सूत्र को अलग बनाना ] यथासंख्य को रोकने के लिए तथा उत्तर सूत्र में [ केवल ख की ] अनुवृत्ति के लिए है। 'च' के बल से 'यत्' प्रत्यय भी होता है। उदा०—वेशोभग्यः, वेशोभगीनः। यशोभग्यः यशोभगीनः। [ इनका विग्रह पूर्व सूत्र के समान ही है। और अर्थ भी वही है। ]॥ १३२ ॥

'मत्वर्थे' इसकी निवृत्ति हो जाती है। [ सूत्रस्थ ] निर्देश से ही समर्थविभक्ति [ तृतीया ज्ञात हो जाती है। ] तृतीयासमर्थ 'पूर्व' शब्द से 'कृतम्' ( किया गया ) इस अर्थ में 'इन' और 'य' प्रत्यय होता है। 'च' के बल से 'ख' भी होता है। उदा०—पथिभिः पूर्विणैः, पूर्व्यैः, पूर्वीणैः। ( का० सं० ९।६।१९ ) [ पूर्व + इन, भसंज्ञा, अलोप। पूर्व + य, भसंज्ञा, अलोप। पूर्व + ख = ईन, भसंज्ञा, अलोप। 'पूर्विणैः' के स्थान पर 'पूर्विणेभिः' पाठ भी है। ]

## १८७५. अद्भिः संस्कृतम् ॥ १३४ ॥ ( ३४८० )

निर्देशादेव समर्थविभक्तिः। अप्शब्दात्तृतीयासमर्थात् 'संस्कृतम्' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति। 'य॒स्येदमप्यं॑ ह॒विः ( ऋ० १०.८६.१२ )। अ॒द्भिः संस्कृतमिति॥

## १८७६. सहस्रेण संमितौ घः ॥ १३५ ॥ ( ३४८१ )

निर्देशादेव समर्थविभक्तिः। सहस्रशब्दात्तृतीयासमर्थात् 'सम्मितौ' इत्येतस्मिन्नर्थे घः प्रत्ययो भवति। सम्मितस्तुल्यः सदृशः। 'अ॒यम॒ग्निः स॑हस्रि॒यः ( तै० सं० ४.७.१३.४ )। सहस्रतुल्य इत्यर्थः।

केचित्तु 'समितौ' इति पठन्ति। तत्रापि समित्या सम्मित एव लक्षयितव्यः; तत्र छन्दसि प्रयोगदर्शनात्॥

## १८७७. मतौ च ॥ १३६ ॥ ( ३४८२ )

मत्वर्थे च सहस्रशब्दाद् घः प्रत्ययो भवति। सहस्रमस्य विद्यते सहस्रियः। 'तपःसहस्राभ्यां विनीनौ' ( ५.२.१०२ ), 'अण् च' ( ५.२.१०३ ) इत्यस्यापवादः॥

### न्यासः

**अद्भिः संस्कृतम्** ॥ संस्कृतमिति प्राग्वहतीये ठकि प्राप्ते यद्विधीयते। **निर्देशादेव समर्थविभक्तिरिति**। तृतीया। पुनःसंस्करणक्रियायामपां करणत्वात् करणे वेदितव्या ॥ १३४ ॥

**सहस्रेण सम्मितौ घः** ॥ **निर्देशादेव समर्थविभक्तिरिति**। तृतीया। सा पुनस्तुल्यार्थयोगे वेदितव्या। **तत्रापीति**। सम्मित्य=सादृश्येन धर्मेण सम्मित एव धर्मो लक्षयितव्यः। किं कारणम्? इत्याह—तत्र सम्मित एव वैदिकप्रयोगे दृश्यते सम्मितिमात्रे ॥ १३५ ॥

**मतौ च** ॥ शब्दे कार्यासम्भवान् मतुप्शब्देन मत्वर्थो लक्ष्यत इत्याह—**मत्वर्थ इत्यादि**। मत्वर्थे च प्रत्यय-विधानात् प्रथमासमर्थादस्त्युपाधिकात् प्रत्ययो विज्ञायत इत्याह—**सहस्रमस्य विद्यत इति** ॥ १३६ ॥

### पदमञ्जरी

बहुवचनान्तात्प्रत्ययोत्पत्तौ यथा प्रशंसा गम्यते—पूर्वैर्बहुभिः क्रियत इति प्रतीतेः, तेन पूर्वशब्दश्च वृद्धेषु पुरुषेषु प्रवर्तत इत्यर्थः ॥ १३३ ॥ १३४ ॥

**सहस्रेण सम्मितौ घः** ॥ **निर्देशादेव समर्थविभक्तिरिति**। सा पुनस्तुल्यार्थयोगे तृतीया। **सम्मित एव लक्षयितव्य इति**। किं कारणम्? इत्याह—**तत्रेति**। छन्दसि हि तत्र सम्मिते प्रयोगो दृश्यते ॥ १३५ ॥ १३६ ॥

### भावबोधिनी

'पूर्वैः' इस बहुवचनान्त द्वारा 'पूर्व' शब्द से 'पूर्वपुरुष' कहे जाते हैं। उनके द्वारा किये गये=बनाये गये—पन्था ( मार्ग, परम्परायें ) अच्छे हैं, इस प्रकार पन्थाओं=परम्पराओं की प्रशंसा होती है ॥ १३३ ॥

[ सूत्रस्थ ] निर्देश से ही समर्थ विभक्ति [ ज्ञात हो जाती है ]। तृतीयासमर्थ 'अप्' शब्द से 'संस्कृतम्' ( संस्कारयुक्त किया गया ) इस अर्थ में 'यत्' प्रत्यय होता है। उदा०—'यस्येदमप्यं हविः"। ( ऋ० १०।८६।११ ) अप्यम्=अद्भिः संस्कृतम् ( जल द्वारा संस्कारयुक्त की गई हविष् ) ॥ १३४ ॥

[ सूत्रस्थ ] निर्देश से ही समर्थ विभक्ति। [ ज्ञात हो जाती है। ] तृतीयासमर्थ—'सहस्र' शब्द से 'सम्मिति' (सादृश्य) इस अर्थ में 'घ' प्रत्यय होता है। सम्मित=तुल्य, सदृश। उदा०—"अयमग्निः सहस्रियः"। ' (तै०सं० ४।७।१३।४) सहस्र के तुल्य है, यह अर्थ है। [ सहस्र + घ = इय, भसंज्ञा, अलोप। ]

कुछ लोग 'समितौ' ऐसा पाठ मानते हैं, उसमें भी 'समित्या' अर्थात् सादृश्य से सम्मित=सदृश ही लक्षित करना चाहिए, क्योंकि वेद में सम्मिति अर्थ में प्रयोग देखा जाता है ॥ १३५ ॥

मतुबर्थ में भी 'सहस्र' शब्द से 'घ' प्रत्यय होता है। उदा०—सहस्रम् अस्य विद्यते—इस विग्रह में—

## १८७८. सोममर्हति यः ॥ १३७ ॥ ( ३४८३ )

**निर्देशादेव समर्थविभक्तिः। सोमशब्दाद् द्वितीयासमर्थाद् 'अर्हति' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। 'सोममर्हन्ति सोम्या ब्राह्मणाः ( तै० सं० २.१.२.९ )। यज्ञार्हा इत्यर्थः। यति प्रकृते यग्रहणं स्वरे विशेषः॥**

## १८७९. मये च ॥ १३८ ॥ ( ३४८४ )

**सोमग्रहणम्, यश्चानुवर्त्तते। 'मये' इति मयडर्थो लक्ष्यते। सोमशब्दान्मयडर्थे यः प्रत्ययो भवति। आगतविकारावयवप्रकृता मयडर्थाः—'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' ( ४.३.८१ ), 'मयट् च' ( ४.३.८२ ), 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' ( ४.३.१४३ ), 'तत्प्रकृतवचने मयट्' ( ५.४.२१ ) इति। तत्र यथायोगं समर्थविभक्तिः। 'पिबाति सोम्यं मधु' ( ऋ० ८.२४.१३ ) सोममयमित्यर्थः॥**

### न्यासः

**सोममर्हति यः॥** 'तदर्हति' इत्यर्हार्थे ठकि प्राप्ते यो विधीयते। **स्वरे विशेष इति।** यत्यादाद्युत्तत्वं स्यात्। यप्रत्यये तु सत्यन्तोदात्तत्वं भवति ॥ १३७ ॥

**मये च॥** रूप्यमयटोऽपवादो योग इति। **मय इति मयडर्थो लक्ष्यत इति।** शब्दे कार्यासम्भवादिति भावः। **तत्र यथायोगं समर्थविभक्तिरिति।** तत्रागतार्थे पञ्चमी, विकारावयवयोः षष्ठी। प्रकृतवचने प्रथमेति यथायोगार्थः॥ १३८ ॥

### पदमञ्जरी

**सोममर्हति यः॥** 'छन्दसि' इत्यधिकाराद्भाषायां सोम्यशब्दस्य साधुत्वं चिन्त्यम्—आयुष्मान् भव सोम्येति वाच्यो विप्रोऽभिवादने' ( मनु० २.१२५ ) इति केचित्सौम्येति वृद्धिं पठन्ति[१]। सौम्यशब्दो दर्शनीयवचनः सुखादिवत्॥ १३७॥

**मये च॥ मय इति मयडर्थो लक्ष्यते इति।** शब्दे कार्यस्यासम्भवात्। **तत्र यथायोगं समर्थविभक्तिरिति।**

### भावबोधिनी

सहस्रियः। [ सहस्र+घ=इय, भसंज्ञा, अलोप ] यह 'तपः सहस्राभ्यां विनीनी'' ( पा० सू० ५।२।१०२ ) और ''अण् च'' ( पा० सू० ५।२।१०३ ) इन दोनों का अपवाद है॥ १३६॥

निर्देश से ही समर्थविभक्ति [ ज्ञात हो जाती है ]। द्वितीयासमर्थ 'सोम' शब्द से 'अर्हति' ( प्राप्त करने योग्य है ) इस अर्थ में 'य' प्रत्यय होता है। उदा०—सोममर्हन्ति—इस विग्रह में—'सोम्याः ब्राह्मणाः।' [ तै. सं. २।१।२।९ ] यज्ञ के योग्य हैं—यह अर्थ है। 'यत्' प्रत्यय का प्रकरण रहने पर 'य' प्रत्यय स्वर में अन्तर के लिये है। [ 'यत्' यह तित् है अतः स्वरितान्त होता है। 'य' यह सामान्य प्रत्यय स्वर से अन्तोदात्त होता है। ] ॥ १३७ ॥

'सोम' ग्रहण की और 'य' की अनुवृत्ति है। 'मये' इससे 'मयट्' का अर्थ लक्षित होता है। 'सोम' शब्द से मयट् के अर्थ में 'य' प्रत्यय होता है।

(१) आगत, (२) विकार, (३) अवयव, (४) प्रकृत—ये चार मयट् के अर्थ हैं—''हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः'' [पा. सू. ४।३।८१] ''मयट् च'' [ पा. सू. ४।३।८२ ] [ यहाँ 'आगत' अर्थ में मयट् है। ] ''मयड् वैतयोर्भाषाया-मभक्ष्याच्छादनयोः'' [ पा. सू. ४।३।१४३ ] [ यहाँ 'विकार' और 'अवयव' अर्थों में मयट् है। ] ''तत्प्रकृतवचने मयट्'' [ पा. सू. ५।४।२१ ] यहाँ प्रकृत=प्रचुरता अर्थ में मयट् है। इनमें [ पूर्वोक्त सूत्रों के अनुसार ] यथायोग समर्थविभक्ति [ समझनी चाहिए अर्थात् आगत अर्थ में पंचमी, विकार-अवयव अर्थों में षष्ठी, प्रकृत अर्थ में प्रथमा समर्थविभक्ति है। ] उदा०—सोम्यं मधु पिबन्ति। सोममय—यह अर्थ है। [ सोम+य, भसंज्ञा, अलोप ] ॥ १३८ ॥

---

१. 'सौम्य' इत्येव मनुस्मृतौ तद्व्याख्यायां च पाठो दृश्यते।

**१८८०. मधोः ॥ १३९ ॥ ( ३४८५ )**

यशब्दो निवृत्तः। मधुशब्दान्मयडर्थे यत्प्रत्ययो भवति। मधव्यान् स्तोकान् ( पै० १.८८.२ )। मधुमयानित्यर्थः।

**१८८१. वसोः समूहे च ॥ १४० ॥ ( ३४८६ )**

वसुशब्दात्समूहे वाच्ये यत्प्रत्ययो भवति चकारान्मयडर्थे च। यथायोगं समर्थविभक्तिः। वसव्यः समूहः। मयडर्थो वा।

❀ अक्षरसमूहे छन्दसः स्वार्थे उपसंख्यानम् ❀ ( म० भा० ४.४.१४० वा० १ )। ओ॒श्रा॒व॒ये॑ति॒ च॑तु॒रक्षरम्, अ॑स्तु॒ श्रौ॑षडिति॒ च॑तु॒रक्षरम्, य॑जे॑ति॒ द्व्यक्षरम्, ये य॑जामह॒ 'इ॒ति॒ प॒ञ्चा॒क्षर॒म्, द्व्यक्षरो॒' व॒षट्का॒रः—ए॒ष वै सप्तदशाक्षरश्छन्दस्यः प्र॒जाप॒तिर्य॒ज्ञो मन्त्रे विहितः ( म० सं० १.४.११ )। सप्तदशाक्षराण्येव छन्दस्य इत्यर्थः। छन्दःशब्दादक्षरसमूहे वर्त्तमानात्स्वार्थे यत्प्रत्ययः।

**न्यासः**

**मधोः** ॥ मयडर्थ आगते प्रकृतवचने यथायोगं रूप्यमयटोः प्राप्तयोर्यद् विधीयते। तत्र मयटो हि 'द्व्यच-श्छन्दसि' इति प्राप्तस्य 'नोत्वद्वर्ध्रबिल्वात्' इति प्रतिषेध उच्यते ॥ १३९ ॥

**वसोः समूहे च** ॥ अत्रापि मयडर्थे यथायोगं रूप्यमयटोः समूहे त्वणि ठकि च यद्विधीयते। वसुशब्दोऽप्यय-मस्ति देववचनः—वसवो देवा इति, अस्ति च धनवचनः—वसु धनमिति; तत्र देवतावचनात् समूहविवक्षाया-मौत्सर्गिकोऽण् प्राप्नोति, धनवचनत्वादचित्तलक्षणष्ठक्। **यथायोगमित्यादीति**। समूहे मयडर्थे च षष्ठ्यादिका सामर्थ्यलब्धेति ॥ १४० ॥

**पदमञ्जरी**

आगते पञ्चमी, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ॥ १३८ ॥ १३९ ॥

**वसोः समूहे च** ॥ ओश्रावयेत्यादिकस्याक्षराणि गण्यन्ते, सप्तदशात्मकश्छन्दस्योऽक्षरसमूहः। **प्रजापतिः** प्रजापतिना दृष्टः। हस्तौ पृणस्वेति पृणातिः पूरणकर्मा ॥ १४० ॥

**भावबोधिनी**

'य' शब्द निवृत्त हो जाता है। 'मधु' शब्द से 'मयट्' अर्थ में 'यत्' प्रत्यय होता है। उदा०—"मधव्यान् स्तोकान्" [ पै० १।८८।२ ] [ मधु + यत् 'उ' का गुण, अवादेश। ] मधुमय—यह अर्थ है ॥ १३९ ॥

'समूह' अर्थ रहने पर 'वसु' शब्द से 'यत्' प्रत्यय होता है और 'च' के बल से 'मयट्' अर्थ में भी होता है। अतः [ पूर्वोक्तरीति से ] यथायोग समर्थ विभक्तियाँ समझनी चाहिए। उदा—वसव्यः समूहः, मयडर्थः वा। [ वसोः समूहः अथवा विकारोऽवयवादिर्वा—इस अर्थ में वसु + यत्, 'उ' का गुण, अवादेश—वसव्यः। इसका अर्थ है—वसु का समूह, अथवा वसु का विकार आदि ]

❀ अक्षरसमूह अर्थ में वर्तमान 'छन्दः' शब्द से स्वार्थ में 'यत्' प्रत्यय कहना चाहिए। ❀ उदा०—',ओश्रावाय —ये चार अक्षर, "अस्तु श्रौषड्' ये चार अक्षर ( = स्वरविशिष्ट ), 'यज' ये दो अक्षर 'वषट्' ये दो अक्षर हैं ( इसमें 'कार' प्रत्यय स्वार्थिक है ), यह ( कुल मिलाकर ) सत्तरह अक्षर 'छन्दस्य' प्रजापति ( प्रजापति द्वारा दृष्ट ) यज्ञ मन्त्र में विहित हैं। सत्तरह अक्षर ही 'छन्दस्य' है। अक्षर समूह अर्थ में वर्तमान 'छन्दः' शब्द से 'यत्' प्रत्यय स्वार्थ में होता है, अतः प्रत्यय का अतिरिक्त अर्थ नहीं है। [ महाभाष्य में 'छन्दस्यः प्रजापतिर्यज्ञमनुविहितः।' ऐसा पाठ मिलता है। ]

❀ वसुशब्दादपि यद्वक्तव्यः ❀ ( म० भा० ४.४.१४० वा० २ )। 'हस्तौ पृणस्व बहुभिर्वसव्यैः ( तै० सं० १.२.१३.२ )। वसुभिरित्यर्थः। 'अग्निरीशे वसव्यस्य' ( ऋ० ४.५५.८ )। वसोरित्यर्थः॥

## १८८२. नक्षत्राद् घः ॥ १४१ ॥ ( ३४८७ )

नक्षत्रशब्दाद्धः प्रत्ययो भवति स्वार्थे। 'समूहे' इति नानुवर्त्तते। 'नक्षत्रियेभ्यः स्वाहा' (वा० सं०१२.२८)॥

## १८८३. सर्वदेवात्तातिल् ॥ १४२ ॥ ( ३४८८ )

सर्वदेवशब्दाभ्यां तातिल् प्रत्ययो भवति, छन्दसि विषये स्वार्थिकः। सर्वतातिम्' ( ऋ० १०.३६.१४ )। देवतातिम्' ( ऋ० ३.१९.२ )॥

## १८८४. शिवशमरिष्टस्य करे ॥ १४३ ॥ ( ३४८९ )

करोतीति करः, प्रत्ययार्थः। तत्सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः। शिवादिभ्यः शब्देभ्यः षष्ठीसमर्थेभ्यः 'करे' इत्येतस्मिन्नर्थे तातिलप्रत्ययो भवति। शिवं करोतीति शिवतातिः। ( पै. ५।३६।१ ) शन्तातिः ( ऋ० ८.१८.७ )। अरिष्टतातिः ( ऋ० १०.६०.८ )॥

### न्यासः

नक्षत्राद् घः ॥ १४१ ॥ सर्वदेवात् तातिल ॥ १४२ ॥ शिवमरिष्टस्य करे ॥ १४३ ॥

### पदमञ्जरी

नक्षत्राद् घः ॥ समूह इति नानुवर्तत इति। तेनानिर्दिष्टार्थत्वास्वार्थे प्रत्यय उत्पद्यत इति भावः ॥१४१-१४२॥ शिवशमरिष्टस्य करे ॥ करोतीति कर इति। पचाद्यच्। सामर्थ्यलभ्या षष्ठी समर्थविभक्तिरिति।

### भावबोधिनी

❀ 'वसु' शब्द से भी स्वार्थ में 'यत्' कहना चाहिए। ❀ उदा०—''हस्तौ गृहीतस्य बहुभिर्वसव्यैः'' [ तै. सं. १।२।१३।२][वसु + यत्, उकार का गुण, अव् आदेश] इसका अर्थ है—वसुभिः। ''अग्निरीशे वसव्यस्यः।'' (ऋ. ४।५५।८) यहाँ 'वसव्यस्य' काअर्थ है = वसु का। [ वसु देवता और धन अर्थ का वाचक है। ] [ महाभाष्य में इन दोनों वाक्यों को वार्तिक रूप से पढ़ा गया है और बाद में ''स्वार्थविज्ञानात् सिद्धम्।'' इस वार्त्तिक द्वारा पूर्वोक्त वार्तिकों का खण्डन किया गया है। ]॥ १४०॥

'नक्षत्र' शब्द से स्वार्थ में 'घ' प्रत्यय होता है। 'समूहे' इसकी अनुवृत्ति नहीं होती है। उदा०—''नक्षत्रियेभ्यः स्वाहा।'' [ नक्षत्र + घ = इय, भसंज्ञा, अलोप। यहाँ भी प्रत्यय का अतिरिक्त अर्थ नहीं है। ]॥ १४१॥

'सर्व' और 'देव' शब्दों से वेद में 'तातिल्' प्रत्यय स्वार्थ में होता है। उदा०—सर्वतातिः। देवतातिः। [ सर्व एव, देव एव—यही अर्थ है। ]॥ १४२॥

'करोति' इस कर्ता अर्थ में [ अच् प्रत्यय करने पर ] 'कर' [ शब्द बना है ] यह प्रत्यय का अर्थ है। इसके सामर्थ्य से प्राप्त होने वाली षष्ठी समर्थविभक्ति है। षष्ठीसमर्थ 'शिव' 'शम्' और 'अरिष्ट' इन शब्दों से 'कर' [ करने वाला ] इस अर्थ में 'तातिल्' प्रत्यय होता है। उदा० शिवं करोति—इस विग्रह में—'शिवतातिः।' [ शं करोति—इसमें ] शन्तातिः। [ अरिष्टं करोति—इस विग्रह में ] अरिष्टतात्तिः। [ शिवादि शब्द कल्याण अर्थ में हैं। ]॥ १४३॥

**१८८९. भावे च ॥ १४४ ॥ ( ३४९० )**

**भावे चार्थे छन्दसि विषये शिवादिभ्यस्तातिल्प्रत्ययो भवति । शिवस्य भावः शिवतातिः ( पै० सं० ५.३६.१ ) । शन्तातिः ( ऋ० ८.१८.७ ) । अरिष्टतातिः ( ऋ० १०.६०.८ ) ।**

**यतः पूर्णोऽवधिः, अतः परमन्यः प्रत्ययोऽधिक्रियते ॥**

**॥ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ**
**चतुर्थाध्यायस्य चतुर्थः पादः ॥**
**[ ॥ प्रथमो भागः समाप्तः ॥ ]**

—:०:—

**न्यासः**

**भावे च ॥ १४४ ॥**

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायां चतुर्थाध्यायस्य चतुर्थः पादः ॥

यत्पञ्चिकानावमिमामासाद्य सुधियः सुखम् ।
तरन्ति काशिकाम्भोधिं स जिनेन्द्रो जयत्ययम् ॥

**❀ समाप्तोऽयं चतुर्थोऽध्यायः ❀**

—:०:—

**पदमञ्जरी**

सा पुनः कृद्योगलक्षणा कर्मणि । भाषायां शिवतातिप्रभृतीनां साधुत्वं चिन्त्यम् ॥ १४३ ॥ १४४ ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां**
**चतुर्थस्याध्यायस्य चतुर्थः पादः ॥**

—:०:—

**भावबोधिनी**

और 'भाव' अर्थ में भी वेदविषय में 'शिव' 'शम्' तथा 'अरिष्ट' शब्दों से 'तातिल्' प्रत्यय होता है । उदा०—शिवस्य भावः—इस विग्रह में— शिवतातिः । [ इसी प्रकार 'शम्' इत्यस्य भावः— ] शन्तातिः । [अरिष्टस्य भावः—] अरिष्टतातिः । [ आचार्य पाणिनि ने अष्टाध्यायी के मध्य में ये मंगलसूचक सूत्र लिखे हैं । ]

[यहाँ तक] 'यत्' प्रत्यय की अवधि पूरी हो चुकी है, अब इसके आगे से दूसरे प्रत्यय का अधिकार चलेगा ॥१४४॥

**॥ इस प्रकार श्रीजयादित्य द्वारा विरचित 'काशिका'—वृत्ति में 'चतुर्थ अध्याय का चतुर्थ पाद समाप्त हुआ ॥**

—:०:—

**॥ इस प्रकार जयशङ्करलाल-त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में 'काशिकावृत्ति' के चतुर्थ अध्याय का चतुर्थपाद समाप्त हुआ ॥**

भाष्यं प्रदीपमुद्द्योतं न्यासं च पदमञ्जरीम् ।
सिद्धान्तकौमुदीं चापि तद्व्याख्याश्च समीक्ष्य वै ॥ १ ॥
कृपया विश्वनाथस्याचतुर्थाध्यायमादितः ।
जयशङ्करलालेन रचिता भावबोधिनी ॥ २ ॥

—:०:—

# अथ पञ्चमाध्याये प्रथमः पादः

## १८८६. प्राक् क्रीताच्छः ॥ १ ॥ ( १६६१ )

**'तेन क्रीतम्' ( ५.१.३७ ) इति वक्ष्यति, प्रागेतस्मात्क्रीतसंशब्दनाद्यानित ऊर्ध्वमनुक्रमिष्यामश्छप्रत्यय-**

**न्यासः**

**प्राक् क्रीताच्छः** ॥ विधिः, अधिकारः, परिभाषा वेति त्रयमत्र सम्भाव्यते । यथा चैतत् त्रितयमपि निर्दोषम्, तथा 'प्राग्दीव्यतोऽण्' इत्यत्र दर्शितम् । यद्येवम्, **काशिकाकारेण** कस्मान्न सूचितम् ? एकदेशानुस्मरणेन सर्वस्य सूचितत्वादित्यभिप्रायः । अथ प्रागिति कोऽयं निर्देशः, यावता प्रपूर्वस्याञ्चतेः क्विनि नलोपादिके विहिते 'उगिदचाम्' इति नुमि, संयोगान्तलोपे च, 'क्विन्प्रत्ययस्य कुः' इति नकारस्य ङकारे प्राङिति भवितव्यम् ? अथेदृशी व्युत्पत्तिराश्रीयेत, यावता 'अञ्चतेश्चोपसंख्यानम्' इति कृते ङीपि प्राच्यां दिशि वसतीति 'दिक्शब्देभ्यः सप्तमी' इत्यादिना अस्तातिः, तस्य 'अञ्चेर्लुक्' इति लुक्, 'लुक्तद्धितलुकि' इति ङीपोऽपि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यव्ययत्वे 'अव्ययम्' इति सोर्लुकि 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् सर्वनामस्थानाभावे नुमोऽप्यभावः, ततः कुत्वे सति प्रागिति सम्पद्यते ? यस्तु मन्यते—"आद्येऽपि पक्षे क्रियाविशेषणत्वान्नपुंसकत्वम्, क्रियाविशेषणानां यथा नपुंसकत्वम्, कर्मभावश्च; तथा 'करणे च स्तोकाल्पकृच्छ्र' इत्यत्र प्रतिपादितम्, तत्र कर्मणि द्वितीयायाः 'स्वमोर्नपुंसकात्' इति लुकि कृते पूर्ववन्नुमभावः" इति, तन्मते द्वितीयैकवचनान्तं पदं सञ्जायते । तदेवमितरस्मिन् पक्षे 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठ्या भवितव्यम्, तत् कथं 'क्रीतात्' इति पञ्चमीनिर्देशः ? नैतदस्ति; यावता 'अन्यारादिरर्त्तेदिक्शब्द' इत्यत्रेदमुक्तम्—दिक्शब्दत्वादेव सिद्धेऽञ्चूत्तरपदग्रहणं 'षष्ठ्यतसर्थ' इत्यनेन प्राप्तां षष्ठीमपि बाधित्वा पञ्चम्येव यथा स्यादिति कुतः षष्ठीप्रसङ्गः । अतो व्यवस्थितमिदम्—प्राक् क्रीतादिति ।

**पदमञ्जरी**

**प्राक् क्रीताच्छः** ॥ **अवत्सीय इति** । अतिदोहनाद्वत्सान्प्रति हितो न भवति गोधुगित्येवं प्रकृतया नञा च युगपत्प्रत्ययार्थस्य सम्बन्धः, प्रधानभूतश्च प्रत्ययार्थः । भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, प्रधानत्वादेवानेकोपकार्यत्वस्याविरोधात्, 'सामान्याप्रयोगः' इति लिङ्गाच्च । किञ्च—विशेषतोऽत्र ज्ञापकमस्ति यदयं नञो गुणप्रतिषेधे 'सम्पाद्यर्हहितालमर्थास्तद्धिताः' इत्याह, तज्ज्ञापयति—'भवत्येवञ्जातीयकेऽपि विषये तद्धितः' इति, अन्यथा सम्पाद्यर्हहितालमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रनिषेधे प्रवृत्तिनिमित्तप्रतिषेधे वर्त्तमानात्पराणि न सम्भवेयुः । तत्र पूर्वं प्रत्ययः, पश्चान्नञ्समासः । अत एव यत्नसाध्यत्वादवत्सीय इत्यादेरुपन्यासः । यस्तु वत्सादन्यस्मै हितः, यो वा वत्सीयादन्यः, न तत्र किञ्चिदयत्नसाध्यम् ।

**भावबोधिनी**

नत्वेश-गुरु-तातानां पादौ, ध्यात्वा सरस्वतीम् ।
व्याख्याति पञ्चमाध्यायं त्रिपाठि - जयशङ्करः ॥

[ श्रीः ॥ पञ्चम अध्याय का प्रथमपाद प्रारम्भ । ] 'तेन क्रीतम्' ( पा० सू० ५।१।३६ ) यह सूत्र आगे [ पाणिनि ] कहेंगे, 'क्रीत' ( खरीदा हुआ ) इस शब्द के उच्चारण से पहले और यहाँ से आगे जिन [ अर्थों ] को कहेंगे उन ( अर्थों ) में 'छ' प्रत्यय का अधिकार समझना चाहिए । [ भाव यह है कि 'तेन क्रीतम्' से पहले तक जिन अर्थों में प्रत्यय किया जायगा वह सामान्य प्रत्यय 'छ' ही होगा । ] आगे कहेंगे—'तस्मै हितम् ।' (पा० सू० ५।१।५) [ उसके लिए हितकारक—इस अर्थ में प्रकृति से 'छ' प्रत्यय होता है । ] उदा०—वत्सेभ्यः हितः । (=बछड़ों के लिए

**स्तेष्वधिकृतो वेदितव्यः। वक्ष्यति—"तस्मै हितम्' (५.१.५) इति। वत्सेभ्यो हितो वत्सीयो गोधुक्। करभीय उष्ट्रः। अकरभीयः। अवत्सीयः"।**

**न्यासः**

अथ प्राग्वचनं किम्, न 'क्रीताच्छः' इत्येवोच्येत ? नैतदस्ति; एवं ह्युच्यमाने क्रीतशब्द एव प्रकृतित्वेन ज्ञायेत, ततश्च क्रीतशब्दादेव प्रत्ययः स्यात्। तस्मात् क्रीतादित्यवधिद्योतनार्थं प्रागिति वक्तव्यम्। तद्ध्ययमर्थः 'प्राग्घितात्' इत्यतः प्रकृतेन प्राग्ग्रहणेन हि सम्बध्यते। एवं तत्रैतत् स्यात्—तद्धि 'भवे च्छन्दसि' इति, तेन च्छन्दोऽधिकारेण प्रकृतं प्राग्ग्रहणं संबद्धम्। अतस्तदनुवृत्तौ सत्यां तस्याप्यनुवृत्तिरिति? वार्त्तमेतत्; अस्वरितत्वादेव च्छन्दोऽधिकारस्य निवृत्तेः। तर्हि हि 'प्राग्दीव्यतः' इत्यतः प्रकृतत्वात् तेनापि च वहतेरित्येवमादिकं सम्बध्येत, यथा—'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति ? नैतदस्ति; एवं हि 'सोमाट् ट्यण्' इत्यादौ पञ्चमी श्रूयते तत्र सर्वत्र प्राग्वचनेन सम्बन्धे न ज्ञायते—को विधिः, का च प्रकृतिरिति स्यात्। येषामवधित्वमिष्यते, तेषामेव प्राक्शब्दमधीतवानिति। इह तु प्रकृतेन प्राग्वचनेन सम्बध्यते। ननु च विपर्ययः कस्मान्न भवति—भवनादिति प्रकृतिः स्त्रीपुंसाभ्यामित्यवधिनिर्देश इति ? नैतदस्ति; अवधेरेकत्वादेकवचनेन निर्देशो न्याय्यः। प्रकृतिनिर्देशे तु द्वे एव प्रकृती परस्परापेक्षे इति द्विवचनमुपपद्यते। ननु च विशदमिदमुदितमप्यर्थज्ञानं स्वरितलिङ्गादधिकाराणामासङ्ग इत्येतद् भवता विस्मृतम्, तदेवम्, 'सोमाट् ट्यण्' इत्यादौ कः प्राग्वचनसम्बन्धप्रसङ्ग इति नार्थः प्राग्ग्रहणेन ? सत्यमेतत्; किन्तु स्वरितत्वास्वरितत्वख्यापनपरम्परया मन्दधियो मोहमासादयन्तीति तत्प्रतिपत्त्यर्थं प्राग्ग्रहणं कर्त्तव्यम्।

**अवत्सीय इति।** विकल्पनात् त्रयमत्र सम्भवति—अनुत्पन्ने प्रत्यये नञास्य सम्बन्ध इति, उत्पन्ने वा संसर्गः, उत्पत्तिकाल एवेति। तत्राद्ये पक्षे वत्सादन्यस्मै हितमितीष्टाभिधानं न प्राप्नोति। द्वितीये तु गोधुगनभिधानप्रसङ्गः। तृतीये तु 'सापेक्षमसमर्थं भवति' इति प्रत्ययो न प्राप्नोति। न चापि चतुर्थी; हितार्थस्य प्रतिषिध्यमानत्वात्। तृतीये तु पक्षे यथा दोषो न भवति तथा प्रतिविधीयते। तत्र वत्सहितशब्दयोः पदान्तरनिरपेक्षयोः क्रियापदेन भवतिनानुगम्यमानत्वात्, न च बाह्यसम्बन्धोऽन्तरङ्गसम्बन्धं निवर्त्तयितुं शक्नोति। अत एव न देवदत्ताय गां ददातीति सम्प्रदाने चतुर्थी भवति; कर्मणाभिप्राप्तेरन्तरङ्गत्वादिति। तथानेन च क्रमेण यत्रापि प्राप्तिर्न विद्यते, केवलं त्विच्छामात्रमेव, तत्रापि कर्मसंज्ञा प्रवर्तते, तद्यथा—ग्रामं गन्तुमिच्छामि न कश्चित् सहायोऽस्तीति।

**पदमञ्जरी**

अथ किमर्थमियानवधिरुपादीयते, यावता न ह्यस्य 'प्राग्वतेष्ठञ्' इत्यारभ्य ये योगाः 'तेन क्रीतम्' इत्येतस्मात्प्राक् पठिताः, तेषु व्यापारोऽस्ति, न हि तत्र कश्चिदर्थो निर्दिश्यते, ततश्च 'प्राक्ठञः' इति वक्तव्यम्, 'प्राग्वतेष्ठञ्' इत्ययमेव च प्रत्यासन्नष्ठञ्ग्रहीष्यते, न विप्रकृष्टः 'लोकसर्वलोकाट्ठञ्' इत्यादिः ? इत्यत आह—**अर्थोऽवधित्वेन गृहीत इति।** गृहीतो ग्रहीतुमिष्टः। अयमभिप्रायः—अवश्यमत्रार्थोऽवधित्वेन ग्राह्यः, अन्यथा 'प्राक् ठञः' इत्युच्यमानेऽवधिना सजातीयस्यावधिमतोऽभावादर्थाः, प्रकृतयो वाऽवधिमत्त्वेन गृह्येरन्—प्राक् ठञो येऽर्थाः, या वा प्रकृतय इति। तत्र प्रकृतिपक्षेऽधिकारस्य नदीस्रोतोरूपेण प्रतिप्रकृत्युपस्थानाद् 'उगवादिभ्यो

**भावबोधिनी**

हितकारक)—इस अर्थ में—वत्सीयः गोधुक्। [वत्स + छ = ईय, भसंज्ञा, अलोप। बछड़ों के लिए हितकारक गाय दुहने वाला अर्थात् उनके लिए भी दूध छोड़ देने वाला अहीर।] करभीयः उष्ट्रः। [करभाय हितः—करभ = ऊँट का बच्चा, उसके लिए हितकारक ऊँट। करभ + छ = ईय] अकरभीयः, अवत्सीयः। [करभेभ्यः न हितः, वत्सेभ्यो न हितः—ऐसा विग्रह करके नञ् समास और छ = ईय प्रत्यय एक साथ किया जाता है। जो करभ के लिए हितकारक नहीं है ऐसा ऊँट। और जो बछड़ों के लिए हितकारक नहीं है, ऐसा गोधुक् = गाय दुहने वाला।]

**अर्थोऽवधित्वेन गृहीतः, न प्रत्ययः। तेन 'प्राक् ठञश्छः' इति नोक्तम् ॥**

**न्यासः**

यदप्युच्यते—असामर्थ्यात्तद्धितेन न भवितव्यमिति, तदेतदप्यसारम्; यदयम् 'नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः' इति तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे वर्त्तमानानि पराण्यन्तोदात्तानि भवन्तीति तद्धितग्रहणमनर्थकं स्यात् ।

अथ किमर्थमियानवधिरुपादीयते, न हि तत्र तावदस्य व्यापारोऽस्ति; प्रत्यान्तरैर्बाधितत्वात् । लघुत्वात् 'प्राक्ठञश्छः' इति वक्तव्यम् ? इत्यत आह—**अर्थोऽवधित्वेनेत्यादि** । कः पुनरर्थमवधित्वेनाङ्गीकुर्वतो गुण इति चेद् ? अयमभिप्रायः—'प्राक्ठञश्छः' इत्युच्यमाने प्राक् ठञो याः प्रकृतस्ताभ्यश्छो भवतीत्यर्थः स्यात् । ततश्चाधिकारस्य प्रतियोगोपस्थानादपवादविषये छप्रत्ययः प्रसज्येत । अर्थे त्ववधित्वेनोपादीयमाने प्राक् क्रीताद् येऽर्थास्तेषु च्छो भवतीत्ययमर्थः सम्पद्यते, ततोऽतिप्रसङ्गो न भवति । तेन समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानोऽपवादश्छं बाधते । ननु च 'प्राक् ठञः' इत्युच्यमानेऽपवादविषयेऽपि च्छो न भविष्यत्येव; ज्ञापकात्, यदयम् 'विभाषा हविरपूपादिभ्यः' इति विभाषाग्रहणं शास्ति; इतरथा ह्यधिकाराच्छोऽपि लब्ध एवेति विभाषाग्रहणमनर्थकं स्यात् ? सत्यमेतत्; किन्तु ज्ञापकद्वारेणार्थप्रतिपत्तौ सत्यां प्रतिपत्तिगौरवं स्यात् । तस्मात् सुखप्रतिपत्त्यर्थमर्थोऽवधित्वेनोक्तः । अन्ये पुनराहुः—गृहीत इति 'आशंसायां भूतवच्च' इत्यनेन भविष्यति निष्ठाप्रत्यय इति । तेनायमर्थः सम्पद्यते—वत्सीयादिरूपसिद्ध्यर्थमर्थमवधिं ग्रहीष्यामीति । अतः **शालातुरीयेण**[1] 'प्राक् ठञश्छः' इति नोक्तम्; अन्यथा हि प्रत्ययावधित्वे प्रतिपदोक्ता अन्तरङ्गा इत्युपात्ताभ्यः प्रकृतिभ्य एव प्रत्ययः स्यादित्याशंक्येत ।

अन्ये पुनरन्यथा वर्णयन्ति—'परिखाया ढञ्' इत्यत्र 'छयतोः पूर्णोऽवधिः' इत्यभिधास्यति, ततश्च तेन क्रीतमिति वक्ष्यतीत्युच्यते, ततश्चेदं विरुद्धमित्याह—**अर्थोऽवधित्वेनेत्यादि** । गतार्थम् । **नैयायिक** इत्याह—''क्वचिदर्थोऽवधित्वेन गृह्यते, यथा—'आर्हाद् भवनात्' इति, क्वचित् प्रत्ययः 'प्राग्वहतेः'—'आ च त्वात्'

**पदमञ्जरी**

यच्छश्च' इति यच्छयोः सन्निधानादविशेषादुत्सर्गापवादभावो न स्यात्, तव्यत्तव्यानीयरामिव विकल्प एव स्यात् । अर्थे त्ववधित्वेन गृहीते प्राक् क्रीताद्येऽर्थास्तेष्वस्योपस्थानं भवति । अवधिसजातीयो ह्यवधिमान् भवति, यथा—'मासात्परः' इति कालः प्रतीयते, 'ग्रामात्पूर्वः' इति देशः, 'अलोऽन्त्यात्पूर्वः' इत्यलेव, ततोऽतिप्रसङ्गो न भवति । कथम् ? समानार्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं बाधते, यथा—तक्रंकौण्डिन्ये दधि, अतोऽर्थोऽवधित्वेन गृहीत इति । ननु च 'प्राक् ठञः' इत्युच्यमाने भवतु नामैवं प्राक्ठञो याः प्रकृतय इति, तथापि यदादिविषये छो न भविष्यति, ज्ञापकात्, यदयम् 'विभाषा हविरपूपादिभ्यः' इति विभाषां शास्ति, तज्ज्ञापयति-

**भावबोधिनी**

यहाँ अर्थ को अवधि ( सीमा ) के रूप में लिया जाता है, प्रत्यय को नहीं। इसी कारण ''प्राक् ढञश्छः'' ऐसा सूत्र नहीं बनाया गया ?

**विमर्श**—प्रस्तुत सूत्र विधि, अधिकार अथवा परिभाषा किसी भी प्रकार का मानना संभव है। काशिका में इसे अधिकार सूत्र लिखने का आशय भी उक्त त्रैविध्य का सूचक है।

इस सूत्र को 'क्रीताच्छः' ऐसा न बनाकर 'प्राक् क्रीताच्छः' ऐसा बनाने वाले पाणिनि का आशय यह है 'क्रीत' शब्द प्रकृति न मान लिया जाय, अपितु ''तेन क्रीतम्'' ( पा० सू० ५।१।३६ ) तक इसका सम्बन्ध माना जाय।

'प्राक् क्रीतात्' यहाँ अवधि अर्थ में पंचमी है। यह अवधि अर्थ को मानकर है प्रत्यय या प्रकृति को मानकर नहीं। भाव यह है कि आगे 'तेन क्रीतम्' सूत्र तक जिन अर्थों में प्रत्यय किये जाने वाले हैं उनमें यह 'छ' प्रत्यय होता है।

---

१. पाणिनिना—इत्यर्थः ।

## १८८७ उगवादिभ्यो यत् ॥ २ ॥ ( १६६२ )

**'प्राक् क्रीतात्' इत्येव। उवर्णान्तात्प्रातिपदिकाद् गवादिभ्यश्च यत्प्रत्ययो भवति, प्राक्क्रीतीयेष्वर्थेषु। छस्यापवादः। शङ्कव्यं दारु। पिचव्यः कार्पासः। कमण्डलव्या मृत्तिका[1]। गवादिभ्यः खल्वपि—गव्यम्।**

**न्यासः**

इति, क्वचित् प्रकृतिः—'आ कडारात्', 'प्राक्कडारात्' इति, क्वचिदेकदेशः—'प्राग्दीव्यतोऽण्' इति, क्वचिन्निरवधिः प्रत्ययः—'ङ्याप्प्रातिपदिकात्' इति; तेनायमात्मनो वैचित्र्यमाचार्यो दर्शयतीत्यवसीयते" इति। अथ क्रीतशब्दादेव पूर्वेण च्छप्रत्ययो भवतीत्येवं कस्मान्न विज्ञायते, यथा—'विभाषा सुपो बहुच् पुरस्तात्तु' इति? अनभिधानात्। न हि क्रीतशब्दात् पुरस्तादुत्पद्यमानेन प्रत्ययेन कस्यचिदर्थस्याभिधानमस्ति। न चापि 'तेन क्रीतम्' इति निर्देश उपपद्यते। तत्रैवमपि प्राक् क्रीतशब्दादेव प्रत्ययो भवतीत्येव कस्मान्न विकल्प्यते? अनभिधानादेव। न हि तत उत्पन्नेन प्रत्ययेन विवक्षितोऽर्थोऽवगम्यते। तर्थान्तरं भवादिकम्, तत्र च वृद्धलक्षणश्छ एव सिद्ध इत्यनर्थकमिदं स्यात्। तस्मात् प्रागुदितमेव प्रयोजनं न्याय्यम् ॥ १ ॥

**उगवादिभ्यो यत्** ॥ उगिति प्रत्याहारग्रहणं वा स्यात्? उवर्णग्रहणं वा? तत्राद्ये पक्षेऽयं वाक्यार्थो जायते—उगन्तेभ्यः प्रातिपदिकेभ्योऽवादिभ्योऽवकारादिभ्योऽवसुप्रभृतिभ्य इति। वकारादीन् वर्जयित्वेत्यर्थः। ननु चैवं सति पञ्चम्या निर्देशः स्यात्? नैष दोषः; 'सुपां सुलुक्' इति लुका निर्दिष्टत्वात्। एवं तर्हि प्रातिपदिकेषु गवादिपाठ-सामर्थ्यात् प्रत्याहारग्रहणं न भवति; अन्यथा हि गवादीनां पाठोऽनर्थकः स्यात्। एतत् सर्वं मनसि कृत्वाऽऽह—**उवर्णान्तादिति**। सर्वत्रग्रहणे तदन्तविधेरभ्युपगमादित्यभिप्रायः। **शङ्कव्यमिति**। 'ओर्गुणः', 'वान्तो यि प्रत्यये'

**पदमञ्जरी**

नान्यविषये छो भवतीति, एवं च कृत्वा छ इत्येवाधिकारोऽस्तु, नार्थोऽवधिनिर्देशेन, ज्ञापकाच्च प्रतिसूत्रमुपस्थानेऽप्यन्यविषये न भविष्यति, प्राग्वतेष्ठञित्यादिके तु प्रकरणे नास्याधिकारः; अधिकारान्तरेणावष्टब्धत्वात्? सत्यम्; प्रतिपत्तिगौरवपरिहारार्थस्त्ववधिनिर्देशः, स चावधिरर्थ एव निर्देश्यः, न प्रत्ययः, अन्यथा 'लशुनं च भक्षितं व्याधिश्च न निवृत्तः' इत्येतदापद्येत ॥ १ ॥

**उगवादिभ्यो यत्** ॥ **उवर्णान्तात्प्रातिपदिकाद् गवादिभ्यश्चेति**। उवर्णादिर्गशब्दादेर्वशब्दादेश्च यद्भवतीत्यर्थो न भवति, गवादिगणपाठतः। **सनंगुरित्यादि**। चर्मविकारलक्षणस्यात्रोऽवकाशः—वाध्रं चर्म, वारत्रं चर्मेति, उवर्णान्तलक्षणस्य यतोऽवकाशः—शङ्कव्यम्, पिचव्यमिति; सनङ्गोरुभयप्रसङ्गे परत्वादञ्प्राप्नोति। **चरुर्नाम हविरिति**। स्थालीवचनस्य चरुशब्दस्य तदधिकरणे हविष्युपचाराद्वृत्तिः। 'विभाषा हविरपूपादिभ्यः' इत्यत्र हविर्विशेषवाचिनां ग्रहणम्, न स्वरूपस्य; तस्य गवादिषु पाठात्। विपर्ययस्तु न भवति—इह विशेषग्रहणं तत्र

**भावबोधिनी**

अतः 'तेन क्रीतम्' इसके पहले प्रत्येक सूत्र में इसकी उपस्थिति होती है और उन-उन अर्थों में 'छ' प्रत्यय होता है—यह सूत्रार्थं बनता है। इस कारण समान अर्थ में प्रकृतिविशेष से होने वाला अपवाद प्रत्यय इस उत्सर्ग 'छ' प्रत्यय का बाध कर लेता है। अतः कहीं अतिप्रसङ्ग नहीं आता है। यद्यपि "तेन क्रीतम्" ५।१।३६ है तथापि इसके पूर्व "प्राग्वतेष्ठञ्" ५।१।१८ है अतः इसी सूत्र तक 'छ' का अधिकार समझना चाहिये ॥ १ ॥

'तेन क्रीतम्' इससे पहले वाले अर्थों में ही—इसकी अनुवृत्ति होती है। प्राक्क्रीतीय अर्थों में उवर्णान्त प्रातिपदिक से और 'गो' आदि प्रातिपदिकों से 'यत्' प्रत्यय होता है। [ अतः उन अर्थों में पूर्व सूत्र से निर्दिष्ट ] 'छ' प्रत्यय का अपवाद है। उदा०—शङ्कव्यं दारु। [ शङ्कवे हितम्—इस अर्थ में शङ्कु + यत् = य, "ओर्गुणः" (पा० सू० ६।४।२४६) से 'उ' का गुण, "वान्तो यि प्रत्यये" ( पा० सू० ६।१।७९ ) से ओ का 'अव्' आदेश। शङ्कु—खूँटी आदि के लिए

१. 'कमण्डलव्या मृत्तिका' इति पाठः पुस्तकान्तरे नास्ति।

**हविष्यम्** । सनङ्गुर्नाम चर्मविकारः, ततः परत्वात् 'चर्मणोऽञ्' ( ५.१.१५ ) इत्येष विधिः प्राप्नोति; तथा चरुर्नाम हविः; सक्तुः=अन्नविकारः, अपूपादिषु 'अन्नविकारेभ्यश्च' ( ग० सू० १०९ ) इति पठ्यते, ततः 'विभाषा हविरपूपादिभ्यश्च'[1] ( ५.१.४ ) इत्येष विधिः प्राप्नोति; तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्प्रत्यय एवेष्यते—सनङ्गव्यं चर्म, चरव्यास्तण्डुलाः, सक्तव्या धाना इति ।

गवादिषु 'नाभि नभं च' ( ग० सू० १०६ ) इति पठ्यते, तस्यायमर्थः—'नाभिशब्दो यत्प्रत्ययमुत्पादयति

**न्यासः**

इत्यवादेशः । **सनङ्गुरित्यादि** । चर्मविकारलक्षणस्यात्रोऽवकाशः—वार्ध्रम्, वारत्रम्, उवर्णान्तलक्षणस्य यतोऽवकाशः—शङ्कव्यम्, पिचव्यमिति; सनङ्गुर्नाम चर्मविकारः, तत्रोभयप्राप्तौ परत्वात् 'चर्मणोञ्' इत्यञ् प्राप्नोति।

**तथेत्यादि । अन्नविकारेभ्यश्चेति** । अपूपादिलक्षणस्य पाक्षिकस्य यतोऽवकाशः—अपूप्यास्तण्डुलाः, अपूपीया इति, उवर्णान्तलक्षणस्य स एव; चरुर्नाम हविर्विशेषः, सक्तुश्चान्नविकारः, तत उभयप्रसङ्गे परत्वात् 'विभाषा हविरपूपादिभ्यः' इति हविर्लक्षणोऽन्नविकारलक्षणश्च विधिः प्राप्नोति । तदेवं सनङ्गुशब्दादञ् प्राप्तः, चरुसक्तुशब्दाभ्यां विकल्पेन यत्, नित्यश्चेष्यते, तदर्थं पूर्वविप्रतिषेधो भाषितव्य इति । 'ओर्गुणः', 'वान्तो यि प्रत्यये' इत्यवादेशः । **सनङ्गव्यमित्यादि** । एतच्चेष्टवाचित्वात् परशब्दस्य लभ्यत इत्यवगन्तव्यम् ।

**गवादिषु नाभि नभञ्चेति पठ्यत इति** । अत्र कस्यचिदियमाशङ्का स्याद्—भसंज्ञाप्रतिषेधो विधीयत इति, ततश्च यस्येति लोपेन भवितव्यमित्यत आह—**नाभिशब्दो यत्प्रत्ययमिति** । शरीरावयवो यो नाभिशब्दस्तत्र कथं भवितव्यमित्याह—**यस्त्वित्यादि । ततः शरीरावयवाद् यति कृते परत्वाद् नाभ्यं तैलमिति** । ननु च शरीरावयवलक्षणे यति सति नभभावः कस्मान्न भवतीत्याह—**गवादिषु यतेत्यादि** । स हि गवादियता सह विहितः । तेन 'सन्नियोगशिष्टानामन्यतराभाव उभयोरप्यभावः' इति नभभावो न भवति ।

**पदमञ्जरी**

स्वरूपग्रहणमिति; गवादिष्वसञ्जातविरोधित्वेन स्वरूपग्रहणे बाधकाभावात् । अतः 'विभाषा हविरपूपादिभ्यः' इत्यत्रैव विशेषग्रहणमिति स्थिते तस्यावकाशः—आमिक्ष्यम्, आमिक्षीयम्; पुरोडाश्याः, पुरोडाशीया इति ।

**अन्न-विकारेभ्यश्चेति पठ्यत इति** । तस्यावकाशः—सुराः, सुर्याः, सुरीयाः, ओदन्याः, ओदनीया इति, उवर्णान्तलक्षणस्य यतः स एव; चरुसक्तुभ्यामुभयप्रसङ्गे परत्वाद्विभाषा प्राप्नोति, **तत्र सर्वत्र पूर्वविप्रतिषेधेन यत्प्रत्यय एवेष्यत इति** । अयमेव नित्यो यत्प्रत्यय इत्यर्थः ।

**नभं चादेशमापद्यत इति** । भसंज्ञकं च न भवतीत्ययं त्वर्थो न भवति, व्याख्यानात् । तदर्थमेव हि गणसूत्रं व्याख्यातम्, प्रायेण हि **वृत्तिकारो** गणसूत्राणि न व्याचष्टे । **नभ्योऽक्ष इति** । छिद्रवद्रथाङ्गविशेषः—नाभिः, तच्छिद्रनुप्रविष्टकाष्ठविशेषः—अक्षः, स तदनुगुणत्वात्तस्मै हित इत्युच्यते । अञ्जनं = तैलकृताभ्यङ्गः, तदपि

**भावबोधिनी**

हित = उपयोगी दारु = लकड़ी । ] पिचव्यः कार्पासः । [ पिचवे हितः—यह विग्रह है । पिचु + यत्, शेष प्रक्रिया पूर्ववत् । पिचु = रुई के लिए उपयोगी कपास । ] कमण्डलव्या मृत्तिका । [ कमण्डलवे हिता । कमण्डलु बनाने में उपयोगी मिट्टी । ] 'गो' आदि से भी यत् के उदा०—गव्यम् । [ गवे हितम्—इस अर्थ में गो + यत् = य, 'ओ' का अव् आदेश । गाय के लिए हितकर या उपयोगी । ] हविष्यम् । [ हविषे हितम्—इस विग्रह में हविष् + यत् । ] (१) 'सनङ्गु' यह चमड़े से बनी किसी चीज का नाम है, इससे परवर्ती होने के कारण "चर्मणोऽञ्" (पा० सू० ५।१।१५) से अञ् प्रत्यय प्राप्त होता है, (२) 'चरु' हवि है, (३) सक्तु—यह अन्न का विकार ( = परिणाम विशेष ) है, 'विभाषा हविरपूपादिभ्यः' (पा० सू० ५।१।४ ) के अन्तर्गत अपूपादि में 'अन्नविकारेभ्यश्च' यह वचन पठित है अतः इस सूत्र की विधि प्राप्त होती है परन्तु पूर्व विप्रतिषेध मानकर इन सभी में 'यत्' प्रत्यय ही इष्ट है—(१) सनङ्गव्यं चर्म । [ सनङ्गु + यत् । ] चरव्याः

१. सूत्रे चकारो न पठितः ।

**नभं चादेशमापद्यते' इति। नाभये हितो नभ्योऽक्षः। नभ्यमञ्जनम्।**

**यस्तु शरीरावयवो नाभिशब्दः, ततः 'शरीरावयवाद्यत्' (५.१.६) इति यति कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम्। गवादिषु यता सन्नियुक्तो नभभावोऽत्र न भवति।**

**गो। हविष्। बर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। ॐ नाभि नभं च ॐ (ग० सू० १०६)। ॐ शुनः सम्प्रसारणं वा दीर्घत्वं च तत्सन्नियोगेन चान्तोदात्तत्वम् ॐ। शुन्यम्, शून्यम्। चकारस्यानुक्तसमुच्च-**

**न्यासः**

**शुन इत्यादि।** श्वन्नित्येतस्य सम्प्रसारणे कृतेऽन्नन्ततास्तीति 'नस्तद्धिते' इति टिलोपेन भाव्यमेवेति। एवं तर्हि सम्प्रसारणसामर्थ्यान्न भवति? नैतदस्ति; 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्तु विधेर्निमित्तमेव नासौ बाध्यते' इति तदवस्थो दोषः। दीर्घविधानसामर्थ्यादिति चेत्? एवमपि पक्षे स्यात्।

एवं तर्ह्यन्यथा व्याख्यायते। इह चकारद्वयं पठ्यते—सम्प्रसारणञ्च, वा दीर्घत्वञ्चेति। द्वितीयश्चकारो भिन्नक्रमः सम्प्रसारणसमीपे द्रष्टव्यः। स च समुच्चयार्थोऽन्यस्य समुच्चेतव्यस्याभावात् तदेव समुच्चिनोति। तत्र सम्प्रसारणमेकेन क्रियते, द्वितीयेन तद्रूपस्यैवावस्थितिरिति। **तत्सन्नियोगनेत्यादि।** तदित्यनेन दीर्घत्वं प्रत्यव-

**पदमञ्जरी**

स्नेहनत्वान्नाभये हितम्। यत्तु भाष्य उक्तम्—'नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात्' (म० भा० ५.१.२ वा० ५) इति, तन्नभ्यं चक्रमिति प्रयोगाभिप्रायम्। न हि चक्रस्य नाभिविकृतिः, अपि त्ववयवः। नापि तादर्थ्यमस्ति; अवयविनोऽवयवार्थत्वाभावात्। तेन 'तदर्थं विकृतेः प्रकृतौ' इत्यत्रार्थे नभ्यं चक्रमिति **नैव** सिद्ध्यति। हितार्थस्त्वाशङ्क्य एवेति न सर्वथा प्रत्ययानुपपत्तिस्तत्र विवक्षितेति भावः। **शरीरावयवाद्यदिति यति कृते इति।** परत्वादिति भावः। **नाभ्यं तैलमिति भवितव्यमिति।** अथात्रापि नभभावः कस्मान्न भवति? इत्याह—**गवादियतेति। शुन इत्यादि।** श्वनित्यस्य सम्प्रसारणं यत्प्रत्ययश्च भवति, पक्षे दीर्घश्च। **तत्सन्नियोगेनेति।** यदा दीर्घत्वं तदा शुने हितं शुन्यं शून्यमिति वा, 'नस्तद्धिते' इति टिलापो न भवति; 'ये चाभावकर्मणोः' इति प्रकृतिभावात्। ननु 'अनः' इति तत्र वर्त्तते, सम्प्रसारणे च कृते नेदमन्नन्तम्, कामं दीर्घपक्षे तद्विधानसामर्थ्याट्टिलोपो न स्यात्, पक्षान्तरे तु प्राप्नोति, सम्प्रसारणं बाधकबाधनार्थम्, अन्यथा प्रकृतिभाव-

**भावबोधिनी**

तण्डुलाः। [ चरु + यत् ] सक्तव्याः धानाः। [ सक्तु + यत्, सभी में 'उ' का गुण और अव् आदेश होता है। ]

गवादिगण में "और नाभि नभ रूप प्राप्त करता है" यह पढ़ा गया है, इसका यह अर्थ है—नाभि शब्द यत् प्रत्यय को उत्पन्न कराता है और 'नभ' आदेश को प्राप्त करता है। उदा०—नाभये हितः—नभ्यः अक्षः। [ नाभि से यत् प्रत्यय और नभ आदेश — नभ + यत् = य, भसंज्ञा, अलोप करने पर रूप बनता है। नाभि = पहिए का बीच वाला भाग, उसके लिए उपयोगी। ] नभ्यम् अञ्जनम्। [ नाभि = नभ + यत्। पहिए के बीच के भाग के लिए उपयोगी तेल आदि लगाना ]।

परन्तु जो नाभि शब्द शरीर का अवयव वाचक है उससे "शरीरावयवाद् यत्" (पा० सू० ५।१।६) से यत् प्रत्यय करने पर—नाभये हितम्—इस अर्थ में—'नाभ्यं तैलम्' यह होना चाहिये। गो आदि में यत् प्रत्यय के सन्नियोग से होने वाला नभ आदेश यहाँ नहीं होता है।

[ गवादिगण में पठित शब्द—] गो। हविष्। बर्हिष्। खट। अष्टका। युग। मेधा। स्रक्। ॐ और नाभि शब्द नभ रूप को भी प्राप्त करता है। ॐ श्वन् शब्द का सम्प्रसारण और विकल्प से दीर्घ होता है और दीर्घ के सन्नियोग से अन्तोदात्त होता है। ॐ (गणसूत्र) उदा०—शुने हितम्—शुन्यम्, शून्यम्। [ श्वन् + यत्, व् का सम्प्रसारण, अ का पूर्वरूप करने पर शुन् + य, वैकल्पिक दीर्घ पक्ष में अन्तोदात्त। दीर्घ न होने पर 'यतोऽनावः' सूत्र से आद्युदात्त होता है।

यार्थत्वात् 'नस्तद्धिते' ( ६.४.१४४ ) इति लोपो न स्यात् । ॐ ऊधसोऽनङ् च ॐ ( ग० सू० १०८ ) । ऊधन्यः । कूप । उदर । खर । स्वद । अक्षर । विष । गवादिः[1] ॥

**१८८८. कम्बलाच्च संज्ञायाम् ॥ ३ ॥ ( १६६३ )**

**कम्बलात् प्राक्क्रीतीयेष्वर्थेषु यत्प्रत्ययो भवति संज्ञायां विषये । छस्यापवादः । कम्बल्यमूर्णापलशतम् ।**

**न्यासः**

मृश्यते । तेन दीर्घत्वेन यत एवान्तोदात्तत्वं भवति, अन्यथा 'यतोऽनावः' इत्याद्युदात्तत्वं स्यात् । **ऊधसोऽनङ् चेति** । ऊधःशब्दस्यानङादेशो भवति, चकाराद् यच्च । **ऊधन्यः** । पूर्ववत् प्रकृतिभावः ॥ २ ॥

**कम्बलाच्च संज्ञायाम्** ॥ ननु 'अपरिमाणविस्ताचितकम्बल्येभ्यः' इति निपातनादेव कम्बल्य इति सिध्यति, कम्बल्यं हि परिमाणविशेषः, इतरथा हि कम्बल्यशब्दस्य तत्र ग्रहणमनर्थकं स्यात्, परिमाणविशेषस्य कम्बल्यशब्दो नामधेयम्; अयमपि प्रत्ययः संज्ञायां विधीयमानस्तत्रैव भवति, नान्यत्र; न ह्यत्र कम्बल्यशब्दः संज्ञा, तस्मान्नार्थोऽनेन ? नैतदस्ति, निपातनेन हि कम्बल्यशब्दः परिमाणे साधुरित्येतावत् प्रतीयते, न तु यदन्तोऽयमिति । ततश्चान्तस्वरितत्वं न स्यात् । तस्मात् स्वरितत्वपरिज्ञानार्थमिदं कर्त्तव्यम् । अनन्तरश्रुतस्य यतोऽनुकर्षणार्थश्चकारः । ननु स्वरितत्वादेव यद् भविष्यति ? छोऽपि तर्हि स्यात् । ननु च च्छस्य सन्निधाने प्रकृतिमात्राच्छ उक्त इति नियमार्थमिदं स्यात्, तच्चानिष्टम्, यत् पुनर्नियतविषय इति तत्सम्बन्धे विध्यर्थता, विधिनियमयोश्च विधिरेव ज्यायान् ? नैतदस्ति; छस्यापि सम्बन्धे विध्यर्थता सम्भवति । कथं

**पदमञ्जरी**

प्रसङ्गात् ? एवं तर्हि चकारद्वयमत्र पठ्यते, तत्रैकः सम्प्रसारणसमुच्चये द्रष्टव्यः, तत्रान्यस्य समुच्चेतव्यस्याभावात्सम्प्रसारणमेव पुनर्विधीयते । तत्र पुनर्विधानं तु तद्रूपस्यैवावस्थानार्थं भविष्यति । **ऊधसोऽनङ् चेति** । 'नश्च' इति नोक्तम्; लाघवे विशेषाभावात् । ऊधःशब्दस्यानङादेशो भवति यत्सन्नियोगेन—ऊधन्यः, 'ये चाभावकर्मणोः' इति प्रकृतिभावः ॥ २ ॥

**कम्बलाच्च संज्ञायाम्** ॥ अयं योगः शक्योऽवक्तुम् । कथं कम्बल्य इति ? निपातनादेवैतत्सिद्धम् 'अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि' इति । इदं तर्हि प्रयोजनम्—संज्ञायामिति वक्ष्यामीति ? एतदपि नास्ति प्रयोजनम्; परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणम्—परिमाणस्य च संज्ञा कम्बल्यशब्दः । एवं तर्हि स्वरार्थं वचनम्, निपातनेन हि परिमाणे कम्बल्यशब्दः साधुरित्येतावदवगम्यते, न

**भावबोधिनी**

कुत्ते के लिए हितकारक । जहाँ कोई नहीं होता है उस स्थान को 'शून्य' कहा जाता है । ] [ दूसरा ] चकार अनुक्त का समुच्चय करने के लिए है । इसलिए इसमें 'नस्तद्धिते' सूत्र से टि ( अन् ) का लोप नहीं होता है । ॐ ऊधस् से यत् प्रत्यय और अनङ् आदेश होता है । ॐ उदा०—ऊधन्यः । [ ऊधसे हितः—इस विग्रह में ऊधस्+यत्=य, अनङ् ङित् होने से अन्तिम वर्ण 'स्' के स्थान पर होता है—ऊध् अनङ्=अन्+यत्=य=ऊधन्य । गाय आदि के थन के लिये हितकारक ]। कूप । उदर । खर । स्वद । अक्षर । विष । ये गवादि हैं ।

**विमर्श**—कहीं-कहीं पूर्वोक्त शब्दों से अधिक शब्द गवादि गण में मिलते हैं । काशिका के अधिकांश संस्करणों में 'ऊधन्यः कूपः ।' ऐसा पाठ है । यह भ्रामक है । ऊधन्यः—यह उदाहरण है । पुनः 'कूप' यह दूसरा शब्द है । इससे भी यत् होकर—'कूप्यम्' आदि होते हैं ॥ २ ॥

कम्बल शब्द से प्राक्क्रीतीय अर्थों में संज्ञाविषय में यत् प्रत्यय होता है । यह 'छ' का अपवाद है । उदा०—कम्बल्यम् ऊर्णापलशतम् । [ कम्बलाय हितम्—इस अर्थ में यत् प्रत्यय होता है । यहाँ एक सौ पल परिमाण वाली

---

१. स्कन्द, अध्वा—एतौ शब्दौ पुस्तकान्तरेऽधिकौ ।

**संज्ञायामिति किम् ? कम्बलीया ऊर्णाः ।**

**१८८९. विभाषा हविरपूपादिभ्यः ।। ४ ।। ( १६६४ )**

**हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्रातिपदिकेभ्यः प्राक्क्रीतीयेष्वर्थेषु विभाषा यत् प्रत्ययो भवति । आमिक्ष्यं दधि, आमिक्षीयं दधि । पुरोडाश्यास्तण्डुला, पुरोडाशीयाः । हविश्शब्दात्तु गवादिपाठान्नित्यमेव भवति । अपूपादिभ्यः—अपूप्यम्, अपूपीयम् । तण्डुल्यम्, तण्डुलीयम् ।**

**न्यासः**

संज्ञायामित्युच्यते, संज्ञा चानुपात्तावयवार्थापि भवति, तत्रानवयवार्थानामप्राक्क्रीतीयत्वाद्धिताद्यर्थाभावे छप्रत्यार्थमेतत् स्यात्, तस्माच्चकारो यत्प्रत्ययानुकर्षणार्थः कर्त्तव्यः ? न कर्त्तव्यः; इष्टतोऽप्यधिकाराणां प्रवृत्तिनिवृत्ती भवत इति यत एवानुवृत्तिर्भविष्यति, न तु च्छस्य । एवं तर्हि चकार उगवादिभ्य इत्यनुकर्षणार्थः । किमर्थमिदम् ? सनङ्गवादिभ्यः परत्वादञादयः प्राप्नुवन्ति तद्बाधनार्थमिति । अथ गवादिष्वेव 'कम्बलाच्च संज्ञायाम्' इति कस्मान्न पठति ? तत्र पाठे न कश्चिद् गुरुलाघवकृतो विशेष इति यत्किञ्चिदेतदिति ।। ३ ।।

**विभाषा हविरपूपादिभ्यः** ।। हविःशब्दो गवादिषु पठ्यते, तेन तस्मान्नित्यं यता भवितव्यम् । अत्र हविर्विशेषाणां ग्रहणम्, न स्वरूपस्येति; उगवादिसूत्रे स्वरूपपरिभाषाया उपस्थानात् । न हि तत्र सोपतिष्ठमाना केनचिन्निवार्यते, तेन स्वरूपस्यैव ग्रहणम् । तत्र स्वरूपग्रहणे सतीह स्वरूपपरिभाषा नोपतिष्ठते; अन्यथा हि यद्यत्रापि स्वरूपग्रहणं स्यात्, ततः स्वतन्त्र एकस्मात् शब्दात् नित्यश्च यतो विधिः स्यादनित्यश्चेत्युभयमेकत्र नोपपद्यत इति न भवति विपर्ययः अथ वा—हविःशब्दस्येह पृथगुपादानादर्थप्रधानत्वमवसीयते, अन्यथा ह्यपूपादिष्वेव पठेदिति । **अन्नविकारेभ्यश्चेति** । अन्नविकाराः=अन्नप्रकाराः, ते च प्रत्ययमुत्पादयन्ति विभाषा—उदन्याः, उदनीया इति । यद्येवम्, अपूपादीनां किण्वपर्यन्तानाममन्नविकारत्वादेव सिद्धत्वात् पाठोऽनर्थको जायते ? यदा तर्हि केनचिदाकारसादृश्येनापूपादयोऽर्थान्तरे उपचर्यन्ते, तदर्थमेषां पाठः । किञ्चान्नविकारग्रहणेनापूपादिषु प्रत्ययमिच्छत इहापि स्यात्—यवापूपाः, व्रीहितण्डुला इति । प्रतिपदपाठे तु ग्रहणवत्त्वात्

**पदमञ्जरी**

तु यदन्तोऽयमिति, ततश्चान्तस्वरितत्वं न स्यात् । अथ निपातन एवान्तस्वरितत्वं पठ्येत ? तत्र व्याख्यानं शरणम्; व्याख्यानाच्च लघु सूत्रम् ।। ३ ।।

**विभाषा हविरपूपादिभ्यः ।। हविर्विशेषवाचिभ्य इति ।** स्वरूपस्य ग्रहणं न भवति; तस्य गवादिषु पाठात् । विपर्ययस्तु न भवति तत्र विशेषाणां ग्रहणमिह स्वरूपस्येति; असञ्जातविरोधित्वेन तत्रैव स्वरूपग्रहणस्य न्याय्यत्वात् । **अन्नविकारेभ्यश्चेति ।** अन्नविकाराः = अन्नप्रकाराः, अदनीयविशेषा इत्यर्थः, तेभ्यश्च विभाषा यद् भवति—ओदन्याः, ओदनीयाः । यद्येवम्, अपूपादीनां किण्वपर्यन्तानां पाठोऽनर्थकः, अन्नविकार-

**भावबोधिनी**

ऊन ही 'कम्बल्य' कही जाती है । इसके लिए यह रूढ़ है ।] संज्ञा में—इसका क्या लाभ ? कम्बलीया ऊर्णाः । [ कम्बल + छ = ईय । यह सामान्य प्रयोग है । ] ।। ३ ।।

हविर्विशेष के वाचक और अपूपादि प्रातिपदिकों से प्राक्क्रीतीय अर्थों में विकल्प से यत् प्रत्यय होता है । उदा०—आमिक्ष्यं दधि, आमिक्षीयं दधि । [ आमिक्षा + यत्, भसंज्ञा, आलोप । पक्ष में सामान्य 'छ' प्रत्यय आमिक्षा + छ = ईय भसंज्ञा, आलोप । ] पुरोडाश्याः पुरोडाशीया वा तण्डुलाः । [ पुरोडाश + यत्, पक्ष में सामान्य छ = ईय प्रत्यय । पुरोडाश के लिए उपयोगी चावल । ] हविष् का पाठ गवादिगण में होने से नित्य ही यत् होता है । अपूपादि से यत् के उदा०—अपूप्यम्, अपूपीयम् । [ अपूपाय हितम् । ] तण्डुल्यम्, तण्डुलीयम् । [ तण्डुलाय हितम् । ]

अपूप । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल । सूप । कटक । कर्णवेष्टक । किण्व । ❀ अन्नविकारेभ्यश्च ❀ ( ग० सू० १०९ ) पूप । स्थूणा । पीप । अश्व । पत्त्र[1] । अपूपादिः ॥

१८९०. तस्मै हितम् ॥ ५ ॥ ( १६६५ )

'तस्मै' इति चतुर्थीसमर्थाद् 'हितम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । वत्सेभ्यो हितो गोधुक् वत्सीयः । अवत्सीयः । पटव्यम् [पटीयम्] । गव्यम् । हविष्यम् । अपूप्यम् । अपूपीयम् ।'

१८९१. शरीरावयवाद्यत् ॥ ६ ॥ ( १६६६ )

शरीरम् = प्राणिकायः । शरीरावयववाचिनः प्रातिपदिकाद्यत् प्रत्ययो भवति 'तस्मै हितम्' इत्येतस्मि-

न्यासः

तदन्तविधिः पर्युदस्तो भवति । ननु च 'असमासे निष्कादिभ्यः' इत्यसमासग्रहणाद् भवितव्यमेवात्र तदन्तविधिना, एतेनासमासग्रहणेन पूर्वत्र तदन्तविधिरस्तीत्येषोऽर्थः प्रतिपाद्यते ? सत्यमेतत्; अपूपादिषु प्रतिपदपाठसामर्थ्यान्न भविष्यति ॥ ४ ॥

तस्मै हितम् ॥ एतदेव ज्ञापकम्—हितयोगे चतुर्थ्यस्तीति । तेन यदुक्तम्—'हितयोगे चतुर्थी वक्तव्या' इत्येतदुपपन्नं भवति ॥ ५ ॥

शरीरावयवाद्यत् ॥ शीर्यत इति शरीरम्, तेन घटादेरपि ग्रहणं भविष्यतीत्यत आह—शरीरं प्राणिकाय इति । एतेन रूढिरियमिति दर्शयति । गवादावेते शरीरावयववाचिनः । तत्र तु या प्रकृतयस्ताभ्योऽनेनापि

पदमञ्जरी

त्वादेव सिद्धेः, सुराप्रकृतिद्रव्यं किण्वम् ? नानर्थकः, प्रपञ्चार्थत्वात् ।

अपर आह—यदा सादृश्यादिनापूपादिभ्योऽर्थान्तरे उपचर्यन्ते, तदर्थं एषां पाठ इति ॥ ४ ॥

तस्मै हितम् ॥ तस्मै इति । 'हितयोगे चतुर्थी वक्तव्या' ( वा० १२३ ) इति चतुर्थी । अपर आह—अयमेव निर्देशो ज्ञापको हितयोगे चतुर्थी भवतीत्यस्येति, तच्चिन्त्यम्; 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इति आशिषि विषयविशेषे हितयोगे चतुर्थ्याः सम्भवात् ॥ ५ ॥

शरीरावयवाद्यत् ॥ शरीरं प्राणिकाय इति । एतेनैतद्दर्शयति - शीर्यत इति शरीरमिति शृणातेरीरन्प्रत्यय-

भावबोधिनी

[ अपूपादिगण में पठित शब्द— ] अपूप । तण्डुल । अभ्यूष । अभ्योष । पृथुक । अभ्येष । अर्गल । मुसल । सूप । कटक । कर्णवेष्टक । किण्व । ❀ अन्न के विकारवाची प्रातिपदिकों से भी यत् होता है । ❀ पूप । स्थूणा । पीप । अश्व । पत्त्र । ये अपूपादि हैं ॥ ४ ॥

'तस्मै' [ उसके लिये ] इस चतुर्थी समर्थ शब्द से 'हितम्' इस अर्थ में यथाविहित प्रत्यय होते हैं । उदा०—वत्सेभ्यो हितः गोधुक् वत्सीयः । [ जो ग्वाला बछड़ों के पीने के लिए दूध छोड़ देता है उसे 'वत्सीयः' कहते हैं । जो ऐसा नहीं है, सब दूध दुह लेता है वह ] अवत्सीयः । [ यहाँ जो बछड़ों के लिए हितकारक नहीं है—ऐसा अर्थ है । इसमें प्रकृति और नञ् दोनों के साथ प्रत्ययार्थ का सम्बन्ध एक साथ होता है । ] पटव्यम् । [ पटवे हितम्—यह विग्रह है । वास्तव में यहाँ पटीयम् पाठ होना चाहिये । पटाय=वस्त्र के लिए उपयोगी सूत आदि अर्थ करना चाहिये । ] गव्यम् । हविष्यम् । अपूपीयम्, अपूप्यम् । [ अपूप से विकल्प से यत् और पक्ष में छ प्रत्यय होने से दो रूप बनते हैं । ] ॥ ५ ॥

शरीर=प्राणी का देह । शरीर के अवयव के वाचक प्रातिपदिक से 'तस्मै हितम्' इस विषय में 'यत्' प्रत्यय होता है । यह [ सामान्य ] 'छ' का अपवाद है । उदा०—दन्त्यम् । [ दन्ताय हितम्—इस अर्थ में दन्त + यत् = य, भसंज्ञा, अल्लोप । ] कण्ठ्यम् [ कण्ठ के हितकारी ओषधि ] । ओष्ठ्यम् [ ओंठ के लिए उपयोगी ] । नाभ्यम् । [ नाभि

१. कट, अयःस्थूल, ओदन, अवोष, प्रदीप—एते शब्दाः पुस्तकान्तरेऽधिकाः ।

**प्रत्ययो भवति। अध्यर्धपण्यम्, द्विपण्यम्, त्रिपण्यम्। पाद—अध्यर्धपाद्यम्, द्विपाद्यम्, त्रिपाद्यम्। पद्भावो न भवति—'पद्यत्यतदर्थे' ( ६. ३. ५३ ) इति; प्राण्यङ्गस्य स ( ६. ३. ५२ ) इष्यते, इदं तु परिमाणम्। माष—अध्यर्धमाष्यम्, द्विमाष्यम्, त्रिमाष्यम्। शत—अध्यर्धशत्यम्, द्विशत्यम्, त्रिशत्यम्॥**

**१९२०. शाणाद्वा ॥ ३५ ॥ ( १७०० )**

**'अध्यर्धपूर्वाद् द्विगोः' इत्येव। शाणशब्दादध्यर्धपूर्वाद् द्विगोराहीयेष्वर्थेषु वा यत् प्रत्ययो भवति। ठञोऽपवादः। पक्षे सोऽपि भवति, तस्य च लुक्। अध्यर्धशाण्यम्, अध्यर्धशाणम्। द्विशाण्यम्, द्विशाणम्। त्रिशाण्यम्, त्रिशाणम्।**

❀ **शताच्चेति वक्तव्यम्** ❀ **( म० भा० ५. १. ३५ वा० १ )। अध्यर्धशत्यम्, अध्यर्धशतम्, । द्विशत्यम्,**

**न्यासः**

प्राप्ते तस्य लुकि शतशब्दादप्यसमासे 'शताच्च ठन्यतावशते' इति ठन्यतोर्विधानात् समासे संख्यालक्षणे कनि यद् विधीयते। **द्विपाद्यमित्यादि**। ननु पद्भावः कस्मान्न भवति 'पद्यत्यतदर्थे' इति ? सत्यम्; 'पदस्य पदाज्याति' इत्यत्र प्राण्यङ्गस्यैव पद्भावविधानात्। कुत एतत् ? 'आज्याति' इत्यादिना गतिवचनेन सम्बन्धस्तस्यैवोपपद्यते, न परिमाणशब्दस्य। स एव प्राण्यङ्गवाच्युत्तरसूत्रेऽप्यनुवर्तिष्यत इति तस्यैव पद्भाव इष्यते। स्यादेतत्—अयमपीह पादशब्दः प्राण्यङ्गवाची, अतो भवितव्यमेवेह पद्भावेन ? इत्यत आह—**पद्भावो न भवतीति**। 'पद्यत्यतदर्थे' इति पद्भावः प्राप्नोति, स न भवति। किं कारणमित्याह—**प्राण्यङ्गस्येत्यादि**। 'पादस्य पदाज्यातिगोपहतेषु' इत्यत्र प्राण्यङ्गस्य पादस्य ग्रहणम्। **इदं तु परिमाणग्रहणमिति**। पणादिभिः परिमाणैः साहचर्यात् परिमाणं पादो गृह्यते, न प्राण्यङ्गमिति पद्भावस्याप्रसङ्गः॥ ३४॥

**शाणाद्वा ॥ ठञोऽपवाद इति**। न ठकः; शाणस्य परिमाणत्वात्।

**शताच्चेति वक्तव्यमिति**। शताच्चाध्यर्द्धपूर्वाद् द्विगोश्च यत्प्रत्ययो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह शतशब्दोऽनुवर्तते, तेन तदन्तादपि यद्भवतीति। यद्येवम्, पूर्वसूत्रे तस्य

**पदमञ्जरी**

**प्राण्यङ्गस्येति**। 'पादस्य पदाज्यातिगोपहतेषु' इत्यत्र तावत् प्राण्यङ्गस्य पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवचनैः सम्बन्धसद्भावात् पद्यतीत्यादावपि तस्यैवानुवृत्तिः। **इह तु परिमाणमिति**। गृह्यते इति शेषः। पणमाषाभ्यां साहचर्यादिति भावः॥ ३४॥

**शाणाद्वा ॥ ठञोऽपवाद इति**। यद्यप्युन्मानवचनः शाणशब्दः, तथाप्यार्हादित्यत्र क्रियापरिमाणस्य ग्रहणादस्यापि पर्युदासाट्ठञ एव प्रसङ्ग इति भावः।

**शताच्चेति वक्तव्यमिति**। पूर्वेण नित्ये यति प्राप्ते वचनम्। यदभावपक्षे सङ्ख्यालक्षणस्य कनो लुक्॥३५॥

**भावबोधिनी**

शब्द जिसके अन्त में है उससे आर्हीय अर्थों में यत् प्रत्यय होता है। उदा०—अध्यर्धपण्यम्, द्विपण्यम्, त्रिपण्यम्। [ अध्यर्धपणेन क्रीतम्, द्वाभ्यां पणाभ्यां क्रीतम्, त्रिभिः पणैः क्रीतम्—इन विग्रहों में यत् = य प्रत्यय, भसंज्ञा अलोप होता है। पण का प्रयोग पैसा के लिए है। ] पाद—के उदा०—अध्यर्धपाद्यम्, द्विपाद्यम्, त्रिपाद्यम्। "पद्यत्यतदर्थे" ( पा. सू. ६।३।५३ ) सूत्र से पाद का पद् आदेश नहीं होता है क्योंकि वह आदेश प्राणी के अङ्ग पाद का ही इष्ट है, यहाँ तो परिमाणवाची पाद है। माष के उदा०—अध्यर्धमाष्यम्, द्विमाष्यम्, त्रिमाष्यम्। [ माष = माशा परिमाण है। ] शत के उदा०—अध्यर्धशत्यम्, द्विशत्यम् त्रिशत्यम् [ इनमें क्रीत अर्थ प्रतीत होता है। ]॥ ३४॥

'अध्यर्धपूर्वाद् द्विगोः' इसकी अनुवृत्ति होती है। अध्यर्धपूर्वक तथा द्विगु समास वाले शाण शब्द से आर्हीय अर्थों में 'यत्' प्रत्यय विकल्प से होता है। यह ठञ् का अपवाद है। पक्ष में वह भी होता है और उसका लुक होता है। उदा०—अध्यर्धशाण्यम् [ अध्यर्धशाणेन क्रीतम्—इस अर्थ में अध्यर्ध-शाण + यत् = य, भसंज्ञा, अलोप पक्ष में ] अध्यर्धशाणम्। [ ठञ् होता है उसका लुक् "अध्यर्धपूर्वद्विगोलुगसंज्ञायाम्" ५।१।२८ सूत्र से हो जाने पर मूल शब्द ही बचता है। इसी प्रकार द्विगु के उदाहरणों में भी दो रूप होते हैं—] द्विशाण्यम्, द्विशाणम्। त्रिशाण्यम्, त्रिशाणम्। [ शाण = कसौटी,

द्विशतम् । त्रिशत्यम्, त्रिशतम् ॥

**१९२१. द्वित्रिपूर्वादण्च[1] ॥ ३६ ॥ ( १७०१ )**

**'शाणाद्वा' ( ५.१.३५ ) इत्येव । द्वित्रिपूर्वाच्छाणान्तात्प्रातिपदिकादार्हीयेष्वर्थेषु अण् प्रत्ययो भवति, चकाराद्यच्च वा । तेन त्रैरूप्यं सम्पद्यते—द्वैशाणम्, द्विशाणम्, द्विशाण्यम् । त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम् । 'परिमाणान्तस्यासंज्ञाशाणयोः' ( ७.३.१७ ) इति पर्युदासादादिवृद्धिरेव भवति ॥**

**१९२२. तेन क्रीतम् ॥ ३७ ॥ ( १७०२ )**

**ठञादयस्त्रयोदश प्रत्ययाः प्रकृताः, तेषामितः प्रभृति समर्थविभक्तयः प्रत्ययार्थाश्च निर्दिश्यन्ते । 'तेन'**

**न्यासः**

पाठोऽनर्थक इति, इहैव शतशाणाभ्याञ्चेति वक्तव्यम् ? नैवं शक्यम्; एवं ह्युच्यमाने 'द्वित्रिपूर्वादण्च' इत्यनेनापि शतात् प्रसज्येत । पूर्वसूत्रे तु पाठसामर्थ्यादण्विधौ नानुवर्तते । शतशब्दः स्वरितत्वाच्चेहानुवर्त्तमानो वा यतमुत्पादयति ॥ ३५ ॥

**द्वित्रिपूर्वादण्च ॥ तेन त्रैरूप्यं सम्पद्यत इति ।** एकं रूपं सूत्रनिर्दिष्टेऽणि, द्वितीयं चकारसमुच्चिते यति, तृतीयं वाशब्दप्रापितस्य ठञो लुकि । **द्विशाणमिति ।** ठञो लुक् ॥ ३६ ॥

**तेन क्रीतम् ॥ साम्प्रतिकम्, आशीतिकमिति ।** 'प्राग्वतेष्ठञ्' । **नैष्किकम्, पाणिकमिति ।** 'असमासे

**पदमञ्जरी**

**द्वित्रिपूर्वादण् च ॥** वार्त्तिके दर्शनात्सूत्रष्वेतत्प्रक्षिप्तम् । **त्रैरूप्यं भवतीति ।** अण्येकम्, यति द्वितीयम्, ठञो लुकि तृतीयम् ॥ ३६ ॥

**तेन क्रीतम् ॥ तेषामिति ।** अस्य समर्थविभक्तय इत्यनेनैव सम्बन्धः, न प्रत्ययार्थ इत्यनेन । न हि तेषां प्रत्ययानां प्रत्ययार्था निर्दिश्यन्ते इत्यन्वयो घटते । ओदनपाकं पचतीतिवद्वा कथञ्चिदन्वयः ।

**भावबोधिनी**

सान का वाचक है । यहाँ उसे उसके परिमाण का वाचक समझना चाहिए । ] ❀ शत शब्द से भी 'यत्' कहना चाहिए । ❀ उदा० अध्यर्धशत्यम्, अध्यर्धशतम् । इसी प्रकार द्विशत्यम् द्विशतम् । त्रिशत्यम् त्रिशतम् । [ द्वितीय रूप में प्रत्यय का लुक् हो जाता है । ] ॥ ३५ ॥

'शाणाद् वा' इसकी अनुवृत्ति होती है । द्वि और त्रि शब्द जिसके पूर्व में हैं और शाण जिसके अन्त में है ऐसे प्रातिपदिक से आर्हीय अर्थों में विकल्प से अण् होता है और च के कारण विकल्प से यत् भी होता है । [ पक्ष में ठञ् और उसका लुक् होता है । ] इस लिए तीन रूप होते हैं—( १ ) द्वैशाणम्, ( २ ) द्विशाण्यम्, ( ३ ) द्विशाणम् । [ द्वाभ्यां शाणाभ्यां क्रीतम् —यह है । ( १ ) अण्, ( २ ) यत् और ( ३ ) ठञ् लुक् में तीन रूप होते हैं । ] त्रैशाणम् त्रिशाण्यम्, त्रिशाणम् । "परिमाणान्तस्यासंज्ञाशाणयोः" ( पा. सू ७।३।१५ ) में 'अशाणान्त' यह निषेध होने से [ उत्तर पद की वृद्धि न होकर ] आदिवृद्धि ही होती है । ॥ ३६ ॥

**विमर्श**—भाष्य में ' शाणाद् वा" इस पूर्वोक्त सूत्र पर 'द्वित्रिपूर्वादण् च' इसे वार्तिक रूप में ही पढ़ा गया है । अत एव कैयट ने लिखा है "सूत्रेष्वनार्षः पाठ इति वार्तिकारम्भः ।" पदमञ्जरीकार ने भी लिखा है —वार्त्तिके दर्शनात् सूत्रेष्वेतत् प्रक्षिप्तम्" ॥ ३६ ॥

ठञ् आदि तेरह[2] प्रत्यय प्रस्तुत किये जा चुके हैं, यहाँ से आगे उन प्रत्ययों की समर्थ विभक्तियों और प्रत्ययार्थों

---

१. महाभाष्ये ' द्वित्रिपूर्वादण्च' इति वार्तिकरूपेण पठितम् ( म० भा० ५.१.३५ वा० २ ) ।

२. १ ठञ्, २ ठक्, ३–४ ठञ् यतौ, ५ कन्, ६ ड्वुन्, ७ टिठन्, ८ अञ्, ९ शतमानाद्यण्, १० ख, ११ ईकन्, १२ पणादियत्, १३ 'द्वित्रीति' वार्त्तिकोक्तोऽण् च, इत्येवं त्रयोदश इत्यर्थः । अनुवर्त्तनेन तु नाऽन्यत्वमिति भावः । बृहच्छब्देन्दुशेखरः पृ० १४११

**इति तृतीयासमर्थात् 'क्रीतम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सप्तत्या क्रीतं साप्ततिकम्। आशीतिकम् ( ५.१.१८ )। नैष्किकम्। पाणिकम्। पादिकम्। माषिकम् ( ५.१.२० )। शत्यम्, शतिकम्। (५.१.२१.) द्विकम्। त्रिकम् ( ५.१.२२ )।**

**'तेन' इति मूल्यात्करणे तृतीया समर्थविभक्तिः। अन्यत्रानभिधानान्न भवति—देवदत्तेन क्रीतम्, पाणिना क्रीतमिति।**

**न्यासः**

निष्कादिभ्यः' इति ठक्। **शत्यम्, शतिकमिति**। 'शताच्च ठन्यतावशते' इति। **द्विकम्, त्रिकमिति**। 'संख्याया अतिशदन्तायाः कन्'।

सामान्यार्थाभिधाने तेनेति तृतीयोपादानादिह कस्मान्न भवति—देवदत्तेन क्रीतम्, पाणिना क्रीतम्? इत्यत आह—**तेनेत्यादि**। करणे तृतीया। परिमूल्यात् ततः प्रत्ययेन भवितव्यम्। **अन्यत्रेति**। अन्यत्र मूल्यात् करणे तृतीया भवति। **अनभिधानादिति**। न हि या कर्त्तरि तृतीया याप्यमूल्यात् करणे तृतीयोत्पाद्यते, तदन्तादुत्पन्नः प्रत्ययो विवक्षितं वस्तु प्रतिपादयितुमलं सम्भवति। तथा हि—दैवदत्तिकं पाणिकमिति चोक्ते, देवदत्तेन कर्त्रा क्रीतम् पाणिना करणेन क्रीतमित्येषोऽर्थो नावसीयते। देवदत्तेनेति कर्त्तरि तृतोया, पाणिनेति करणे। तदेतदुक्तं भवति—प्रत्यासन्नविनिमयद्रव्यसम्बन्धानभिधानादिति।

**अनभिधानादेवेति**। न हि प्रास्थिकमित्युक्ते, प्रस्थाभ्यां क्रीतं प्रस्थैर्वा क्रीतमित्येषोऽर्थोऽवगम्यते। तत्र पुनरभिधाने को हेतुः? शब्दशक्तिरीदृशी, किमत्रान्येन हेतुना! अपि च प्रस्थादयः शब्दा अर्थतस्तु परिमाणानामर्थानां वाचका इति तेषामभिधेयस्य प्रचये प्रवृत्तिसम्भवे को हेतुः? नन्वेवं वाक्येऽपि प्रचयो नोपपद्येत? नैष दोषः; वाक्ये हि प्रचयस्य वाचिका विभक्तिरस्तीति प्रचयाभिधानं न विरुध्यते। वृत्तौ तु न कश्चित् प्रचयमाचष्ट इति नासौ वृत्तिविषये युज्यते।

यदि तर्हि द्विवचनबहुवचनान्तात् प्रत्ययेन न भवितव्यम्, एवं सति द्वाभ्यां क्रीतं द्विकम्, त्रिभिः क्रीतं त्रिकमित्येवमादि न सिध्यतीत्यत आह—**यत्र त्वित्यादि**। अनभिधानं द्विवचनान्तात् प्रत्ययानुत्पत्तेर्हेतुः। तच्चाभिधानं क्व न भवति? यत्र प्रकृत्यर्थस्य संख्याभेदावगमो नास्तीति; प्रमाणाभावात्। इह तु प्रमाणमस्त्येव

**पदमञ्जरी**

**तेनेति मूल्यादिति**। मूल्यभूतार्थाभिधायिनः करणे या तृतीया सा चेह समर्थविभक्तिरित्यर्थः। मूलेनानाम्यं मूल्यम् = लाभ इत्युक्तम्। **अन्यत्रेति**। अमूल्यादकरणे वा मा तृतीया तत्रेत्यर्थः। **अनभिधानादेवेति**। एवकारः पौनर्वचनिकः। किञ्च–प्रस्थादयः शब्दा नियतपरिमाणानामर्थानां वाचका न मात्रयापि न्यूनाधिकभावे प्रवर्त्तन्ते, न हि यथा जलमिति प्रस्थेऽपि भवति, कुडवेऽपि भवति, यथा वाग्निरिति भ्राष्ट्राग्नावपि भवति' दावाग्नावपि भवति; यथा वा एको व्रीहिः सम्पन्न इत्यादौ जात्यात्मना सर्वासां व्यक्तीनामैक्यं प्रतीयते, तथा प्रस्थादिषु भवति। तस्मात्तेषु विभक्त्यभावे यावतस्ते वाचकास्तावदेव गम्यते। वाक्ये तु प्रस्थाभ्याम्, प्रस्थैरिति द्विवचनवहुवचनबलात्तावतोऽनेकस्यावगतिर्भवति।

**भावबोधिनी**

का निर्देश किया जा रहा है। 'तेन' इस प्रकार के तृतीया समर्थ से 'क्रीतम्' खरीदा गया—इस अर्थ में यथाविहित प्रत्यय होते हैं। उदा०—सतत्या क्रीतम्—इस अर्थ में—साप्ततिकम्। अशीत्या क्रीतम्—इस अर्थ में—आशीतिकम्। [ यहाँ 'प्राग्वतेष्ठञ्' सूत्र के अनुसार ठञ् होता है। ] नैष्किकम्। पाणिकम्। पादिकम्। माषिकम्। [ इनमें "असमासे निष्कादिभ्यः" सूत्र से ठञ् होता है। ] शत्यम्, शतिकम्। [ "शताच्च ठन्यतौ" से यत् और ठन् होते हैं। ] द्विकम्, त्रिकम्। [ इनमें "संख्याया अतिशदन्तायाः कन्" से कन् होता है। इनकी सिद्धि पहले उन-उन सूत्रों में की जा चुकी है। वहीं देखें। ]

'तेन' यह मूल्यवाचक से करण अर्थ में तृतीया समर्थ विभक्ति है। उससे भिन्न में अनभिधान के कारण प्रत्यय नहीं होता है—देवदत्तेन क्रीतम्, पाणिना क्रीतम्। [ यहाँ मूल्यवाचक नहीं है अपितु कर्ता और करण हैं। ]

द्विवचनबहुवचनान्तात्प्रत्ययो न भवति— प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतमिति; अनभिधानादेव ।

यत्र तु प्रकृत्यर्थस्य संख्याभेदावगमे प्रमाणमस्ति, तत्र द्विवचनबहुवचनान्तादपि प्रत्ययो भवति—द्वाभ्यां क्रीतं द्विकम्, त्रिकम्, पञ्चकम्। तथा—मुद्गैः क्रीतं मौद्गिकम्, माषिकम्; न ह्येकेन मुद्गेन क्रयः संभवति ( म० भा० ) ॥

## १९२३. तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥ ( १७०४ )

'तस्य' इति षष्ठीसमर्थात् 'निमित्तम्' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति, यत्तन्निमित्तं संयोगश्चेत्स भवति उत्पातो वा। संयोगः = सम्बन्धः। प्राणिनां शुभाशुभसूचकः महाभूत[1]परिणामः = उत्पातः।

**न्यासः**

किञ्चित्। द्वयादय एव शब्दाः प्रकृतित्वेनोपात्ताः ते हि स्वप्रवृत्तिनिमित्तभूतयैव संख्ययावच्छिन्नं वस्तु प्रतिपादयन्ति। अतः स्वार्थस्य संख्याविशेषावगमे प्रमाणम्। तेनात्रानभिधानादित्येष हेतुर्नास्तीति भवति प्रत्ययः। **तथेत्यादि**। यथा त्रिकमित्यादौ प्रकृत्यर्थसंख्यानभावोपगमे प्रमाणसम्भवाद् बहुवचनान्तादपि प्रत्ययो भवति, तथा मौद्गिकमित्यादावपि मुद्गादिशब्दप्रकृतिरत्र स्वार्थस्य संख्यावगमे प्रमाणमित्येतद् दर्शयितुमाह—**न ह्येकेनेत्यादि**। मुद्गादिनैकया व्यक्त्या क्रयो न भवतीति विनापि विभक्त्या मुद्गादिशब्दानुवृत्तौ बहुत्वं गम्यते। तत्र प्रमाणं भवति। एकग्रहणञ्च त्रयानुपयोगिनोर्द्वयोरप्युपलक्षणं वेदितव्यम् ॥ ३७ ॥

**तस्य निमित्तं संयोगोत्पातौ** ॥ **महाभूतानामिति**। पृथिव्यप्तेजोवाय्वाकाशानाम्। **साहस्रमिति**। सहस्रात् शतमानादिसूत्रेणाण् ॥ ३८ ॥

**पदमञ्जरी**

**द्विकम्, त्रिकमिति**। अत्र हि प्रकृतेरेव वाच्ये द्वित्वबहुत्वे विभक्तिस्तु करणत्वमात्रमाचष्टे, सा च प्रकृतिर्वृत्तावपि विद्यते। **न ह्येकेन मुद्गेनेति**। एकया मुद्गव्यक्त्येत्यर्थः। जात्याख्यायां त्वेकवचनान्तादपि। भवत्येव। ननु यद् निष्केण क्रीतं तस्य निष्को वस्नो भवति, ततश्च 'सोऽस्यांशवस्नभृतयः' इत्येव सिद्धः प्रत्ययः, नार्थ एतेन ? एवं तर्हि यस्य शतं मूल्यं न भवत्यथ च तेन क्रीतं कार्यवशात्तदर्थमिदम् ॥ ३७ ॥

**तस्य निमित्त संयोगोत्पातौ**। **शुभाशुभसूचक इति**। तत्प्रयोजक इतिवत्षष्ठीसमासः। **महाभूतानामिति**। पृथिव्यादीनाम्। **दक्षिणाक्षिस्पन्दनमिति**। पाञ्चभौतिकशरीरे द्रव्यमेव च क्रियारूपेण परिणमते इति दक्षिणाक्षिस्पन्दनं महाभूतपरिणामः, तस्य च शुभस्य प्रति निमित्तत्वम्; ज्ञापकहेतुत्वाद्, न तु कारकहेतुत्वात्।

**भावबोधिनी**

द्विवचनान्त और बहुवचनान्त से भी प्रत्यय नहीं होता है—प्रस्थाभ्यां क्रीतम्, प्रस्थैः क्रीतम्, कारण यह है कि इनका अनभिधान ही है।

किन्तु जहाँ प्रकृत्यर्थ के संख्याभेद के ज्ञान में कोई प्रमाण होता है वहाँ द्विवचनान्त और बहुवचनान्त से भी प्रत्यय होता ही है—द्वाभ्यां क्रीतम्—इस अर्थ में द्विकम्। त्रिभिः क्रीतम्—इसमें त्रिकम्। पञ्चभिः क्रीतम्—इसमें पञ्चकम्। इसी प्रकार मुद्गैः क्रीतम्—इस अर्थ में मौद्गिकम्, माषैः क्रीतम्—इस अर्थ में माषिकम्, क्योंकि एक मुद्ग = मूँग से [ अथवा एक उड़द से ] किसी वस्तु को खरीदना सम्भव नहीं है। ॥ ३७ ॥

'तस्य' ( = उसका ) इस षष्ठी समर्थ से निमित्तम्' ( = कारण ) इस अर्थ में यथाविहित प्रत्यय होते हैं, यदि जो निमित्त है वह संयोग अथवा उत्पात हो तो। संयोग = सम्बन्ध। प्राणियों के शुभ और अशुभ को सूचित करने वाला पृथिव्यादि महाभूतों का परिणाम = उत्पात है। उदा०—शतस्य निमित्तं धनपतिना संयोगः—इस अर्थ में—शत्यः, शतिकः। साहस्रः [ सौ रुपयों के कारण धनपति = साहूकार आदि से होने वाला संयोग—शत्यः, शतिकः

१. न्यासपदमञ्जर्योः 'महाभूतानाम्' इति व्यस्तः पाठः।

**शतस्य निमित्तं धनपतिना संयोगः शत्यः, शतिकः। साहस्रः। उत्पातः खल्वपि—शतस्य निमित्तमुत्पातो दक्षिणाक्षिस्पन्दनम्—शत्यम्, शतिकम्। साहस्रम्।**

**❀ तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ❀ (म० भा० ५.१.३८ वा० १)। वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्।**

**❀ सन्निपाताच्चेति वक्तव्यम् ❀ (वा० २)। सान्निपातिकम्॥**

## १९२४. गोद्वयचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥ (१७०५)

**गोशब्दाद् द्वयचश्च प्रातिपदिकात्संख्यापरिमाणाश्वादिविवर्जिताद्यत् प्रत्ययो भवति 'तस्य निमित्तं संयोगोत्पातौ' (५.१.३८) इत्येतस्मिन्नर्थे। ठञादीनामपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यः। द्वयचः खल्वपि—धन्यम्। स्वर्ग्यम्। यशस्यम्। आयुष्यम्।**

**न्यासः**

**गोद्वयचोऽसंख्यापरिमाणाश्वादेर्यत्॥ ठञादीनामपवाद इति।** आदिशब्देन ठगादीनां ग्रहणम्। ननु च संख्यापरिमाणयोः पर्युदासात् कनष्ठकोऽपवाद इति वक्तुं शक्यते, तत् कस्माद् ठञादीनामित्युच्यते? ठञादीनामित्ययमतद्गुणसंविज्ञानो बहुव्रीहिर्द्रष्टव्यः अनयैवापेक्षयोक्तम्—अश्वस्य निमित्तमाश्विकमिति। ठक् प्रत्युदाहृतः।

**पदमञ्जरी**

**वातिकमिति।** शमनकोपने एवात्र प्रत्ययार्थौ, न तु निमित्तं ताभ्यां विशेष्यते। प्रकरणादिना च तयोरन्यतरावसायः।

सन्निपातः=वातादीनां युगपदुद्भवः॥ ३८॥

**गोद्वयचोऽसंख्यापरिमाणाश्वादेर्यत्॥ ठञादीनामिति।** आदिशब्देन ठको ग्रहणम्। अतद्गुणसंविज्ञानो बहुव्रीहिः, बहुवचनं तु ठक एवैकस्य विषयबहुत्वमाश्रित्य कृतम्, ठकोऽपवाद इत्यर्थः। किं पुनः कारणमेवं

**भावबोधिनी**

है। हजार के कारण होने वाला संयोग—साहस्रः।] इसी प्रकार उत्पात भी—शतस्य निमित्तम् उत्पातः=दक्षिणाक्षिस्पन्दनम्—(सौ रुपयों के लाभ की सूचना देने वाला, दाहिनी आँख का फड़कना) इस अर्थ में—शत्यम्, शतिकम्। [शत से यत् और ठन् होते हैं।] साहस्रम्। [हजार के कारण होने वाला उत्पात=दाहिनी आंख फड़कना। यहाँ अण् होता है।]

❀ उसका निमित्त—इस प्रकरण में वात, पित्त और श्लेष्मा शब्दों से शमन और कोपन अर्थों में यथाविहित प्रत्ययों का उपसंख्यान करना चाहिए। ❀ उदा०—वातस्य शमनं कोपनं वा—इस अर्थ में—वातिकम्। इसी प्रकार पैत्तिकम्, श्लैष्मिकम्। [इनमें ठक् होता है।]

❀ और सन्निपात से भी प्रत्यय कहना चाहिए। ❀ उदा०—सान्निपातिकम्। [वात पित्त आदि का एक साथ हो जाना सन्निपात कहा जाता है।]॥ ३८॥

[षष्ठी समर्थ] गो शब्द से और दो अचों वाले प्रातिपदिक से यत् प्रत्यय 'उसका निमित्त संयोग और उत्पात अर्थों में' इस विषय में होता है किन्तु संख्या, परिमाण और अश्वादि से नहीं होता है। यह ठञ् आदि का अपवाद है। उदा०—गोर्निमित्तम् संयोगः उत्पातः वा—इस अर्थ में गव्यः [गो+यत्]। दो अचों वाले के उदा०—धन्यम्। [धनस्य निमित्तं संयोग उत्पातः वा—इस अर्थ में धन+यत्।] स्वर्ग्यम्। [स्वर्गस्य निमित्तं संयोगः उत्पातः वा—इस अर्थ में है।] यशस्यम्। आयुष्यम् [यशसः निमित्तम् संयोगः उत्पातो वा, आयुषः निमित्तं संयोगः उत्पातो वा। इनमें धनादि का संयोग अर्थ प्रतीत होता है।]

असंख्यापरिमाणाश्वादेरिति किम् ? पञ्चानां निमित्तं पञ्चमम् । सप्तकम् । अष्टकम् । परिमाण—प्रास्थिकम् । खारीकम् । अश्वादि – आश्विकः ।

ꕥ ब्रह्मवर्चसादुपसंख्यानम् ꕥ ( म० भा० ५.१.३९ वा० १ )। ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यम् ।

अश्व । अश्मन् । गण । ऊर्णा । उमा । वसु । वर्ष । भङ्ग । अश्वादिः ॥

**१९२५. पुत्राच्छ च ॥ ४० ॥ ( १७०६ )**

पुत्रशब्दाच्छः प्रत्ययो भवति चकाराद्यच्च 'तस्य निमित्तं संयोगोत्पातौ' ( ५.१.३८ ) इत्येतस्मिन्विषये । 'द्वयचः' इति नित्ये यति प्राप्ते वचनम् । पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयम् । पुत्र्यम् ॥

**१९२६. सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥ ( १७०७ )**

सर्वभूमि-पृथिवी-शब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'तस्य निमित्तं संयोगोत्पातौ' ( ५.१.३८ ) इत्येतस्मिन्विषये । ठकोऽपवादौ । सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमेरनुशतिकादि ( ७.३.२० )–पाठादुभयपदवृद्धिः ॥

**न्यासः**

सर्वप्रत्ययसम्भवः, तद्बाधनार्थमिदमुक्तम् । **पञ्चकम्, अष्टकमिति** । संख्यालक्षणः कन् । **प्रास्थिक इति** । प्राग्वतीयष्ठञ् ॥ ३९ ॥ **पुत्राच्छ च** ॥ ४० ॥ **सर्वभूमिपृथिवीभ्यामणञौ** ॥ ४१ ॥

**पदमञ्जरी**

व्याख्यायते ? संख्यापरिमाणाश्वादिवर्जिताद्गोद्वयचष्ठक एव प्राप्तत्वात् । **ब्रह्मवर्चसादिति** । ब्रह्मणो वर्चो ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्, 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् समासान्तः ॥ ३९ ॥

**पुत्राच्छ च** ॥ कथं पुत्रीयः क्रतुरिति, न हि क्रतुः संयोग उत्पातो वा भवति ? संयुज्यतेऽनेनेति व्युत्पत्या क्रतुरपि संयोग एव । येन यागादिकरणेन पुरुषः फलेन संयुज्यते स यागादिरपि संयोगः, न केवलं सम्बन्ध एवेत्यर्थः । एतेन 'पुरोडाशसं लोक्यम्' इत्यादि व्याख्यातम् ॥ ४० ॥

**भावबोधिनी**

संख्या, परिमाण और अश्वादि से भिन्न से—इसका क्या प्रयोजन है ? पञ्चानां निमित्तम्—इसमें यत् न होकर कन् होता है—पञ्चकम् । इसी प्रकार सप्तकम्, अष्टकम् [ में भी नहीं होता है । ] परिमाण—प्रास्थिकम् । खारीकम् । [ यहाँ भी यत् न होकर ठक् और ईकन् होते हैं । ] अश्वादि—आश्विकः । [ अश्वस्य निमित्तं संयोग उत्पातो वा । ]

ꕥ ब्रह्मवर्चस से भी कहना चाहिए । ꕥ उदा०—ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः—इस अर्थ में ब्रह्मवर्चस्यम् । [ ब्रह्मवर्चस् से समासान्त अच् प्रत्यय करने से अकारान्त हो जाता है । ]

[ अश्वादिगण—] अश्व । अश्मन् । गण । ऊर्णा । उमा । वसु । वर्ष । भङ्ग । ये अश्वादि हैं ॥ ३९ ॥

'पुत्र' शब्द से 'छ' प्रत्यय होता है और 'च' के कारण 'यत्' भी होता है 'उसका निमित्त संयोग और उत्पात अर्थ में' इस विषय में । ''द्वयचः'' मानकर नित्य यत् प्राप्त रहते यह किया जा रहा है । उदा०—पुत्रस्य निमित्तं संयोग उत्पातः वा—इस अर्थ में—पुत्रीयः, पुत्र्यः होते हैं । [ पुत्र + छ = ईय, पुत्र + यत् – य । पुत्र के कारण होने वाले संयोग या उत्पात—शुभाशुभ-सूचक भूतपरिणाम के लिए ये शब्द हैं । ] ॥ ४० ॥

सर्वभूमि और पृथिवी—इन शब्दों से क्रमशः अण् और अञ् प्रत्यय 'उसका निमित्त संयोग और उत्पात में' इस विषय में होते हैं । ये ठक् के अपवाद हैं । उदा०—सर्वभूमेः निमित्तं संयोगः उत्पातः वा—( समस्त भूमि के कारण जो सयोग या शुभाशुभ-सूचक महाभूतों का परिणाम है—) इस अर्थ में सार्वभौमः । [ सर्वभूमि + अण् = अ, उभयपदवृद्धि । ] पार्थिवः [ पृथिव्याः निमित्तं संयोगः उत्पातो वा—इस अर्थ में पृथिवी + अञ् आदिवृद्धि, रपर,

## १९२७. तस्येश्वरः ॥ ४२ ॥ ( १७०८ )

'तस्य' इति षष्ठीसमर्थाभ्यां सर्वभूमि-पृथिवी-शब्दाभ्यामणञौ प्रत्ययौ भवतः 'ईश्वरः' इत्येतस्मिन्विषये। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः।

षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देशः प्रत्ययार्थस्य निवृत्तये; अन्यथा संयोगोत्पाताविव ईश्वरोऽपि प्रत्ययार्थस्य निमित्तस्य विशेषणं सम्भाव्येत ॥

## १९२८. तत्र विदित इति च ॥ ४३ ॥ ( १७०९ )

'तत्र' इति सप्तमीसमर्थाभ्यां सर्वभूमि-पृथिवीशब्दाभ्यां यथासंख्यमणञौ प्रत्ययौ भवतः 'विदितः' इत्येतस्मिन्नर्थे। विदितः = ज्ञातः, प्रकाशित इत्यर्थः। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः ॥

**न्यासः**

**तस्येश्वरः ॥** 'तस्य निमित्तम्' इत्यतस्तस्यग्रहणमनुवर्त्तते, तत् किमर्थं पुनस्तस्य निर्देशः? इत्याह— **षष्ठीप्रकरणे पुनः षष्ठीसमर्थविभक्तिनिर्देश इत्यादि। प्रत्ययार्थस्येति। निमित्तस्य। अन्यथेति।** यदि षष्ठीनिर्देशः प्रत्ययार्थे निवृत्त्यर्थो न क्रियते, ततो यथा संयोग उत्पातश्च प्रत्ययार्थविशेषणम्, तथेश्वरोऽपि तस्यैव विशेषणं सम्भाव्येत। तथा चेश्वरविशिष्टे निमित्त एव प्रत्ययः स्यात् ॥ ४२ ॥

**तत्र विदित इति च ॥** ईश्वरानुकर्षणार्थश्चकारः। इतिकरणो विवक्षार्थः ॥ ४३ ॥

**पदमञ्जरी**

**सर्वभूमिपृथिवीभ्यामणञौ ॥** संयोगोत्पातौ प्रति यथासंख्यं न भवति, तयोः प्रत्ययार्थविशेषणत्वेन प्रकृतिभ्यां प्रत्ययाभ्यां चासम्बन्धात् ॥ ४१ ॥ ४२ ॥

**तत्र विदित इति च ॥** योगविभागो यथासङ्ख्यनिरासार्थः, उत्तरार्थश्च ॥ ४३ ॥ ४४ ॥

**भावबोधिनी**

भसंज्ञा, ईलोप। ] सर्वभूमि शब्द अनुशतिकादि-गण में पठित है अतः "अनुशतिकादीनाञ्च" ( पा० सू० ७।३।२० ) से दोनों पदों की वृद्धि होती है। [ अतः सार्वभौमः यह बनता है। अण् तथा अञ् में स्वर का भेद है। ] ॥ ४१ ॥

'तस्य' ( = उसका ) इस षष्ठीसमर्थ सर्वभूमि और पृथिवी शब्दों से 'ईश्वर' ( = स्वामी ) इस अर्थ में क्रमशः अण् और अञ् प्रतणय होते हैं। उदा०— सर्वभूमेः ईश्वरः ( = समस्त पृथ्वी का स्वामी ) इस विग्रह में— सार्वभौमः। [ सर्वभूमि + अण्, उभयपदवृद्धि, भसंज्ञा, इलोप। ] पार्थिवः। [ पृथिव्याः ईश्वरः—इस विग्रह में पृथिवी + अञ्, आदिवृद्धि, भसंज्ञा, ईलोप। पृथिवी का स्वामी = राजा। ]

यहाँ षष्ठीविभक्ति का प्रकरण है पुनः षष्ठी समर्थविभक्ति ( = तस्य ) का निर्देश प्रत्ययार्थ ( = पूर्वसूत्रोक्त निमित्त रूप अर्थ ) की निवृत्ति के लिए है। यदि ऐसा न होता तो जिस प्रकार [ पूर्वसूत्रों में ] संयोग और उत्पत्ति प्रत्ययार्थ निमित्त के विशेषण बनते हैं उसी प्रकार ईश्वर का भी [ उसी प्रत्ययार्थ निमित्त का ] विशेषण बनना संभव हो जाता। [स्वतन्त्ररूप से 'तस्य' का ग्रहण करने पर यह आपत्ति नहीं होती है। ] ॥ ४२ ॥

'तत्र' ( वहाँ, उसमें ) इस सप्तमी समर्थ सर्वभूमि और पृथिवी शब्दों से क्रमशः 'अण्' और 'अञ्' प्रत्यय 'विदितः' इस अर्थ में होते है। विदित = ज्ञात, प्रकाशित, प्रसिद्ध यह अर्थ है। उदा०—सर्वभूमौ विदितः—इस विग्रह में सार्वभौमः। [ सर्वभूमि + अण्, शेष प्रक्रिया पूर्ववत्। समस्त पृथिवी में प्रसिद्ध, ज्ञात। ] पार्थिवः। [ पृथिव्यां विदितः—यह विग्रह है। प्रक्रिया पूर्ववत् है। पृथिवी में प्रसिद्ध—यह अर्थ है। ] ॥ ४३ ॥

**१९२९. लोकसर्वलोकाट्ठञ् ॥ ४४ ॥ ( १७१० )**

लोक-सर्वलोक-शब्दाभ्यां तत्रेति सप्तमीसमर्थाभ्यां 'विदितः' इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति । लोके विदितः लौकिकः । सार्वलौकिकः । अनुशतिकादित्वाद् ( ५.३.२० ) उभयपदवृद्धिः ॥

**१९३०. तस्य वापः ॥ ४५ ॥ ( १७११ )**

'तस्य' इति सप्तमीसमर्थाद् 'वापः' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । उप्यतेऽस्मिन्वापः, क्षेत्रमुच्यते । प्रस्थस्य वापः = क्षेत्रं प्रास्थिकम् । द्रौणिकम् । खारीकम् ॥

**१९३१. पात्रात्ष्ठन् ॥ ४६ ॥ ( १७१२ )**

पात्रशब्दात् ष्ठन् प्रत्ययो भवति 'तस्य वापः' ( ५.१.४५ ) इत्येतस्मिन्विषये । ठञोऽपवादः । नकारः स्वरार्थः । षकारो ङीषर्थः । पात्रशब्दः परिमाणवाची । पात्रस्य वापः पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः ॥

**१९३२. तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥ ( १७१३ )**

'तत्' इति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति, यत्तत्प्रथमासमर्थं वृद्ध्यादि

**न्यासः**

**लोकसर्वलोकाट्ठञ्** ॥ सर्वत्र ठञ्ग्रहणं ठको निवृत्त्यर्थम्, अन्यथा हि प्रकृतिमात्रनिर्देशे क्रियमाणे आर्हादिति ठक्प्रसज्येत ॥ ४४ ॥

**तस्य वापः** ॥ उप्यतेऽस्मिन् वाप इति । अधिकरणसाधनः 'हलश्च' इति घञ् ॥ ४५ ॥

**पात्रात् ष्ठन्** ॥ **पात्रशब्दः परिमाणवाचीति** । **ठञोऽपवाद** इति । अत्रेयं युक्तिः—यदि ह्यपरिमाणवाची स्यात् तदार्हीयस्य ठकोऽपवादः, न ठञः । **पात्रिकीति** । 'षिद्गौरादिभ्यश्च' इति ङीष् ॥ ४६ ॥

**तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते** ॥ ननु च वृद्ध्यादीनां बहुत्वाख्यानेनैव बहुवचनं तेन भवितव्य-

**पदमञ्जरी**

**तस्य वापः** ॥ तस्येति वापापेक्षया कर्मणि षष्ठी, न तु कर्त्तरि, तेन देवदत्तस्य वापः क्षेत्रमित्यादौ न भवति ॥ ४५ ॥ ४६ ॥

**तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते** ॥ दीयत इत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसम्बद्ध्यत

**भावबोधिनी**

'तत्र' ( =उसमें ) इस सप्तमी समर्थ लोक तथा सर्वलोक शब्दों से 'विदितः' ( =ज्ञात ) इस विषय में ठञ् प्रत्यय होता है । उदा० लोके विदितः—इस अर्थ में लौकिकः । सर्वलोके विदितः—इस अर्थ में सार्वलौकिकः । यहाँ "अनुशतिकादीनाञ्च" ( पा० सू० ७।३।२० ) इस सूत्र से उभयपदों की वृद्धि होती है । [ समस्त लोकों में बिदित = ज्ञात ] ॥ ४४ ॥

'तस्य' ( =उसका ) इस षष्ठी समर्थ शब्द से वाप = खेत इस अर्थ में यथाविहित प्रत्यय होते है । [ 'वापः' यहाँ अधिकरण अर्थ में घञ् प्रत्यय है— ] 'उप्यतेऽस्मिन् इति वापः' = खेत कहा जाता है । उदा० प्रस्थस्य वापः = क्षेत्रम् = इस विग्रह में —प्रास्थिकम् । [ एक प्रस्थ परिमाण के बीज जिसमें बोये जा सकते हैं ऐसा खेत प्रास्थिक है । इसी प्रकार ] द्रौणिकम् [ द्रोणस्य वापः = खेत ] । खारीकम् । [ खार्याः वापः = खेत ] ॥ ४५ ॥

'तस्य वापः' ( =उसका खेत ) इस विषय में 'पात्र' शब्द से ष्ठन् प्रत्यय होता है । यह ठञ् का अपवाद है । नकार अनुबन्ध [ आद्युदात्त ] स्वर करने के लिए है । षकार [ स्त्रीलिङ्ग में ] ङीष् करने के लिए है । पात्र शब्द परिमाण अर्थ का वाचक है । उदा०—पात्रस्य वापः = क्षेत्रम् -इस अर्थ में पात्रिकं क्षेत्रम् । पात्रिकी क्षेत्रभक्तिः । [ खेत का वह भाग जिसमें पात्र परिमाण के बीज बोये जाते हैं । पात्र+ष्ठन् = ठ=इक, 'षिद्गौरादिभ्यश्च' से ङीष् होता है] ॥४६॥

'तत्' ( वह ) इस प्रथमासमर्थ से 'अस्मिन्' ( इसमें ) इस सप्तमी के अर्थ में यथाविहित प्रत्यय होते हैं यदि जो

**चेत्तद्दीयते । 'दीयते' इत्येकवचनान्तं वृद्धयादिभिः प्रत्येकमभिसम्बध्यते । तत्र (१) यदधमर्णेन उत्तमर्णाय मूलधनातिरिक्तं देयं तद् वृद्धिः । (२) ग्रामादिषु स्वामिग्राह्यो भागः = आयः । (३) पटादीनामुपादानमूलादतिरिक्तं द्रव्यं = लाभः । (४) रक्षानिर्वेशो राजभागः = शुल्कः । (५) उत्कोचः = उपदा । पञ्चास्मिन्वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः । सप्तकः । शत्यः, शतिकः । साहस्रः ।**

**न्यासः**

मिति कथं दीयत इत्येकवचनान्तेन तस्य निर्देशः ? इत्याह—**दीयत इत्येकवचनमित्यादि** । यदि समुदितैर्वृद्धयादिभिः सम्बन्धः क्रियते तर्हि स्याद् बहुवचनम् । न च तैः समुदितैः क्रियते, किं तर्हि ? प्रत्येकम्, अत एकवचनमेव । वृद्धिशब्द इह लौकिको धनविशेषवाची गृह्यते, न च संज्ञापदम्; आयादिभिर्धनविशेषवाचिभिः सह निर्देशात् । अत एवाह—**तत्रेत्यादि** । उत्तमर्णस्य यद्धनं तस्मादतिरिक्तमधिकं धनमधमर्णेन यद् दातव्यं तद् वृद्धिः । **ग्रामादिष्विति** । आदिशब्देन क्षेत्रादि । **पटादीनामित्यादि** । पटादीनां व्यवह्रियमाणानामुपादानं सूत्रादि । तस्य यन्मूल्यं तस्मादतिरिक्तं द्रव्यं पटादिविक्रयेण यल्लभ्यते स लाभः । **रक्षानिर्वेश** इति । वणिजां रक्षाकारी राज्ञो भागो रक्षानिर्वेश इत्युच्यते । ननु चासावप्यायः, तदपार्थकं शुल्कस्य पृथगुपादानम् ? नैतदस्ति; पञ्चास्मिन् ग्राम आय इत्यायं प्रति ग्रामस्याधिकरणभावः; उत्पाद्यमानस्यायस्याधेयभावात् । शुल्के तु न सम्भवति । पञ्चास्मिञ् शते शुल्का इति शतं न शुल्कस्याधिकरणम्, किं तर्हि ? इयत्तापरिच्छेदः शतेन शुल्कस्य क्रियते ।

**पदमञ्जरी**

**इति** । तेन वृद्धयादीनां बहुत्वेऽपि बहुवचनं न भवतीति भावः । प्रत्येकं सम्बन्धस्तु द्वन्द्ववर्त्तिनां पदानां बुद्धया निष्कर्षाल्लभ्यते, एतच्च दीयत इत्यस्य विशेषणस्य वृद्धयुपक्रमत्व उक्तम्, यदा तु यत्तत्प्रथमासमर्थं दीयते चेत्तद्भवतीत्येवमुपक्रम्यते, पश्चात्तु किं पुनस्तद्दीयत इत्यपेक्षायां वृद्धयादयः सम्बध्यन्ते तदा न किञ्चिद्यत्नसाध्यम् । **उत्तमर्णधनातिरिक्तमिति** । उत्तमर्णेन यद्दत्तम् धनं तस्मादधिकमित्यर्थः, संज्ञा वृद्धिस्तु न गृह्यते; आयादिभिः साहचर्यात् । **उपादानमूलातिरिक्तमिति** । पटादीनामुपादानं तन्त्वादि, तस्य मूलमुत्पत्तिकारणं द्रव्यम्, तस्मादधिकं पटादि–विक्रयेण यल्लभ्यते स लाभः, निर्वेशो भृतिः, रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः, सम्बन्धषष्ठ्या समासः । शुल्कग्रहणं प्रपञ्चार्थम्, तस्याप्यायविशेषत्वात्, यथा च 'ठगायस्थानेभ्यः' इति शुल्कस्थानादपि भवति शौल्कशालिक इति । यत्र ग्रामादौ वृद्धयादि दीयते तत्र प्रत्ययो विधीयमानः सम्प्रदाने

**भावबोधिनी**

प्रथमासमर्थ वृद्धि आदि ( आय, लाभ, शुल्क और उपधा ) हैं वे दिये जाते हों, दानक्रिया के कर्म हों तो । 'दीयते' ( = दिया जाता है ) इस एकवचनान्त का वृद्धि आदि पाँचों के साथ सम्बन्ध होता है । (१) इनमें अधमर्ण = कर्जदार उत्तमर्ण ( = साहूकार ) को मूल धन के अतिरिक्त ( = ब्याज ) जो देता है उसे 'वृद्धि' कहा जाता है । (२) गाँव आदि में धनादि या अन्नादि का जो भाग स्वामी ( राजा या जमीन्दार ) द्वारा वसूल किया जाता है वह 'आय' [कहा जाता] है । (३) वस्त्रादि [ के निर्माण ] में मूल धन के अतिरिक्त जो [ धनादि प्राप्त होता ] है वह 'लाभ' [ कहा जाता ] है । (४) [राज्य की] रक्षा के लिये जो निर्वेश [ भृत्यों का वेतन ] राजा का भाग है अर्थात् भृत्यों को वेतनादि देने के लिए जो अंश राजा लेता है उसे 'शुल्क' कहते हैं । (५) उत्कोच = घूंस 'उपदा' है । उदा०—पञ्च अस्मिन् वृद्धिः वा, आयः वा, लाभः वा, शुल्कः वा, उपदा वा दीयते सः—पञ्चकः । [ जिसमें पाँच रुपये आदि वृद्धि, आय, लाभ, शुल्क या उपदा = घूंस के रूप में दिये जाते हैं वह व्यवहार 'पञ्चकः' कहा जाता है । यहाँ "संख्याया अतिशदन्तायाः कन्" ५।१।२२ से 'कन्' प्रत्यय होता । इसी प्रकार ] सप्तकः । [ जिस व्यवहार में सात रुपये वृद्धि आदि के रूप में दिये जाते हैं । ] शत्यः, शतिकः । [ यहाँ "शताच्च ठन्यतौ" पूर्वसूत्र से ठन् और यत् प्रत्यय होते हैं । ] साहस्रः । [ यहाँ "शतमानविंशतिकसहस्रवसनादण्" ५।१।२७ से अण् प्रत्यय है । अर्थ पूर्ववत् ही समझना चाहिए ] ।

**❀ चतुर्थ्यर्थ उपसंख्यानम् ❀** ( म० भा० ५.१.४७ वा० १ )। पञ्चास्मै वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चको देवदत्तः।

सिद्धं त्वधिकरणत्वेन विवक्षितत्वात्। सममब्राह्मणे दानमिति यथा[1] ॥

**१९३३. पूरणार्धाट्ठन् ॥ ४८ ॥ ( १७१४ )**

पूरणवाचिनः शब्दादर्धशब्दाच्च ठन् प्रत्ययो भवति, 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' ( ५.१.४७ ) इत्येतस्मिन्नर्थे। यथायथं ठञ्टिठनोरपवादः। द्वितीयो वृद्ध्यादिरस्मिन्दीयते द्वितीयिकः।

**न्यासः**

तस्मादस्य भिन्नत्वाद् शुल्कः पृथगुक्तः।

**सिद्धं त्वित्यादि**। विवक्षातः कारकाणि भवन्तीति सम्प्रदानाख्ये चाधिकरणत्वेन विवक्षेत्याह—**समेत्यादि**। **गतार्थम्** ॥ ४७ ॥

**पूरणार्द्धाट्ठन्** ॥ **पूरणवाचिन इति**। पूर्यते येनार्थेन स पूरण, तद्वाचिनः प्रातिपदिकात्। एतेन 'पूरण' इत्यर्थस्य ग्रहणम्, न प्रत्ययस्येति दर्शयति। कथञ्च प्रत्ययस्य ग्रहणं स्यात्? यदि पूरणग्रहणं स्वर्येत। तस्मिन् हि स्वर्यमाणे 'तस्य पूरणे डट्' इत्यधिकृत्य ये प्रत्यया विहितास्ते गृह्येरन्। किञ्च स्यात्? 'पूरणाद् भागे तीयादन्' इत्यन्नन्ताट ठन् न स्यात्; अपूरणप्रत्ययान्तत्वात्। तस्याग्रहणे तु सति स्वार्थिकः स्यादन्। तस्मिन्नप्यु-

**पदमञ्जरी**

न प्राप्नोतीत्यत आह—**चतुर्थ्यर्थ उपसंख्यानमिति**। **सिद्धं त्विति**। 'विवक्षातः कारकाणि भवन्तीति' ( चान्द्रपरि० ६८ ) सम्प्रदानस्यैवाधिकरणत्वेन विवक्षितत्वात्सिद्धमिष्टमित्यर्थः। क्व यथेत्याह—**सममिति** ॥ ४७ ॥

**पूरणार्द्धाट्ठन्** ॥ **पूरणवाचिन इति**। पूर्यते येनार्थः स पूरणः, तद्वाचिन इत्यर्थः। एतेन 'पूरण' इत्यर्थस्येदं ग्रहणम्, न तु प्रत्ययस्येति दर्शयति। यदि तु पूरणग्रहणं स्वर्येत ततः स्वरितेनाधिकारगतिर्भवतीति 'तस्य पूरणे डट्' इति पूरणाधिकारविहिता डडादयः प्रत्यया गृह्येरन्, यथा—**गोस्त्रियोरित्यत्र** स्त्र्यधिकार-विहिताष्टाबादयः, ततश्च 'पूरणाद्भागे तीयादन्' इत्यनन्तान्न स्यात्, अर्थग्रहणे ततोऽपि भवति, तदन्तमपि

**भावबोधिनी**

❀ चतुर्थी के अर्थ=सम्प्रदान के अर्थ में भी वृद्धि आदि के विषय में यथाविहित प्रत्ययों का उपसंख्यान करना चाहिए ❀ उदा०—पञ्च अस्मै वृद्धिः, आयः, लाभः शुल्कः उपदा वा दीयते—इस विग्रह में—'पञ्चकः देवदत्तः' होता है। [ जिस देवदत्त को वृद्धि आदि के रूप में पाँच रुपये दिये जाते हैं वह 'पञ्चकः देवदत्तः' कहा जाता है। ]

इस वचन की आवश्यकता नहीं है क्योंकि [ सम्प्रदान की ही ] अधिकरण रूप से विवक्षा कर लेने पर सब सिद्ध हो जाता है। जैसा कि 'समम् अब्राह्मणे दानम्' यहाँ होता है।

**विमर्श**—'चतुर्थ्यर्थे उपसंख्यानम्' ऐसा वचन महाभाष्य में नहीं है किन्तु काशिका और सिद्धान्त-कौमुदी दोनों में है। महाभाष्य में ''तदस्मिन् दीयतेऽस्मा इति च'' ऐसा वचन उपलब्ध है। इसी का आशय उक्त ग्रन्थों में है। किन्तु 'विवक्षातः कारकाणि भवन्ति' ऐसा नियम है। अतः सम्प्रदान की ही अधिकरण रूप से विवक्षा करके निर्वाह सम्भव है, उक्त वचन की आवश्यकता नहीं है। जैसे 'समम् अब्राह्मणे दानम्' यहाँ सम्प्रदान रहने पर भी अधिकरण मान कर सप्तमी है। इस भाष्य का आशय नागेश ने लिखा है—''अब्राह्मणे दानम् अदानेन समम्, निष्फलमित्यर्थः।'' उद्द्योत

इस सूत्र में उपदा = उत्कोच = घूंस का उल्लेख होने से स्पष्ट है कि पाणिनि के समय भी यह प्रचलन था ॥४७॥

[प्रथमासमर्थ] पूरण अर्थवाचक से और अर्ध शब्द से ''तदस्मिन् वृद्ध्यायलाभ-शुल्कोपदा दीयते'' इस पूर्वोक्त विषय में ठन् प्रत्यय होता है। यह क्रमशः ठक् और टिठन् का अपवाद है। उदा०—द्वितीयः वृद्धिः, आयः, शुल्कः

१. अब्राह्मणे दानम् अदानेन समम्, निष्फलमित्यर्थः

**तृतीयिकः । पञ्चमिकः । सप्तमिकः । अर्धिकः । अर्धशब्दो रूपकार्धस्य रूढिः ॥**

**१९३४. भागाद्यच्च ॥ ४९ ॥ ( १७१९ )**

**भागशब्दाद्यत् प्रत्ययो भवति, चकाराट्ठँश्च, 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' ( ५.१.४७ ) इत्येतस्मिन्नर्थे । ठञोऽपवादः । भागो वृद्ध्यादिरस्मिन्दीयते भाग्यम्, भागिकं शतम् । भाग्या, भागिका विंशतिः । भागशब्दोऽपि रूपकार्धस्य वाचकः ॥**

**न्यासः**

त्पन्ने पूरण एवार्थे तदन्तमपि वर्त्तत इति ततोऽपि ठन् सिद्धो भवति । **ठक्टिठनोरपवाद** इति । पूरणादार्हीयस्य ठकोऽपवादः । अर्धादपि 'अर्द्धाच्चेति वक्तव्यम्' इत्यौपसंख्यानिकस्य टिठनः । ठकि टिठनि च सति ङीप् स्यात्, ठनि तु टाब् भवति । **द्वितीयिक** इति । द्वयोः पूरण इति 'द्वेस्तीयः' इति तीयप्रत्ययः । **तृतीयिक** इति । 'त्रेः सम्प्रसारणञ्च' । **पञ्चमिकः, सप्तमिक** इति । 'तस्य पूरणे डट्' इति डट् प्रत्ययः, तस्य 'नान्तादसंख्यादेर्मट्' इति मडागमः ॥ ४८ ॥

**भागाद्यच्च ॥ ठञोऽपवाद** इति । न ठकः; भागशब्दस्य परिमाणत्वात् । ननु चाङ्गमात्रवचनोऽपि भागशब्दोऽस्ति ? सत्यमस्ति; न तु तस्येह ग्रहणम् । तस्य हि ग्रहणे वृद्ध्यादिभिः सम्बन्धो नोपपद्यते । परिमाणवचनस्तु प्रसिद्धो रूपकांशे वर्तत इति वृद्ध्यादिभिः सम्बन्धः उपपद्यते ॥ ४९ ॥

**पदमञ्जरी**

हि पूरण एवार्थे वर्त्तते, स्वार्थिकत्वादनः । तस्मादर्थग्रहणमेव न्याय्यम् । **ठक्टिठनोरपवाद इति** । पूरणादार्हीयस्य ठकोऽपवादः । अर्द्धादपि 'अर्द्धाच्चेति' वक्तव्यमिति ( वा० ५०२ ) टिठनः । स्त्रियां च विशेषः, टिठिनि हि सति ङीप् स्यात्, ठनि तु टाप् भवति । **अर्द्धशब्दो रूपकार्द्धस्य रूढिरिति** । रूपकम् = कार्षापणम्, तदीयस्य भागस्यार्द्धशब्दो वाचकत्वेन प्रसिद्ध इत्यर्थः । तेनार्द्धिक इति भागवत्सापेक्षत्वेनासामर्थ्यं नोद्भावनीयमिति भावः ॥ ४८ ॥

**भागाद्यच्च ॥ भागशब्दोऽपीति** । न केवलमर्द्धशब्द एवेत्यपि शब्दार्थः ॥ ४९ ॥

**भावबोधिनी**

लाभः उपदा वा अस्मिन् दीयते—इस अर्थ में—द्वितीयिकः । इसी प्रकार तृतीयिकः, पञ्चमिकः, सप्तमिकः, अर्धिकः—ये बनते हैं । [ इनमें दूसरा, तीसरा, पाँचवाँ सातवाँ, रुपया आदि वृद्धि आदि के रूप में जहाँ दिया जाता है, उसके लिए इन शब्दों का प्रयोग होता है । ] अर्धशब्द रूपकार्ध = आधा रुपया की रूढि है अर्थात् अठन्नी अर्थ में है । ] ॥ ४८ ॥

भागशब्द से 'तदस्मिन् वृद्ध्याय-लाभशुल्कोपदा दीयते' इस सूत्र के अर्थ में 'यत्' प्रत्यय और 'च' के कारण 'ठन्' भी होता है । यह ठञ् का अपवाद है । उदा० – भागः, वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा अस्मिन् दीयते—इस अर्थ में—भाग्यम्, भागिकम् शतम् । [ जिसमें भाग वृद्धि आदि के रूप में दिया जाता है ऐसा सौ रुपया । ] भाग्या, भागिका वा विंशतिः । [ जिसमें भाग वृद्धि आदि के रूप में दिया जाता है वह बीस रुपया । ] भाग शब्द भी रूपकार्ध का वाचक है ।

**विमर्श**—"··· रूप्यं तदद्वयमाहतम् ।" ( अमर ३।३।१९१ ) के अनुसार 'रूप्य' शब्द सोने या चांदी के सिक्के के लिए प्रयुक्त होता है । परन्तु काशिका और सिद्धान्त-कौमुदी में 'अर्ध' तथा 'भाग' शब्दों को रूपकार्ध में रूढ़ लिखा गया है । परन्तु 'रूपक' का अर्थ सन्दिग्ध है । संभव है आजकल के 'रूप्यक' के लिए यह शब्द प्रयुक्त होता रहा हो । इसीलिए प्रस्तुत सूत्र पर बालमनोरमा व्याख्या में लिखा है "रूप्यकस्यार्धे रूढ इत्यत्र प्रमाणं मृग्यम् ।" ॥ ४९ ॥

## १९३९. तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ॥ ५० ॥ ( १७१६ )

'तत्' इति द्वितीयासमर्थाद्धरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। प्रकृतिविशेषणम्—'भाराद्वंशादिभ्यः' इति, वंशादिभ्यः परो यो भारशब्दस्तदन्तात्प्रातिपदिकादिति। वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिकः। बाल्वजभारिकः।

भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? व्रीहिभारं हरति।

अपरा वृत्तिः—भाराद्वंशादिभ्य इति, भारभूतेभ्यो वंशादिभ्य इत्यर्थः। भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणम्। भारभूतान्वंशान् हरति वांशिकः। कौटजिकः। बाल्वजिकः।

भारादिति किम्? वंशं हरति। वंशादिभ्य इति किम्? भारभूतान् व्रीहीन् वहति।

### न्यासः

**तद्धरति वहत्यावहति भाराद्वंशादिभ्यः॥ प्रकृतिविशेषणमित्यादि।** प्रकृतेः = प्रातिपदिकस्य। **भाराद् वंशादिभ्य** इत्यर्थ इति अत्रार्थे वंशादय एव शुद्धाः प्रत्ययमुत्पादयन्ति।

ननु च वंशादयः शब्दाः, भार इत्यपि शब्द एव; न च शब्दः शब्दान्तरस्य समानाधिकरणं विशेषणमुपपद्यते, तत् कथं भारभूतेभ्यो वंशादिभ्य इत्येषोऽथो भवति? इत्याह—**भारशब्दोऽर्थद्वारेणेत्यादि।** वंशादीनामर्थस्य भारशब्दस्यार्थो मुख्यं विशेषणम्. अर्थद्वारेण तु वंशादीनां भारशब्दस्य चोपचरितम्। अर्थधर्मेण शब्दोऽपि तथा व्यपदिश्यत इत्यर्थः॥ ५०॥

### पदमञ्जरी

**तद्धरति वहत्यावहति भाराद्वंशादिभ्यः॥ प्रकृतिविशेषणमिति।** प्रकृतिः = प्रातिपदिकम्, तस्य विशेषणम्। विशेषणप्रकारमेव दर्शयति—**वंशादिभ्य इत्यादि। वंशादिभ्य इति किमिति।** भारान्तादिति कस्मान्नोक्तमिति भावः। अत एव तदन्तं प्रत्युदाहरति - **व्रीहिभारं वहतीति**[1]। **भारभूतेभ्यो वंशादिभ्य इति।** ननु वंशादयः शब्दास्ते कथं भारभूता इत्यत आह—**भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणमिति।** भारभूतार्थाभिधायित्वाद्भारभूतेभ्यो वंशादिभ्य इत्युक्तमित्यर्थः। सूत्रे तु प्रत्येकं सम्बन्धादेकवचनम्॥ ५०॥

### भावबोधिनी

'तत्' (उसे) इस द्वितीयासमर्थ से हरति ( हरण करता है ), वहति ( ढोता है ) और आवहति ( = आवाहन = उत्पादन करता है )—इन अर्थों में यथाविहित प्रत्यय होते हैं। 'भारात् वंशादिभ्यः' यह प्रकृतिविशेषण है—वंशादि से परे जो भार शब्द तदन्त जो प्रातिपदिक उससे [ वहति आदि अर्थों में यथाविहित प्रत्यय होते हैं ]। उदा०—वंशभरं वहति—अथवा आवहति—इस अर्थ में वांशभारिकः। [ बांसों के भार को ढोने वाला। ] कौटजभारिकः [ कुटजभार को ढोने वाला ]। बाल्वजभारिकः। [ बल्वजभार को ढोने वाला। ]

भारवाचक से —इसका क्या फल है? वंशं हरति। [ यहाँ भार न होने प्रत्यय नहीं होता है। ] वंश आदि से परे—इसका क्या फल है? व्रीहिभारं हरति। [ यहाँ व्रीहियों का भार है, बासों का नहीं। अतः प्रत्यय नहीं होता है। ]

[इस सूत्र की] दूसरी वृत्ति यह भी है—"भारात् वंशादिभ्यः"—भारभूत वंश आदि से' यह अर्थ है। भार शब्द अर्थ के माध्यम से वंश आदि का विशेषण है। —भारभूत बांसो को ढोता है—इस अर्थ में वांशिकः। [ भारभूतान् कुटजान् हरति इस अर्थ में— ] कौटजिकः। [ भारभूतान् बल्वजान् हरति—इस अर्थ में ] बाल्वजिकः। ]

भारवाचक से—इसका क्या फल है? वंशं हरति। [ यहाँ प्रत्यय नहीं होता है। ] वंशादि से—इसका क्या फल है—भारभूतान् व्रीहीन् वहति। [ यहाँ भी नहीं होता है। ]

---

१. 'हरति' इति काशिकापाठः।

सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः, तदुभयमपि ग्राह्यम्। हरतिदेशान्तरं प्रापयति चोरयति वा। वहत्युत्क्षिप्य धारयतीत्यर्थः। आवहतिउत्पादयतीत्यर्थः।

वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। वंशादिः।

**१९३६. वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥ ( १७१७ )**

वस्न-द्रव्यशब्दाभ्यां द्वितीयासमर्थाभ्यां यथासंख्यं ठन्, कन्—इत्येतौ प्रत्ययौ भवतो हरत्यादिष्वर्थेषु। वस्नं हरति वहति वा वस्निकः। द्रव्यकः॥

**१९३७. संभवत्यवहरति पचति ॥ ५२ ॥ ( १७१८ )**

'तत्' इति द्वितीया समर्थविभक्तिरनुवर्तते। तदिति द्वितीयासमर्थात्सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति। तत्राधेयस्य प्रमाणानतिरेकः=सम्भवः। उपसंहरणम्=अवहारः। विक्लेदनम्=पाकः। प्रस्थं संभवति अवहरति पचति वा प्रास्थिकः। कौडविकः। खारीकः।

**न्यासः**

**वस्नद्रव्याभ्यां ठन्कनौ** ॥ पूर्वेण ठकि प्राप्ते तदपवादौ ठन्कनौ विधीयेते ॥ ५१ ॥

**सम्भवत्यवहरति पचति** ॥ **प्रमाणानतिरेक इति**। प्रमाणादनाधिक्यमित्यर्थः। **ननु चेत्यादि**। तथा हि—स्थालीप्रस्थं पचति तत्रावश्यं प्रस्थस्य सम्भवेन भवितव्यम्; न ह्यन्यथा शक्यते पक्तुमित्यभिप्रायः। **नास्त्यत्र नियोग इति**। व्यभिचारमाह—**प्रस्थं पचति ब्राह्मणीति**। अत्र हि पाक एव गम्यते, न सम्भवः॥ ५२॥

**पदमञ्जरी**

**वस्नद्रव्याभ्यां ठन्कनौ** ॥ वस्नशब्देन मूल्यमुच्यते ॥ ५१ ॥

**संभवत्यवहरति पचति** ॥ **प्रमाणानतिरेक इति**। आधारप्रमाणादाधेयप्रमाणस्यानाधिक्यमित्यर्थः। तदुपसर्जने च धारणे संभवतेर्वृत्तिरिति सकर्मकत्वम्। **उपसंहरणमवहार इति**। आधारप्रमाणादाधेयप्रमाणस्य न्यूनतेत्यर्थः, तदुपसर्जने च धारणेऽवहरतेर्वृत्तेः सकर्मकत्वम्, सूत्रे स्पष्ट उपसर्गः। **नास्त्यत्र नियोग इति**। नियोगः=अवश्यम्भावः। तत्पचतीति **द्रोणादण् चेति**। पचतिग्रहणं सम्भवत्यवहरतीति निवृत्त्यर्थम्, द्रोणपरिमिते च व्रीह्यादौ द्रोणशब्दस्तस्य पाकसम्भवात्॥ ५२॥

**भावबोधिनी**

उपर्युक्त दोनों सूत्रार्थ आचार्य [ पाणिनि ] ने शिष्यों को पढ़ाए हैं अतः दोनों को मान लेना चाहिए। हरति = दूसरी जगह पहुँचाता है अथवा चुराता है। वहति = उठा कर धारण करता है—यह अर्थ है। आवहति = उत्पन्न करता है—यह अर्थ है।

[ इस गण में पठित शब्द ] वंश। कुटज। बल्वज। मूल। अक्ष। स्थूणा। अश्मन्। अश्व। इक्षु। खट्वा। ये वंशादि हैं॥ ५०॥

द्वितीया समर्थ वस्न और द्रव्य—इन शब्दों से क्रमशः ठन् और कन् प्रत्यय होते हैं हरति—आदि पूर्वोक्त अर्थों में। उदा०—वस्नं हरति, वहति, आवहति वा—इस विग्रह में—वस्निकः। [ वस्न + ठन् = ठ = इक। वस्न = कीमत, मूल्य अर्थ का वाचक है। ] द्रव्यकः। [ द्रव्यं हरति, वहति वा—इस अर्थ में यह बना है। इनमें ठक् न होकर ठन् और कन् हुए हैं। अतः वृद्धि नहीं होती है। ] ॥ ५१ ॥

'तत्' ( = उसे ) इस द्वितीया समर्थ विभक्ति की यहाँ अनुवृत्ति होती है। तत् ( = इसे ) इस द्वितीया समर्थ प्रातिपदिक से 'सम्भवति', 'अवहरति' और 'पचति' इन अर्थों में यथाविहित प्रत्यय होते हैं। इनमें आधेय का [ आधार ] प्रमाण से अनतिरेक [ अधिक न होना ] = सम्भव है। उपसंहरण = अवहार है, विक्लेदन पाक है। उदा०—प्रस्थं संभवति, अवहरति, पचति—इस अर्थ में—प्रास्थिकः। [ एक प्रस्थ समाविष्ट हो जाता है, लाता है

ननु च पाके च सम्भवोऽस्ति ? नास्त्यत्र नियोगः—प्रस्थं पचति ब्राह्मणी प्रास्थिकी ।

❀ तत्पचतीति द्रोणादण्च ❀ ( म० भा० ५.१.५२ वा० १ ) । द्रोणं पचति द्रौणी । द्रौणिकी ॥

१९३८. आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ५३ ॥ ( १७१९ )

आढकाचितपात्रशब्देभ्यो द्वितीयासमर्थेभ्योऽन्यतरस्यां संभवादिष्वर्थेषु खः प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति । आढकं संभवत्यहरति पचति वा आढकीना, आढकिकी । आचितीना, आचितिकी । पात्रीणा, पात्रिकी ॥

१९३९. द्विगोष्ठँश्च ॥ ५४ ॥ ( १७२० )

'आढकाचितपात्रात्' इत्येव । आढकाचितपात्रान्ताद् द्विगोः संभवत्यादिष्वर्थेषु ष्ठन् प्रत्ययो भवति चकारात्खः, अन्यतरस्याम् । विधानसामर्थ्यादनयोर्लुग्न भवति । ठञस्तु पक्षेऽनुज्ञातस्य 'अध्यर्धपूर्वद्विगो'

**न्यासः**

आढकाचितपात्रात् खोऽन्यतरस्याम् ॥ ठञोऽपवाद इति । आढकादीनां परिमाणत्वात् पूर्वेण प्राप्तस्य ॥५३॥

द्विगोः ष्ठंश्च ॥ पूर्वेण ठन्खयोः प्राप्तयोस्ततश्च लुकीदमुच्यते । विधानसामर्थ्यादनयोर्लुग्न भवतीति ।

**पदमञ्जरी**

आढकाचितपात्रात्खोऽन्यतरस्याम् ॥ ठञोऽपवाद इति । न ठकः, आढकादीनां परिमाणत्वात् । पात्रं भाजनमप्यस्ति, तस्य तु सम्भवत्यादिभिः सम्बन्धानुपपत्तेः, आढकाचितसाहचर्याच्च परिमाणस्यैव ग्रहणम् ॥ ५३ ॥

द्विगोष्ठंश्च ॥ द्व्याचितेति । ठञो लुक्, 'अपरिमाणबिस्ताचित' इति ङीपः प्रतिषेधः ॥ ५४ ॥

**भावबोधिनी**

या पकाता है—इस अर्थ में प्रस्थ+ठक् होता है । ] कौडविकः । खारीकः । [ कुडव और खारी ये परिमाण के वाचक हैं । इनका अट जाना, लाना, पकाना —जो करता है उसके लिए ये शब्द हैं । ]

पकाने में तो संभव होता ही है [ क्योंकि कढ़ाही आदि में जितना पकाना संभव है उतने के लिए हीं प्रयोग होता है । वहाँ आधारभूत प्रमाण से आधेयभूत प्रमाण की न्यूनता रहती ही है, तब उसे कहने की क्या आवश्यकता ] ? उत्तर यह है कि इसमें ऐसी अनिवार्यता नहीं है—प्रस्थं पचति ब्राह्मणी —इस अर्थ में 'प्रास्थिकी' यह बनता है । [ यहाँ आधार प्रमाण और आधेय प्रमाण की प्रतीति नहीं है । अपितु पाक ही प्रतीत होता है । ]

❀ उसे पकाता है—इस अर्थ में द्रोण से अण् भी होता है । ❀ उदा०—द्रोणं पचति—इस अर्थ में द्रौणी, और द्रौणिकी [ स्त्री ये प्रयोग होते ] हैं ॥ ५२ ॥

द्वितीया समर्थ आढक, आचित और पात्र शब्दों से संभवति आदि [ =अवहरति, पचति ] अर्थों में विकल्प से 'ख' प्रत्यय होता है । यह [ परिमाणार्थ में प्राप्त ] ठञ् का अपवाद है । अतः पक्ष में वह भी होता है । उदा०—आढकं सम्भवति, अवहरति, पचति—इस विग्रह में—आढकीना, आढकिकी । [ आढक एक तौल अढ़ैया का वाचक है । आढक+ख=ईन, पक्ष में आढक+ठञ्=इक । स्त्रीलिङ्ग में टाप् और ङीप् होते हैं । ] आचितीना । आचितिकी । पात्रीणा, पात्रिकी । [".....''शाकटो भार आचितः ।'' अमर० २।३।८७ के अनुसार दश भार=२५ मन परिमाण आचित है । इतने परिमाण वाला जिसमें आ जाता है, पका लेती है, अवहार कर लेती है ऐसी वस्तु । पात्र शब्द सामान्य परिमाण अर्थ में है । ] ॥ ५३ ॥

'आढकाचितपात्रात्'' इसकी अनुवृत्ति होती है । आढक, आचित अथवा पात्र शब्द जिनके अन्त में है ऐसे द्विगु समास वाले प्रातिपदिक से संभवति आदि अर्थों में 'ष्ठन्' प्रत्यय होता है, 'च' के कारण 'ख' प्रत्यय भी विकल्प से होता है । विधान करने के सामर्थ्य से इन ( ष्ठन् और ख ) का लुक् नहीं होता है । परन्तु इनके विकल्प में विहित ठञ् का लुक् तो ''अध्यर्ध-पूर्वद्विगोः'' ( ५।१।२८ ) सूत्र से होता ही है । नकार अनुबन्ध स्वर के लिए है ।

( ५.१.२८ ) इति लुग्भवत्येव। नकारः स्वरार्थः। षकारो ङीषर्थः। द्व्याढकिकी, द्व्याढकीना, द्व्याढकी ( ४.१.२१ )। द्व्याचितिकी, द्व्याचितीना, द्व्याचिता। 'अपरिमाणविस्ताचित' ( ४.१.२२ ) इति ङीपः प्रतिषेधः। द्विपात्रिकी, द्विपात्रीणा, द्विपात्री ॥

**१९४०. कुलिजाल्लुक्खौ च ॥ ५५ ॥ ( १७२१ )**

**'द्विगोः'** इत्येव। कुलिजशब्दान्ताद् द्विगोः संभवत्यादिष्वर्थेषु लुक्खौ भवतः। **चकारात्ष्ठँश्च। 'अन्यतरस्याम्'** ग्रहणानुवृत्त्या लुगपि विकल्प्यते, ठञः पक्षे श्रवणं भवति। **तेन चातूरूप्यं संपद्यते**—द्वे कुलिजे संभवत्यवहरति पचति वा **द्विकुलिजिकी, द्विकुलिजीना, द्विकुलिजा, द्वैकुलिजिकी।**

**न्यासः**

यदि ह्यत्रापि लुक् स्याद् विधानमनर्थकं स्यात्। **ठञस्तु पक्षेऽनुज्ञातस्येति**। अन्यतरस्यांग्रहणेन। **द्व्याढकीति।** ठञो लुक्पक्षे 'द्विगोः' इति ङीप्। **द्व्याचितेति।** 'अपरिमाण' इत्यादिना ङीप्प्रतिषेधे टाप् ॥ ५४ ॥

**कुलिजाल्लुक्खौ च ॥ चातूरूप्यमिति।** एकं खे रूपम्, ष्ठनि द्वितीयम्, लुकोऽपि विकल्पितत्वाट्ठञोऽलुकि तृतीयम्, लु कि चतुर्थम्।

ननु च कुलिजशब्दस्य परिमाणवाचित्वात् 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः कस्मान्न भवति ? इत्यत

**पदमञ्जरी**

**कुलिजाल्लुक्खौ च ॥ अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यत इति।** तच्च लुक्खग्रहणाद्विज्ञायते, अन्यथा कुलिजाच्चेत्येव वक्तव्यम्, द्विगोश्चेत्येव खोऽन्यतरस्यामिति च तत्र ठन्खाभ्यां मुक्ते पक्षे ठञ्, तस्य 'अध्यर्द्धपूर्व' इति लुक्। एवं रूपत्रये सिद्धे लुक्खग्रहणं कुर्वतः सूत्रकारस्य 'लुकोऽपि विकल्प इष्ट इति लक्ष्यते' इति मन्यते। **वार्त्तिककारस्तु** ठञो नित्यं लुकं मन्यमानः पूर्वसूत्रवत् त्रैरूप्यमेवेच्छन् लुक्खग्रहणं प्रत्याचष्टे, **'कुलिजाच्च'** इति सिद्धे लुक्खग्रहणानर्थक्यम्, पूर्वस्मिन् त्रिकभावादिति ॥ ५५ ॥

**भावबोधिनी**

षकार ङीष् के लिए है। [ तीन प्रत्ययों के क्रमशः तीन रूप—] ( १ ) द्व्याढकिकी, द्व्याढकीना, द्व्याढकी। [ "तद्धितार्थोत्तरपदसमाहारे च" सूत्र से द्विगु समास और द्व्याढकी + ष्ठन् = इक, ङीष्, द्व्याढकी + इक, भसंज्ञा, ईलोप, पुनः ङीष् करने पर द्व्याढकिकी। द्व्याढकी + ख = ईन, टाप्, द्व्याढकीना। द्व्याढकी + ठञ्, लुक्। द्विगु समास स्त्रीलिङ्ग मानकर ङीप् होता है। अतः ठञ् और उसके लुक् कर देने पर मूल शब्द 'द्व्याढकी' ही बनता है। ] (२) द्व्याचितिकी, द्व्याचितीना, द्व्याचिता। 'अपरिमाणविस्ताचित" ४।१।२२ सूत्र से ङीप् का प्रतिषेध होता है। [ अत टाप् ही होता है। ] (३) द्विपात्रिकी, द्विपात्रीणा द्विपात्री। [ यहाँ भी पूर्ववत् द्विगु समास के विषय में ङीप् प्रत्ययान्त शब्द है तीन प्रत्ययों के तीन रूप होते हैं। ]

**विमर्श**—द्विगु समास में अकारान्त शब्दों से ङीप् किया जाता है। परन्तु "पात्रादिभ्यः प्रतिषेधः" ( काशिका २।४।१९ ) तथा "पात्राद्यन्तस्य न" ( सिद्धान्त-कौमुदी ) के अनुसार ङीप् का निषेध है। अतः "पञ्चपात्रम्" के समान द्विपात्रम्' रूप ही शुद्ध प्रतीत होता है द्विपात्री नहीं ॥ ५४ ॥

"द्विगो." ( द्विगु से ) इसकी अनुवृत्ति होती है। कुलिज—शब्दान्त द्विगुसमास से 'संभवति' आदि पूर्वोक्त अर्थों में [ ष्ठन् का ] लुक् और ख प्रत्यय होता है। 'च' के कारण ष्ठन् भी होता है। 'अन्यतरस्याम्' इसकी अनुवृत्ति के कारण लुक् का भी विकल्प होता है। अतः पक्ष में ठञ् प्रत्यय का श्रवण होता है। इस कारण चार रूप बन जाते हैं—उदा०—द्वे कुलजे संभवति, अवहरति अथवा पचति—इस विग्रह में ( १ ) [ सामान्य ठञ् के लुक् में ] द्विकुलिजा। ( २ ) [ठञ् का लुक् न होने पर ठ = इक, आदिवृद्धि, ङीप् —] द्वैकुलिजिकी। ( ३ ) [ख = ईन होने पर] द्विकुलिजीना।

**'परिमाणान्तस्यासंज्ञाशाणयोः'** ( ७.३.२० ) इत्यत्र ❀ **कुलिजग्रहणमपीष्यते** ❀ **तेनोत्तरपदवृद्धिरपि न भवति** ॥

### १९४१. सोऽस्यांशवस्नभृतयः ॥ ५६ ॥ ( १७२२ )

**'स'** इति प्रथमासमर्थात् **'अस्य'** इति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत्तत् प्रथमासमर्थमंशवस्नभृतयश्चेत्ता भवन्ति । अंशः = भागः । वस्नम् = मूल्यम् । भृतिः = वेतनम् । पञ्च अंशो वस्नो वा भृतिर्वास्य पञ्चकः । सप्तकः । साहस्रः ॥

### १९४२. तदस्य परिमाणम् ॥ ५७ ॥ ( १७२३ )

**'तत्'** इति प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति यत् प्रथमासमर्थं परिमाणं चेत्तद्भवति । प्रस्थः परिमाणमस्य प्रास्थिको राशिः । खारशतिकः । शत्यः, शतिकः । साहस्रः । द्रौणिकः । कौडविकः । वर्षशतं परिमाणमस्य वार्षशतिकः । वार्षसहस्रिकः । षष्टिर्जीवितपरिमाणमस्येति षाष्टिकः । साप्ततिकः ।

न्यासः

आह—**परिमाणान्तस्येति** । 'परिमाणान्तस्यासंज्ञाशाणकुलिजात्' इत्येवैतत् सूत्रं प्रत्येतव्यमिति दर्शयति ॥ ५५ ॥

**सोऽस्यांशवस्नभृतयः** ॥ 'वस्नद्रव्याभ्याम्' इत्यत्रापि वस्नशब्देन मूल्यमुच्यते ॥ ५६ ॥

**तदस्य परिमाणम्** ॥ प्रास्थिको राशिरित्यादौ सर्वत्र ठञ् । **द्विषाष्टिक इत्यादि** । 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः ।

पदमञ्जरी

**सोऽस्यांशवस्नभृतयः** ॥ इह च शतं यस्य वस्नो भवति स तेन क्रीतो भवति, तत्र तेन क्रीतमित्येव सिद्धम् नार्थो वस्नग्रहणेन ? नैतदस्ति; योग्यतामात्रेऽप्यस्येदं मूल्यमिति व्यवहारात् ॥ ५६ ॥

**तदस्य परिमाणम्** ॥ इह परिच्छेदहेतुमात्रं परिमाणम्, न सर्वतो मानमेव; उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात् । **खारशतिक इति** । खारशब्दोऽकारान्तो वार्तिककारवचनात्साधुः, तेन हि 'तदस्य परिमाणम्' इत्यत्र योगविभागः कर्त्तव्य इति दर्शयितुमुक्तम्–'अन्येभ्योऽपि दृश्यते खारशताद्यर्थम्' इति । **वार्षशतिक इति** । यज्ञादौ परिमाणिनि प्रत्ययः । **षष्टि जीवितपरिमाणमस्येति** । संवत्सरेषु षष्टिशब्दः, संवत्सरसंख्यया हि जीवितं

भावबोधिनी

( ४ ) [ ठन् = ठ = इक होने पर ] द्विकुलिजिकी । [ काशिका में कुछ भिन्न क्रम से चार रूप दिखाए गये हैं । ] [ कुलिज किस परिमाण का वाचक था इसका ज्ञान विभिन्न टीकाओं तथा कोशों में भी नहीं होता है । ]

"परिमाणान्तस्यासंज्ञाशाणयो" ( ७।३।२० ) इस सूत्र में ❀ कुलिज का ग्रहण भी इष्ट है । ❀ इस **भाष्यवचन** के अनुसार इसमें उत्तर पद की वृद्धि भी नहीं होती है ॥ ५५ ॥

'सः' ( वह ) इस प्रथमासमर्थ से 'अस्य' ( इसका ) इस षष्ठी—के अर्थ में यथाविहित प्रत्यय होते हैं यदि जो प्रथमासमर्थ हैं वे—अंश, वस्न और भृति हों तो । अंश = भाग । वस्न = मूल्य । भृति = वेतन । उदा०—पञ्च अंशः, वस्नः, भृतिः वा अस्य—इस विग्रह में—पञ्चकः । [ पांच भाग, मूल्य या वेतन जिसका है वह 'पञ्चक' है । इसी प्रकार—सप्तकः । साहस्रः । [ सप्त अंशः, वस्नः भृतिः वा अस्य सः । सहस्रम् अंशः वस्नः भृतिः वा अस्य स—ये विग्रह हैं । तदनुसार अर्थ हैं । 'संख्याया अतिशदन्तायाः कन्' से कन् और 'शतमानविंशतिकसहस्र' से अण् होता है । ] ॥ ५६ ॥

'तत्' ( = वह ) इस प्रथमासमर्थ प्रातिपदिक से 'अस्य' ( इसका )—इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं यदि जो प्रथमासमर्थ है वह परिमाण हो तो । उदा०—प्रस्थः परिमाणम् अस्य सः—इस अर्थ में—प्रास्थिको राशिः । [ एक प्रस्थ परिमाण की राशि = समूह । ] खारशतिकः । [ खारीशतं परिमाणम् अस्य—इस अर्थ में ठञ् प्रत्यय है । ] शत्यः, शतिकः । [ शतं परिमाणम् अस्य—इस अर्थ में यत् और ठन् प्रत्यय होते हैं । ] साहस्रः । [ यहाँ अण् प्रत्यय है । ] द्रौणिकः । कौडविकः । [ यहाँ भी परिमाणार्थक ठञ् प्रत्यय है । ] वर्षशतं परिमाणम् अस्य—इस विग्रह में—

**समर्थविभक्तिः प्रत्ययार्थश्च पूर्वसूत्रादेवानुवर्तिष्यते, किमर्थं पुनरनयोरुपादानम् ? पुनर्विधानार्थम् । द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः । द्विसाप्ततिकः । पुनर्विधानसामर्थ्याद् 'अध्यर्धपूर्वद्विगोर्लुक्' (५.१.२८) न भवति ॥**

## १९४३. संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु ॥ ५८ ॥ ( १७२४ )

**'तदस्य परिमाणम्' ( ५.१.५७ ) इति वर्त्तते । संख्यावाचिनः प्रातिपदिकात् परिमाणोपाधिकात्प्रथमासमर्थादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययो भवति । 'संज्ञासङ्घसूत्राध्ययनेषु' इति प्रत्ययार्थविशेषणम् ।**

**न्यासः**

**पुनर्विधानसामर्थ्यादित्यादिना** पुनर्विधानफलं दर्शयति । 'द्विषाष्टिकः' इत्यादौ द्विः प्रत्ययविधानम्, तत्र पूर्वसूत्रात् समर्थविभक्तेः प्रत्ययार्थस्यानुवृत्तेः प्रथमं प्रत्ययो विधीयते, तस्य 'अध्यर्द्धपूर्व' सूत्रेण लुग्भवति । नन्विह च यः सूत्रे समर्थविभक्तेः प्रत्ययार्थस्य चोपादानात् पुनर्विधीयते तस्यापि पुनर्विधानमनर्थकं स्यात् ॥ ५७ ॥

**संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु । परिमाणोपाधिकादिति ।** परिमाणमुपाधिर्विशेषणं न सम्भवति, न हि शब्दः परिमाणं शब्दस्य सम्भवतीति ? तदर्थस्य विशेषणं विज्ञास्यत इत्यदोषः । ननु चार्थस्यापि न सम्भवति, संख्या हि नैव परिमाणम् ? नैव दोषः; नात्र रूढः परिमाणशब्दो गृह्यते, किं तर्हि ? क्रियाशब्दः—परिमीयते येन

**पदमञ्जरी**

प्रायेण परिच्छिद्यते, जीवितपरिच्छेदद्वारेण तद्वतोऽपि षष्टिः संवत्सराः परिमाणमिति । तदस्मिन्परिमाणिनि प्रत्ययः । ननु यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भृतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम् । एवं च द्विषाष्टिक इत्यादौ नैवाध्यर्द्धपूर्वेति लुक्प्रसङ्गः, तस्यानार्हीयत्वात्, ततश्च समर्थविभक्तेः प्रत्ययार्थस्य च पुनरुपादानेन विधानमपि न कर्त्तव्यम्, न च जीवितपरिमाणादन्यत्र पुनर्विधानेन लुगभाव इष्यते ? एवं मन्यते–तमधीष्ट इत्यत्र कालादिति वर्त्तते, न च षष्ट्यादयः कालशब्दाः । अथ काले संख्येये वर्त्तमानत्वात्तेऽपि कालशब्दाः ? रमणीयादिष्वतिप्रसङ्गः, रमणीयं कालं भृत इति । तस्माद्यः कालं न व्यभिचरति स एव कालशब्द इति । **द्विषाष्टिक इति ।** 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः ॥ ५७ ॥

**संख्याः संज्ञासङ्घसूत्राध्ययनेषु ॥ परिमाणोपाधिकादिति ।** नात्र रूढिपरिमाणं गृह्यते, किं तर्हि ? क्रियाशब्दः – परिमीयते येन तत्परिमाणम् । संख्ययापि च परिमीयत इति नासम्भवि विशेषणम्, नन्वेवमप्यव्यभिचारादविशेषणम्, न ह्यपरिच्छेदिका संख्यास्ति, सत्यम्; इह तु प्रत्ययार्थस्य संघादेर्यदा परिच्छेदिका संख्या तदा

**भावबोधिनी**

वार्षशतिकः । [ वर्षसहस्रं परिमाणम् अस्य सः—इस विग्रह में—] वार्षसहस्रिकः । [ सौ वर्षों तक होने वाला, हजार वर्षों तक होने वाला यागादि— यह अर्थ है । ] षष्टिः जीवितपरिमाणम् अस्य सः—इस अर्थ में षाष्टिकः । [ साठ वर्ष परिमाण वाला ।] साप्ततिकः । [सप्ततिः जीवितपरिमाणम् अस्य सः— यह विग्रह है । ठञ् प्रत्यय होता है । सत्तर वर्ष परिमाण वाला]

[ प्रथमा —यह ] समर्थ विभक्ति और [ अस्य —यह ] प्रत्ययार्थ तो पूर्व सूत्र से ही अनुवृत्त हो जायेंगे, तब पुनः इन दोनों के ग्रहण का क्या फल है ? पुनः विधान करने के लिए इनका उपादान है । द्वे षष्टी परिमाणम् अस्य—इस विग्रह में—द्विषाष्टिकः । द्विसाप्ततिकः । [ द्वे सप्तती परिमाणम् अस्य—इस अर्थ में ठञ् प्रत्यय होता है परन्तु ] दुबारा विधान करने के सामर्थ्य से "अध्यर्ध-पूर्व-द्विगोर्लुंगसंज्ञायाम्" ( पा० सू० ५।१।२८ ) इस सूत्र से [ ठञ् का ] लुक् नहीं होता है । [ द्विषाष्टिकः और द्विसाप्ततिकः—इनमें आदिवृद्धि न होकर "संख्यायाः संवत्सरसंख्यस्य च" सूत्र से उत्तरपद की वृद्धि होती है । ] ॥ ५७ ॥

'तद् अस्य परिमाणम्'— इनकी अनुवृत्ति होती है । परिमाणोपाधिक [=परिमाण के समानार्थक ] प्रथमा-समर्थ संख्यावाची प्रातिपदिक से 'अस्य' [ इसका ]—इस षष्ठी के अर्थ में यथाविहित प्रत्यय होते हैं । संज्ञा, सङ्घ, सूत्र और अध्ययन— ये प्रत्ययार्थ के विशेषण हैं अर्थात् ये प्रत्यय के अर्थ होने चाहिये ।

**तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः ( म० भा० )**—पञ्चैव पञ्चकाः शकुनयः। त्रिकाः शालङ्कायनाः।

**सङ्घ—पञ्च परिमाणमस्य, पञ्चकः सङ्घः। अष्टकः।**

**सूत्र—अष्टावध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। त्रिकं काशकृत्स्नम्। ननु चाध्यायसमूहः सूत्रसङ्घ एव भवति? नैतदस्ति; प्राणिसमूहे सङ्घशब्दो रूढः।**

**न्यासः**

तत् परिमाणमिति। संख्ययापि च परिमीयत इति सापि परिमाणम्। नन्वेवमपि विशेषणमनर्थकम्; न ह्य रिच्छेदिका संख्यास्ति, सञ्जक्षाणा हि संख्योच्यते? सत्यम्; परिच्छेदिकैव संख्या, सा तु स्वस्याभिधेयं परिच्छिनत्तीति षष्ठ्यर्थमवश्यं न परिच्छिनत्ति। पञ्चास्य सङ्घस्य पुत्रा इति नात्र सङ्घस्येयत्ता प्रतीयते। इह तु पञ्चसंख्या परिमाणमस्य सङ्घस्येति भवतीयत्ताप्रतीतिः सङ्घस्य। तस्मादुपपन्नं संख्यायाः परिमाणं विशेषणम्।

**तत्रेत्यादि।** पञ्चशब्दोऽयं संख्येय एव वर्त्तते, न कदाचिदपि संख्यानमात्रे। ततश्च य एव संख्येयाः पञ्चत्वसंख्ययावच्छिन्नाः पञ्चशब्देनोच्यन्ते, प्रत्ययान्तेनापि त एव। न हि तेषां भिन्नानामत्र संख्येयान्तरं परिमाणं प्रत्ययवाक्यं सम्भवति। तस्मात् संज्ञायां स्वार्थ एव प्रत्ययो वाच्यः। तथा चाह **वार्त्तिककारः**—'संज्ञायां स्वार्थे उत्पद्यते' इति।

**पञ्चकोऽधीत इति।** पाठापेक्षया पुंल्लिङ्गः। **अधीतिरध्ययनमिति।** अनेन भावसाधनमध्ययनशब्दं दर्शयति। यद्यधीयत इत्यध्ययनं कर्मसाधनोऽध्ययनशब्दः स्यात्, सूत्रग्रहणं पृथग्वक्तव्यं न स्यात्; अध्ययनग्रहणेनैव सिद्धत्वात्, सूत्रमप्यधीयत एव। **पञ्चावृत्तय** इति पाठे पुनः क्रियात्मिकाः **पञ्च वारा** इत्यादिना पर्यायान्तरेण पञ्चावृत्तय इत्यस्यैवार्थं व्यक्तीकरोति।

**पदमञ्जरी**

प्रत्ययो यथा स्यात्—पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इति; इह मा भूत् पञ्च गावः स्वभूता अस्य ब्राह्मणसङ्घस्येति, न ह्यत्र सङ्घस्येयत्ता गम्यते, तस्मात्प्रत्ययार्थस्य यदा परिच्छेदिका संख्या तदा यथा स्यादिति विशेषणमर्थवद्भवति।

**तत्रेत्यादि।** इहादशभ्यः संख्याः संख्येये वर्तन्ते, न तु संख्यानमात्रे। तत्र य एव शकुनयः पञ्चत्वसंख्यायुक्ताः पञ्चन्शब्दवाच्यास्त एव पञ्चकशब्दस्यापि, ततश्च परिमाणपरिमाणिभावाभावात्स्वार्थ एव प्रत्ययो वक्तव्यः। यदा तु वृत्तिविषये संख्यानमात्रवृत्तित्वं पञ्चादीनामाश्रीयते, यथा—'द्व्येकयोः' इत्यत्र, तदा सम्भवत्येव परिमाणी प्रत्ययार्थः—पञ्चत्वसंख्या परिमाणमेषां पञ्चकाः शकुनय इति। **पञ्चकमध्ययनमिति।** पूर्वं तु पञ्चकोऽधीते इति सम्पाठापेक्षया पुंल्लिङ्गनिर्देशः, 'अधीते' इति च क्त इत्यर्थः। यथा-ओदनपाकं पचत्योदनपाकं करोतीत्यर्थः।

**भावबोधिनी**

(१) इनमें संज्ञा में तो स्वार्थ में ही प्रत्यय कहने चाहिये। उदा०—पञ्च एव शकुनयः—पञ्चकाः। [ ये पाँच विशेष पक्षियों की संज्ञा है। ] त्रिकाः शालङ्कायनाः। [ त्रयः एव—यह विग्रह है। ]

(२) संघ—उदा०—पञ्च परिमाणम् अस्य—इस विग्रह में—पञ्चकः सङ्घः। अष्टकः सङ्घः। [ अवयवों के माध्यम से सङ्घ का पञ्चत्व होता है। क्योंकि संघ—समुदाय तो एक ही होता है। ]

(३) सूत्र में उदा०—अष्टौ अध्यायाः परिमाणम् एषां सूत्राणाम् इस विग्रह में—अष्टकं पाणिनीयम्। दशकं वैयाघ्रपदीयम्। [ दश अध्यायाः परिमाणम् एषां सूत्राणाम्—इस अर्थ में प्रत्यय है। ] त्रिकं काशकृत्स्नम्। [ त्रयः अध्यायाः परिमाणम् एषां सूत्राणाम्—यह विग्रह है। इससे ज्ञात होता है कि किसके व्याकरण में कितने अध्याय थे। ]

**अध्ययन—पञ्चकोऽधीतः। सप्तकोऽधीतः। अष्टकः। नवकः। अधीतिः = अध्ययनम्, तस्य संख्यापरिमाणं पञ्चावृत्तयः = पञ्च वाराः, पञ्चरूपाण्यस्याध्ययनस्य पञ्चकमध्ययनम् ॥**

**❀ स्तोमे डविधिः पञ्चदशाद्यर्थः ❀ ( म० भा० ५.१.५८ वा० ८ )। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशः। एकविंशः।**

**❀ शन्शतोर्डिनिश्छन्दसि ❀ ( ? )। पञ्चदशिनोऽर्द्धमासाः ( तै० सं० ७.५.२०.१ )। त्रिंशिनो मासाः ( तै० सं० ७.५.२०.१ )।**

**न्यासः**

**स्तोमे डविधिरिति।** अत्रापि च्छन्दसीति सम्बध्यते। मन्त्रसमुदायः = स्तोमः। **एकविंश इति।** 'अतो गुणे' पररूपत्वञ्च, 'ति विंशतेर्डिति' इति तिशब्दलोपः।

**शन्शतोरित्यादि।** शन्नित्येवमन्ताच्छन्दसि डिनिर्वक्तव्यः ॥ ५८ ॥

**पदमञ्जरी**

**स्तोमे डविधिरिति।** सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठादिस्तुतिः स्तोमः। **पञ्चदश मन्त्राः परिमाणमस्येति।** साम्ना स्तुवीत, एकं साम तृचे क्रियते इति स्तुतिविधिः। तत्र त्रिकस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्रा भवन्ति, सप्तदशसोमे अन्त्यायाः सप्तकृत्व आवृत्तिः, एकविंशे तृचस्य। डित्करणमेकविंशे तिलोपार्थम्, त्रयस्त्रिंशादौ टिलोपार्थं च। पञ्चदशः, सप्तदश इत्यत्र तु 'नस्तद्धिते' इत्यनेनैव टिलोपः सिद्धः।

**शन्शतोर्डिनिरिति।** 'स्तमे' इति न सम्बध्यते। अत्रापि डित्करणं शदन्तस्य टिलोपार्थम्। **पञ्चदशिन इति।** पञ्चदशाहानि परिमाणमेषामिति डिनिः। एतेन त्रिंशिनो व्याख्याताः।

**विंशिनोऽङ्गिरस इति।** 'आङ्गिरसायास्य गौतम' इत्यादिप्रवरभेदेन भिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः।

**भावबोधिनी**

प्रश्न अध्यायों का समूह भी तो सूत्रों का सङ्घ ही होता है [ तब सूत्र को अलग से लिखने की क्या आवश्यकता ] ? [ उत्तर ] ऐसी बात नहीं है क्योंकि 'सङ्घ' शब्द प्राणिओं के समूह अर्थ में रूढ है। [ अतः सूत्र अर्थ की प्रतीति नहीं हो सकती। सूत्रग्रहण सार्थक है। ]

(४) अध्ययन में—उदा०—पञ्चकः अधीतः। सप्तकः अधीतः। अष्टकः। नवकः। [ सभी में कन् प्रत्यय है। ] अधीति = अध्ययन है। उसकी संख्या का परिमाण पञ्च आवृत्तियाँ - पाँच बार, पञ्चरूपाणि अस्य अध्ययनस्य—इस विग्रह में—पञ्चकम् अध्ययनम्। [ पाँच बार पढ़ना पञ्चक अध्ययन है। ]

❀ तद् अस्य परिमाणम्—इस अर्थ में संख्यावाची से स्तोम अर्थ में 'ड' प्रत्यय का विधान 'पञ्चदश' आदि के लिए करना चाहिये। ❀ उदा०—पञ्चदश मन्त्राः परिमाणम् अस्य—इस विग्रह में—पञ्चदशः स्तोमः। [पञ्चदशन् + ड = अ, टिलोप। पन्द्रह मन्त्रों वाला स्तोम। इसी प्रकार सप्तदश मन्त्राः परिमाणम् अस्य - इस अर्थ में ] सप्तदशः। [ एकविंशति मन्त्राः परिमाणम् अस्य—इस अर्थ में—एकविंशति + ड - अ, ति का लोप कर देने पर—] एकविंशः। [ सोमयाग में छन्दोगों द्वारा की जाने वाली पृष्ठादिसंज्ञक स्तुति को स्तोम कहा जाता है। ] ❀ शन् और शत् जिनके अन्त में है ऐसे शब्दों से वेदविषय में 'डिनि' प्रत्यय कहना चाहिये। ❀ उदा०—पञ्चदशाहानि परिणामम् एषाम्—इस अर्थ में—पञ्चदशिनः अर्द्धमासाः। [ पन्द्रह दिन जिनके परिमाण हैं ऐसे आधे महीने। ] त्रिंशिनः मासाः। [ त्रिंशत् अहानि परिमाणम् एषाम् इस विग्रह में त्रिंशत् + डिनि = इन्, टिलोप। बहुवचन का रूप है। इसी प्रकार पञ्चदशन् + डिनि = इन् में भी टिलोप। ]

**❀ विंशतेश्चेति वक्तव्यम् ❀ (?) । विंशिनोऽङ्गिरसः ॥**

**११४४. पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥५९॥ (१७२५)**

**'तदस्य परिमाणम्' ( ५.१.४७ ) इति वर्त्तते । पंक्त्यादयः शब्दा निपात्यन्ते । यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् । पञ्चानां टिलोपः, तिः प्रत्ययश्च । पञ्च परिमाणमस्य पंक्तिश्छन्दः । द्वयोर्दशतो-र्विन्भावः शतिच्च[1] प्रत्ययः —द्वौ दशतौ परिमाणमस्य सङ्घस्य विंशतिः (म० भा०) । त्रयाणां दशतां त्रिन्भावः शच्च प्रत्ययः —त्रयो दशतः परिमाणमस्य त्रिंशत् । चतुर्णां दशतां चत्वारिन्भावः शच्च प्रत्ययः—चत्वारो दशतः परिमाणमस्य चत्वारिंशत् । पञ्चानां दशतां पञ्चाभावः शच्च प्रत्ययः—पञ्च दशतः परिमाणमस्य**

**न्यासः**

**पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ अपदत्वं चेति ।** पदनिबन्धनस्य जश्त्वादेः कार्यस्य प्रतिषेधार्थमिहैते विंशत्यादयः परिमाणे निपात्यन्ते । 'तदस्य परिमाणम्' इत्यधिकारे निपातनात् । एवञ्च गवां विंशतिरिति षष्ठी व्यतिरेकनिबन्धना न प्राप्नोति ।

विंशतिशब्देन हि तान्येव गोद्रव्याणि गृह्यन्ते, न तदधिकं किञ्चिदर्थान्तरम् । बहुवचनं प्रसजति तेषां बहुत्वादिति यश्चोदयेत्, तं प्रत्याह —**विंशत्यादय इत्यादि ।** यथाकथञ्चित् प्रकारेण विनाप्यवयवार्थेनेति यावत् । रूपमात्रं प्रधानम्, नावयवार्थः । यस्त्वेषामर्थः स लोकत एव व्यवतिष्ठत इत्यभिप्रायः । **नात्राभिनिवेष्टव्यमिति ।** संख्यापरिमाणोपाधिकः प्रकृत्यर्थः । 'परिमाणमात्रं प्रत्ययाः' इति नायमत्राभिनिवेशः कर्त्तव्य इत्यर्थः । अनभि-निवेशस्य कारणमाह —**तथा हीत्यादि ।** स्यादेतत् —'अत्राप्यवयवार्थोऽस्ति' इत्यत आह—**न चेत्यादि ।**

**पदमञ्जरी**

योगश्चायं पूर्वस्यैव प्रपञ्चः ॥ ५८ ॥

**पंक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ पंक्त्यादयः शब्दा निपात्यन्त इति ।** प्रकृतिनिर्देशस्त्वयं न भवति; पंक्त्यादिभ्यः प्रकृतेऽर्थेऽधिकृतः प्रत्ययो भवतीति पञ्चम्या अनुपादानात्, पूर्वेणैव च सिद्धत्वात्, उत्तरेण निपातनेन साहचर्याच्च । प्रत्ययनिर्देशोऽपि न भवति—ङ्याप्प्रातिपदिकात्प्रकृतेऽर्थे पंक्त्यादयः प्रत्यया भवन्तीति, लोके शास्त्रे च 'शताच्च ठन्यतावशते' इत्यादौ केवलानां प्रयोगदर्शनाद् । यत्र समुदायः श्रूयते, अवयवा अनुमीयन्ते तन्निपातनम्, विपरीतो विधिः । **पञ्चानामिति ।** अर्थगतस्य बहुत्वस्य शब्दे समारोपाद् बहुवचनम्, पञ्चशब्दस्येत्यर्थः । **टिलोपस्तिश्च प्रत्यय इति ।** निपात्यत इत्यर्थः । अवयवनिपातननान्तरीयकत्वा-त्समुदायनिपातनस्य । यद्वा—'निपातनात्सिद्धम्' इत्यस्य पुंल्लिङ्गविपरिणामेनान्वयः, कुत्वं तु चकारञकारयोर्न निपात्यम्, 'चोः कुः' इत्येव सिद्धम् । **पञ्च पदानीति ।** पदशब्दः पादपर्यायः । **पंक्तिश्छन्द इति ।** तत्पुनः पदपंक्तिः,

**भावबोधिनी**

❀ विंशति शब्द से भी परिमाण अर्थ में कहना चाहिये । ❀ उदा० विंशिनः अङ्गिरसः । [ विंशतिः परिमाणम् एषाम्—इस विग्रह में विंशति + डिनि = इन्, ति लोप । प्रवरभेद से अङ्गिरसों की संख्या का बहुत्व बन जाता है ।] ॥५८॥

'तद् अस्य परिमाणम्' इसकी अनुवृत्ति होती है । पङ्क्ति आदि शब्द निपातन से सिद्ध होते हैं । इनमें जो भी कार्य लक्षण = सूत्र से उपपन्न नहीं हो पाता है उस सबको निपातन से सिद्ध करना चाहिये । (१) पञ्चन् शब्द की टि ( अन् ) का लोप, 'ति' प्रत्यय—पञ् च् + ति । [ "चोः कुः" इस सूत्र से चकार का कुत्व = क्, न् = ञ् का "नश्चापदान्तस्य झलि" सूत्र से अनुस्वार और "अनुस्वारस्य ययि परसवर्णः" सूत्र से परसवर्ण – पङ्क्तिः ] पञ्च पादाः परिमाणम् अस्य – यह विग्रह है । [ पञ्चाक्षरा पञ्चपदा पङ्क्तिः—यह छन्दः शास्त्र में प्रसिद्ध है । इसमें टि का लोप और ति प्रत्यय ही निपातित होते हैं । शेष तो सूत्रों से ही हो जाते हैं । ] (२) दो दशतों का 'विन्' आदेश होता है और 'शतिच्' प्रत्यय होता है । द्वौ दशतौ परिमाणम् अस्य सङ्घस्य—इस अर्थ में—विंशतिः । [ दशानां वर्गः—इस अर्थ में

---

१. पदमञ्जरीकार-सम्मतोऽयं पाठः ।

**पञ्चाशत्। षण्णां दशतां षड्भावः, तिः प्रत्ययः, अपदत्वं च—षड् दशतः परिमाणमस्य षष्टिः। सप्तानां दशतां सप्तभावः तिः प्रत्ययश्च—सप्त दशतः परिमाणमस्य सप्ततिः। अष्टानां दशतामशीभावस्तिः प्रत्ययश्च—**

**न्यासः**

ब्राह्मणानां पंक्तिरित्युक्ते संख्यापरिमाणोपाधिकः प्रकृत्यर्थः परिमाणो वा कश्चित्; प्रत्ययार्थो हि न गम्यते, किं तर्हि ? सन्निवेशविशेषः संस्थानात्मको गुण एव प्रतीयते। तथा हि—तस्य सन्निवेशविशेषस्यानवगमे तावत्स्वेव

**पदमञ्जरी**

यस्य पञ्चाक्षराः पञ्च पादा भवन्ति। **द्वयोर्दशतोरिति**। दशद्वयरूपसंख्येयमाचक्षाणस्य द्विशब्दस्येत्ययमत्रार्थो विवक्षितः। एवं त्रयाणाम् दशतामित्यादावपि द्रष्टव्यम्। **शतिच्च प्रत्यय इति**। चित्करणमन्तोदात्तार्थम्। **अपदत्वं चेति**। तेन जश्त्वचर्त्वे न भवतः। अत्र 'तदस्य परिमाणमिति वर्त्तते' इत्युक्तम्, द्वौ दशतौ परिमाणमस्येत्यादिश्च विग्रहो दर्शितः। यदा तु नानुवर्त्तते तदा [1]द्विशब्दादेर्दशदर्थाभिधायिनः स्वार्थे प्रत्ययो निपात्यः—द्वौ दशतौ विंशतिः, त्रयोदशतस्त्रिंशद् इति; ततश्च स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्द्विशब्दादेरिव द्विवचनबहुवचनप्रसङ्गः। विंशत्यादिभिश्च दशतामभिधानमिति गवादिभिर्वैय्यधिकरण्यमेव स्याद्—गवां विंशतिरिति, न तु विंशतिर्गाव इति सामानाधिकरण्यम्, नापि द्विगुः—विंशतिगवमिति, तस्मादनुवर्त्यम्।

अथास्येत्यनेन कः प्रतिनिर्दिश्यते ? परिमाणी। कः पुनरसौ ? भिन्नानि द्रव्याणि—द्वौ दशतौ परिमाणमेषां विंशतिरिति। यद्येवम्, विंशत्यादिभिर्द्रव्याणामभिधानमिति बहुवचनप्रसङ्गाद्विंशतिर्गाव इति न स्यात्, गवां विंशतिर्गोविंशतिरिति च न स्याद्, व्यतिरेकाभावात् ? अथास्मिन् पक्षे किञ्चिदिष्टमपि सिद्धम्, आहोस्विद्दोषान्तमेवास्ति ? इत्याह—इह विंशतिगवं त्रिंशत्पूलीति समानाधिकरणलक्षणो द्विगुः सिद्धः; तस्मान्न भिन्नानि द्रव्याणि परिमाणीनि, एतच्च सर्वेष्वेव विग्रहवाक्येष्वस्येत्येकवचनेन दर्शितम्। कस्तर्हि परिमाणी ? सङ्घः—द्वौ दशतौ परिमाणमस्य गोसङ्घस्य विंशतिरिति। एवमपि सिद्धं गवां विंशतिर्गोविंशतिरिति, विंशतिर्गावः विंशतिगवमिति तु न सिध्यति; तथा विंशतिशब्देन सङ्घस्याभिधानाद्विंशतिः परिमाणमस्य गोसङ्घस्य 'विंशतित्रिंशद्भ्यां ड्वुन्' विंशकः सङ्घ इति न स्यात्; सङ्घान्तरस्य परिमाणिनोऽसम्भवात्। अथोभयं परिमाणिभिन्ना द्रव्याणि तत्सङ्घश्च तत्र सङ्घपरिमाणिनि व्यधिकरणप्रयोगाः, द्रव्येषु तु परिमाणिषु समानाधिकरणप्रयोगाः, तत्रैव विंशतिर्गावः परिमाणमस्य विंशको गोसङ्घ इति भविष्यतीत्युच्येत ? एवमपि विंशतिर्गाव इत्यत्र बहुवचनप्रसङ्गः, तथा सङ्घस्य परिमाणत्वे विंशतिर्गोसङ्घ इति प्राप्नोति, न चेष्यते, विंशक इत्येव हि तत्रेष्यते। एवं तर्हि द्वावत्र संङ्घौ स्तः—द्रव्याणामेकः, द्रव्यवर्गयोर्दशतोश्चापरः; तत्र निपातनसामर्थ्याद्दशत्संघे परिमाणिनि प्रत्ययः, सङ्घश्च समुदायमात्रं न प्राणिनामेव, किं हि निपातनादलभ्यम्, तत्र दशत्सङ्घस्य विंशतिशब्देनाभिधानाद् गोसंघे विवक्षिते विंशतिः परिमाणमस्य विंशको गोसङ्घ इति च भविष्यति, विंशतिर्गोसङ्घ इति च न भविष्यति, गवां विंशतिर्गोविंशतिरिति च भविष्यति। ननु दशत्सङ्घस्य दशतौ गुणिनौ न गावः, तेन दशतोर्विंशतिरिति प्राप्नोति, गवां विंशतिरिति

**भावबोधिनी**

'दशत्' बनता है। दशों के दो वर्ग = समूह = बीस कहे जाते हैं। ] (३) त्रयाणां दशताम्—इस का 'त्रिन्' आदेश होता है और 'शत्' प्रत्यय होता है, त्रयः दशतः परिमाणम् अस्य—इस विग्रह में त्रिंशत्। [ दश-दश के तीन समूह = तीस। ] चतुर्णां दशताम्—इसका चत्वारिन् आदेश होता है और शत् प्रत्यय होता है—चत्वारः दशतः परिमाणम् अस्य-इस अर्थ में चत्वारिन् + शत्, न् का अनुस्वार चत्वारिंशत् = चालीस ] (४) पञ्चानां दशताम्—इसका 'पञ्चा' आदेश होता है और शत् प्रत्यय होता है—पञ्च दशतः परिमाणम् अस्य—इस अर्थ में पञ्चाशत् = पचास। ] (६) षण्णां दशताम्—इसका 'षष्' आदेश होता है, ति प्रत्यय और पदसंज्ञा का अभाव [ होने से जश्त्व नहीं होता है ]— षड् दशतः परिमाणम्

१. 'द्विशदादेर्दशब्दार्था०' इति मुद्रितपाठोऽसमीचीनः प्रतिभाति।

**अष्टौ दशतः परिमाणमस्य अशीतिः। नवानां दशतां नवभावस्तिः प्रत्ययश्च—नव दशतः परिमाणमस्य नवतिः। दशानां दशतां शभावः तश्च प्रत्ययः—दश दशतः परिमाणमस्य सङ्घस्य शतम् ।**

### न्यासः

ब्राह्मणेषु पंक्तिरिति न प्रयुज्यते । तदेवं गुणशब्दत्वाद् विंशत्यादीनां गवां विंशतिरिति सिध्यति षष्ठी, विंशतिशब्दस्य संख्यानवृत्तित्वात् ।

### पदमञ्जरी

तु न सिद्ध्यति ? उच्यते; द्रव्याणां द्रव्यसङ्घस्य दशतां दशतसङ्घस्य च न पारमार्थिको भेदोऽस्ति, केवलं बुद्ध्या परिकल्प्यते, ततश्च गवां दशतोश्च तात्त्विकभेदाभावाद्दशतसङ्घमपि प्रतिगवामपि गुणित्वमुपपद्यते । व्यभिचाराभावात्तु दशद्भ्यां विंशतिर्न विशेष्यते गवादिभिरेव तु विशेष्यते, यथा पटस्य शौक्ल्यमिति भवति, न शुक्लस्य शौक्ल्यमिति व्यभिचाराभावात्, तद्वदत्रापि । एवं तावव्द्यधिकरणप्रयोगा उपपादिताः, विंशतिर्गाव इत्यादिकास्तु समानाधिकरणप्रयोगा उपपादनीयाः, धर्मवचना एते विंशत्यादयो गुणवचना इति शुक्लादिवद्भविष्यति । यथा हि—पटस्य शुक्लो गुण इति गुणमात्रे दृष्टः शुक्लशब्दो गुणगुणिनोरव्यतिरेकविवक्षायां मतुब्लोपाद्वा समानाधिकरणो भवति शुक्लः पट इति । एवं विंशत्यादयोऽपि ।

यद्येवम्, यथान्ये गुणवचना द्रव्यस्य लिङ्गसंख्ये अनुवर्तन्ते, यथा- शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ, शुक्ला इति, एवं विंशत्यादयोऽप्यनुवर्त्तेरन् ? इह पुनर्विंशतिर्गावः विंशतिर्बलीवर्द्दाः विंशतिर्गोकुलानीति नित्यमेकवचनं स्त्रीलिङ्गं च भवति, शतशब्दात्तु नपुंसकत्वम्, विंशति विंशतयः शते शतानीति तु प्रचयभेदविवक्षायामेकशेषः ? अत्रोच्यते—यस्य धर्मस्य धर्मिणा सहाभेदः प्रतिपाद्यते, स चेत्तेषु प्रत्येकपरिसमाप्तः तदा तस्यापि धर्मिवद्भिन्नत्वाद् द्विवचनबहुवचने न भवतः, यथा शुक्लौ, शुक्ला इति । शौक्ल्यं हि कम्बलेषु प्रत्येकपरिसमाप्तम्, कोऽर्थः ? एकैकस्मिन्नपि कम्बले शुक्लशब्दार्थः पुष्कलः, न मात्रयापि न्यून इत्यर्थः । विंशतिर्गाव इत्यत्र तु विंशतिसंख्या न प्रत्येकपरिसमाप्ता, किं तर्हि ? बहुष्विति । तद्रूपभेदाभावादेकवचनमेव भवति, यथा—गावो धनम्, इन्द्राग्नी देवता, वेदाः प्रमाणमिति । धिनोतेर्धनं प्रीतिहेतुः, समुदितानां च गवां प्रीतिहेतुत्वं विवक्षितम्, नैकैकस्या इति धनमेकं गोभिर्विशेष्यते, तत्र धनाकारे भेदाभावाद् बहुवचनाभावः । इन्द्राग्नी देवतेति दिवेरैश्वर्यकर्मणोर्देवतासङ्घस्य च देवतात्वमेकं हविः प्रतीति द्विवचनाभावः । देवते इति तूच्यमाने प्रत्यकमैश्वर्यं प्रतीयेत, ततश्च व्रीहियवयोरिव विकल्पः स्यात् । वेदाः प्रमाणमिति चतुर्णां समुदितानां वेदानामेकं प्रमाणत्वं विवक्षितमिति तस्मिन्नाकारे भेदाभावाद् बहुवचनाभावः, प्रत्येकं तु प्रामाण्ये वेदाः प्रमाणानीति भवत्येव । यद्येवम्, त्रयश्चत्वारः पञ्च षट् सप्तेत्यत्राप्येकवचनप्रसङ्गः, न हि त्रित्वादिकमपि प्रत्येकपरिसमाप्तम् ? उच्यते; त्र्यादयो नित्यं संख्येयवचनाः, न तु कदाचिदपि संख्यानमात्रवचना इत्येकेन धर्मेण व्यासज्यवृत्तिना सहानेकस्य धर्मिणो भेदप्रतिपादनाभावाद्धर्मिभेदाश्रयं बहुवचनमेव भवति । यद्यपि त्रित्वमित्यादौ संख्यानमात्रमपि निष्कृष्टं प्रतीयते, त्र्यादिभिस्तु न प्रतीयते । देवताशब्दस्तु यद्यपि निष्कृष्टदेवतात्वमाचष्टे, तथाप्यग्निर्देवतेत्येकेनापि स भिन्नदेवतात्वमाचष्टे, नानेकेनैव सर्वदा । त्र्यादयस्तु न क्वचिदप्येवमिति विशेषः । लिङ्गमपि लोकाश्रयत्वाद्यथादर्शितं व्यतिष्ठते, न तद्धितान्तत्वेनाभिधेयवदिति सर्वमनाकुलम् ।

### भावबोधिनी

अस्य—इस अर्थ में—षष् + ति ष्टुत्व ] (७) सप्तानां दशतां—इसका 'सप्त' आदेश और 'ति' प्रत्यय होता है—सप्त दशतः परिमाणम् अस्य —इस विग्रह में सप्ततिः = सत्तर । (८) अष्टानां दशताम्—इसका 'अशी' आदेश और 'ति' प्रत्यय होता है—अष्टौ दशतः परिमाणम् अस्य—इस अर्थ में अशी + तिः = अस्सी । ] (९) नवानां दशताम्—इसका 'नव' आदेश और 'ति' प्रत्यय—नवतिः = नब्बे । (१०) दशानां दशताम्—इसका 'श' आदेश होता है और 'त' प्रत्यय होता है—दश दशतः परिमाणम् अस्य सङ्घस्य—इस अर्थ में—शतम् = सौ ।

**विंशत्यादयो गुणशब्दाः, ते यथाकथञ्चिद्व्युत्पाद्याः। नात्रावयवार्थेऽभिनिवेष्टव्यम्; तथा हि—पंक्तिरिति क्रमसन्निवेशेऽपि वर्तते—ब्राह्मणपंक्तिः, पिपीलिकापंक्तिरिति। न चात्रावयवार्थः कश्चिदस्ति।**

**या चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः, स्वलिङ्गसंख्यानुविधानं च, एतदपि सर्वं स्वाभाविकमेव।**

**न्यासः**

यदि तर्हि गुणशब्दा एते, विंशतिर्गाव इति द्रव्यशब्देन सामानाधिकरण्यं न प्राप्नोति? गुणिन्यत्र वृत्तिः, गुणमात्रे न, ततोऽयमदोष इति। वक्तव्य स हेतुः यत एतेषां क्वचिद् गुणमात्रे वृत्तिर्भवति, क्वचिद् गुणिनि। बहुवचनप्रसङ्गाच्च गुणिनि वृत्तिरित्येतदेव दुःस्थम्; बहुत्वाद् गुणिनाम्। इह च विंशतिः कुण्डानीति नपुंसकलिङ्गं प्राप्नोति, विंशतिर्ब्राह्मणा इति पुंल्लिङ्गम्, गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, यथा—शुक्लः कम्बलः, शुक्लं वस्त्रम्, शुक्ला शाटीति। यदासौ द्रव्यमाश्रित्य भवति गुणः, तस्य लिङ्गवचनं यत् तद् गुणवचनस्यापि भवति, यथा—गुणशब्दत्वेऽप्येषामाश्रीयमाणे न भवत्येव दोषप्रसङ्गान्मुक्तिः? इत्यत आह—**या चैषामित्यादि**। न केवलमर्थाभिधानं स्वाभाविकम्, किन्त्वेतदपीत्यपिशब्देन दर्शयति। यत्र द्रव्येण गुणिनैषामभिधेयो गुणो विशेष्यते, तत्र स्वभावादेव गुणमात्रे वृत्तिः, यत्र त्वेत उपसर्जनीभूतस्वार्थास्तेन स्वार्थेन द्रव्यं विशेषयन्ति तत्रैषां स्वभावत एव गुणिनि वृत्तिः।

**स्वलिङ्गसंख्यानुविधानं चेति**। गुणिन्यपि वर्त्तमानानां ययोर्लिङ्गसंख्ययोर्यदनुविधानमनुवर्त्तमानमेतदपि सर्वं स्वाभाविकम्। अन्येषामपि, गुणशब्दानामपि क्वचित् स्वभावत एव गुणिनि वृत्तिर्भवति, तद्यथा—शुक्लः पट इत्यत्र शुक्लशब्दस्य। क्वचिद् गुणमात्रे, यथा—अस्यैव शुक्लो गुणः पटस्येत्यत्र। अन्येषामपि केषाञ्चित् शब्दानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानं दृश्यत एव, तद्यथा—वेदाः प्रमाणम्, श्रुतयः प्रमाणमिति। तस्मात् स्वाभाविकत्वाद् गुणमात्रे गुणिनि च वृत्तेः स्वलिङ्गसंख्यानुविधानस्य च न भवति यथोक्तदोषप्रसङ्गः। यदा हि स्वभावत एव संख्यानमात्रे गुणे गुणमात्रे वृत्तिः, तदा व्यतिरेकनिबन्धना षष्ठी भवति। यदा तु गुणिनि, तदा तयोरपि च द्रव्यशब्दत्वात् सामानाधिकरण्यमपि भवति। द्रव्येऽपि वर्त्तमानानां स्वाभाविकं स्वलिङ्गसंख्यानुविधानम्।

**पदमञ्जरी**

एवं **भाष्यकारमतेन** व्याख्यया संप्रति **वार्त्तिककारमतं** दर्शयति—'**विंशत्यादय इति। गुणशब्दा इति।** रूढिरूपा इति भावः। **यथाकथञ्चिद्व्युत्पाद्या इति।** स्वरवर्णानुपूर्वीज्ञानार्थम्, न त्ववयवार्थप्रदर्शनाय, तदाह—**नात्रावयवार्थेऽभिनिवेष्टव्यमिति**। अवयवार्थविषयोऽभिनिवेशो न कर्त्तव्य इत्यर्थः। स तु प्रतीतिपथं नारोहतीति परित्यज्यते।

**या चैषामित्यादि**। दर्शिता च गुणमात्रे गुणिनि च वृत्तिः, एतदपि सर्वं स्वभाविकमेवेति दर्शितामुपपत्तिं स्थिरां मन्यते।

**भावबोधिनी**

[ दशानां वर्गः—इस अर्थ में "पञ्चद्-दशतौ वर्गे वा" ( पा. सू. ५।१।६० ) इस अग्रिम सूत्र से दशत् निपातित होता है। अतः दशत् का अर्थ है—दश परिमाणम् अस्य। दो दशत् = बीस, तीन दशत् = तीस, दश दशत् = सौ—इस प्रकार सभी के अर्थों का ज्ञान करना चाहिए। ]

विंशति आदि गुण शब्द = रूढ़ शब्द हैं इनका व्युत्पादन किसी प्रकार कर लेना चाहिए। इनमें अवयवार्थ के प्रति दुराग्रह नहीं करना चाहिए, जैसा कि—'पङ्क्ति' शब्द क्रमसन्निवेश अर्थ में भी प्रयुक्त होता है—ब्राह्मणपङ्क्तिः, पिपीलिकापङ्क्तिः। [ ब्राह्मणों की पंक्ति, चीटियों की पंक्ति। ] इनमें [ पूर्वोक्त ] कोई भी अवयवार्थ नहीं है।

इन शब्दों का विषयभेद से कभी केवल गुण ( = संख्या ) में अथवा गुणी ( = संख्येय ) अर्थों में जो प्रयोग होता है और अपने लिङ्ग तथा संख्या का अनुविधान होता है, वह सब स्वाभाविक ही है। [ विंशति से नवति तक स्त्रीलिङ्ग एकवचन में हैं। ]

**सहस्रादयोऽप्येवञ्जातीयकास्तद्वदेव द्रष्टव्याः । उदाहरणमात्रमेतदिति ॥**

**१९४५. पञ्चद्दशतौ वर्गे वा ॥ ६० ॥ ( १७२६ )**

**'पञ्चत्', 'दशत्'—इत्येतौ वा निपात्येते 'तदस्य परिमाणम्' इत्येतस्मिन्विषये वर्गेऽभिधेये । 'संख्यायाः' ( ५.१.५८ ) इति कनि प्राप्ते डतिर्निपात्यते । वावचनात्पक्षे सोऽपि भवति । पञ्च परिमाणमस्य पञ्चद् वर्गः, दशद्वर्गः । पञ्चको वर्गः, दशको वर्गः ॥**

**१९४६. सप्तनोऽञ् छन्दसि ॥ ६१ ॥ ( ३४९१ )**

**'वर्गे' इत्येव । 'तदस्य परिमाणम्' इति च । सप्तन्-शब्दाच्छन्दसि विषयेऽञ् प्रत्ययो भवति वर्गेऽभिधेये । सप्त साप्तान्यसृजन् ( तै० सं० ५.४७.५ ) ॥**

**न्यासः**

अथ सहस्रादयोऽपि कस्मान्न व्युत्पाद्यन्ते ? इत्याह—**सहस्रादयोऽपीत्यादि** । एवञ्जातीयका एवम्प्रकारा विंशत्यादिभिः सदृशा इत्यर्थः । तेषामपि गुणवत्त्वात् । **तद्वदेव** । विंशत्यादिवदेव । **द्रष्टव्याः** । विंशत्यादय इव तेऽपि प्रकृत्यादिविभागेन व्युत्पाद्यन्त इत्यर्थः । यद्येवम्, किमर्थं विंशत्यादय एव सूत्रे उपात्ताः ? इत्याह—**उदाहरणमात्रमित्यादि** । उदाहरणमात्रं विंशत्यादिग्रहणम्, अन्येऽप्येवञ्जातीयाः सहस्रादयस्तथैव व्युत्पाद्याः ॥ ५९ ॥

**पञ्चद्दशतौ वर्गे वा ॥** ननु च 'सङ्घे' इत्यनुवर्त्तिष्यते, किं वर्गग्रहणेन ? नैतदस्ति; सङ्घशब्दो हि प्राणिसमुदाये रूढः । वर्गशब्दस्तु समूहमात्र इति वर्गग्रहणं कर्त्तव्यम् ॥ ६० ॥

**सप्तनोऽञ्छन्दसि ॥** संख्यालक्षणे कनि प्राप्ते सप्तन्शब्दाच्छन्दस्यञ्विधानम् ॥ ६१ ॥

**पदमञ्जरी**

**सहस्रादयोऽप्येवञ्जातीयका इति ।** गुणमात्रे गुणिनि च वर्तन्ते, स्वलिङ्गसंख्यानुविधायिनश्चेत्यर्थः । **तद्वदेव द्रष्टव्या इति ।** स्वरवर्णानुपूर्वीज्ञानार्थं विंशत्यादिवद्व्युत्पाद्या इत्यर्तः । तद्यथा—शतस्य दशतां सहभावः त्रच्च प्रत्ययः । क्व पुनरेते व्युत्पाद्याः ? पृषोदरादिषु । **उदाहरणमात्रम्** । प्रदर्शनमात्रमेतद्विंशत्यादीनामुपादानम् । **इतिशब्दः** समाप्तौ । अत्र वार्त्तिकम्—'अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु' ( कात्या० ३०४९ ) इति ॥ ५९ ॥

**पञ्चद्दशतौ वर्गे वा ॥** सङ्घग्रहणे प्रकृते वर्गग्रहणं सूत्राध्ययनयोरनुवृत्तिर्मा भूदिति, अप्राण्यर्थं च; सङ्घशब्दस्य प्राणिविषयत्वात् ॥ ६० ॥ ६१ ॥

**भावबोधिनी**

पूर्वोक्त शब्दों के समान ही 'सहस्र' आदि शब्द भी जिस किसी प्रकार व्युत्पादित करने चाहिए । [ इनमें भी आवश्यकतानुसार आदेश और प्रत्यय आदि निपातित कर लेने चाहिए । ] सूत्र में तो केवल कुछ उदाहरण दिये गये हैं । [ यही रीति अन्यत्र भी समझनी चाहिए । ] ॥ ५९ ॥

'तद् अस्य परिमाणम्' इस विषय में वर्ग अर्थ प्रतीत होने पर 'पञ्चत्' और 'दशत्' शब्द विकल्प से निपातित होते हैं । "संख्यायाः अतिशदन्तायाः कन्" ( ५।१।२२ ) सूत्र से कन् की प्राप्ति रहते 'डति' का निपातन किया जाता है । वा विकल्प के कारण पक्ष में वह ( कन् ) भी होता है । उदा० – पञ्च परिमाणम् अस्य—[ इस विग्रह में पञ्चन् + डति = अत्, टिलोप ] पञ्चद् वर्गः । [ दश परिमाणम् अस्य—इस विग्रह में भी दशन् + डति = अत् । ] दशद् वर्ग । पक्ष मे [ 'कन्' होने पर ] पञ्चकः, दशकः । [ सङ्घ और वर्ग पर्याय हैं, संघ की अनुवृत्ति से कार्य संभव था किन्तु 'सूत्र' और 'अध्ययन' की अनुवृत्ति रोकने के लिए 'वर्गे' का उल्लेख है । ] ॥ ६० ॥

'वर्गे' इसकी अनुवृत्ति होती है और 'तद् अस्य परिमाणम्' इसकी भी । वेदविषय में वर्ग अर्थ अभिधेय रहने पर 'सप्तन्' शब्द से 'अञ्' प्रत्यय होता है । उदा० —"सप्त साप्तानि असृजत् ।" [ सप्त परिमाणम् एषाम्—इस अर्थ में सप्तन् + अञ् = अ, आदिवृद्धि, टिलोप ] ॥ ६१ ॥

## १९४७. त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६२ ॥ ( १७२७ )

**'तदस्य परिमाणम्' इत्येव । 'वर्गे' इति निवृत्तम् । त्रिंशच्चत्वारिंशच्छब्दाभ्यां संज्ञायां विषये डण्प्रत्ययो भवति 'तदस्य परिमाणम्' इत्येतस्मिन्विषये ब्राह्मणेऽभिधेये । अभिधेये सप्तम्येषा, न विषयसप्तमी । तेन मन्त्रभाषयोरपि भवति । त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि ब्राह्मणानि । चात्वारिंशानि ब्राह्मणानि । कानिचिदेव ब्राह्मणान्युच्यन्ते ॥**

## १९४८. तदर्हति ॥ ६३ ॥ ( १७२८ )

**'तत्' इति द्वितीयासमर्थात् 'अर्हति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवित । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । वास्त्रयुग्मिकः ( ५.१.१८ ) । शत्यः, शतिकः ( ५.१.२१ ) । साहस्रः ( ५.१.२७ ) ॥**

**न्यासः**

**त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥** त्रिंशच्छब्दाद् 'विंशतित्रिंशद्भ्याम्' इति योगविभागेन कनि प्राप्ते चत्वारिंशच्छब्दापि 'प्राग्वतेष्ठञ्' इति ठञि प्राप्तेऽयमारभ्यते । **अभिधेये सप्तम्येषेत्यादि ।** विषयसप्तम्यामस्यां ब्राह्मणविषयश्चेत् प्रयोगो भवतीत्येषोऽर्थः स्यात्, तथा चान्यत्र प्रत्ययान्तस्य प्रयोगो न स्यात्, तस्मान्न विषयसप्तम्येषा । एतच्च संज्ञाग्रहणादेव विज्ञायते । न हि ब्राह्मणग्रहणात् त्रिंशच्चत्वारिंशतौ डण्णन्तौ कस्यचित् पदार्थस्य संज्ञिनौ स्तः; ब्राह्मणानां तु विद्यते ॥ ६२ ॥

**तदर्हति ॥ श्वैतच्छत्रिकः, वास्त्रयुग्मिक इत्यादिषु ठक् ।** 'आर्हात्' इत्यभिविधौ चायमाकार इति ॥ ६३ ॥

**पदमञ्जरी**

**त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्[1] ॥ न विषयसप्तमीति ।** ब्राह्मणविषयश्चेत्प्रयोगो भवतीति नैवमत्रार्थः, तथा हि सति मन्त्रे भाषायां च प्रयोगो न स्यात्, ब्राह्मणादन्यस्य च संज्ञायां शङ्क्येत, एवं च 'ब्राह्मणसंज्ञायाम्' इति षष्ठीसमासेन निर्देष्टव्यम्, तथा तु न कृतमित्येव । सूत्रे च ये ओकारादनन्तरं रेफमधीयते तेषां पञ्चम्यर्थे षष्ठीद्विवचनम् । ये तु न, तेषां समाहारद्वन्द्वे पञ्चम्येकवचनम् ॥ ६२ ॥

**तदर्हति ॥** अर्हति लब्धुं योग्यो भवतीत्यर्थः ॥ ६३ ॥

**भावबोधिनी**

'तद् अस्य परिमाणम्' इसी की अनुवृत्ति होती है । 'वर्गे' की निवृत्ति हो चुकी है । त्रिंशत् और चत्वारिंशत् इन प्रातिपदिकों से संज्ञाविषय में 'तद् अस्य परिमाणम्' इस विषय में ब्राह्मण अर्थ वाच्य रहने पर 'डण्' प्रत्यय होता है । [ ब्राह्मणे—इसमें ] अभिधेय = वाच्यार्थ में सप्तमी है, विषयसप्तमी नहीं है । इस कारण मन्त्र और भाषा—इनमें भी होता है । उदा० त्रिंशद् अध्यायाः परिमाणम् एषां ब्राह्मणानाम्—इस विग्रह में—त्रैंशानि । [ त्रिंशत् + डण् = अ, टिलोप । ] चात्वारिंशानि ब्राह्मणानि । [ चत्वारिंशत् परिमाणम् एषाम्—इस विग्रह में चत्वारिंशत् + डण् = अ, टिलोप ] किन्हीं ब्राह्मण ग्रन्थों को पूर्वोक्त शब्दों से कहा जाता है ॥ ६२ ॥

'तत्' ( = उसको ) इस द्वितीयासमर्थ प्रातिपदिक से अर्हति ( = योग्य है, प्राप्त करने योग्य है )—इस अर्थ में यथाविहित प्रत्यय होते हैं । उदा०—श्वेतच्छत्रम् अर्हति—इस अर्थ में श्वैतच्छत्रिकः । वास्त्रयुग्मिकः । [ वस्त्रयुग्मम् अर्हति —इस अर्थ में है । दोनों में "आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" ( पा. सू. ५।१।१९ ) से ठक् = इक प्रत्यय और आदिवृद्धि होती है । श्वेतच्छत्र के योग्य, दो वस्त्रों के योग्य । यहाँ 'प्राप्त करना' अर्थ भी निहित है । ] शत्यः, शतिकः । [ शतम् अर्हति—इस अर्थ में "शताच्च ठन्यतौ" इस सूत्र से ठन् = इक और यत् प्रत्यय हुए हैं । ] साहस्रः । [ सहस्रमर्हति —इस विग्रह में अण् हुआ है । ] ॥ ६३ ॥

---

१. 'ड्वुन्' इति क्वचित् मुद्रितपदमञ्जर्यां प्रमादपाठः ।

## १९४९. छेदादिभ्यो नित्यम् ॥ ६४ ॥ ( १७२९ )

**नित्यग्रहणं प्रत्ययार्थविशेषणम् । छेदादिभ्यो द्वितीयासमर्थेभ्यो 'नित्यमर्हति' इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । छेदं नित्यमर्हति छैदिकः । भैदिकः ।**

**छेद । भेद । द्रोह । दोह । वर्त्त । कर्ष । सम्प्रयोग । विप्रयोग । प्रेषण । सम्प्रश्न । विप्रकर्ष । ❀ विरागो विरङ्गं च ❀ ( ग० सू० ११० ) । ( वैरङ्गिकः । ) छेदादिः ॥**

**न्यासः**

**छेदादिभ्यो नित्यम् ॥ नित्यग्रहणमिति ।** अथ विभाषाया निवृत्त्यर्थं नित्यग्रहणेन कस्मान्न विज्ञायते ? अशक्यं तन्निवृत्त्यर्थं विज्ञातुम् । विनापि नित्यग्रहणेन महाविभाषानिवृत्तिः शक्यते विज्ञातुम् । तथा हि—छेदादिभ्यः पूर्वेणैव ठकि सिद्धे पुनर्वचनादेव नित्यविधिर्भविष्यति, किं नित्यग्रहणेन ? ततो नित्यग्रहणमहन्त्य-हन्त्यर्हत्वात् 'तदर्हति' इत्यस्यार्थस्य विशेषणं विज्ञास्यते । तथा च जातमारम्भस्य प्रयोजनमिति वाक्यं न निवर्तते ।

**विरागो विरङ्ग्च्चेति ।** विरागशब्दष्ठकमुत्पादयति विरङ्गादेशं चापद्यते । नित्यं विरागमर्हति **वैरङ्गिकः** । प्रत्ययसन्नियोगेन चायमादेश इति प्रत्ययाभावाद्वाक्ये न भवति ॥ ६४ ॥

**पदमञ्जरी**

**छेदादिभ्यो नित्यम् ॥ नित्यग्रहणं प्रत्ययार्थविशेषणमिति ।** अथ यथा 'नित्यं क्रीडाजीविकयोः' इत्यत्र महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं नित्यग्रहणम्, तथेहापि कस्मान्न भवति ? इष्टत्वात्, दृष्टत्वाच्च । इष्यते च दृश्यते च छेदमर्हतीति । न च वाक्यनिवृत्त्यर्थमेव नित्यग्रहणं कर्तव्यम्, 'छेदादिभ्यः' इत्येवास्तु, पूर्वेण सिद्धे पुनरारम्भो वाक्यनिवृत्त्यर्थो भविष्यति । यथा तर्हि 'त्रेर्मम्नित्यम्' इत्यत्र स्वातन्त्र्यनिवृत्त्यर्थं नित्यग्रहणम्, तथेह कस्मान्न भवति ? इष्टत्वात् दृष्टत्वाच्च । इष्यते च स्वातन्त्र्यम्, दृश्यते च छेदादिषु पठितस्य सम्प्रश्नशब्दस्य स्वतन्त्रस्य प्रयोगः, विधिनिमन्त्रणादिसूत्रे यथा । तर्ह्येकगोपूर्वादित्यत्र प्रत्ययान्तरस्य मतुपो निवृत्त्यर्थं नित्यग्रहणम्, तदेह कस्मान्न भवति ? अप्राप्तत्वात् । न ह्यत्र कस्यचित्प्रत्ययान्तरस्य प्राप्तिः । यथा तर्हि 'नित्यं कौटिल्ये गतौ इत्यत्रार्थान्तरनिवृत्त्यर्थं नित्यग्रहणम्—गतिवचनाद्धातोः कौटिल्य एव, न क्रिया-समभिहार इति, तथेह कस्मान्न भवति ? इष्टत्वाद्, इष्यते ह्यर्थान्तरेऽपि यथायोगं छेदादिभ्य आर्हीयः प्रत्ययः । तस्माद्यथोक्तमेव प्रयोजनं नित्यग्रहणस्य । **छेदं नित्यमर्हतीति ।** ननु न क्वचिन् पदार्थो नित्यं छेदमर्हति, योऽपि वेतसादिश्छिन्नः प्ररोहति सोऽपि न सदैवच्छेदनार्हः; प्ररूढस्तु भवति । यस्तर्हि दस्युवंशादिर्नित्यं छेदनार्हः स प्रत्ययार्थः । अपर आह—आभीक्ष्ण्ये नित्यशब्दः, यथा—नित्यप्रहसितादाविति ।

**विरागो विरङ्गं चेति ।** विरागशब्दः प्रत्ययमुत्पादयति, तत्सन्नियोगेन विरङ्गमादेशमापद्यते—विरागं नित्यमर्हति वैरङ्गिकः ॥ ६४ ॥

**भावबोधिनी**

'नित्यम्' इसका ग्रहण प्रत्ययार्थ ( अर्ह = योग्य ) का विशेषण है । द्वितीयासमर्थ छेदादि शब्दों से 'नित्यम् अर्हति' ( नित्य योग्य है )—इस अर्थ में यथाविहित प्रत्यय होते हैं । उदा०—छेदं नित्यम् अर्हति—इस विग्रह में—छैदिकः । [ भेदम् अर्हति—इसमें ] भैदिकः । [ इनमें ठक् = इक प्रत्यय और आदिवृद्धि है । ]

[इस गण में पठित शब्द—] छेद । भेद । द्रोह । दोह । वर्त्त । कर्ष । सम्प्रयोग । विप्रयोग । प्रेषण । विप्रकर्ष । ❀ विराग का विरङ्ग आदेश भी होता है । ❀ [ अतः विरागमर्हति—इस अर्थ में वैरङ्गिकः बनता है । ] ये छेदादि हैं ॥ ६४ ॥

## १९६०. शीर्षच्छेदाद्यच्च ॥ ६५ ॥ ( १७३० )

**शीर्षच्छेदशब्दाद् द्वितीयासमर्थात् नित्यमर्हति' इत्यस्मिन्नर्थे यत्प्रत्ययो भवति, चकाराद्यथाविहितञ्च। शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः, शैर्षच्छेदिकः। प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते ॥**

## १९६१. दण्डादिभ्यो यः ॥ ६६ ॥ ( १७३१ )

**'नित्यम्' इति निवृत्तम्। दण्डादिभ्यो द्वितीयासमर्थेभ्यः 'अर्हति' इत्येतस्मिन्नर्थे यः प्रत्ययो भवति। ठकोऽपवादः। दण्डमर्हति दण्ड्यः। मुसल्यः।**

**दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेधा। मेघ। युग। उदक। वध। गुहा। भाग। इभ। दण्डादिः ॥**

**न्यासः**

**शीर्षच्छेदाद् यच्च ॥** प्रत्ययसन्नियोगेन शीर्षभावः, तेन वाक्ये प्रत्ययाभावान्न भवतीति भावः ॥ ६५ ॥

**दण्डादिभ्यो यः ॥** दण्डशब्दोऽयमस्ति क्रियावचनः—दण्डनं दण्ड इति, अस्ति द्रव्यवचनः; विशेषाभावाद् द्वयोरपि ग्रहणम् ॥ ६६ ॥

**पदमञ्जरी**

**शीर्षच्छेदाद्यच्च ॥ प्रत्ययसन्नियोगेनेति।** तथा च शिरःशब्देन विग्रहो दर्शितः। कथं तर्हि पूर्वमुक्तम्—शीर्षच्छेदशब्दाद् द्वितीयासमर्थादिति ? न प्रयोगार्हे वाक्ये द्वितीयासमर्थता, किं तर्हि ? यदुपमर्द्देन वृत्तिर्भवति तत्र प्रक्रियावाक्ये प्रत्ययौ द्वौ - यच्च, ठक्च, एवं च प्रत्ययाभ्यां सन्नियोग इति द्विवचनान्तेन समासः ॥ ६५ ॥

**दण्डादिभ्यो यः ॥** उपायविशेषः=दण्डः, हस्तालम्बश्च। इह 'दण्डादिभ्यः' इत्येतावत्सूत्रम्, अनन्तरश्च यत्प्रत्ययो विधीयते[1]। तथा च वध्यशब्दव्युत्पादनाय क्यब्विधावुक्तम्—'हनो वध च तद्धितो वा' ( वा० २१४ ) इति, यदि चात्र यद्विधीयते तत एव तदुपपद्यते तद्धितो वेति। कथम् ? क्यप्याद्युदातत्वम्, यत्यपि तद्धिते, 'यतोऽनावः' इत्याद्युदात्तत्वमेव। यदि त्वत्र यो विधीयेत ततः स्वरे विशेषादनुपपन्नमेतत्स्यात्। उत्तरसूत्रे चास्य यस्यैवानुवृत्तिः स्यात्, न यतः। अथापि स्वरितत्वाद्यत एवानुवृत्तिरुच्यते ? एवमपि वृत्तिकारस्यैतद्वक्तुमापद्येत—'यदनुवर्त्तते नानन्तरो यः' इति। ये त्विभ-वध-मेधशब्दानां यदन्तानामाद्युदात्तानां छन्दसि प्रयोगाः—'इभ्यान्न राजा वनान्यत्ति ( ऋ० १.६५.७ ), तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति, अपां मेध्यं

**भावबोधिनी**

द्वितीयासमर्थ शीर्षच्छेद' प्रातिपदिक से 'नित्यम् अर्हति' इस अर्थ में 'यत्' प्रत्यय होता है और 'च' के बल से यथाविहित प्रत्यय भी होते हैं। उदा०—शिरश्छेदम् अर्हति—इस अर्थ में ( १ ) शीर्षच्छेद्यः, ( २ ) शैर्षच्छेदिकः। प्रत्यय के सन्नियोग से 'शिरस्' का 'शीर्ष' निपातित किया जाता है। [ शिरष्छेद + यत्, शीर्ष आदेश अलोप शीर्षच्छेद् + य, शिरश्छेद + ठक् = इक, अलोप आदिवृद्धि। नित्य शिर कटवाने योग्य अर्थात् महापापी। ] ॥ ६५ ॥

'नित्यम्' इसकी निवृत्ति है। द्वितीयासमर्थ दण्डादि से 'अर्हति' ( योग्य है )—इस अर्थ में 'य' प्रत्यय होता है। यह ठक् का अपवाद है। उदा०—दण्डम् अर्हति—इस अर्थ में—दण्ड्यः। [ दण्ड शब्द दण्डन क्रिया और डण्डा दोनों का वाचक लिया जाता है। अतः दोनों में से किसी के भी योग्य को 'दण्ड्य' कहा जाता है। ] मुसल्यः। मुसलम् अर्हति—यह विग्रह है। यहाँ मूसल योग्य अर्थ में उनसे प्रहारादि करना अर्थ छिपा रहता है। ]

[दण्डादिगण में पठित शब्द—] दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेधा। मेघ। युग। उदक। वध। गुहा। भाग। इभ। ये दण्डादि हैं [ कहीं-कहीं "दण्डादिभ्यो यत्" ऐसा पाठ भी मिलता है। ] ॥ ६६ ॥

---

१. दीक्षित-नागेशयोरप्येतदेव सम्मतम्। केचित्पुनः 'दण्डादिभ्यो यत्' इति पठन्ति।

**१९५२. छन्दसि च ॥ ६७ ॥ ( ३४९२ )**

**प्रातिपदिकमात्राच्छन्दसि विषये 'तदर्हति' इत्येतस्मिन्नर्थे यत्प्रत्ययो भवति । ठञादीनामपवादः । उदक्या वृत्तयः । यूप्यः पलाशः । गर्त्यो देशः ॥**

**१९५३. पात्राद् घँश्च ॥ ६८ ॥ ( १७३२ )**

**पात्रशब्दाद् घन् प्रत्ययो भवति, चकाराद्यच्च, 'तदर्हति' इत्येतस्मिन्नर्थे । ठक्ठञोरपवादः । पात्रं परिमाणमप्यस्ति । पात्रमर्हति पात्रियः, पात्र्यः ॥**

**१९५४. [1]कडङ्करदक्षिणाच्छ च ॥ ६९ ॥ ( १७३३ )**

**कडङ्कर-दक्षिणाशब्दाभ्यां छः प्रत्ययो भवति, चकाराद्यच्च 'तदर्हति' इत्येतस्मिन्विषये । ठकोऽपवादः ।**

**न्यासः**

**छन्दसि च ॥** यदनुवर्तते, नानन्तरो यः; यत एव स्वरितत्वात् ॥ ६७ ॥

**पात्राद् घँश्च ॥ ठक्ठञोरपवाद इति ।** ननु च पात्रं भाजनम्, न परिमाणम्, अतस्तद्वाचिनष्ठक् प्राप्नोति, तस्यैवापवादो युक्तः, तत् किमुच्यते ठक्ठञोरपवादः ? इत्याह—**पात्रं परिमाणमप्यस्तीति ।** न केवलं भाजनमित्यपिशब्देन दर्शयति । तत्र यदा परिमाणे पात्रशब्दो वर्तते, तदा ठञोऽपवादः; यदा भाजने, तदा ठकः । पात्रम्=स्थाल्यादि । कोऽर्थः ? चाण्डालादिर्बाह्यश्च पात्रं परिमाणमर्हति । येन भुक्ते पुनर्न संस्कारेण भाजनं शुध्यति स पात्रियः, पात्र्य इति चोच्यते ॥ ६८ ॥

**कडङ्करदक्षिणाच्छ च ॥ चकाराद् यच्चेति ।** अथानन्तरस्य घनः समुच्चयः कस्मान्न भवति ? एवं

**पदमञ्जरी**

यज्ञियम्' ( तै० ब्रा० ३ ७।४।९ ) इत्याद्याः, ते दण्डादिभ्यो यविधानेऽप्युपपद्यन्ते । कथम् ? दण्डादिभ्यो यः' इत्यस्यावकाशो भाषायाम्, 'छन्दसि यत्' इत्यस्य तु दण्डादिभ्योऽन्योऽवकाशः; दण्डादिभ्यश्छन्दस्युभयप्रसङ्गे परत्वाद्यद्भविष्यति । तस्मादेते प्रयोगाः 'दण्डादिभ्यो यद्विधीयते' इत्यत्रार्थे प्रमाणत्वेन नोपन्यसनीयाः ॥ ६६॥६७ ॥

**पात्राद्घँश्च ॥ ठक्ठञोरपाद इति ।** तत्र ठकोऽपवादत्वमुपपादयति—**पात्रं परिमाणमप्यस्तीति ।** भाजनविशेषस्तु प्रसिद्ध एव, तत्र ठकोऽपवादः, परिमाणवचने तु ठञ इत्यर्थः । **पात्रिय इति ।** पात्रपरिमितं तण्डुलादिकं यः स्थाल्यादिरर्हति, सम्भवनधारणक्षमत्वात्, स एवमुच्यते । येन वा भुक्ते भोजनभाजनं संस्कारेण न शुद्धयति ॥ ६८ ॥

**कडङ्करदक्षिणाच्छ च ॥** 'कड मदे' ( धा० पा० १३८० ) कडतीति कडः, कडं करोतीत्यत एव

**भावबोधिनी**

वेदविषय में प्रातिपदिकमात्र से 'तद् अर्हति' इस अर्थ में यत् प्रत्यय होता है । यह ठञ् आदि का अपवाद है । उदा०—उदक्या वृत्तयः । [ उदकम् अर्हन्ति । ] यूप्यः पलाशः । [ यूपमर्हति । ] गर्त्यो देशः । [ गर्त्तम् अर्हति । इन उदाहरणों में 'उदक्या वृत्तयः' का अर्थ अस्पष्ट है । "ऋतुमत्यप्युदक्यापि ...।" अमर २।६।२१ के अनुसार रजस्वला स्त्री को 'उदक्या' कहते हैं । परन्तु इसके साथ 'वृत्तयः' का अन्वय कठिन है क्योंकि वृत्ति के प्रसिद्ध अर्थों को देखने पर भाव स्पष्ट नहीं होता है । ] ॥ ६७ ॥

पात्र शब्द से 'तद् अर्हति' इस अर्थ में 'घन्' प्रत्यय होता है और 'च' के कारण यत् भी होता है । यह ठक् तथा ठञ् दोनों का अपवाद हैं । पात्र यह एक परिमाणविशेष भी है । [ और भाजन अर्थ तो प्रसिद्ध ही है । ] उदा०—पात्रम् अर्हति—इस विग्रह में-पात्रियः और पात्र्यः दो रूप हैं । [पात्र+घन्=इय, भसंज्ञा अलोप, यत् में भी अलोप ] ॥६८॥

कडङ्कर और दक्षिणा—इन शब्दों से 'तद् अर्हति' इस विषय में 'छ' प्रत्यय होता है और 'च' के बल से

१. 'कडङ्कर'—इत्यपि पाठः । 'कडङ्करो बुसं क्लीबे' इत्यमरः ( २.९.२२ ) । गिरतीति गरः, कडस्य गरः इति विग्रहः ।

**कडङ्करमर्हति कडङ्करीयो गौः। कडङ्कर्यः। दक्षिणामर्हति दक्षिणीयो भिक्षुः। दक्षिण्यो ब्राह्मणः।**

**दक्षिणशब्दस्य अल्पाच्तरस्य पूर्वनिपातेन लक्षणव्यभिचारचिह्नेन यथासंख्याभावं सूचयति॥**

## १९५९. स्थालीबिलात्॥ ७०॥ (१७३४)

**छयतावनुवर्त्तेते। स्थालीबिलशब्दाच्छयतौ प्रत्ययौ भवतः 'तदर्हति' इत्येतस्मिन्नर्थे। ठकोऽपवादौ।**

**न्यासः**

मन्यते—स्वरितत्वं प्रतिज्ञातमिति, अनन्तराच्च स्वरित आसन्नतरः। स च प्रतियोगमुपतिष्ठमानो वाक्यशेष एव भवति। तस्माद् यत एव समुच्चयो युक्त इति यो गौर्निर्गुणत्वात् खलकणाद्यनर्हः स कडङ्गर्यः, कडङ्गरीय इति चोच्यते। माषादीनां खलेष्ववस्करनालकाष्ठमतिदुर्जरं बुसाद्यपि कडङ्गरमुच्यते।

अथात्र यथासंख्यं कस्मान्न भवति, अस्ति हि तस्य प्राप्तिः, प्रकृतिप्रत्ययानां साम्यात्; तथा हि द्वे प्रकृती, द्वौ प्रत्ययौ? इत्यत आह—**अल्पाच्तरस्येत्यादि**। दक्षिणशब्दस्याल्पाच्तरस्य पूर्वनिपाते प्राप्ते योऽयमिह परनिपातः स लक्षणानपेक्षतां निर्देशस्य दर्शयन् लक्षणव्यभिचारस्य चिह्नं भवति। अतस्तेन चिह्नेन यथासंख्याभावं सूचयति **सूत्रकारः**। तेन न भवति यथासंख्यम्॥ ६९॥

**स्थालीविलात्॥ छयतावनुवर्तेते** इति। ननु चानुकृष्टमुत्तरत्र नानुवर्तत इति चानुकृष्टस्य यतः पुनरिह चकारेणानुवृत्तिर्नोपपद्यते? नैष दोषः; अनित्या ह्येषा परिभाषा। कथं ज्ञायते। 'एकाजुत्तरपदे णः' इत्यत्र णे प्रकृते पुनर्णग्रहणात्। तद्धि 'वा भावकरणयोः' इत्यनुवर्त्तमानस्य विकल्पस्य निवृत्त्यर्थं क्रियते। यदि चेयं नित्या

**पदमञ्जरी**

निपातनात्खच्, कडङ्करं माषमुद्गादिकाष्ठमुच्यते। दक्षेरुत्साहकर्मणः करणे 'दुदक्षिभ्यामिनन्' (पं० उणा० २.५१) इतीनन्प्रत्ययः—दक्षिणा। **चकाराद्यच्चेति**। घँस्त्वनन्तरोऽपि न समुच्चीयते, य एव; स्वरितत्वात्। **कडङ्करीय इति**। यो बलीवर्दो दुर्जरमपि कडङ्करं जरयितुं प्रभवति स तदर्हतीत्युच्यते।

**अल्पाच्तरस्येति**॥ यद्वा— यथासंख्येऽभिप्रेते यस्माद्यदिष्टः, तं दण्डादिषु पठेत्॥ ६९॥

**स्थालीबिलात्॥ छयतावनुवर्त्तेते इति**। पूर्वसूत्रेऽपि न यच्चकारेणानुकृष्टः, तथा सति घन एव प्रसङ्गात्।

**भावबोधिनी**

'यत्' भी होता है। यह ठक् का अपवाद है। उदा०—कडङ्करम् अर्हति—इस अर्थ में (१) कडङ्करीयः, (२) कडङ्कर्यः गौः। दक्षिणाम् अर्हति—इस अर्थ में—दक्षिणीयः भिक्षुः, दक्षिण्यः ब्राह्मणः।

दक्षिणा शब्द अल्प अचोंवाला है उसके पूर्वनिपात के सूत्र का प्रयोग न करना यहाँ यथासंख्य के अभाव को सूचित करता है। [ भाव यह है कि 'छ' ओर 'यत्' दो प्रत्यय हैं और दो प्रकृतियाँ भी हैं। यदि यथासंख्य इष्ट होता तो अल्प अच्वाले 'दक्षिणा' को पहले प्रयुक्त किया गया होता। ऐसा न करना यथासंख्य के अभाव का सूचक है। ]

**विमर्श**—अनेक संस्करणों में 'कडङ्गरदक्षिणाच्छ च' ऐसा पाठ प्रकाशित है। परन्तु हरदत्त, माधव, भट्टोजिदीक्षित, तत्त्वबोधिनीकार शब्देन्दुशेखरकार और बालमनोरमाकार आदि 'कडङ्कर' का ही पाठ मानते हैं। किन्तु न्यास में 'कडङ्गर' यही पाठ माना गया है। इन्हीं के आधार पर अमरकोष का पाठ भी दोनों रूपों में हो गया है—"कडङ्करो बुसं क्लीबे। 'कडङ्गरो बुसं क्लीबे ···। अमर २।९।२२। पदमञ्जरी में 'कडङ्कर' की व्युत्पत्ति देकर माष=उड़द तथा मूंग आदि का भूसा अर्थ माना है। उसे प्राप्त कर योग्य बैल 'कडङ्करीयः, कडङ्कर्यः' कहा जाता है। जो बैल कड़े से कड़े भूसे को भी खा, पचा सकता है उसके लिए यह प्रयोग होता है। सूत्र में समाहार द्वन्द्व में नपुंसक एकवचन का प्रयोग है॥ ६९॥

'छ' तथा यत् दोनों की अनुवृत्ति होती है। 'तद् अर्हति' इस अर्थ में स्थालीबिल शब्द से 'छ' और 'यत्' ये दो प्रत्यय होते हैं। ये ठक् के अपवाद हैं। उदा०—स्थालीविलम् अर्हन्ति—इस अर्थ में स्थालीबिलीयाः, स्थालीबिल्या

स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः ॥

**१९९६. यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥ ( १७३५ )**

यज्ञशब्दाद्, ऋत्विक्शब्दाच्च यथासंख्यं घखञौ प्रत्ययौ भवतः 'तदर्हति' इत्येतस्मिन्विषये । ठकोऽपवादः । यज्ञियो ब्राह्मणः । आर्त्विजीनो ब्राह्मणः ।

❀ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ❀ ( म० भा० ५.१.७१ वा० १ )। यज्ञकर्मार्हति यज्ञियो देशः । ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राह्मणकुलम् ।

आर्हीयाणां ठगादीनां पूर्णोऽवधिः । अतः परं प्राग्वतीयष्ठञेव भवति ॥

**१९९७. पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥ ( १७३६ )**

समर्थविभक्तिरनुवर्त्तते । 'अर्हति' इति निवृत्तम् । पारायणादिभ्यो द्वितीयासमर्थेभ्यः 'वर्त्तयति'

**न्यासः**

स्यात्, पूर्वसूत्रे चानुकृष्टत्वादेव हि तस्यानुवृत्तिर्न भवति । अथ वा—चकारोऽप्यत्रानुवर्तते यतोऽनुकर्षणार्थः । तेन पूर्वत्र चानुकृष्टस्यापि तस्य पुनरिह चकारेणानुकृष्यमाणस्यानुवृत्तिर्भविष्यति । 'स्थालीबिलकडङ्गरदक्षिणाच्छ च' इत्येकयोगे कर्त्तव्ये यदिदं योगविभागकरणं तत्स्थालीबिलाद् विशेषे वर्त्तमानात् प्रत्ययो यथा स्यादित्येवमर्थम् । तेन स्थालीमुख एव वर्त्तमानः स्थालीबिलशब्दः प्रत्ययमुत्पादयति । न तु स्थालीसम्बन्धिनि च्छिद्रमात्रे वर्त्तमानः ॥ ७० ॥

**यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥ पारायणतुरायणचान्द्रायणं वर्तयति ॥** द्वितीयाप्रकरणे पुनर्द्वितीयोच्चारण-

**पदमञ्जरी**

किं तर्हि ? स्वरितत्वात् । अतो न तस्यानुवृत्तिर्दुर्लभेति भावः । **पाकयोग्या इत्यर्थ इति ।** त्रिफलीकृता इति यावत् ॥ ७० ॥

**यज्ञर्त्विग्भ्यां घखञौ ॥ यज्ञमर्हतीति ।** स पुनर्यस्य विदुषोऽर्थिनः शास्त्रेणापर्युदस्तस्य द्रव्यवतो यज्ञेऽधिकारः, स वेदितव्यः । देशस्यानैवंविधत्वाद्वचनम् ।

**यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानमिति । यज्ञकर्मार्हतीति ।** यज्ञकर्मानुष्ठानयोग्य इत्यर्थः । **ऋत्विक्कर्मार्हतीति ।** ऋत्विग्भवितुमर्हतीत्यर्थः ॥ ७१ ॥

**पारायणतुरायणचान्द्रायणं वर्तयति ॥** परायणम्=आदित आरभ्यान्तादविच्छेदेन वेदाध्ययनम्,

**भावबोधिनी**

तण्डुलाः । पकाने योग्य चावल—यह अर्थ है । यहाँ 'बिल' शब्द मुख का प्रत्यायक है । अतः बटलोई में डाल कर पकाने योग्य चावलों के लिए यह प्रयोग है । ] ॥ ७० ॥

'तद् अर्हति' इस विषय में यज्ञशब्द से और ऋत्विक् शब्द से यथासंख्येन घ तथा खञ् प्रत्यय होते हैं । ये ठक् के अपवाद हैं । उदा०—यज्ञियः ब्राह्मणः । [ यज्ञम् अर्हति—इस अर्थ में यज्ञ + घ = इय । ] आर्त्विजीनः ब्राह्मणः । [ ऋत्विजम् अर्हति —इस अर्थ में ऋत्विज् + खञ् = ईन आदिवृद्धि । ]

❀ तत्कर्म—यज्ञकर्म और ऋत्विक्कर्म के अर्ह है—इसमें भी यज्ञ और ऋत्विक् से उपसंख्यान करना चाहिए ।❀ उदा०—यज्ञकर्म अर्हति—इस अर्थ में 'यज्ञियः देशः' ( यज्ञ करने योग्य स्थान )। ऋत्विक्कर्म अर्हति—इस अर्थ में आर्त्विजीनं ब्राह्मणकुलम् । [ ऋत्विज् + खञ्, आदिवृद्धि, रपर, ख = ईन करने पर बनता है । ऋत्विक्कर्म के योग्य = ऋत्विक् होने योग्य ब्राह्मणकुल । ]

आर्हीय ठक् आदि प्रत्ययों की अवधि पूरी हो गई । इसके आगे 'वति' प्रत्यय से पहले ठञ् प्रत्यय ही होता है ॥७१॥

[ द्वितीया ] समर्थ विभक्ति की अनुवृत्ति होती है । 'अर्हति' इसकी निवृत्ति हो जाती है । द्वितीया समर्थ

**इत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति। पारायणं वर्त्तयत्यधीते पारायणिकश्छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी ॥**

**१९५८. संशयमापन्नः ॥ ७३ ॥ ( १७३७ )**

**संशयशब्दाद् द्वितीयासमर्थाद् 'आपन्नः' इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। संशयमापन्नः प्राप्तः सांशयिकः स्थाणुः ॥**

**न्यासः**

मिष्टविषये द्वितीयान्ताद् यथा स्यादित्येवमर्थम्। तेन यद्यपि पारायणं गुरुणा शिष्येण च गम्यते तथापि शिष्य एव प्रत्ययो भवति, न गुरौ। तथा तुरायणो यागो यद्यपि यजमानेन याजकैश्च वर्त्यते तथापि यजमान एव प्रत्ययो भवति, न याजके ॥ ७२ ॥

**संशयमापन्नः** ॥ अत्रापि द्वितीयाप्रकरणे पुनर्द्वितीयोच्चारणमिष्टविषये द्वितीयान्ताद् यथा स्यादित्येवमर्थम्। तेन यद्यपि द्वे अपि कर्तृकर्मणी संशयमापन्ने, तथापि यद्विषयः संशय उत्पद्यते तत्रैव कर्मणि स्थाण्वादौ प्रत्ययो भवति, न तु संशयस्य कर्त्तरि पुरुषे; अनभिधानात् ॥ ७३ ॥

**पदमञ्जरी**

तुरायणम्=संवत्सरसाध्यो हविर्यज्ञविशेषः, चान्द्रायणम्=तपोविशेषः, वर्तनम्=निष्पादनम्। तत्र पारायणं गुरुणा शिष्येण च निर्वर्त्यते; अन्यतरासन्निधावध्ययनक्रियाया अनिष्पादनात्; शिष्य एव त्विष्यते। तथा तुरायणमुभौ वर्तयतः—ऋत्विग्यजमानश्च; ऋत्विक् चरुपुरोडाशादि निर्वर्त्तयति, यजमानो देवतोद्देशेन द्रव्यं त्यजति; यजमान एव त्विष्यते। उभयत्र कस्मान्न भवति? अनभिधानात् ॥ ७२ ॥

**संशयमापन्नः** ॥ **सांशयिकः स्थाणुरिति।** स्थाणुर्वा पुरुषो वेत्येवंरूपस्य संशयस्य विषय इत्यर्थः। अनेनैतद्दर्शयति—यद्यपि द्वे अपि कर्तृकर्मणी संशयमापन्ने, तथापि यद्विषयकः संशयस्तत्रैव प्रत्ययो भवति, न कर्तरि पुरुषे; अनभिधानादिति ॥ ७३ ॥

**भावबोधिनी**

पारायणादि शब्दों से 'वर्तयति' इस अर्थ में ठञ् प्रत्यय होता है। उदा०—पारायणं वर्त्तयति=अधीते—इस अर्थ में "पारायणिकः छात्र।" [ आदि से लेकर अन्त तक वेद का अध्ययन=पारायण है। उसे करने वाला छात्र—पारायण+ठञ्=इक, आदिवृद्धि, भसंज्ञा, अलोप। यह प्रयोग केवल छात्र के लिए ही होता है, गुरु के लिए नहीं। ] तौरायणिकः। [ तुरायण=एक वर्ष में सम्पन्न होने वाला हविर्यज्ञविशेष है। तुरायणं वर्त्तयति=सम्पादयति—इस अर्थ में पूर्ववत् ठञ् आदि होते हैं। तुरायण यज्ञ करने वाला यजमान। यह ऋत्विक् के लिए नहीं होता है। ] चान्द्रायणिकः तपस्वी। [ चान्द्रायणम्=तपोविशेषः तं वर्तयति=सम्पादयति—इस अर्थ में यह प्रयोग है। इस व्रत में पन्द्रह ग्रासों का क्रमशः ह्रास और वृद्धि की जाती है। पूर्णिमा के आगे प्रतिदिन एक-एक ग्रास कम किया जाता है और अमावस्या के दिन कुछ भी नहीं लिया जाता है। पुनः प्रतिपदा से एक-एक ग्रास बढ़ाया जाता है और पूर्णिमा को पन्द्रह ग्रास लिए जाते हैं। ] ॥ ७२ ॥

द्वितीया समर्थ 'संशय' शब्द से 'आपन्नः' (=प्राप्त किया)—इस अर्थ में 'ठञ्' प्रत्यय होता है। उदा०—संशयम् आपन्नः=इस अर्थ में 'सांशयिक स्थाणुः।" [ यहाँ 'आपन्नः' शब्द में कर्ता अर्थ में 'क्त' प्रत्यय है। अतः 'विषयतया संशयम् आपन्नः' यह अर्थ है। जो खम्भा या सूखा वृक्ष अंधेरे में देखने पर किसी पशुविशेष या व्यक्तिविशेष के रूप में भ्रमात्मक प्रतीत होने लगता है' उसके लिए यह प्रयोग है। ] ॥ ७३ ॥

**१९५९. योजनं गच्छति ॥ ७४ ॥ ( १७३८ )**

**योजनशब्दाद् द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। योजनं गच्छति यौजनिकः ॥**

**❀ क्रोशशत-योजनशतयोरुपसंख्यानम् ❀ ( म० भा० ५.१.७४ वा० १ )। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः।**

**❀ ततोऽभिगमनमर्हतीति च क्रोशशत-योजनशतयोरुपसंख्यानम् ❀ ( वा० २ )। क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः। यौजनशतिक आचार्यः ॥**

**१९६०. पथः ष्कन् ॥ ७५ ॥ ( १७३९ )**

**पथिन्शब्दाद् द्वितीयासमर्थाद् 'गच्छति' इत्येतस्मिन्नर्थे ष्कन्प्रत्ययो भवति। नकारः स्वरार्थः। षकारो ङीषर्थः। पन्थानं गच्छति पथिकः। पथिकी ॥**

### न्यासः

**योजनं गच्छति ॥ क्रोशशतयोजनशतयोरुपसंख्यानमिति।** उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तथा ततोऽभिगमनमर्हतीति चेत्यादावपि वाक्ये। तत्रेदं प्रतिपादनम्—इह द्वितीयाधिकारे पुनर्द्वितीयोच्चारणमधिकं तु कुर्वतैतत् सूचितम्—अन्यदप्यत्र किञ्चिदधिकं भवति। तेन सर्वमेतद् गदितं कार्यमुपपन्नं भवति ॥ ७४ ॥

### पदमञ्जरी

**योजनं गच्छति ॥ क्रोशशतयोजनशतयोरिति।** गुणेन नेति प्रतिषेधः संख्याया न भवति; अत एव निर्देशात्, 'शतसहस्रान्ताच्च निष्कात्' इति वचनाच्च।

**ततोऽभिगमनमिति** ॥ अत्र पञ्चम्यन्तात्प्रत्ययः ॥ ७४ ॥ ७५ ॥

### भावबोधिनी

द्वितीयासमर्थ 'योजन' शब्द से 'गच्छति' इस अर्थ में 'ठञ्' प्रत्यय होता है। उदा०—योजनं गच्छति—इस अर्थ में यौजनिकः। [ योजन + ठञ् = ठ = इक, आदिवृद्धि। योजन = चार कोस तक जाने वाला। ]

❀ द्वितीया समर्थ क्रोशशत तथा योजनशत—इन शब्दों से 'गच्छति' अर्थ में ठञ् कहना चाहिए। ❀ उदा०—क्रोशशतं गच्छति—इस अर्थ में क्रौशशतिकः। [ सौ कोस तक जाने वाला। ] यौजनशतिकः। [ योजनशतं गच्छति—इस अर्थ में पूर्ववत् ठक्, ठञ् आदि होते हैं। हजार योजन = चार हजार कोश तक जाने वाला।

❀ वहाँ से भी आगे जाने में समर्थ है—इस अर्थ में भी 'क्रोशशत' और 'योजनशत' शब्दों से ठञ् का उपसंख्यान करना चाहिए। ❀ उदा०—क्रोशशताद् अभिगमनम् अर्हति—इस विग्रह में—क्रौशशतिकः भिक्षुः। यौजनशतिकः आचार्यः। [ सौ कोश से भी आगे जाने वाला भिक्षु। हजार कोश से भी आगे जाने वाला आचार्य। ]

**विमर्श**—क्रोशशतात् अभिगमनम् अर्हति—यहाँ अपादान में पञ्चमी है ऐसा साधारणतया प्रतीत होता है। परन्तु भाव पूरा स्पष्ट नहीं होता है। अतः बालमनोरमाकार के अनुसार 'ल्यब्लोपे कर्मण्यधिकरणे च' से पञ्चमी समझनी चाहिए—क्रोशशतम् अतीत्य अभिगमनमर्हति – सौ कोस दूरी पार करके भी आगे जाने वाला भिक्षु। इसी प्रकार सौ योजन की दूरी पार करके भी आगे जाने वाला आचार्य—ये अर्थ हैं ॥ ७४ ॥

द्वितीया समर्थ पथिन् शब्द से 'गच्छति' इस अर्थ में 'ष्कन्' प्रत्यय होता है। इसमें नकार अनुबन्ध [ स्वरित ] स्वर के लिए है। षकार [ स्त्री लिङ्ग में ] ङीष् करने के लिए है। उदा०—पन्थानं गच्छति—इस अर्थ में पथिकः। पथिकी। [ पथिन् + ष्कन् = क, न् लोप। षित् होने से ङीष्। ] ॥ ७५ ॥

**१९६१. पन्थो ण नित्यम् ॥ ७६ ॥ ( १७४० )**

**नित्यग्रहणं प्रत्ययार्थविशेषणम् । पथः पन्थ इत्ययमादेशो भवति, भवति णश्च प्रत्ययः, 'नित्यं गच्छति' इत्येतस्मिन्विषये । पन्थानं नित्यं गच्छति पान्थो भिक्षां याचते ।**

**नित्यमिति किम् ? पथिकः ॥**

**१९६२. उत्तरपथेनाहृतं च ॥ ७७ ॥ ( १७४१ )**

**निर्देशादेव समर्थविभक्तिः । उत्तरपथशब्दात्तृतीयासमर्थाद् 'आहृतम्' इत्येतस्मिन्विषये ठञ् प्रत्ययो भवति । चकारः प्रत्ययार्थसमुच्चये, गच्छतीति च । अत्रापि तृतीयैव समर्थविभक्तिः । उत्तरपथेनाहृतम् औत्तरपथिकम् । उत्तरपथेन गच्छति औत्तरपथिकः ।**

**न्यासः**

**पथः ष्कन् ॥ ७५ ॥ पन्थो ण नित्यम् ॥ नित्यग्रहणमित्यादि ।** अथ वाक्यनिवृत्त्यर्थं कस्मान्न भवति ? पन्थशब्दस्य वाक्यासमवायित्वात् । स हि प्रत्ययसन्नियोगेन विधीयते, न वाक्येन समवैति । ननु च पथिन्शब्देन वाक्यं मा भूदित्येवमर्थं नित्यग्रहणं स्यात् ? नैतदस्ति; यदि तदेवमर्थं स्यात् पूर्वसूत्र एव कृतं स्याद्—यत्र पथिन्शब्दः श्रूयते । इह तु करणे प्रत्ययार्थविशेषणं विज्ञायते ॥ ७६ ॥

**उत्तरपथेनाहृतञ्च ॥ चकारः प्रत्ययार्थ इति ।** प्रत्ययार्थसमीपे श्रूयमाणत्वात् । गच्छतीत्यत्र पूर्वं द्वितीयान्तात् प्रत्यय उत्पन्नः । तदिहापि तत एव प्रत्ययेन भवितव्यमिति भ्रान्तिः स्यात् । अतस्तां निराकर्तुमाह—**अत्रापीत्यादि ।** चकारो ह्यर्थात् परः श्रूयमाणोऽत्रार्थमात्रस्यैव गच्छतीत्यस्यानुकर्षकः प्रतीयते, न तु विभक्तेरपि; सम्बन्धाभावात् । तस्मात् स इहानुवृत्तः सन्निहितया समर्थविभक्त्या सम्बध्यमानस्तृतीयासमर्थादेव प्रत्ययमुत्पादयतीति भावः ।

**पदमञ्जरी**

**पन्थो ण नित्यम् । नित्यग्रहणं प्रत्ययार्थविशेषणमिति ।** वाक्यनिवृत्त्यर्थं तु न भवति; पन्थादेशो हि प्रत्ययसन्नियोगेन विधीयमानो नैव वाक्ये सम्भवति; पथिन्शब्देन तु वाक्येऽनभिप्रेते पूर्वसूत्र एव नित्यग्रहणं कुर्यात् । यत्र पथिन्शब्दः श्रूयते, प्रत्ययान्तरनिवृत्त्यर्थमपि न भवति; पथः कनो विधानसामर्थ्यात्, प्रत्ययान्तरस्य प्राप्त्यभावात् । **पन्थानं नित्यं गच्छतीति ।** नन्वयमर्थो न सम्भवति, विश्रमस्यावश्यम्भावित्वात्; सम्भवतु वा कथञ्चिदादित्यादौ, तथापि न तत्रैवेष्यते, उदाहृतं हि—पान्थो भिक्षां याचते इति ? तस्मादाभीक्ष्ण्यम् = नित्यम्, परित्यागाभावो वा ॥ ७६ ॥

**उत्तरपथेनाहृतं च ॥ चकारः प्रत्ययार्थसमुच्चय इति ।** प्रत्ययार्थमात्रसमुच्चये, न तु समर्थविभक्तियुक्तस्य वाक्यार्थस्येत्यर्थः, 'तस्य व्याख्यान इति च' इतिवद् वाक्यार्थपरामर्शिन इतिशब्दस्याभावादिति भावः । तेन किं सिद्धं भवति ? इत्याह—**अत्रापीति ।** द्वितीयपक्षे चाक्रान्तेऽनाक्रान्ते च प्रकृत्यर्थे प्रत्ययः स्यात्, आक्रान्त एव तु भवति ।

**भावबोधिनी**

नित्यग्रहण प्रत्ययार्थ [ = गमन ] का विशेषण है । 'नित्यं गच्छति' इस विषय में 'पथिन् का पन्थ' यह आदेश होता है और 'ण' प्रत्यय होता है । उदा०—पन्थानं नित्यं गच्छति—इस अर्थ में—पान्थः भिक्षां याचते । [ पथिन् + ण = अ, पन्थ आदेश, आदिवृद्धि । सदा रास्ते पर चलने वाला भिखारी भीख माँगता है, यह अर्थ है । ]

नित्य = सदैव—इसके ग्रहण का क्या फल है ? पथिकः । [ जो कभी-कभी मार्ग पर चलता है उसे पथिक और जो सदा घूमता रहता है उसे 'पान्थ' कहा जाता है । इसी भेद के लिए 'नित्यम्' का ग्रहण है । ] ॥ ७६ ॥

[ सूत्रस्थ ] निर्देश से ही तृतीया समर्थ विभक्ति है । तृतीयासमर्थ उत्तरपथ शब्द से 'आहृत' ( लाया गया )—इस विषय में ठञ् प्रत्यय होता है और चकार प्रत्ययार्थ ( = गमन ) के समुच्चय में है, अतः गमन अर्थ में भी होता है ।

**॥ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् ॥** ( म० भा० ५.१.७७ वा० १ )

**वारिपथेनाहृतं वारिपथिकम्। वारिपथेन गच्छति वारिपथिकः। जङ्गलपथेनाहृतं जाङ्गलपथिकम्। जङ्गलपथेन गच्छति जाङ्गलपथिकः। स्थलपथेनाहृतं स्थालपथिकम्। स्थलपथेन गच्छति स्थालपथिकः। कान्तारपथेनाहृतं कान्तारपथिकम्। कान्तारपथेन गच्छति कान्तारपथिकः।**

**॥ अजपथशंकुपथाभ्यां चोपसंख्यानम् ॥** ( वा० २ )। **अजपथेनाहृतं गच्छति वा आजपथिकः। शंकुपथेनाहृतं गच्छति वा शांकुपथिकः।**

**॥ मधुकमरिचयोरण् स्थलात् ॥** ( वा० ३ )। **स्थलपथेनाहृतं स्थालपथं मधुकम्। स्थालपथं मरिचम् ॥**

### न्यासः

**वारिजङ्गलेत्यादि**। वार्यादयः पूर्वपदं यस्य तत् तथोक्तम्। एतयोरेवार्थयोरुपसंख्यानम्।

**मवुमकरिचयोरित्यादि**। मधुकमरिचयोरभिधेययोः स्थलात् परो यः पथिन्शब्दः, तदन्तादाहृते वक्तव्यः ॥ ७७ ॥

### पदमञ्जरी

**वारिजङ्गलेत्यादि**। वार्यादीनि पूर्वपदानि यस्मिन्प्रातिपदिके तस्मात्पथिन्शब्दान्तादित्यर्थः।

**अजपथशंकुपथाभ्यां चेति**। पूर्वस्मिन्नेव वाक्येऽजशंकुशब्दौ, तथा तु न कृतमित्येव।

**मधुमरिचयोरण् स्थलादिति**। स्थलशब्दोत्तरो यः पथिन्-शब्दः, तदन्तान्मधुमरिचयोरभिधेययोरण् भवति। **स्थलपथेनाहृतमिति**। गच्छत्यर्थे तु प्रत्ययो न दर्शितः; मुख्यगमनासम्भवात्। **स्थालपथं मधुकमिति**। मधुमरिचयोरन्यतरनिर्णयायानुप्रयोगो न विरुद्धः ॥ ७७ ॥

### भावबोधिनी

इसमें भी तृतीया ही समर्थविभक्ति है। उदा०—उत्तरपथेन आहृतम्—इस विग्रह में औत्तरपथिकम्। [ उत्तरपथ से लाई गई वस्तु। ] उत्तरपथेन गच्छति—इस अर्थ में—औत्तरपथिकः। [ उत्तर पथ से जाने वाला ]।

॥ आहृत—इसके प्रकरण में वारि, जङ्गल, स्थल, कान्तार—ये शब्द जिसके पूर्व में हैं, ऐसे तृतीयान्त पथिन् शब्द से भी ठञ् प्रत्यय का उपसंख्यान करना चाहिए। ॥ उदा०—वारिपथेन आहृतम्—इस विग्रह में वारिपथिकम्। और वारिपथेन गच्छति—इस विग्रह में वारिपथिकः। जङ्गलपथेन आहृतम्—इसमें जाङ्गलपथिकम्। जङ्गलपथेन गच्छति इस अर्थ में—जाङ्गलपथिकः। स्थलपथेन आहृतम्—इस विग्रह में—स्थलपथिकम्। स्थलपथेन गच्छति—इस विग्रह में स्थालपथिकः। कान्तारपथेनाहृतम्—इस विग्रह में कान्तारपथिकम्। कान्तारपथेन गच्छति—इस अर्थ में कान्तारपथिकः। [ वारि=जल, जङ्गल=वन, स्थल=भूमि, कान्तार=गहन वन—इनके मार्ग से लाई गई वस्तु के लिए और इनके मार्ग से जाने वाले पुरुषादि के लिए इनका प्रयोग होता है। इन सभी में ठञ्=इक प्रत्यय, आदिवृद्धि, भ संज्ञा, अलोप होता है। ]

॥ अजपथ और शङ्कुपथ—इनसे भी उक्त दोनों अर्थों में प्रत्यय का उपसंख्यान करना चाहिए। ॥ उदा०—अजपथेन आहृतम्, अजपथेन वा गच्छति—इन विग्रहों में—आजपथिकः। शङ्कुपथेन आहृतम्, शङ्कुपथेन गच्छति वा—इस विग्रह में—शाङ्कुपथिकः [ इस वार्तिक का पूर्व वार्तिक में ही समावेश सम्भव होने पर अलग से बनाने का औचित्य स्पष्ट नहीं है। ]

॥ मधुक और मरिच इन अर्थों में स्थलशब्दोतरवर्ती पथिन् से अण् होता है। ॥ उदा०—[ स्थलपथेन आहृतम्—इस विग्रह में ] स्थालपथम् मधुकम्, स्थालपथं मारीचम्। [ इसमें गमन अर्थ नहीं सम्बद्ध होता है। स्थलमार्ग से लाया गया मधुक=मुलहठी और मरिच। ] ॥ ७७ ॥

**१९६३. कालात् ॥ ७८ ॥ ( १७४२ )**

**'कालात्' इत्यधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः कालादित्येवं तद्वेदितव्यम्। वक्ष्यति—'तेन निर्वृत्तम्' (५.१.७९)। मासेन निर्वृत्तं मासिकम्। आर्द्धमासिकम्। सांवत्सरिकम्'।**

**'कालात्' इत्यधिकारः 'व्युष्टादिभ्योऽण्' ( ५.१.९७ ) इति यावत्॥**

**१९६४. तेन निर्वृत्तम् ॥ ७९ ॥ ( १७४३ )**

**'तेन' इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'निर्वृत्तम्' इत्यस्मिन्नर्थे ठञ् प्रत्ययो भवति। अह्ना निर्वृत्तम् आह्निकम्। आर्द्धमासिकम्। सांवत्सरिकम्॥**

**१९६५. तमधीष्टो भृतो भूतो भावी ॥ ८० ॥ ( १७४४ )**

**'तम्' इति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'अधीष्टो भृतो भूतो वा भावी' इत्यस्मिन्नर्थे**

**न्यासः**

**कालात्** ॥ कालादिति स्वरूपग्रहणं न भवति, कुतः? पृथगस्य योगस्यारम्भात्। कालशब्दस्यापि यदि स्वरूपग्रहणमभीष्टं स्यादिमं पृथग्योगमकृत्वोत्तरसूत्रे कालशब्दादेव तृतीयामुच्चारयेत्—कालेन निर्वृत्तमिति। एवं हि निर्देशादेव तृतीयासमर्थात् प्रत्ययो विज्ञायते। उत्तरसूत्रे च कालशब्दः स्वरितत्वादनुवर्तिष्यत इति सिद्धमिष्टम्। अतो न कर्त्तव्य एवायं पृथग् योगः। स एव क्रियतेऽर्थग्रहणं तदिति दर्शयितुम्॥ ७८॥

**तेन निर्वृत्तम्** ॥ **आह्निक इति**। 'अल्लोपोऽनः' इत्यकारलोपः। टिलोपस्तु 'अह्नष्टखोरेव' इति नियमादिह न भवति॥ ७९॥

**तमधीष्टो भृतो भूतो भावी** ॥ 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। **तमधीष्ट इत्यादौ** कर्मणि द्वितीया

**पदमञ्जरी**

**कालात्** ॥ स्वरूपग्रहणमिह न भवति, 'तमधीष्टो भृतो भूतो भावी' इत्यत्यन्तसंयोगे द्वितीयानिर्देशात् 'मासाद्वयसि' इत्यादौ मासादीनां कालग्रहणेन विशेषणाच्च॥ ७८॥

**तेन निर्वृत्तम्** ॥ तेनेति करणे तृतीया। निवृत्तम् = निष्पादितम्। अन्तर्भावितण्यर्थे वृत्तिः॥ ७९॥

**तमधीष्टो भृतो भूतो भावी** ॥ **भावीति तादृश एवानागत इति**। स्वसत्तया व्याप्यमानकाल इत्यर्थः।

**भावबोधिनी**

'कालात्' ( कालवाचक से )—इसका अधिकार है। इसके आगे जिन्हें कहा जायगा उन्हें 'कालवाचक' से, ऐसा समझना चाहिए। आगे कहा जायगा 'तेन निर्वृत्तम्' ( ५।१।७९ ) उदा०—मासेन निर्वृत्तम्—इस अर्थ में मासिकम्। अर्धमासेन निर्वृत्तम्—इसमें आर्धमासिकम्। संवत्सरेण निर्वृत्तम्—इसमें सांवत्सरिकम्। [ इनकी व्युत्पत्ति अग्रिम सूत्र में दी जायगी। ]

"व्युष्टादिभ्योऽण्" ( ५।१।९७ ) सूत्र तक 'कालात्' (=कालवाचक से )—इसका अधिकार है॥ ७८॥

'तेन' ( उसके द्वारा ) इस तृतीया समर्थ कालवाचक प्रातिपदिक से 'निर्वृतम्' (=बनाया हुआ )—इस अर्थ में ठञ् प्रत्यय होता है। उदा०—अह्ना निर्वृत्तम्—इस विग्रह में—आह्निकम्। [ अहन् + ठञ् = इक, आदिवृद्धि, "अल्लोपोऽनः" सूत्र से उपधा अकार का लोप। आर्द्धमासिकम्। [ अर्द्धमासेन निर्वृत्तम् यह विग्रह है। ] सांवत्सरिकम्। [ संवत्सरेण निर्वृत्तम् ]।

**विमर्श**—'तेन निर्वृतम्' यहाँ करण अर्थ में तृतीया है और अन्तर्भावितण्यर्थ की प्रतीति होने से निर्वृत्त का अर्थ 'निष्पादित' है। जो कार्य एक दिन से सम्पादित हो जाता है उसे 'आह्निकम्' कहा जाता है। इसी प्रकार सर्वत्र समझना चाहिए। इसमें भूतकाल विवक्षित नहीं है। व्याकरण भाष्य में 'आह्निक' का इसी अर्थ में प्रयोग है॥ ७९॥

'तम्' ( उसे ) इस द्वितीया समर्थ कालवाची प्रातिपदिक से (१) अधीष्ट, (२) भृत, (३) भूत और (४) भावी—

**यथाविहितं प्रत्ययो भवति । अधीष्टः = सत्कृत्य व्यापारितः । भृतः = वेतनेन क्रीतः । भूतः = स्वसत्तया व्याप्तकालः । भावी = तादृश एवानागतः । 'कालाध्वनोरत्यन्तसंयोगे' ( २.३.५ ) इति द्वितीया । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः ।**

**ननु चाध्येषणं भरणं च मूहूर्तं क्रियते, तेन कथं मासो व्याप्यते ? अध्येषणभरणे क्रियार्थे, तत्र फलभूतया क्रियया मासो व्याप्यमानस्ताभ्यामेव व्याप्त इत्युच्यते ॥**

## १९६६. मासाद्वयसि यत्खञौ ॥ ८१ ॥ ( १७४५ )

**मासशब्दाद्वयस्यभिधेये यत्खञौ प्रत्ययौ भवतः । ठञोऽपवादः । अधीष्टादीनां चतुर्णामधिकारेऽपि**

**न्यासः**

नोपपद्यते; अध्येष्यमाणादि हि पुरुषादिकर्मानयानिष्टयाभिहितम्, न चान्या क्रियास्ति यस्यां मासादि कर्म स्यात् ।

**ननु चेत्यादिना**, यदुक्तम्—'कालाध्वनोरत्यन्तसंयोगे' द्वितीयेति, तद्विघटयति । तेन कथं मासो व्याप्यत इति ? न कथञ्चित् । विघटत इत्यर्थः । यद्धि मुहूर्त्तं क्रियते, तेन मुहूर्त्तेन मासैकदेशो व्याप्यते, न तु सकलो मासः । **क्रियार्थं इति** । अध्ययनादिक्रियार्थे । तदर्थं हि ते क्रियेते । **फलभूतया क्रिययेति** । अध्ययनादिकया । **ताभ्यामेव व्याप्त इत्युच्यत इति** । तदन्यव्यापारस्य तत्रोपचारात् । यथा 'चौरेण ग्रामो दग्धः' इत्युक्ते न चौरेण ग्रामो दह्यते, अपि तु तदाहृतेनाग्निना । उपचारेण तु तथा व्यपदेशः ॥ ८० ॥

**मासाद् वयसि यत्खञौ ॥ सामर्थ्याद् भूत एवात्राभिसम्बध्यत इति** । वयसि भूतार्थस्यैव सम्भवादिति

**पदमञ्जरी**

**ननु चेति** । यद्यपि क्वचित्कदाचिन्मासमप्यध्येषणं भरणं च क्रियते, तथापि यावन्तं कालं क्रियते, न तावतः प्रत्यय इष्यते, अपि तु फलभूतक्रियाव्याप्यकालादिष्यते । स चाध्येषणभरणाभ्यामव्याप्त इति द्वितीयानुपपत्तिरिति भावः । **अध्येषणभरणे क्रियार्थे इति** । अध्यापनादिक्रियार्थं हि तयोः करणम् । **फलभूतया क्रिययेति** । अध्यापनादिकया ।

**ताभ्यामेव व्याप्त इत्युच्यत इति** । यथा चौरैराहृतेनाग्निना दग्धे ग्रामे वक्तारो भवन्ति—चौरैर्दग्धो ग्राम इति ॥ ८० ॥

**मासाद्वयसि यत्खञौ ॥ वयस्यभिधेय इति** । प्रत्ययार्थस्य तस्य विशेषणं वयः, तत्र विशिष्टाभिधाने

**भावबोधिनी**

इन अर्थों में यथाविहित प्रत्यय होते हैं । (१) अधीष्ट = सत्कारपूर्वक किसी काम में लगाया गया । (२) भृत = वेतन से खरीदा गया । (३) भूत = अपनी सत्ता से काल को व्याप्त कर चुकने वाला । (४) भावी = उसी प्रकार का अर्थात् अपनी सत्ता से काल को भविष्य में व्याप्त करने वाला । "काल तथा अध्वा के वाचक से अत्यन्त संयोग में द्वितीया होती है" ( पा० सू० ) से 'तम्' में द्वितीया है । (१) उदा०— मासम् अधीष्टः—इस विग्रह में—मासिकः अध्यापकः । [ महीना भर के लिए सत्कारपूर्वक लगाया गया अध्यापक = मासिकः ] (२) मासं भृतः—इस विग्रह में—मासिकः कर्मकरः । [ एक महीने के लिए वेतन पर रखा गया बन्धुआ नौकर । ] (३) मासं भूतः—इस अर्थ में मासिकः व्याधिः । [ एक महीना तक रह चुकी व्याधि ] । (४) मासं भावी—इस अर्थ में— मासिकः उत्सवः [ एक महीना तक होने = चलने वाला उत्सव ] ।

प्रश्न— अध्येषण ( सत्कारपूर्वक कार्य करना ) और भरण ( = सेवा करना ) तो मुहूर्त = कुछ क्षणों तक ही किये जाते हैं तो फिर उनसे महीना कैसे व्याप्त होता है ? अध्येषण और भरण तो क्रिया के लिए हैं, उनमें फलभूता क्रिया द्वारा व्याप्त किया जाने वाला महीना उन ( अध्येषण और भरण ) से ही व्याप्त मान लिया जाता है । [ भाव यह है कि चौरैः ग्रामः दग्धः = चोरों ने गाँव जला डाला— ऐसा व्यवहार होता है जब कि चोरों द्वारा लाई गई आग से गाँव जला है, यह वास्तविकता है । उसी प्रकार यहाँ भी औपचारिक प्रयोग है ] ॥ ८० ॥

वयस् = अवस्था अभिधेय रहने पर 'मास' शब्द से 'यत्' और 'खञ्' प्रत्यय होते हैं । ये ठञ् के अपवाद हैं ।

**सामर्थ्याद् 'भूतः' इत्येवाभिसम्बध्यते। मासं भूतो मास्यः, मासीनः।**
**वयसीति किम्? मासिकम्॥**

**१९६७. द्विगोर्यप्॥ ८२॥ ( १७४६ )**

**'मासाद्वयसि' इति वर्तते। मासान्ताद् द्विगोर्यप् प्रत्ययो भवति वयस्यभिधेये। द्वौ मासौ भूतः द्विमास्यः। त्रिमास्यः॥**

**१९६८. षण्मासाण्ण्यच्च॥ ८३॥ ( १७४७ )**

**'वयसि' इत्येव। षण्मासशब्दाद्वयस्यभिधेये ण्यत्प्रत्ययो भवति, यप् च। औत्सर्गिकष्ठञपीष्यते, स**

**न्यासः**

भावः। भाव्यर्थोऽपि तत्र सम्भवतीति चिन्त्यमेतत्। अथ तु नेष्यते, पुनरभिधानं शरणमाश्रयितव्यम्। खञो ञित्करणं स्वरार्थम्, वृद्ध्यर्थञ्च। ननु च वृद्ध एव मासशब्दः? सत्यं वृद्धोऽयम्; तथापि वृद्धस्यापि वृद्धिरेषितव्या। मासीनाभार्य इति 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात्॥ ८१॥

**द्विगोर्यप्॥** प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति तदन्तविधेरभ्यनुज्ञानाद् द्विगोरपि मासान्तात् पूर्वेण यत्खञोरेव प्राप्तयोरयमारभ्यते। यपः पित्करणमनुदात्तार्थम्, अन्यथा मासशब्दान्तात् प्रत्यये विहिते सति शिष्टत्वाद् 'इगन्तकाल' इति द्विगावेवेति स्वरबाधनात् प्रत्ययस्वरः स्यात्, ततश्च वर्ज्यमानस्वरेणानुदात्तादि स्यात्। प्रत्ययेऽनुदात्तार्थे पिति 'इगन्त' इति पूर्वपदप्रकृतिस्वरः सिद्धो भवति॥ ८२॥

**षण्मासाण्ण्यच्च॥** षण्मासशब्दो द्विगुः। तस्मात् पूर्वेण यपि प्राप्ते वचनम्। **स चकारेण समुच्चेतव्य इति।**

**पदमञ्जरी**

विशेषणभूतं वयोऽप्यभिधेयमिति भावः। **सामर्थ्यादिति।** न हि मासमधीष्टो भृतो वेत्युक्ते काचित्कालकृता शरीरावस्था गम्यते; भाविन्यपि नाञ्जसा गम्यते। जातः कुमारो मासं भावीत्यत्रापि पूर्णे मासे याऽवस्था सैव वयः, ततश्च तत्रापि भूत एव मासो वयःप्रतीतेर्हेतुरित्येतत्सामर्थ्यम्। खञो ञित्करणं स्वरार्थम्, पुंवद्भावप्रतिषेधार्थं च— मासीनाभार्यः॥ ८१॥

**द्विगोर्यप्॥** प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब्विधीयते। यपः पित्त्वादनुदात्तत्वम्, तेन कालान्ते द्विगाविति पूर्वपदप्रकृतिस्वर एवावतिष्ठते॥ ८२॥

**षण्मासाण्ण्यच्च॥ औत्सर्गिकोऽपि ठञिष्यते इति।** स कथमिष्यमाणोऽपि लभ्य इत्याह—**स इति।**

**भावबोधिनी**

यहाँ अधीष्ट आदि चारों का अधिकार रहने पर भी सामर्थ्य (औचित्य) के कारण केवल 'भूत' अर्थ का ही सम्बन्ध होता है। उदा—मासं भूतः- इस अर्थ में—मास्यः, मासीनः शिशुः। [एक महीना का बच्चा।] [अतः मासिकः शिशुः आदि प्रयोग चिन्तनीय हैं।]

वयः (—शरीर की कालकृत अवस्था-विशेष की प्रतीति रहने पर)—इसका क्या फल है? मासिकं कृत्यम्। [यहाँ उक्त प्रत्यय न होकर सामान्य ठञ् प्रत्यय ही होता है]॥ ८१॥

'मासाद् वयसि' (अवस्था अर्थ में मास शब्द से)—इसको अनुवृत्ति होती है। उदा०—द्वौ मासौ भूतः—[इस अर्थ में पहले द्विगु करके द्विमास+यप्=य] द्विमास्यः। त्रिमास्यः। [पित् प्रत्यय होने से अनुदात्त हो जाता है]॥ ८२॥

'वयसि' (अवस्था में ही)—इसकी अनुवृत्ति होती है। वय अर्थ प्रतीत रहने पर 'षण्मास' शब्द से ण्यत् प्रत्यय होता है और 'च' के बल से 'यप्' भी होता है। औत्सर्गिक ठञ् प्रत्यय भी इष्ट है, यह भी 'च' के बल से ही समुच्चित करना चाहिए। स्वरितत्व प्रतिज्ञा के कारण अव्यवहित भी ठञ् समुच्चित हो जाता है। इस कारण तीन रूप होते हैं—

**चकारेण समुच्चेतव्यः। स्वरितत्वाच्चानन्तरोऽनुवर्त्तिष्यते। तेन त्रैरूप्यं भवति—षाण्मास्यः, षण्मास्यः, षाण्मासिकः॥**

## १९६९. अवयसि ठँश्च॥ ८४॥ ( १७४८ )

**षण्मासशब्दादवयस्यभिधेये ठन् प्रत्ययो भवति। चकारेणानन्तरस्य ण्यस्य समुच्चयः क्रियते। षण्मासिको रोगः। षाण्मास्यः॥**

## १९७०. समायाः खः॥ ८५॥ ( १७४९ )

**अधीष्टादयश्चत्वारोऽर्था अनुवर्तन्ते। समाशब्दाद् द्वितीयासमर्थाद् अधीष्टादिष्वर्थेषु खः प्रत्ययो भवति। ठञोऽपवादः। समामधीष्टो भृतो भूतो भावी वा समीनः।**

**'केचित्तु' 'तेन निर्वृत्तम्' ( ७.१.७९ ) इति सर्वत्रानुवर्तयन्ति। समया निर्वृत्तः समीनः॥**

## १९७१. द्विगोर्वा॥ ८६॥ ( १७५० )

**'समायाः खः' ( ५.१.८५ ) इत्येव। समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु पञ्चसु वा खः प्रत्ययो भवति। पूर्वेण नित्यः प्राप्तो विकल्प्यते। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' ( ७.३.१७ ) इति प्राप्तिरस्त्येव। खेन मुक्ते पक्षे ठञपि भवति। द्विसमीनः, द्वैसमिकः। त्रिसमीनः, त्रैसमिकः॥**

### न्यासः

यद्येवम् कथमन्तरो यब् भवति ? इत्याह – **स्वरितत्वाच्चानन्तरोऽनुवर्त्तिष्यत इति**। तेनानुवृत्तिसामर्थ्यादनन्तरो यब्भवतीति मन्यते॥ ८३॥

**अवयसि ठँश्च॥ ८४॥ समायाः खः॥ ८५॥ द्विगोर्वा॥ पूर्वेणेत्यादि**। कथं पुनः समाशब्दाद् विधीयमानः प्रत्ययस्तदन्ताद् द्विगोः प्राप्नोति ? इत्यत आह—**प्राग्वतेरित्यादि**। गतार्थम्॥ ८६ ।

### पदमञ्जरी

यदि चकारष्ठञः समुच्चयार्थः। कथं तर्हि यब्भवति ? इत्याह—**स्वरितत्वाच्चेति**। एतच्च व्याख्यानादेव लभ्यते॥ ८३॥

**अवयसि ठँश्च॥ चकारोऽनन्तरस्य ण्यतः समुच्चयार्थ इति**। न तु पूर्ववत् ठञः समुच्चयार्थः। तथा च वार्त्तिकम्—'अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः' ( कात्या० वा० ३०६२ )॥ ८४॥ इति॥

**समायाः खः॥ सर्वत्रेति**। पूर्वत्र, अत्र, परत्र च। तेन परिजय्य-लभ्यकार्य-सुकरमिति यावत्॥८५॥८६॥

### भावबोधिनी

(१) षाण्मास्यः। [ षण्मास + ण्यत् ], (२) षण्मास्यः, [ षण्मास + यप् ] (३) षाण्मासिकः। [ षण्मास + ठञ् = इक। षण्मासं भूतः—इस अर्थ में ये रूप हैं ]॥ ८३॥

अवयः अर्थ रहने पर 'षण्मास' शब्द से 'ठन्' प्रत्यय होता है। चकार द्वारा अव्यवहित 'ण्य' का समुच्चय होता है। उदा०—षण्मासिकः रोगः। षाण्मास्यः रोगः। [ षण्मास + ठन् = इक। षण्मास + ण्य = य, आदिवृद्धि। षण्मासं भूतः—यह विग्रह है। अतः इस अर्थ में 'षाण्मासिक' प्रयोग चिन्तनीय है। ]॥ ८४॥

अधीष्टादि चारों अर्थों की अनुवृत्ति होती है। द्वितीयासमर्थ 'समा' शब्द से अधीष्ट आदि पूर्वोक्त अर्थों में 'ख' प्रत्यय होता है। यह ठञ् का अपवाद है। उदा०—समाम् अधीष्टः, भृतः, भूतः, भावी—इन अर्थों में—समीनः। [ समा + ख = ईन समा शब्द वर्ष का पर्याय है। ]

कुछ विद्वान् 'तेन निर्वृत्तम्' इसकी अनुवृत्ति सर्वत्र करते हैं। अतः—समया निर्वृत्तः—इस अर्थ में समीनः। ( एक वर्ष में सम्पादित किया गया )॥ ८५॥

'समायाः खः' ( समा शब्द से )—इसकी अनुवृत्ति होती है। समा-शब्दान्त द्विगु से 'निर्वृत्त' आदि पूर्वोक्त पाँच अर्थों में 'ख' प्रत्यय विकल्प से होता है। पूर्व सूत्र से नित्य प्राप्त है, इससे विकल्प किया जा रहा है। "वति प्रत्यय से

१९७२. रात्र्यहस्संवत्सराच्च ॥ ८७ ॥ ( १७५१ )

'द्विगोः' इत्येव[1]। रात्रि, अहः, संवत्सर—इत्येवमन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। खेन मुक्ते पक्षे ठञपि भवति। द्विरात्रीणः, द्वैरात्रिकः। त्रिरात्रीणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैयह्निकः। द्विसंवत्सरीणः, द्विसांवत्सरिकः। त्रिसंवत्सरीणः, त्रिसांवत्सरिकः। 'संख्यायाः संवत्सरसंख्यस्य च' ( ७.३.१५ ) इत्युत्तरपदवृद्धिः॥

१९७३. वर्षाल्लुक् च ॥ ८८ ॥ ( १७५३ )

'द्विगोः' इत्येव। वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः प्रत्ययो भवति। पक्षे ठञ्। तयोश्च वा लुग्भवति। एवं त्रीणि रूपाणि भवन्ति—द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। त्रिवर्षीणः, त्रिवार्षिकः, त्रिवर्षः। 'वर्षस्याभविष्यति' ( ७.३.१६ ) इत्युत्तरपदवृद्धिः। भाविनि तु त्रैवर्षिकः॥

न्यासः

रात्र्यहस्संवत्सराच्च॥ द्व्यहीन इति। 'अह्लष्टखोरेव' इति टिलोपः, विभाषानुवर्त्तते, तेन व्यवस्थितविभाषात्वान्न टज् भविष्यति। द्वैयह्निकः, त्रैयह्निक इति। 'न य्वाभ्याम्' इत्यादिनैजागमः, वृद्धिप्रतिषेधश्च॥ ८७॥

वर्षाल्लुक् च॥ भाविनि तु त्रैवर्षिक इति। तत्र हि 'अभविष्यति' इति वचनात्। इहादिवृद्धिरेव भवति॥ ८८॥

पदमञ्जरी

रात्र्यहस्संवत्सराच्च॥ द्वैयह्निक इति। 'अह्लष्टखोरेव' इति नियमादसति टिलोपे 'अल्लोपोऽनः' इत्यकारलोपः। नन्वत्र 'राजाहःसखिभ्यष्टच्' इति परत्वाट्टचा भवितव्यम्, न च महाविभाषया टचो विकल्पः, बृहतीजात्यन्ताः समासान्ताश्चेति नित्येषु परिगणनात्? एवं तर्हि समासान्तविधेरनित्यत्वादत्र न भविष्यति॥ ८७॥ ८८॥

भावबोधिनी

पूर्व में संख्यापूर्वपदवालों के तदन्त का ग्रहण होता है, लुक् में नहीं होता है'—वचन की प्राप्ति तो है ही। जब 'ख' नहीं होता है तो पक्ष में ठञ् भी होता है। उदा०—द्विसमीनः, द्वैसमिकः। [ समा शब्द सामान्यतया बहुवचनान्त ही है किन्तु "समां समां विजयते" ऐसे सूत्रनिर्देश से एकवचनान्त भी है। अतः 'द्वि' के साथ द्विगु हो सकता है। ] त्रिसमीनः, त्रैसमिकः। [ यहाँ पूर्वोक्त पाँच अर्थों की प्रतीति है। निर्वृत्त अर्थ में तृतीयान्त का और शेष चार में द्वितीयान्त शब्दरूप का ग्रहण विग्रह में किया जाता है। ]॥ ८६॥

'द्विगोः' ( द्विगु से ) इसकी अनुवृत्ति होती है। रात्रि, अहन्, संवत्सर—इनमें से कोई भी जिसके अन्त में है ऐसे द्विगु से निर्वृत्तादि पूर्वोक्त पाँच अर्थों में 'ख' प्रत्यय विकल्प से होता है। जब 'ख' नहीं होता है तब पक्ष में ठञ् भी होता है। उदा०—द्विरात्रीणः, द्वैरात्रिकः। [ द्विरात्र + ख = ईन, णत्व, द्विरात्र + ठञ् = इक, आदिवृद्धि ] त्रिरात्रीणः, त्रैरात्रिकः। द्व्यहीनः, द्वैयह्निकः। त्र्यहीणः, त्रैयह्निकः। [ द्व्यहन् + ठञ् = इक, त्र्यहन् + ठञ् = इक, इनमें आदिवृद्धि न करके "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" सूत्र से ऐच् ( ऐ ) का आगम होने पर द्वैयहन् + इक, त्रैयहन् + इक, "अल्लोपोऽनः" से 'अ' लोप करने पर रूप बनते हैं। ] त्रिसंवत्सरीणः त्रिसांवत्सरिकः। इसमें 'संख्यायाः संवत्सरसंख्यस्य च' (७।३।१ ) सूत्र से उत्तरपद की वृद्धि होती है। [ यहाँ भी 'निर्वृत्त' अर्थ में तृतीयान्त का और शेष अर्थों में द्वितीयान्त का प्रयोग विग्रह में किया जाता है। ]॥ ८७॥

'द्विगोः' ( द्विगु से ) इसकी अनुवृत्ति होती है। वर्षशब्दान्त द्विगु से निर्वृत्त आदि अर्थों में विकल्प से 'ख' प्रत्यय होता है। पक्ष में ठञ् होता है और इन दोनों प्रत्ययों का लुक् विकल्प से होता है। इस प्रकार तीन रूप बनते हैं—(१) द्विवर्षीणः, (२) द्विवार्षिकः, (३) द्विवर्षः। (१) त्रिवर्षीणः, (२) त्रिवार्षिकः, (३) त्रिवर्षः। [ द्विवर्ष + ख = इन।

---

१. 'द्विगोरित्येव' इति बहुत्र नास्ति।

**१९७४. चित्तवति नित्यम् ।। ८९ ।। ( १७५९ )**

**चित्तवति प्रत्ययार्थेऽभिधेये वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य[1] नित्यं लुग्भवति । पूर्वेण विकल्पे प्राप्ते वचनम् । द्विवर्षो दारकः ।**

**चित्तवतीति किम् ? द्विवर्षीणो व्याधिः ।।**

**१९७५. षष्टिकाः षष्टिरात्रेण पच्यन्ते ।। ९० ।। ( १७३६ )**

**षष्टिकशब्दो निपात्यते । बहुवचनमतन्त्रम् । षष्टिरात्रशब्दात्तृतीयासमर्थात्कन् प्रत्ययो निपात्यते 'पच्यन्ते'**

**न्यासः**

**चित्तवति नित्यम्** ।। यदि चित्तवति प्रत्ययार्थे नित्यं लुग्भवति, 'वर्षस्याभविष्यति' इत्यत्र यद्वक्ष्यति— 'द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः' इति, तद्विरुध्यते; न हि नित्ये लुक्यधीष्टभृतयोरुत्पन्नस्य प्रत्ययस्य चित्तवत्यभिधेय एवं रूपमुपपद्यते ? नैष दोषः; भूत एवास्योत्पन्नस्य प्रत्ययस्य चित्तवति नित्यं लुगिष्यते, न सर्वत्र । कुत एतत् ? नित्यग्रहणात् । इह नित्यग्रहणमनर्थकमेव ! आरम्भसामर्थ्यादेव नित्यो लुग्भविष्यतीति किं नित्यग्रहणेन ? तत् क्रियते – विशिष्टेऽर्थे नित्यो लुग्यथा स्यादित्येवमर्थम् । स पुनर्विशिष्टो भूत एव ।। ८९ ।।

**षष्टिकाः षष्टिरात्रेण पच्यन्ते** ।। 'बहुवचनान्तस्य निर्देशाद् बहुवचन एव षष्टिकशब्दस्य साधुत्वम्, नान्यत्र' इति यश्चोदयेत्, तं प्रत्याह—**बहुवचनमतन्त्रमिति** । अप्रधानमित्यर्थः । अप्रधानत्वं तु तस्य नान्तरीयकत्वाद् । अवश्यं हि येन केनचिद्वचनेन निर्देशः कर्त्तव्यः । यद्येवम्, एकवचनेन निर्देशः कस्मान्न कृतः, एवं हि लघुर्भवति ?

**पदमञ्जरी**

**चित्तवति नित्यम्** । यदि चित्तवति नित्यं लुग्भवति; कथं 'वर्षस्याभविष्यति' इत्यत्र वक्ष्यति —द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति द्विवार्षिको मनुष्य इति, न हि नित्ये लुकि अधीष्टभृतयोरुत्पन्नस्य चित्तवति श्रवणमुपपद्यते ? एवं तर्हि भूत एवोत्पन्नस्य प्रत्ययस्य लुगिष्यते, न सर्वत्र । एतच्च नित्यग्रहणाल्लभ्यते । आरम्भसामर्थ्यादेव हि नित्यो लुक् सिद्धः, तत्र नित्यग्रहणं विशिष्टेऽर्थे नित्यं लुग् यथा स्यात् । स **पुनर्विशिष्टोऽर्थो** भूत एव; व्याख्यानात् । तेनाधीष्टादौ पूर्वेण विभाषयैव लुग्भविष्यति ।। ८९ ।।

**षष्टिकाः षष्टिरात्रेण पच्यन्ते** ।। लघुत्वात्प्रथमातिक्रमे कारणाभावाच्च एकवचनेनैव निर्देशाद्विवक्षितं तदिति मन्यमानं प्रत्याह—**बहुवचनमतन्त्रमिति** । तथा च वार्त्तिके—'षष्टिके संज्ञाग्रहणं कर्तव्यम्' ( कात्या० वा० ३०६३ )

**भावबोधिनी**

द्विवर्ष + ठञ् = इक —यहाँ ] "वर्षस्याभविष्यति" ( पा० सू० ७।३।१६ ) सूत्र से [ चार अर्थों में ] उत्तरपद की वृद्धि होती है । परन्तु भावी = भविष्यत्कालिक होने पर तो—त्रैवर्षिकः—यही बनता है । [ अतः कालभेद से शब्दरूप में भेद हो जाता है । इस सूक्ष्म भेद को ध्यान में रख कर ही द्विवार्षिक अथवा द्वैवर्षिक, त्रिवार्षिक अथवा त्रैवार्षिक का प्रयोग करना चाहिये । ] ।। ८८ ।।

चित्तवान् प्रत्ययार्थ वाच्य रहने पर वर्षशब्दान्त द्विगु से निर्वृत्तादि पूर्वोक्त पाँच अर्थों में किये गये प्रत्यय का नित्य लुक् हो जाता है । पूर्व सूत्र से विकल्प के प्राप्त रहते यह नित्य किया जा रहा है । उदा०—द्विवर्षः दारकः [ दो वर्षों तक अधीष्ट, भृत, भूत, अथवा भावी बच्चा ] ।

चित्तवान् प्राणी अर्थ में— इसका क्या फल है ? द्विवर्षीणः व्याधिः । [ यहाँ नित्य लुक् न होकर 'ख' प्रत्यय का ही रूप रहता है । ] ।। ८९ ।।

'षष्टिक' शब्द निपातित होता है । सूत्र में बहुवचन विवक्षित नहीं हैं । तृतीयासमर्थ 'षष्टिरात्र' शब्द से 'पच्यन्ते' ( पक कर तैयार हो जाते हैं )— इस अर्थ में 'कन्' प्रत्यय निपातित होता है और रात्रि शब्द का लोप हो जाता है ।

---

१. 'निवृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य' इति पाठो बहुषु पुस्तकेषु नास्ति ।

**इत्येतस्मिन्नर्थे, रात्रिशब्दस्य च लोपः। षष्टिरात्रेण पच्यन्ते षष्टिकाः। संज्ञैषा धान्यविशेषस्य। तेन मुद्गादिष्वतिप्रसङ्गो न भवति ॥**

**१९७६. वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥ ( ३४९३ )**

**वत्सरान्तात्प्रातिपदिकान्निर्वृत्तादिष्वर्थेषु छन्दसि विषये छः प्रत्ययो भवति। ठञोऽपवादः। इद्वत्सरीयः, 'इदावत्सरीयः' ( काठ० सं० १३.१५.७१ ) ॥**

**१९७७. संपरिपूर्वात्ख च ॥ ९२ ॥ ( ३४९४ )**

**संपरिपूर्वाद्वत्सरान्तात्प्रातिपदिकाच्छन्दसि विषये निर्वृत्तादिष्वर्थेषु खः प्रत्ययो भवति, चकाराच्छश्च। सं॒व॒त्स॒रीणाः ( तै० सं० ४.३.१३.४ ) 'परिवत्स॒रीण॑म् ( ऋ० ७.१०.३.८ )। संवत्सरीया।' 'परिवत्सरीया ( काठ० सं० १३.१५.७१ ) ॥**

**१९७८. तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥ ( १७५७ )**

**'तेन' इति तृतीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'परिजय्य, लभ्य, कार्य, सुकर' इत्येतेष्वर्थेषु**

**न्यासः**

सत्यम्; वैचित्र्यार्थं बहुवचनेन कृतः। यदि 'षष्टिरात्रेण पच्यन्ते' इत्यस्मिन्नर्थ एतन्निपातनम् मुद्गादिष्वतिप्रसङ्गः, तेऽपि हि षष्टिरात्रेण पच्यन्ते ? इत्यत आह—**संज्ञैषेत्यादि**। धान्यविशेष एव हि षष्टिकशब्दः संज्ञात्वेन रूढः। तेनानभिधानाद् मुद्गादिष्वतिप्रसङ्गो न भवति ॥ ९० ॥

**वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥ संपरिपूर्वात् ख च ॥ ९२ ॥ तेन परिजय्यलभ्यकार्यसुकरम् ॥ परिजय**

**पदमञ्जरी**

इत्येकवचनं प्रयुक्तम्। प्रयोगबाहुल्यात्तु सूत्रे बहुवचनप्रयोगः, षष्टिरात्रेण पच्यन्त इत्यत्रार्थे निपात्यमानस्य षष्टिकशब्दस्य धान्यविशेष एव प्रयोगो यथा स्यात्, मुद्गादिषु मा भूदित्येवमर्थं संज्ञाग्रहणं कर्तव्यमिति **वार्तिककारेणोक्तम्**। तदेतन्निपातनादेव सिद्धमित्यभिप्रायेणाह--**संज्ञैषेत्यादि** ॥ ९० ॥

**वत्सरान्ताच्छश्छन्दसि ॥** इद्वत्सर-इदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः संज्ञे। एवं संवत्सर-परिवत्सरशब्दावपि ॥ ९१ ॥

**तेन परिजय्यलभ्यकार्यसुकरम् ॥** परिजय्य इत्यस्य विवरणम्—**शक्यते परिजेतुमिति**। 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः ॥ ९२ ॥ ९३ ॥

**भावबोधिनी**

उदा०—षष्टिरात्रेण पच्यन्ते—इस विग्रह में 'षष्टिकाः।' यह धान्यविशेष ( एक अच्छे प्रकार के धान ) का नाम है। [ यह साठ दिनों में पक कर तैयार हो जाता है। ] इसलिए मूँग आदि में इसका प्रयोग नहीं होता है। [ जब कि मूंग आदि भी साठ दिनों में पक कर तैयार हो जाते हैं। ] ॥ ९० ॥

[ द्वितीयासमर्थ ] वत्सरशब्दान्त प्रातिपदिक से वेदविषय में निर्वृत्तादि अर्थों में 'छ' प्रत्यय होता है। यह ठञ् का अपवाद है। उदा०—इद्वत्सरीयः, इदावत्सरीयः। [ इद्वत्सरेण निर्वृत्तः, इदावत्सरेण निर्वृत्तः आदि अर्थों में छ = ईय प्रत्यय होता है। पाँच वर्ष के युग में इद्वत्सर और इदावत्सर—ये दो-दो वर्षों की संज्ञायें हैं। उस समय होने वाले यज्ञादि के लिए इन शब्दों का प्रयोग होता है। ये वैदिक प्रयोग हैं। ] ॥ ९१ ॥

सम्पूर्वक और परिपूर्वक तथा वत्सरशब्दान्त प्रातिपदिक से वेदविषय में निर्वृत्तादि अर्थों में 'ख' प्रत्यय होता है 'च' के कारण 'छ' भी होता है। उदा०—संवत्सरीणः, संवत्सरीयः। परिवत्सरीणः परिवत्सरीयः। [ संवत्सरेण निर्वृत्तः, परिवत्सरेण निर्वृत्तः—आदि अर्थ है। छ = ईय, ख = ईन। ये दोनों शब्द भी वर्ष के वाचक हैं। ] ॥ ९२ ॥

'तेन' (उससे) इस तृतीयासमर्थ कालवाचक प्रातिपदिक से— परिजय्य, लभ्य, कार्य, सुकर इन अर्थों में 'ठञ्' प्रत्यय

ठञ् प्रत्ययो भवति । मासेन परिजय्यः, शक्यते जेतुं मासिको व्याधिः । सांवत्सरिकः । मासेन लभ्यो मासिकः पटः । मासेन कार्यं मासिकं चान्द्रायणम् । मासेन सुकरो मासिकः प्रासादः ॥

१९७९. तदस्य ब्रह्मचर्यम् ॥ ९४ ॥ ( १७५८ )

'तत्' इति द्वितीया समर्थविभक्तिः, सा चात्यन्तसंयोगे । अस्येति प्रत्ययार्थः । 'ब्रह्मचर्यम्' इति द्वाभ्यामपि सम्बध्यते—कालस्य व्यापकम्, प्रत्ययार्थस्य च स्वमिति । तदिति द्वितीयासमर्थात्कालवाचिनः प्रातिपदिकात् 'अस्य' इति षष्ठ्यर्थे ठञ्प्रत्ययो भवति, ब्रह्मचर्यं चेद् गम्यते । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । आर्द्धमासिकः । सांवत्सरिकः ।

अपरा वृत्तिः—

**न्यासः**

**इति**। परिः सर्वतोभावे। शक्यार्थे कृत्यः। सर्वतः शक्यो जेतुं **परिजय्यः**। **लभ्य इति, कार्य्यं इति**। अत्रापि शक्यार्थ एव कृत्यौ । मासेन शक्यो लभ्यो मासिकः पटः। मासेन शक्यं कर्तुं सुकरं वा मासिकं चान्द्रायणम् । 'तेन निर्वृत्तम्' 'तमधीष्टः' इति विभक्तिद्वये प्रकृते पुनस्तेनेति तृतीयोपादानं द्वितीयानिवृत्त्यर्थम् ॥ ९३ ॥

**तदस्य ब्रह्मचर्यम्** ॥ **द्वाभ्यामपि सम्बध्यत इति**। समर्थविभक्त्या, प्रत्ययार्थेन च । कथं सम्बध्यते ? इत्याह—**कालस्येत्यादि**। इह हि द्वितीयाऽत्यन्तसंयोगे। सा हि यः कालस्य व्यापकस्तमपेक्षते, नान्तरीयकत्वात् । न हि तेन विनाऽत्यन्तसंयोग उपपद्यते। ब्रह्मचर्यं च **कालस्य व्यापकमिति**। [1]**व्यापकमिति** व्यापकमेक्षमाणायां विभक्तौ ब्रह्मचर्यसम्बन्धो भवति। कथं प्रत्ययार्थेन सम्बध्यते? इत्यत आह—**प्रत्ययार्थस्य च स्वमिति**। प्रत्ययार्थः प्रतियोगि वस्तु स्वमपेक्षते। प्रकृतत्वाच्च ब्रह्मचर्यस्यैव प्रतियोगित्वं विज्ञायते, तद्धि तस्य स्वं भवति। अतः प्रतियोग्यपेक्षायां प्रत्ययार्थस्यापि ब्रह्मचर्येण सम्बन्धो भवति।

**पदमञ्जरी**

**तदस्य ब्रह्मचर्यम्** ॥ **मासोऽस्य ब्रह्मचर्यस्येति**। यद्यप्यत्रात्यन्तसंयोगो गम्यते ,तथापि द्वितीया न भवति; मासस्य प्रधानत्वात्, षष्ठीविषये च द्वितीयाविधानात्।

**भावबोधिनी**

होता है। [ इनमें शक्यार्थं में कृत्य प्रत्यय है अतः विग्रहों में शक्य अर्थ की प्रतीति होती है। ] उदा०—मासेन परिजय्यः = जेतुं शक्यते—इस विग्रह में मासिको व्याधिः। [ एक महीना में जीतने = ठीक करने योग्य रोग—मासिक है। ] सांवत्सरिकः। [ संवत्सरेण जेतुं शक्यः = परिजय्यः—इस अर्थ में संवत्सर + ठञ् = इक, आदिवृद्धि। ] मासेन लभ्यः = लब्धुं शक्यते—इस अर्थ में—मासिकः पटः। [ एक महीना में प्राप्त होने योग्य वस्त्र ] मासेन कार्यम् = कर्तुं शक्यते—इस अर्थ में मासिकं चान्द्रायणम्। [ चान्द्रायण व्रत का स्वरूप पीछे ५।१।७२ सूत्र की व्याख्या में देखें। ] मासेन सुकरः = सुखेन कर्तुं शक्यः—इस अर्थ में मासिकः प्रासादः। [ एक महीना में बनाने योग्य महल। ] ॥ ९३ ॥

'तत्' यह द्वितीया समर्थ विभक्ति है और यह अत्यन्त संयोग अर्थ में है। 'अस्य' ( इसका ) यह प्रत्ययार्थ है। ब्रह्मचर्य—इसका सम्बन्ध दोनों के साथ है—यह ब्रह्मचर्य काल का व्यापक है और प्रत्ययार्थ का स्व = प्रतियोगी है। 'तत्' इस द्वितीया समर्थ कालवाचक प्रातिपदिक से 'अस्य' ( इसका )—इस षष्ठी के अर्थ में ठञ् प्रत्यय होता है यदि ब्रह्मचर्य अर्थ की प्रतीति हो रही हो तो। उदा०—मासं ब्रह्मचर्यम् अस्य—इस अर्थ में मासिकः ब्रह्मचारी ( एक महीना भर ब्रह्मचर्य रखने वाला )। आर्द्धमासिकः। सांवत्सरिकः। [ इनमें उतने-२ समय तक ब्रह्मचर्य रखने वाला ब्रह्मचारी अर्थ है। ]

दूसरी वृत्ति—

---

१. भ्रमात् पुनरिदं पठित मिति प्रतीयते।

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति, यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्। आर्धमासिकम्। सांवत्सरिकम्।

पूर्वत्र ब्रह्मचारी प्रत्ययार्थः, उत्तरत्र ब्रह्मचर्यमेव। उभयमपि प्रमाणमुभयथा सूत्रप्रणयनात्।

❀ महानाम्न्यादिभ्यः षष्ठीसमर्थेभ्य उपसंख्यानम् ❀ (म० भा० ५.१.९४ वा० १)। माहानाम्निकम्। गौदानिकम्। आदित्यव्रतिकम्।

❀ तच्चरतीति च[1] ❀ (वा० २)। महानाम्न्य ऋचः (तै० आ०), तत्सहचरितं व्रतं तच्छब्देनोच्यते। महानाम्नीश्चरति [2]माहानामिकः। आदित्यव्रतिकः। गौदानिकः। ['भस्याढे' (६.३.३५ वा०) इति पुंवद्भावेन ङीपि निवृत्ते 'नस्तद्धिते' (६.१.१४४) इति टिलोपः।]

न्यासः

पूर्वत्रेत्यादिना पूर्वोत्तरयोर्वृत्त्योर्विशेषं दर्शयति। किं पुनरत्र प्रमाणमित्याह—द्वयमपीत्यादि। कथं पुनर्द्वयमपि प्रमाणमित्याह—उभयथेत्यादि। उभयस्मिन्नपि ह्यत्रार्थे सूत्रमेतदाचार्येण प्रणीतम्। द्वयमपि प्रमाणम्।

महानाम्न्यादिभ्य इति। ब्रह्मचर्य एवार्थ इदमुपसंख्यानम्। तच्चरतीत्यादि। तदिति द्वितीयासमर्थेभ्यो महानाम्न्यादिभ्यः शब्देभ्यः 'चरति' इत्येतस्मिन्नर्थे इदं ठञ उपसंख्यानम्। तत्सहचरितं व्रतं तच्छब्देनोच्यत इति। भवति हि साहचर्यात् ताच्छब्द्यम्, यथा—यष्टीः प्रवेशयेति। अथ ऋच एवोच्यन्त इत्येवं कस्मान्न

पदमञ्जरी

उभयथा हि सूत्रप्रणयनादिति। उभयोरप्यर्थयोः सूत्रकारेणैव सूत्रस्य व्याख्याततत्वादित्यर्थः। महानाम्न्यादिभ्य इति। ब्रह्मचर्यस्य प्रत्ययार्थत्वात्सामर्थ्यात् षष्ठीसमर्थेभ्यः प्रत्ययः।

महानाम्न्यो नाम ऋच इति। महन्नाम यासां ता महानाम्न्यः, 'विदामघवन्नित्याद्याः' (ऐ० आ० ४.१.१–९), 'नित्यं संज्ञाछन्दसोः' इति ङीप्। महानाम्नीश्चरतीति। चरणमनुष्ठानम्, तच्च क्रियाविषयमिति तत्सहचरितं व्रतं तच्छब्देनोच्यते। तत्र च स्वलिङ्गसंख्यापरित्यागेनैव महानाम्नीशब्दो व्रते वर्तत इति महानाम्नीश्चरतीति विग्रहः। माहानामिक इति। 'भस्याढे तद्धिते पुंवद्भाव' (कात्या० वा० ३९२८) इति ङीपि निवृत्ते टिलोपः।

भावबोधिनी

'तत्' (वह)—इस प्रथमा समर्थ से 'अस्य' (इसका)—इस षष्ठी के अर्थ में ठञ् प्रत्यय होता है 'जो इसका है'—इस रूप से निर्दिष्ट होने वाला ब्रह्मचर्य हो तो। उदा०—मासः अस्य ब्रह्मचर्यस्य (इसके ब्रह्मचर्य का एक महीना हो गया है)—इस विग्रह में 'मासिकं ब्रह्मचर्यम्'। आर्धमासिकम्। सांवत्सारिकं ब्रह्मचर्यम्। [संवत्सरोऽस्य ब्रह्मचर्यस्य, अर्धमासोऽस्य ब्रह्मचर्यस्य।]

प्रथम वृत्ति = व्याख्यान के अनुसार—ब्रह्मचारी प्रत्यय का अर्थ है। किन्तु दूसरी वृत्ति = व्याख्या के अनुसार ब्रह्मचर्य ही प्रत्यय का अर्थ है। ये दोनों अर्थ प्रमाणभूत हैं क्योंकि उक्त दोनों अर्थों में सूत्र का प्रणयन आचार्य पाणिनि ने कया है। [अतः किसी अर्थ में दुराग्रह उचित नहीं है।]

❀ षष्ठी समर्थ महानाम्नी आदि से 'तदस्य ब्रह्मचर्यम्' इस अर्थ में प्रत्यय कहना चाहिए। ❀ उदा०—माहानाम्निकम्। [महानाम्न्यः नाम 'विदामघवन्०' इत्याद्या ऋचः। तासां ब्रह्मचर्यम् अस्य—इस अर्थ में महानाम्नी + ठञ् इक, आदिवृद्धि भसंज्ञा, अलोप—महानाम्निकम्।] गौदानिकम्। आदित्यव्रतिकम् [इनमें ब्रह्मचर्य प्रत्ययार्थ है।]

❀ उसका आचरण करता है ❀ इस अर्थ में भी प्रत्यय कहना चाहिए। महानाम्नी नामक ऋचायें हैं इनके साथ होनेवाला व्रत भी इन्हीं के नाम से कहा जाता है। उदा०—महानाम्नीः चरति—इस अर्थ में—माहानामिकः। [महानाम्नी + ठञ् = इक, आदिवृद्धि, "भस्याढे तद्धिते" सूत्र से पुंवद्भाव होता है ङीप् हट जाने पर टि = अन् का

१. 'तच्चरतीतिमहानाम्न्यादिभ्य उपसंख्यानम्'—इति पाठा०। २. 'महानाम्निक' इति भाष्यपाठः।

❀ **अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः ❀ (वा० ३)**। अवान्तरदीक्षां चरति अवान्तरदीक्षी। तिलव्रती।

❀ **अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः ❀ ( वा० ४ )**। अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति, अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी।

❀ **चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः ❀ ( वा० ५ )**। चातुर्मास्यानि चरति चातुर्मासकः। चातुर्मासी।

**न्यासः**

विज्ञायते ? चरणार्थस्यायोगात्। ब्रह्मचर्यं हि चर्यते। **चतुर्मासाण्ण्यो यज्ञ इत्यादि**। चतुर्मासशब्दात् तत्रेति सप्तमीसमर्थाद् भव इत्येतस्मिन्नर्थे यज्ञे विषये ण्यो वक्तव्यः।

**संज्ञायामण् वक्तव्य इति**। चतुर्मासाद्भव इत्येतदपेक्षते। इदञ्च यज्ञादन्यत्रोपसंख्यानम् ? ननु च 'तत्र भवः' इत्यनेनाण्भवत्येव, किमर्थमुपसंख्यायते ? सत्यमस्ति; तस्य तु 'द्विगोर्लुगनपत्ये' इति लुक्प्राप्नोति। अतो लुग्बाधनार्थं तस्योपसंख्यानम् ॥ ९४ ॥

**पदमञ्जरी**

**अवान्तरदीक्षादिभ्यो डिनिरिति**। डित्करणमष्टाचत्वारिंशतष्टिलोपार्थम्। अन्यत्र यस्येति लोपेन सिद्धम्।

**अष्टाचत्वारिंशक इति**। वृत्तिविषये वर्षेषु संख्येयेषु अष्टचत्वारिंशच्छब्दो वर्त्तते—प्रतिवेदं द्वादशवर्षाणि व्रतचरणांच्चतुर्षु वेदेष्वष्टाचत्वारिंशतं वर्षाणि व्रतं चरति।

**चातुर्मास्यानामिति**। अभिधेय बहुत्वाद्बहुवचनम्।

**भावबोधिनी**

लोप होने पर महानामिकः बनता है। यह पाठ हरदत्त के अनुसार है। महाभाष्य में तो पुंवद्भाव न करके महानाम्नी + ठञ् = इक, आदिवृद्धि, भसंज्ञा, ईलोप करके—महानामिकः यही लिखा है। परन्तु काशिका में हरदत्त-समर्थित पाठ ही है। ] आदित्यव्रतिकः। गौदानिकः। [ माहानामिकः—यहाँ ] "भस्याढे तद्धिते' इस सूत्र से पुंवद्भाव करने पर ङीप् की निवृत्ति हो जाने पर "नस्तद्धिते" सूत्र से टि = अन् का लोप होता है।

❀ अवान्तरदीक्षा आदि शब्दों से 'डिनि' प्रत्यय कहना चाहिए। ❀ उदा०—अवान्तरदीक्षां चरति—इस अर्थ में—अवान्तरदीक्षी। [ अवान्तरदीक्षा + डिनि = इन्, भसंज्ञा, आलोप—अवान्तरदीक्षिन्। ] तिलव्रती। [ तिलव्रतं चरति—इस अर्थ में तिलव्रत + डिनि = इन्। ]

❀ अष्टाचत्वारिंशत् शब्द से ड्वुन् और डिनि प्रत्यय कहने चाहिये। ❀ उदा०—अष्टाचत्वारिंशद् वर्षाणि व्रतं चरति इस अर्थ में—अष्टाचत्वारिंशकः। अष्टाचत्वारिंशी। [ यहाँ वर्ष शब्द की प्रतीति ऊपर से ही होती है। अर्थात् अष्टाचत्वारिंशत् यह पद संख्येय परक है। अतः प्रयोग में 'वर्ष' का श्रवण नहीं होता है। अष्टचत्वारिंशत् + ड्वुन् = वु = अक, टिलोप। इसी प्रकार अष्टाचत्वारिंशत् + डिनि = इन्, टिलोप। ]

**विमर्श**—भाष्य में "अष्टाचत्वारिशतो ड्वुंश्च" इतना ही पठित है, 'च' से डिनि का समुच्चय हो जाता है। काशिकाकार ने उसे भी अलग से पढ़ दिया।

संख्यावाची शब्द संख्या और संख्येय दोनों के प्रतिपादक होते हैं। अतः यहाँ संख्येय का ही प्रतिपादक होने से वर्ष अर्थ प्रतीत हो जाता है। एक-एक वेद का अध्ययन १२-१२ वर्षों में होने से चारों वेदों का अध्ययन ४८ वर्षों में होता है। यहाँ का प्रदीप द्रष्टव्य है—"वृत्तिविषये वर्षेष्वेव संख्येषु अष्टाचत्वारिंशच्छब्दो वर्तते। चतुर्षु वेदेषु अष्टाचत्वारिंशतं वर्षाणि व्रतं चरति। प्रतिवेदं द्वादश वर्षाणि व्रतचरणात्।" पदमंजरी में भी यही आशय व्यक्त किया गया है।

❀ चातुर्मास्यों का यलोप होता है और ड्वुन् तथा डिनि प्रत्यय होते हैं। ❀ उदा०—चातुर्मास्यानि चरति—इस विग्रह में—चातुर्मासकः। चातुर्मासी। [ चातुर्मास्य + ड्वुन् = वु = अक, यलोप, चातुर्मासकः। चातुर्मास्य +

**❀ चतुर्मासाण्ण्यो यज्ञे तत्र भवे ❀ ( वा० ६ )। चतुर्षु मासेषु भवानि चातुर्मास्यानि।**

❀ **संज्ञायामण्वक्तव्यः** ❀ ( वा० ७ )। **चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी। आषाढी। कार्तिकी। फाल्गुनी।**

## १९८०. तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥ ( १७५९ )

**'तस्य' इति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यः 'दक्षिणा' इत्येतस्मिन्नर्थे ठञ् प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी।**

### न्यासः

**तस्य च दक्षिणा यज्ञाख्येभ्यः॥** अथाख्याग्रहणं किमर्थम्, न यज्ञेभ्य इत्युच्येत? इत्यत आह—**आख्याग्रहणमित्यादि**। यज्ञनामधेयमात्रादकालवाचिनोऽपि प्रत्ययो यथा स्यादित्येवमर्थमाख्याग्रहणमिति। **इतरथा हीत्यादि**। यद्याख्याग्रहणं न क्रियेतेत्यर्थः। ननु चैकाहद्वादशाहादयो नैव कालशब्दाः, तत् कुतस्तेषामेवात्र ग्रहणप्रसङ्गः? अथाकालवाचिनामप्येषां ग्रहणं सम्भवति? एवं सत्यग्निष्टोमादीनामपि भविष्यतीत्यपार्थकमाख्याग्रहणम्? इत्यत आह—**प्राग्वतेरित्यादि**। यद्यप्येते कालशब्दा न भवन्ति, तथापि प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरभ्यनुज्ञातः। तेन सत्यपि कालाधिकारेऽप्यस्ति तेषु ग्रहणप्रसङ्गः। तथा च तत्र वचनस्य चरितार्थत्वादग्निष्टोमादिभ्यो न स्यात्, तेभ्योऽपि यथा स्यादित्याख्याग्रहणम्।

### पदमञ्जरी

किमिदं चातुर्मास्यानामिति? तत्राह—**चतुर्मासाण्ण्यो यज्ञे तत्र भव इति। चातुर्मास्यानीति।** संवत्सरसाध्यो हविर्यज्ञविशेषस्तस्य चत्वार्यवान्तरपर्वाणि तदपेक्षं बहुवचनम्। **चातुर्मासीति।** 'तत्र भवः' इत्येवाणिसद्धः, तस्य 'द्विगोर्लुगनपत्ये' इति लुकि प्राप्ते पुनरण् विधीयते। 'कालाट्ठञ्' इत्यस्य त्वप्राप्तिः समुदायस्याकालवाचित्वात्तदन्तविध्यभावाच्च। अपर आह—यथाकञ्चित्कालवृत्तिभ्योऽपि ठञ इष्टत्वाट्ठञ्येव प्राप्ते तस्य लुकीदमण्विधानमिति ॥ ९४ ॥

**तस्य च दक्षिणायज्ञाख्येभ्यः ॥** यज्ञमाचक्षते यज्ञाख्याः सोपसर्गादपि मूलविभुजादित्वादस्मादेव निपातनाद्वा कः।

### भावबोधिनी

डिनि = इन्, यलोप—चातुर्मास् इन्। ]

[ चातुर्मास्य—क्या है? इसके उत्तर में वार्तिक है—]

❀ चतुर्मास शब्द से यज्ञ में वहाँ होने वाला' इस अर्थ में ण्य प्रत्यय कहना चाहिये। ❀ उदा०—चतुर्षु मासेषु भवानि—इस अर्थ में 'चातुर्मास्यानि।' [ आषाढादि चार माहीनों में जो यज्ञीय अनुष्ठान किये जाते हैं, उन्हें चातुर्मास्य कहा जाता है। चतुर्मास + ण्य = य, आदिवृद्धि। ]

❀ संज्ञा अर्थ में चतुर्मास शब्द से अण् प्रत्यय कहना चाहिये। ❀ उदा०—चतुर्षु मासेषु भवा—इस विग्रह में 'चातुर्मासी पौर्णमासी। [ चतुर्मास + अण् = 'अ', आदिवृद्धि, स्त्रीलिङ्ग में ङीप् = ई। वर्ष में बारह पौर्णमासी हैं। चैत्र से लेकर चार-चार महीनों पर एक-एक होती है—] चातुर्मासी आषाढी, चातुर्मासी कार्तिकी, चातुर्मासी फाल्गुनी। [ ये विशेष संज्ञायें हैं। अतः अण् और ङीप् करके 'चातुर्मासी' बनाया गया है। ] ॥ ९४ ॥

'तस्य' ( उसका ) इस षष्ठीसमर्थ यज्ञाख्य ( यज्ञ की आख्या = नाम वाले ) प्रातिपदिक से 'दक्षिणा' इस अर्थ में 'ठञ्' प्रत्यय होता है। उदा०—अग्निष्टोमस्य दक्षिणा—इस अर्थ में आग्निष्टोमिकी। [ अग्निष्टोम + ठञ् = इक, आदिवृद्धि, ङीप् ] वाजपेयिकी। [ वाजपेयस्य दक्षिणा—यह अर्थ है। ] राजसूयिकी। [ राजसूयस्य दक्षिणा—यह अर्थ है। ]

आख्याग्रहणमकालार्दपि यज्ञवाचिनो यथा स्यादिति; इतरथा हि कालाधिकारादेकाहद्वादशाहप्रभृतय एव यज्ञा गृह्योरन्। 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' (७.३.१७) इति कालाधिकारेऽपि द्वादशाहादिष्वस्ति प्राप्तिः ॥

**१९८१. तत्र च दीयते कार्यं भववत् ॥ ९६ ॥ ( १७६० )**

**'तत्र' इति सप्तमीसमर्थात्कालवाचिनः प्रातिपदिकाद् दीयते, कार्यम्—इत्येतयोरर्थयोर्भववत्प्रत्ययो भवति। यथा—मासे भवं मासिकम्। सांवत्सरिकम् (४.३.११)। प्रावृषेण्यम् (४.३.१७)। वासन्तिकम्,**

**न्यासः**

ननु चैवमपि सूत्रमनर्थकम्, या ह्यग्निष्टोमस्य दक्षिणा साप्यग्निष्टोमे भवति, तत्र 'बह्वचोऽन्तोदात्ताट्ठञ्' 'क्रतुयज्ञेभ्यश्च' इत्यनेनैव ठञ् सिद्धः इदमपि सूत्रं ठञर्थमेवारभ्यते? सत्यमेतत्; किन्तु भवार्थे 'तस्येदम्' इति विवक्षिते तदा परत्वादणादयः स्युरिति युक्तं विधानम्। अपि च यज्ञाख्येभ्यस्तेन ठञिष्यते। ग्रहणवता प्रातिपदिकेन तदन्तविध्यभावात् संख्यापूर्वपदेभ्यष्ठञ् न लभ्येत—द्वयोर्वाजपेययोर्भवा दक्षिणा द्वैवाजपेयिकीति। अनेन च विधानेन 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इति ठञ् सिद्धो भवति। अथापि कथञ्चित् तदन्तविधिर्भवार्थे लभ्यते, तथापि 'द्विगोर्लुगनपत्ये' इति लुक्प्रसज्येत। तस्माद्युक्तः सूत्रारम्भः ॥ ९५ ॥

**तत्र च दीयते कार्यं भववत् ॥ यथा मासे भवं मासिकमित्यादि।** 'कालाट् ठञ्' इति। **प्रावृषेण्यमिति।**

**पदमञ्जरी**

**आख्याग्रहणमिति।** आङ्पूर्वस्य 'ख्या' इत्यस्य धातोर्ग्रहणमित्यर्थः। **आख्याग्रहणमिति।** ह्रस्वान्तपाठस्तु युक्तः। **अकालवाचिनोऽपि यथा स्यादिति।** स्वरूपग्रहणं तु बहुवचननिर्देशादपि शक्यं निराकर्त्तुमिति भावः। नन्वेकाहादयः क्रतुशब्दाः? तत्राह—शब्दः कालवाची न समुदायः, कथं ते एव गृह्योरन्? अत आह—**प्राग्वतेरिति।** ननु याऽग्निष्टोमस्य दक्षिणा साग्निष्टोमे भवति, तत्र 'बह्वचोऽन्तोदात्ताट्ठञ्', 'क्रतुयज्ञेभ्यश्च' इति ठञ् सिद्ध्यति? न सिद्ध्यति; 'व्याख्यातव्यनाम्नः' (४.३.६७ वृत्तिः) इति तत्र वर्तते, नामग्रहणाच्च व्याख्यातव्यतया लोके प्रसिद्धस्य ग्रन्थस्य ग्रहणम्। किञ्च—द्वयोर्वाजपेययोर्भवा द्वैवाजपेयिकी—अत्र न प्राप्नोति; तदन्तविधेरभावात्। सत्यपि वा तदन्तविधौ 'द्विगोर्लुगनपत्ये' इति लुक् प्राप्नोति। इह तु 'प्राग्वतेः संख्यापूर्वपदानाम्' इति तदन्तविधिश्चास्ति, लुक्च न प्राप्नोति; अप्राग्दीव्यतीयत्वात्, अनार्हीयत्वाच्च ॥ ९५ ॥

**तत्र च दीयते कार्यं भववत् ॥ हैमनमिति।** यद्यपि भववत्प्रत्यया भवन्तीत्युक्तम्; तथापि 'सर्वत्राण्च तलोपश्च' इत्यण्प्रत्ययेऽतिदिष्टे तत्सन्नियोगशिष्टस्तलोपोऽपि भवति। **वतिः सर्वसादृश्यार्थ इति।** 'कालेभ्यो

**भावबोधिनी**

'आख्या' का ग्रहण इसलिए है कि अकालवाचक भी जो यज्ञवाचक हैं उनसे भी प्रत्यय हो सके। यदि 'आख्या' का ग्रहण नहीं होता तो 'काल' का अधिकार होने से 'एकादशाह' 'द्वादशाह' आदि यज्ञ ही लिए जाते। कारण यह है कि "वति प्रत्यय से पहले संख्या पूर्वपद वालों के तदन्त का ग्रहण होता है, लुक् में नहीं होता है" इस वचन से काल के अधिकार में भी द्वादशाह आदि से प्रत्यय की प्राप्ति है ही। [ जब 'यज्ञाख्य' ऐसा लिखा गया तब कालवाचक और तद्भिन्न यज्ञवाचक सभी से यह ठञ् होता है। अतः द्वादशाहिकी दक्षिणा और आग्निष्टोमिकी दक्षिणा—आदि सभी प्रकार के प्रयोग होते हैं। ] ॥ ९५ ॥

'तत्र' ( उसमें )—इस सप्तमीसमर्थ कालवाची प्रातिपदिक से 'दीयते' ( दिया जाता है ) और 'कार्यम्' ( कार्य ) इन अर्थों में भववत् (=वहाँ होने वाला—इसके समान ) प्रत्यय होते हैं। [ आशय यह है कि "तत्र भवः" इसके अन्तर्गत जिन प्रत्ययों का विधान किया गया है उन्हें 'दीयते" तथा 'कार्यम्' इन अर्थों में भी करना चाहिये। ] उदा०—मासे भवम्—इस विग्रह में 'मासिकम्' ( यहाँ 'कालाट् ठञ्' से ठञ् प्रत्यय होता है, मासे दीयते, मासे

**(४.३.११), वासन्तम् ( ४.३.१६ ) । हैमनम् ( ४.३.२२ ) । हैमन्तम् ( ४.३.१६ ) । हैमन्तिकम् ( ४.३.११ ) । शारदम् ( ४.३.१६ ) ।** **वतिः सर्वसादृश्यार्थः ।**

**योगविभागश्चात्र कर्त्तव्यः—'तत्र च दीयते', 'यज्ञाख्येभ्यः' इति । [1]अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तम् । राजसूयिकम् । वाजपेयिकम् ।**

**कालाधिकारस्य पूर्णोऽवधिः । अतः परं सामान्येन प्रत्ययविधानम् ॥**

**न्यासः**

'प्रावृष एण्यः' । **वासन्तं शारदमिति** । सन्धिवेलादिसूत्रेणाण् । **हैमनमिति** । 'हेमन्ताच्च' इति, 'सर्वत्राण्च तलोपश्च' इति । **वतिः सर्वसादृश्यार्थः** । 'कालेभ्यो भववत्' इत्यत्रैतद्व्याख्यातम् । तत एवानुगन्तव्यम् ।

चकारः कालादित्यनुकर्षणार्थः, तेन चानुकृष्टत्वादुत्तरत्र नानुवर्त्तते, अत आह—**कालाधिकारस्य पूर्णोऽवधिरित्यादि** । ननु च यन्मासे दीयते कार्यं च तन्मासे भवति; मासाधारत्वात् तत्सत्तायाः । ततः 'तत्र भवः' इत्यनेनाणैव सिद्धमिति किमतिदेशेन ? एवं तेन सत्यपि भवत्यर्थे कार्यदीयमानयोः कार्यतां दीयमानताञ्च कालान्तात् तैः प्रत्ययैरपि ख्यापयितुमतिदेशः । किञ्चानेन च तत्र भवानामपि न । तेन सति तस्मिन् तदन्तविधेरिष्टत्वाद् द्वयोर्मासयोर्दीयते कार्यं वा—द्वैमासिकमिति । अथापि कथञ्चिद् भवार्थेऽपि तदन्तविधिर्गृह्यते, एवमपि 'द्विगोः' इति लुक् स्यात् । ननु चात्रापि विधाने सत्यतिदेशादेव लुक् प्राप्नोति ? वचनसामर्थ्यात्

**पदमञ्जरी**

भववत्' इत्यत्रैतद् व्याख्यातम् । **अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तमिति** । यद्येवम्, अग्निष्टोमस्य या दक्षिणा साग्निष्टोमे दीयते तत्र 'यज्ञाख्येभ्यो दीयते' इत्यनेनैव सिद्धम्, तथा यन्मासे कार्यं तन्मासे भवं भवति, ततश्च कार्यग्रहणमनर्थकम्, तत्र भवेन कृतत्वात् ? अत्राहुः—"द्वयोर्मासयोः कार्यं द्वैमासिकमित्यत्रापि प्रत्ययो भवति, अत्र तदन्तविधेरभ्युपगमात् । 'कालट्ठञ्' इत्यत्र तु न तदन्तविधिरस्ति, सत्यपि वा तदन्तविधौ 'द्विगोर्लुगनपत्ये' इति लुक् प्राप्नोति । अथानेनापि प्रत्यये सति लुक्कस्मान्न भवति, यावता 'वतिः सर्वसादृश्यार्थे' इत्युक्तम् ? सत्यम्; प्रत्ययमात्रस्यातिदेशो न लुकः', इति । तदपरे न सहन्ते—वतिः सर्वसादृश्यार्थः, तत्र यथा भवे तदन्तविधिर्न भवति, एवमत्रापि न भवितव्यम् । एवं च कृत्वा 'तत्र च दीयते' इत्यत्रापि तदन्तविधिर्न भवति ।

**भावबोधिनी**

कार्यम्—इनमें भी ठञ् होकर मासिकम् ही बनता है । ] सांवत्सरिकम् । प्रावृषण्यम् [ "प्रावृषेण्यः" ४।३।१७ सूत्र से 'एण्य' प्रत्यय होता है । ] वासन्तिकम् । [ "वसन्ताच्च" ४।३।२० से ठञ् । और अण् होने पर ] वासन्तम् । हैमनम्, हैमन्तम्, हैमन्तिकम् [ यहाँ "हेमन्ताच्च" और "सर्वत्राण् तलोपश्च" ४।३।२१–२२ सूत्रों से अण्, तलोप, ठञ् होने से तीन रूप हैं । प्रक्रिया उन्हीं सूत्रों की व्याख्या में देखें । ] शारदम् [ "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" ४।३।१६ सूत्र से अण् होता है । ] भववत्—इसमें जो 'वति' प्रत्यय है वह सभी प्रकार के सादृश्यों का ग्रहण कराने के लिए है ।

**विमर्श**—भाव यह है 'कालेभ्यो भववत्' सूत्र में और प्रस्तुत सूत्र में तथा 'तत्र भवः' इस सूत्र में समान स्थिति है । निष्पन्न शब्द के तीन अर्थ होते हैं—(१) मासे भवम्, (२) मासे दीयते, (३) मासे कार्यम्—मासिकम् । इसी प्रकार सभी उदाहरणों के अर्थ समझने चाहिये ।

[ अनु० ] यहाँ योगविभाग करना चाहिये "तत्र च दीयते" और "यज्ञाख्येभ्यः" । अग्निष्टोमे दीयते—इस अर्थ में—आग्निष्टोमिकं भक्तम् । [ राजसूये दीयते—इस अर्थ में ] राजसूयिकम् । [ वाजपेये दीयते—इस अर्थ में ] वाजपेयिकम् ।

'काल' के अधिकार की अवधि पूरी हो चुकी । इसके आगे सामान्य रूप से प्रत्ययों का विधान है ।

**विमर्श**—भाष्यकार ने यहाँ इस प्रकार से लिखा है—"एवं तर्हि—योग-विभागोत्तरकालमिदं पठितव्यम्—

---

१. पदमञ्जर्यामिदमुपलभ्यते ।

## १९८२. व्युष्टादिभ्योऽण् ॥ ९७ ॥ ( १७६१ )

**'तत्र' इति सप्तमीसमर्थेभ्यो व्युष्टादिभ्यो दीयते, कार्यम् —इत्येतयोरण् प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम्।**

**ॐ अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम् ॐ ( म० भा० ५.१.९७ वा० १ )। आग्निपदम्[1]। पैलुमूलम्। किं वक्तव्यन् ? न वक्तव्यम्[1]; अत्रैव ते पठितव्याः।**

**व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। सम्भ्रम। आस्तरण। संग्राम। संघात। अग्निपद। पीलूमूल। प्रवास। उपसंक्रमण। व्युष्टादिः[2]॥**

**न्यासः**

प्रत्ययमात्रस्यातिदेशो विज्ञास्यते, न सर्वकार्याणामित्यदोषः॥ ९६॥

**व्युष्टादिभ्योऽण्**॥ व्युष्टशब्दोऽयं कालशब्दः। यत्साहचर्यान्नित्यशब्दोऽपि कालशब्द एव गृह्यते, नाकाशादिवचनः। तेन तत्र सप्तम्यपवादः 'कालाध्वनोरत्यन्त संयोगे' इति द्वितीया भवति। तेन सप्तम्यधिकारेऽपि नित्यशब्दाद् द्वितीयासमर्थादेव प्रत्ययः नित्यं दीयते **नैत्यम्**। सर्वकाले दीयत इत्यर्थः।

**अण्प्रकरण इत्यादि**। यदेतत् कात्यायनेनोक्तम् 'अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम्' इत्येतन्न वक्तव्यम्। कथं तर्ह्यण् स्यात् ? व्युष्टादिष्वेवाग्निपदादयः पठितव्याः। अथाण्ग्रहणं किमर्थम्, यावता 'भववत्' इत्येतदिहानुवर्त्तते, तेनैवात्राणपि भविष्यति ? नैवं शक्यम्; एवं हि सति व्युष्ट-नित्यशब्दाभ्याम् 'कालाट् ठञ्'

**पदमञ्जरी**

विभक्ते तु योगे भवत्येव, तत्र भववदित्यस्याभावात्-द्वयोर्वाजपेययोर्दीयते द्वैवाजपेयिकी। सूक्ष्मदृशामेष पन्थाः॥ ९६॥

**व्युष्टादिभ्योऽण्**॥ व्युष्टशब्दः कालवाची दिवसमुखे वर्तते, तत्साहचर्यान्नित्यशब्दस्यापि कालवाचिनो ग्रहणम्, नाकाशादिवृत्तेः। तत्र चात्यन्तसंयोगे द्वितीया भवतीति सप्तम्यधिकारेऽपि द्वितीयान्तात्प्रत्ययः। नित्यं दीयते कार्यं वा **नैत्यम्**।

'अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम्' इत्येतत्प्रत्याचष्टे — **न वक्तव्यमिति**। न कर्तव्यमित्यर्थः। कथमित्याह **अत्रैव पठितव्यास्त इति**। आदिशब्दः प्रकारवाच्याश्रयणीय इत्युक्तं भवति; अन्यथा तत्रैव पठ्येरन्, उपसंख्यानं वा क्रियेत, को विशेषः ? अण्ग्रहणमनर्थकं भववदित्यनुवर्त्तिष्यते, तेनाणेव भविष्यति। न चैवं

**भावबोधिनी**

(१) "तस्य दक्षिणा यज्ञाख्येभ्यः।" (२) 'तत्र च दीयते।' (३) 'कार्यं भववत् कालात्।"

इसके अनुसार यज्ञवाची से दक्षिणा और दान अर्थों में तथा कालवाची से दान और भव अर्थ में प्रत्यय सिद्ध हो जाते हैं। विशेष जिज्ञासाशान्ति-हेतु भाष्यादि देखें॥ ९६॥

'तत्र' ( उसमें ) इस सप्तमीसमर्थ व्युष्टादि शब्दों से (१) दीयते और (२) कार्यम्—इन दो अर्थों में अण् प्रत्यय होता है। उदा० व्युष्टे दीयते कार्यं वा—इस अर्थ में—वैयुष्टम्। [ व्युष्ट + अण्—अ, ऐच् आगम। व्युष्ट = प्रभात। प्रातःकाल दिया जाने वाला, या किया जाने वाला कार्य—वैयुष्टम् है। ] नैत्यम्। [ नित्यं दीयते कार्यं वा—यह विग्रह है। ]

ॐ अण् के प्रकरण में अग्निपद आदि से भी उपसंख्यान करना चाहिए।ॐ उदा०—आग्निपदम्। [ अग्निपदे दीयते कार्यं वा—यह अर्थ है। ] पैलुमूलम्। [ पीलुमूले दीयते कार्यं वा—यह विग्रह है। ] क्या यह वचन कहना

---

१–१. पाठोऽयं बहुषु पुस्तकेषु नास्ति। २. दीर्घ, उपवास—इत्येतौ शब्दावधिकौ कुत्रचित्।

## १९८३. तेन यथाकथाचहस्ताभ्यां णयतौ ॥ ९८ ॥ ( १७६२ )

'दीयते' कार्यम्' इति वर्त्तते। तेनेति तृतीयासमर्थाभ्यां यथाकथाच—हस्तशब्दाभ्यां यथासंख्य णयतौ प्रत्ययौ भवतः। दीयते, कार्यमित्येतयोरर्थयोः प्रत्येकमभिसम्बन्धः, यथासंख्यं नेष्यते। यथाकथाचशब्दोऽव्यय-समुदायोऽनादरे वर्त्तते। तृतीयार्थमात्रं चात्र सम्भवति, न तु तृतीया समर्थविभक्तिः। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम् ॥

**न्यासः**

इति ठञ् स्यात्, नैष दोषः; तत्र पुनरारम्भसामर्थ्याद् यष्ठञा बाधितः स एव भविष्यति। कः पुनरसौ? अणेव। एवमपि तीर्थशब्दाद् द्व्यजृद्ब्राह्मणादिसूत्रेण ठग् विहित इति ततष्ठगेव स्यात्। ये चात्र प्रवेशनादयोऽन्तोदात्ताः; तेभ्यष्ठञ् स्याद्—'बह्वचोऽन्तोदात्ताट्ठञ' इति; तेभ्यो भवार्थे ठञो विहितत्वात्। तस्मादण्ग्रहणं कर्त्तव्यम् ॥ ९७ ॥

**तेन यथाकथाचहस्ताभ्यां णयतौ ॥ यथासंख्यं नेष्यत इति**। अल्पाच्तरस्य हस्तशब्दस्य परनिपातो लक्षणव्यभिचारस्य वचनहेतुः। **तृतीयार्थमात्रञ्चात्र सम्भवतीति**। तृतीयार्थस्य गम्यमानत्वात्। तथा हि—यथाकथाच दत्तमित्युक्ते, अनादरेण दत्तमिति गम्यते। **न तु तृतीया समर्थविभक्तिरिति**। यथाकथाचशब्दस्य वाक्यत्वात्। प्रत्ययस्तु वचनसामर्थ्याद् वाक्यादपि भवत्येव ॥ ९८ ॥

**पदमञ्जरी**

व्युष्टनित्यशब्दाभ्याम् 'कालाट्ठञ्' इत्यस्य प्रसङ्गः, पूर्वेणैव ठञः सिद्धत्वात्? सत्यम्; 'आदिशब्दः प्रकारवाची' इत्युक्तम्; तत्र यदि वृद्धेष्वप्येतत्कदाचित्प्रवर्तते, तदा छः स्यात्। पठितेषु तु नास्ति दोषः ॥ ९७ ॥

**तेन यथाकथाचहस्ताभ्यां णयतौ ॥ तृतीयासमर्थाभ्यामिति**। तृतीयार्थयुक्ताभ्यामित्यर्थः। तथा च यथाकथाचशब्दं प्रति वक्ष्यति—**तृतीयार्थमात्रं च सम्भवतीति**। हस्तशब्दे तु तृतीयान्तत्वमेव सम्भवतीति प्रत्येकमर्थसम्बन्ध इति। ननु यथासंख्यं प्राप्नोति? तत्राह—**यथासंख्यमत्र नेष्यते इति**। प्रत्ययौ तु प्रति यथासंख्यं भवत्येव, अत्र च व्याख्यानमेव शरणम्। **तृतीयार्थमात्रं च सम्भवतीति**। अर्थस्तावत्सम्भवति—यथाकथाच दत्तमित्युक्ते, अनादरेण दत्तमिति प्रतीतेस्तावन्मात्रमेव सम्भवति। मात्रशब्दस्य व्यवच्छेद्यं दर्शयति—**न त्विति**। यथाकथाचशब्दस्य वाक्यत्वात्। प्रत्ययस्तु वचनसामर्थ्याद्वाक्यादपि भवति ॥ ९८ ॥

**भावबोधिनी**

चाहिए? नहीं कहना चाहिए। जो शब्द हैं उन्हें व्युष्टादिगण में ही पढ़ देना चाहिए।

व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। सम्भ्रम। आस्तरण। आस्तरण। संग्राम। संघात। अग्निपद। पीलुमूल। प्रवास। उपसंक्रमण। में व्युष्टादि हैं ॥ ९७ ॥

'दीयते' और 'कार्यम्' इनकी अनुवृत्ति होती है। 'तेन' ( उससे ) इस तृतीया समर्थ यथाकथाच और हस्त इन दोनों शब्दों से क्रमशः 'ण' और 'यत्' प्रत्यय होते हैं। 'दीयते' तथा 'कार्यम्' इन दोनों अर्थों में उक्त दोनों का सम्बन्ध है। यहाँ यथासंख्य इष्ट नहीं है। 'यथाकथाच' यह अव्ययों का समुदाय है अनादर अर्थ में है। यहाँ तृतीया का केवल अथ संभव है, तृतीया विभक्ति सम्भव नहीं है। उदा०—यथाकथाच दीयते कार्यं वा—इस अर्थ में—याथाकथाचम्। [ यथाकथाच + अण्, आदिवृद्धि। जिस किसी भी प्रकार से दिया जाय, किया जाय उसे 'याथाकथाचम्' कहा जाता है। ] हस्तेन दीयते कार्यं वा - इस विग्रह में—हस्त्यम्। [ हस्त + यत्, भसंज्ञा, अलोप। हाथ से दिया जाने वाला, किया जाने वाला। ] ॥ ९८ ॥

**अपवादैः सह समावेशार्थं वचनम्। कर्मणि च विधानार्थम् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (५.१.१२४) इति। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रियाः भावः स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। पुंसो भावः पुंस्त्वम्, पुंस्ता, पौंस्नम् ॥**

**न्यासः**

**अपवादैरित्यादि।** इमनिच्प्रभृतीनपवादांस्त्वतलोर्वक्ष्यति, तैः सह तयोः समावेशः। एकविषयता यथा स्यादित्येवमर्थमिदम्। ननु च स्वरितत्वादनुवर्त्तमानावनुवृत्तिसामर्थ्यादिवापवादविषयेऽपि भविष्यतः? नैतदस्ति; अस्ति ह्यनुवृत्तेः प्रयोजनम्, किम्? 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मण्यपि यथा स्याताम्; इतरथा हि भावे विधीयमानौ कर्मणि न स्याताम्। **कर्मणि चेत्यादि।** ननु चानुवृत्तिसामर्थ्यादेव कर्मण्यपि भविष्यतः? नैतदस्ति; अस्ति ह्यन्यदनुवृत्तेः प्रयोजनम्, किम्? अपवादविषयेऽपि यथा स्याताम्। तस्मिंस्त्वसति न स्याताम्, अस्मिंस्तु सत्येतदुभयमपि लभ्यते। **चकार इत्यादि।** इति चकारो न क्रियेत ततोऽत्रैव प्रकारणे येऽपवादास्तैरेव समावेशः स्यात्, न नञ्स्नञ्भ्याम्; ततोरन्यत्र विहितत्वात्। चकारे त्वपवादसमुच्चयार्थे सति सर्वापवादविषये

**पदमञ्जरी**

**अपवादैरित्यादि।** इमनिजादींस्त्वतलोरपवादान्वक्ष्यति, तैः सह समावेशो यथा स्यादित्येवमर्थमिदम्। ननु स्वरितत्वादेव त्वतलावनुवर्त्तिष्येते तेनापवादविषये भविष्यतः? तन्न; इत उत्तरवाक्यानां प्रत्ययनिर्द्देशेन निराकांक्षत्वात्त्वतलोरपि पूर्वसूत्रे विधानादाकांक्षाया अभावान्नैतच्छक्यं विज्ञातुम्–अनुवर्त्तेते त्वतलाविति। **कर्मणि च विधानार्थमिति।** येभ्य एव कर्मणि ष्यञादिविधिस्तेभ्य एव त्वतलावपि कर्मणि भवतः, न तु ङ्याप्प्रातिपदिकमात्रात्। **चकारो नञ्स्नञ्भ्यामपि समावेशार्थ इति।** अन्यथा 'स्त्रीपुंसाभ्याम्' इत्यस्य विधित्वपक्षे प्राग्भवनाद्येऽर्थास्तानपेक्ष्य तत्रैव प्रदेशे नञ्स्नञोर्विधानादत्र प्रकरणे सन्निधानाभावान्नेमनिजादिवत्समावेशसिद्धिः। परिभाषात्वेऽपि यथोद्देशपक्षे 'स्त्रीपुंसाभ्याम्' इत्यत्रैव प्रकरणे नञ्स्नञोः सन्निधिः। न पुनरिमनिजादिमध्ये कार्यकालपक्षेऽपि प्राग्भवनाद्येऽर्थाः, तत्र नञ्स्नञ्भ्यामुपस्थातव्यम्। तत्र यदि तावद्भावे इत्यर्थविज्ञानमात्र एव नञ्स्नञोरुपस्थानम् –'तस्य भावस्त्वतलौ' 'स्त्रीपुंसाभ्यां भावे नञ्स्नञौ' इति तदस्मिन्प्रदेशे सन्निधानेऽपि 'आ च त्वात्' इत्यस्मात्पूर्वौ भवतः। अथ तूत्सर्गापवादविधानोपयोगविज्ञानानन्तरं नञ्स्नञोरुपस्थानम्, तदा ब्रह्मणस्त्व इत्यस्मात्परौ नञ्स्नञौ भवतः। सर्वथा 'आ च त्वात्' इत्यस्मिन्प्रदेशे नाभ्यन्तरौ। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यत्र कर्मणि नञ्स्नञोरुपस्थानं नाशङ्कनीयम्; प्रकृतिविशेषसम्बद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण

**भावबोधिनी**

उदा० प्रथिमा, पार्थवम्, पृथुत्वम्, पृथुता। [ (१) पृथु + इमनिच् = इमन्, "तुरिष्ठेमेयस्सु" (६।४।१५४) से टिलोप, "र ऋतो हलादेर्लघोः" (६।४।१६१) से 'ऋ' का 'र' आदेश –प्रथ् + इमन् - प्रथिमन् + सु, "सर्वनामस्थाने चासम्बुद्धौ" सूत्र से उपधा का दीर्घ, सुलोप नलोप — प्रथिमा। (२) इमनिच् न होने पर 'इगन्ताच्च लघुपूर्वात्' (५।१।१३०) से अण् होने पर आदिवृद्धि, 'उ' का गुण, अवादेश—पार्थवम्। (३) पृथु + त्व। (४) पृथु + तल्। ] म्रदिमा, मार्दवम्, मृदुत्वम्, मृदुता। [ 'मृदु' से भी इमनिच्, अण्, त्व, तल् प्रत्यय होने पर सब प्रक्रिया पूर्ववत् होती है। चार रूप होते हैं। ]

[ पूर्व सूत्र से त्व और तल् अग्रिम सूत्रों में जा ही सकते हैं तब इस स्वतन्त्र वचन की क्या आवश्यकता ? ] अपवाद वचनों के साथ समावेश करने के लिए प्रस्तुत सूत्र है और कर्म अर्थ में भी विधान के लिए है—"गुणवचन-ब्राह्मणादिभ्यः कर्मणि च" (५।१।१२४)। सूत्रस्थ 'च' नञ् और स्नञ् के साथ भी समावेश करने के लिए है अर्थात् उनके साथ भी त्व और तल् होते हैं, बाध्यबाधकभाव नहीं है। उदा०—स्त्रियाः भावः—इस अर्थ में [ 'स्त्रीपुंसाभ्यां

**२००६. न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटवुध[1]कतरसलसेभ्यः ॥ १२१ ॥ ( १७८३ )**

**इत उत्तरे ये भावप्रत्ययास्ते नञ्पूर्वात्तत्पुरुषान्न भवन्ति चतुरादीन्वर्जयित्वा। वक्ष्यति—'पत्यन्त-पुरोहितादिभ्यो यक्' ( ५ १.१२८ ) इति। अपतित्वम्, अपतिता। अपटुत्वम्, अपटुता। अरमणीयत्वम्, अरमणीयता।**

**न्यासः**

त्वतलौ लभ्येते। तेन स्त्रीपुंसाभ्यामपि सिद्धौ भवतः। यद्येवम्, अन्येष्वर्थेषु सावकाशौ नञ्स्नञौ भावे न सिध्यतः, त्वतल्भ्यां बाध्यमानत्वात्? नैष दोषः; 'भवनात्' इत्यवध्युपादानसामर्थ्याद् भावेऽपि भविष्यतः; इतरथा हि भावमेव विधित्वेनोपाददीत ॥ १२० ॥

**न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटवुधकतरसलसेभ्यः** ॥ अधिकारोऽयम्, तेनोत्तरेषां भाव-प्रत्ययानां प्रतिषेधो विज्ञायते, न त्वतलोरिति मत्वाऽऽह—**इत उत्तरे ये भावप्रत्यया इत्यादि**। न तु 'पृथ्वादिभ्य इमनिज्वा' इत्येवमादिभिर्योगैः परिगणिताभ्य एव प्रकृतिभ्यः प्रत्ययो विधीयते। न च तत्र काचित् प्रकृतिर्नञ्पूर्वा गृह्यते, न च तदन्तविधिरस्ति; ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्। तस्मात् तत्र नञ्पूर्वात् प्राप्ति-र्नास्तीति नास्त्यस्योपयोगः? सत्यम्; यत्र त्वन्तग्रहणम्—'पत्यन्तपुरोहितादिभ्यो यक्' इत्येवमादिषु योगेष्वस्ति, यत्र च स्वरूपग्रहणं नास्ति—'योपधाद् गुरूपोत्तमाद् वुञ्' इत्येवमादिषु, तत्र नञ्पूर्वादपि प्राप्तिरस्तीति प्रतिषेधः

**पदमञ्जरी**

तस्यासम्बन्धात्। अधिकारपक्षे तु प्रतिसूत्रमुपस्थानान्नञ्स्नञोरिमनिजादिष्वन्तर्भावाद् 'आ च त्वात्' इत्येव नञ्स्नञ्भ्यामपि समावेशः सिध्यति। अथ तत्राप्यर्थस्यैवावधित्वादर्थेष्वेवोपस्थानम्, ततोऽधिकारपक्षेऽपि नाभ्यन्त-रत्वमिति सर्वथा चकारेणैव नञ्स्नञ्भ्यां समावेशो वाच्यः॥ १२० ॥

**न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटबुधकतरसलसेभ्यः** ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' ( व्या० परि० १९ ) इति त्वतलोरयं प्रतिषेध इति भ्रान्तिं वारयति। **इत उत्तरे ये प्रत्यया इति**। एतच्च 'आ च त्वात्' इति सम्बन्धाल्लभ्यते। **चतुरादीनीति**। चतुराद्यन्तांस्तत्पुरुषान्नञ्पूर्वानित्यर्थः। ननु 'पृथ्वादिभ्य इमनिज्वा' इत्यादिभिः परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते। न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते। तदन्तविधिश्च ग्रहणवता प्रातिपदिकेन ( व्या० परि० ८९ ) प्रतिषिद्धः। यत्र तर्हि स्वरूपग्रहणं नास्ति पत्यन्ताद्यग्भवति, हायनान्तादण् भवति, 'इगन्ताच्च लघुपूर्वात्', 'योपधाद्गुरूपोत्तमाद्वुञ्' इति, तत्र नञ्पूर्वात्तत्पुरुषादस्त्येव प्रसङ्गस्तद्दर्शयति—**वक्ष्यति पत्यन्तपुरोहितादिभ्यो यगिति**। **अपतित्वमपतितेति**। तत्तु

**भावबोधिनी**

नञ्-स्नञौ" से नञ्, आदिवृद्धि, णत्व—] स्त्रैणम्, स्त्रीत्वम्, स्त्रीता। [ पुंसः भावः—इस अर्थ में ] पौंस्नम्, पुंस्त्वम्, पुंस्ता। [ पुंस् + स्नञ्, संयोगान्तलोप, पुम् के म् का रु, विसर्ग का सत्व करने पर पुंस्त्वम् बनता है। ] ॥ १२० ॥

यहाँ से आगे भाव अर्थ में जो प्रत्यय कहे जायेंगे वे नञ्पूर्वक तत्पुरुष से नहीं होते हैं, किन्तु चतुर, संगत, लवण, वट, बुध, कत, रस और लस—इनको छोड़ कर। [ भाव यह है कि यदि ये चतुरादि शब्द नञ्पूर्वक तत्पुरुष में होंगे तो भी वक्ष्यमाण प्रत्यय हो जायेंगे। आगे कहा जायगा—"पत्यन्त-पुरोहितादिभ्यो यक्।" ( ५।१।१२८ ) [ यह यहाँ नहीं होता है—] अपतित्वम्, अपतिता। [ पत्यन्त होने पर भी नञ्पूर्वक होने से यक् न होकर केवल त्व तल् ही होते हैं। ] अपटुत्वम्, अपटुता। [ यहाँ "इगन्ताच्च लघुपूर्वात्" सूत्र से अण् न होकर केवल त्व, तल् ही होते हैं। ] अरमणीयत्वम् अरमणीयता। [ यहाँ "योपधाद् गुरूपोत्तमाद् वुञ्" ( ५।१।१३२ ) से वुञ् न होकर केवल त्व, तल् ही होते हैं। ]

---

१. 'युध'—इति पाठा०।

नञ्पूर्वादिति किम् ? बार्हस्पत्यम्। प्राजापत्यम्। तत्पुरुषादिति किम् ? नास्य पटवः सन्तीत्यपटुः, तस्य भाव आपटवम्। आलघवम्। अचतुरादिभ्य इति किम् ? आचतुर्यम्। आसङ्गत्यम्। आलवण्यम्। आवट्यम्। आबुध्यम्। आकत्यम्। आरस्यम्। आलस्यम् ॥

**न्यासः**

क्रियते। **अपतित्वमिति**। नञ्समासे कृत उत्तरकालं पत्यन्ताद् भावविवक्षायाम् 'पत्यन्त' इत्यादिना यग् न भवति। **अपटुत्वमिति**। 'इगन्त' इत्यण् न भवति। **अरमणीयत्वमिति**। 'योपधात्' इत्यादिना वुञ् न भवति। नास्य पटवः सन्तीत्यपटुरिति बहुव्रीहिरयम्, तेनास्मादिगन्तलक्षणोऽण् भवति—**आपटवमिति**।

**आचतुर्यमिति**। ब्राह्मणादित्वात् ष्यञ्। ननु च नञ्समासा ब्राह्मणादिषु न पठ्यन्ते, तत् कुतस्तेन ष्यञ् ? नैष दोषः; आकृतिगणो हि ब्राह्मणादिरिष्यते। अचतुरादिप्रतिषेध एवाकृतिग्रहणस्य ज्ञापकम् ॥ १२१ ॥

**पदमञ्जरी**

'आ च त्वात्' इत्यधिकार इत्युक्तम्, ततश्च पत्यन्तेत्यनेनैव त्वतलोरप्यधिकृतयोर्विधानम्। ततः किम् ? यक इव त्वतलोरप्ययं प्रतिषेधः प्राप्नोति। अस्त्वेवमधिकृतयोस्त्वतलोः प्रतिषेधः, 'तस्य भावः' इत्यनेन पुनस्त्वतलौ भविष्यतः; बाधकाभावात्। यदि पत्यन्तादिष्वेवास्योपयोगः, पत्यन्तेत्यस्यैव पुरस्तादिदं पठितव्यम्, तदेवोत्तरत्राप्यनुवर्तिष्यते। एवं तर्ह्यत्र प्रदेशे प्रतिषेधाधिकारस्योपादानादिमनिजादीनामपि प्रतिषेधो विज्ञायते। ननु चोक्तम्-'तदन्तविध्यभावादप्रसङ्गः' इति ? एवं तर्ह्येतज्ज्ञापयति-अस्त्युत्तरत्र तदन्तविधिरिति। किमेतस्य ज्ञापने प्रयोजनम् ? नञ्पूर्वाद् बहुव्रीहेरन्यपूर्वाच्च तत्पुरुषात्पृथ्वाद्यन्तादिमनिजादिः सिद्धो भवति—न विद्यन्ते पृथ्वो यस्य अपृथुः, परमपृथुः, तस्य भाव इति। नात्रेमनिजादिरिष्यते, अत एव **वृत्तिकारेणापि** नास्य पटवःसन्तीत्यपटुरित्यादि व्यावर्त्यं दर्शितम्, तस्मादिहास्य करणे प्रयोजनं चिन्त्यम्। आचतुर्यमित्यादौ ब्राह्मणादित्वात्ष्यञ् ॥ १२१ ॥

**भावबोधिनी**

नञ्पूर्वक से ही नहीं होते है—इसका क्या प्रयोजन है ? बार्हस्पत्यम् [ बृहतां पतिः—इसमें निष्पन्न बृहस्पति से त्यक् हो जाता है क्योंकि इसके पूर्व में नञ् नहीं है। ] प्राजापत्यम् [ प्रजापतेर्भावः कर्म वा—इस अर्थ में त्यक् होता है, निषेध नहीं होता है। ]

तत्पुरुष से [ नहीं होता है ]—इसका क्या फल है ? न अस्य पटवः सन्ति—इस अर्थ में अपटुः, तस्य भावः—इस अर्थ में—आपटवम्, आलघवम् यहाँ नञ्पूर्वक तो है किन्तु तत्पुरुष न होकर बहुव्रीहि है। अत निषेध न होकर अण् होता है, आदिवृद्धि, गुण, अव् आदेश होता है। ]

चतुरादि से निषेध नहीं होता है - इसका क्या फल है ? आचतुर्यम्, आसङ्गत्यम्, आलवण्यम्, आवट्यम्, आबुध्यम्, आकत्यम्, आरस्यम्, आलस्यम्। [ न चतुरः=अचतुरः, तस्य भावः--इस विग्रह में निषेध न होकर ष्यञ् प्रत्यय आदिवृद्धि करने पर—आचतुर्यम् बनता है। इसी प्रकार सभी में नञ् तत्पुरुष करने के बाद ष्यञ् प्रत्यय होता है। ]

**विमर्श**—यह सूत्र नञ्तत्पुरुष से भाव और कर्म में केवल त्व, तल् प्रत्यय ही करता है। परन्तु यदि पहले भाव और कर्म अर्थ में प्रत्यय कर लिया जाय बाद में नञ् समास किया जाय तो भी रूप शुद्ध ही होता है। जैसे—पटोः भावः—इसमें अण् करके पहले पाटवम् बनाने के बाद में नञ् के साथ समास करें तो—अपाटवम् यह होता है। परन्तु यदि अपटोः भावः - इसमें अण् करें तो आपटवम् होता है। इसीलिए प्रस्तुत सूत्र-भाष्य में कैयट ने स्पष्ट लिखा है—

"तदेवं सूत्रं प्रत्याख्यातम्।" ...... "यथातथ-यथापुरयोः पर्यायेण" इत्येतत् सूत्रं विवक्षाभेदेन रूपद्वयसिद्धिं मत्वा भाष्यकारेण प्रत्याख्यास्यते। यदा पूर्वं भावविवक्षा पश्चात् प्रतिषेधविवक्षा तदा—'अयाथातथ्यम्' 'अयाथापुर्यम्' इति भवति। पूर्वं तु प्रतिषेधविवक्षायाम् 'आयथातथ्यम्' 'आयथापुर्यम्' इति भवति। ...... 'क्वचित् पूर्वं भावविवक्षा क्वचित् पूर्वं निषेधविवक्षा" [ म० भा० ५।१।१२४ ] ॥ १२१ ॥

## २००७. पृथ्वादिभ्य इमनिज्वा ॥ १२२ ॥ ( १७८४ )

**'पृथु'—इत्येवमादिभ्यः प्रातिपदिकेभ्य इमनिच्प्रत्ययो भवति वा 'तस्य भावः' इत्येतस्मिन्नर्थे। वावचनमणादेः समावेशार्थम्। पृथोर्भावः प्रथिमा, पार्थवम्। म्रदिमा, मार्दवम्। 'तुरिष्ठेमेयस्सु'[1] ( ६.४.१५४ )' 'टेः' ( ६.४.१५५ ) इति टिलोपः। 'र ऋतो हलादेर्लघोः' ( ६.४.१६१ ) इति रेफादेशः[1]। त्वतलौ सर्वत्र भवत एव —पृथुत्वम्, पृथुता। मृदुत्वम्, मृदुता।**

**पृथु[1]। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आसु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। चण्ड। बाल। अकिञ्चन। होड। पाक[2]। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र। पृथ्वादिः।**

## २००८. वर्णदृढादिभ्यः ष्यञ् च ॥ १२३ ॥ ( १७८७ )

**वर्णविशेषवाचिभ्यः प्रातिपदिकेभ्यो दृढादिभ्यश्च ष्यञ् प्रत्ययो भवति, चकारादिमनिच्च, 'तस्य**

### न्यासः

**पृथ्वादिभ्य इमनिज्वा ॥** पृथ्वादिषु य इगन्ता लघुपूर्वाः पृथुमृदुप्रभृतयः, तेषामणि प्राप्ते; ये गुणशब्दाः खण्ड-चण्ड—इत्येवमादयः, तेषां ष्यञि; ये वयोवचनाः—बाल-वत्स—इत्येवमादयः, तेषाम् 'प्राणभृज्जाति' इत्यादिनाञि सर्वेषामपवाद इमनिज्विधीयते। **वावचनमित्यादि।** आदिशब्देन ष्यञादीनामुपसंग्रहः। वाक्यार्थं तु वावचनं न भवति; महाविभाषयैव वाक्यस्य सिद्धत्वात् ॥ १२२ ॥

**वर्णदृढादिभ्यः ष्यञ्च ॥** बहुवचनं प्रत्येकमभिसम्बध्यते—वर्णेभ्यो दृढादिभ्यश्चेति; तेन बहुवचननिर्देशाद् वर्णशब्देन वर्णवाचिनां ग्रहणमिति विज्ञायते, न स्वरूपस्य। स्वरूपग्रहणे तु वर्णशब्दमपि दृढादिषु एवाधीयीत।

### पदमञ्जरी

**पृथ्वादिभ्य इमनिज्वा ॥ वावचनमणादिसमावेशार्थमिति।** इह ये इगन्ता लघुपूर्वाः पृथुमृदुप्रभृतयस्तेष्वणः समावेशः। चण्डखण्डादिषु गुणवचनेषु ष्यञः, बालवत्सादिषु वयोवचनलक्षणस्याञः। त्वतलोस्तु समावेशः 'आ च त्वात्' इत्येव सिद्धः ? इत्याह - **त्वतलौ तु सर्वत्र भवत एवेति**। १२२ ॥

**वर्णदृढादिभ्यः ष्यञ् च ॥ वर्णविशेषवाचिभ्य इति।** स्वरूपग्रहणं तु न भवति। यदि स्याद्, दृढादिष्वेव वर्णशब्दं पठेत्। वर्णशब्दश्च रूपस्य वाचको न ब्राह्मणादीनाम्; दृढादिभिर्गुणवचनैः साहचर्यात्। अत एव

### भावबोधिनी

पृथु—इत्यादि प्रातिपदिकों से 'तस्य भावः' इस अर्थ में 'इमनिच्' प्रत्यय विकल्प से होता है। अण् आदि प्रत्ययों का समावेश करने के लिए वा = विकल्प का कथन है अर्थात् सभी प्रत्यय होते हैं। उदा०—पृथोर्भावः—इस अर्थ में ( १ ) प्रथिमा ( पृथु + इमनिच् ), ( २ ) पार्थवम् ( पृथु + अण् )। म्रदिमा ( मृदु + इमनिच् ) मार्दवम् ( मृदु + अण् )। इनमें 'तुरिष्ठेमेयस्सु' सूत्र से टि का लोप होता है। 'र ऋतोर्हलादेर्लघोः' सूत्र से 'ऋ' का 'र' आदेश होता है। त्व तथा तल् प्रत्यय तो सर्वत्र होते ही हैं —पृथुत्वम्, पृथुता, मृदुत्वम्, मृदुता। [ इनकी प्रक्रिया पहले "आ च त्वात्" ५।१।१२० सूत्र की व्याख्या में की जा चुकी है। ]

[ पृथ्वादिगण में पठित शब्द—] पृथु। मृदु। महत्। पटु। तनु। लघु। बहु। साधु। वेणु। आसु। बहुल। गुरु। दण्ड। ऊरु। खण्ड। चण्ड। बाल। अकिंचन। होड। पाक। वत्स। मन्द। स्वादु। ह्रस्व। दीर्घ। प्रिय। वृष। ऋजु। क्षिप्र। क्षुप्र। क्षुद्र। ये पृथ्वादि हैं ॥ १२२ ॥

वर्णविशेष के वाचक से और दृढ आदि प्रातिपदिकों से 'तस्य भावः' इस विषय में 'ष्यञ्' प्रत्यय होता है और 'च' के बल से 'इमनिच्' भी होता है। [ तथा त्व और तल् ये सामान्य प्रत्यय तो होते ही हैं। अतः चार-चार रूप बनते

---

१—१. अयं पाठो बहुषु पुस्तकेषु नास्ति। २. 'पान' इति पाठा०।

**भाव:' इत्येतस्मिन्विषये। शुक्लस्य भाव: शौक्ल्यम्, शुक्लिमा, शुक्लत्वम्, शुक्लता। कार्ष्ण्यम्, कृष्णिमा, कृष्णत्वम्, कृष्णता। दृढादिभ्य:—दार्ढ्यम्, द्रढिमा, दृढत्वम्, दृढता।**

**षकारो ङीषर्थ:—औचिती, याथाकामी।**

**न्यास:**

वर्णशब्दश्च गुणविशेषस्य वाचक:, न ब्राह्मणादीनाम्। कुत: ? दृढादिभिर्गुणवचनै: साहचर्य्यात्। अत एवाह—दृढादिभि: साहचर्य्याद् रूपविशेषा एव शुक्लादय: प्रत्ययमुत्पादयन्ति, न तु स्वरूपशब्दा:, नापि तत्पर्याया:। कथम् ? दृढादयो हि गुणा उपसर्जनं द्रव्ये वर्त्तन्ते। तत्साहचर्य्याद् वर्णशब्दा अपि तत्सदृशा एव गृह्यन्ते। न वर्णशब्दस्य तत्पर्यायाणां वा तादृशा वृत्तिरस्ति; गुणमात्रवचनत्वात्। वर्णदृढादीनां गुणवचनत्वादेव सिद्धे पुनर्वचनमिमनिजर्थम्। यद्येवम्, ष्यञ्ग्रहणमनर्थकम्, इमनिजेव विधेय:, स च विभाषयैव प्रकृत: ? तदुच्यते; अवश्यं ष्यञ्ग्रहणमुत्तरार्थं कर्त्तव्यम्। तत्र वा क्रियत इह वेति नास्ति विशेष:। **शुक्लिमेति**। पूर्ववट्टिलोप। **द्रढिमेति**। पूर्ववदृकारस्य रभाव:।

**औचिती, याथाकामीति**। 'षिद्गौरादिभ्यश्च' इति ङीष्। 'हलस्तद्धितस्य' इति यलोप:।

**वेर्यातलाभमतिमन:शारदानामिति** पठ्यते। तस्यायमर्थ:—विशब्दादुत्तरेषां यातादीनां प्रत्यया भवन्तीति। वियातत्वम्, वियातता, वियातिमा, वैयात्यम्। विलाभता, विलाभत्वम्, वैलाभ्यम्, विलाभिमा। विमतित्वम्, विमतिता, वैमत्यम्, विमतिमा, 'इगन्तात्' इत्यण्, वैमतम्। विमनस्त्वम्, विमनस्ता, विमनिमा, वैमनस्यम्।

**पदमञ्जरी**

साहचर्याद्वर्णग्रहणात्पर्यायाणां ग्रहणं न भवति। कथम् ? दृढादयो हि गुणोपसर्जने द्रव्ये वर्त्तन्ते, अतस्तत्साहचर्याद्वर्णशब्दा अपि तादृशा एव गृह्यन्ते। एवञ्च वर्णदृढादीनां गुणवचनत्वादेव सिद्धे पुनर्वचनमनिजर्थम्।

**औचिती, याथाकामीति**। ब्राह्मणादेराकृतिगणत्वात्ष्यञ्, ङीष्, 'हलस्तद्धितस्य' इति यलोप:।

**वेर्यातलाभमतिमन:शारदानामिति**। विशब्दादुत्तरे ये यातादयस्तदन्तानां समासानामनन्तर: ष्यञ् भवतीत्यर्थ:। वियातत्वम्, वियातता, वियातिमा, वैयात्यम्। विलाभत्वम्, विलाभवता, विलाभिमा, वैलाभ्यम्। विमतित्वम्, विमतिता, विमतिमा, वैमत्यम्; इगन्तत्वादणपि भवति, वैमतम्। विमनस्त्वम्, विमनस्ता, विमनिमा, वैमनस्यम्। विशारदत्वम्, विशारदता, विशारदिमा, वैशारद्यम्। **समो मतिमनसोरिति**। सम उत्तरे ये मतिमनसी तयो: समासयोरनन्तर: ष्यञ्—संमतित्वम्, संमतिता, संमतिमा, साम्मत्यम्; पूर्ववदण्—सांमतम्। संमनस्त्वम्, संमनस्ता, संमनिमा, सांमनस्यम्॥ १२३॥

**भावबोधिनी**

हैं।] उदा०—शुक्लस्य भाव:—इस अर्थ में (१) शौक्ल्यम् (—शुक्ल+ष्यञ्=य, आदिवृद्धि), (२) शुक्लिमा (शुक्ल+इमनिच्=इमन्), (३) शुक्लत्वम्, (४) शुक्लता। [इसी प्रकार कृष्णस्य भाव:—इस अर्थ में—] (१) कार्ष्ण्यम् [कृष्ण+ष्यञ्=य, ऋ की वृद्धि, रपर], (२) कृष्णिमा, (३) कृष्णत्वम्, (४) कृष्णता। दृढ आदि से प्रत्यय के उदा०—दार्ढ्यम्, [दृढ+ष्यञ्], द्रढिमा, [दृढ+इमनिच्=इमन्, ऋ का र=द्रढ+इमन्] दृढत्वम्, दृढता। [दृढ+त्व, दृढ+तल्+टाप्=आ]

[ष्यञ् का] षकार ङीष् के लिए है—औचिती, याथाकामी। ["गुणवचनब्राह्मणादिभ्य: कर्मणि च" (५।१।१२४) में ब्राह्मणादिगण को आकृतिगण मानकर ष्यञ् करने पर—उचित+ष्यञ्=य, आदिवृद्धि, "षिद्गौरादिभ्यश्च" से ङीष्=ई, 'हलस्तद्धितस्य" से यलोप—औचित् ई। कामम् अनतिक्रम्य—इस अर्थ में—यथाकामम्, "चतुर्वर्णादीनां स्वार्थे" इस वचन से स्वार्थ में ष्यञ् यथाकाम+ष्यञ्=य, आदिवृद्धि, लोकव्यवहार से स्त्रीत्व मानकर ङीष् करने पर 'याथाकामी' होता है। औचित्य=औचिती। यथाकामम्=याथाकामी।]

**दृढ । परिवृढ । भृश । कृश । चक्र । आम्र । लवण । ताम्र । अम्ल । शीत । उष्ण । जड । बधिर । पण्डित । मधुर । मूर्ख । मूक । ❀ 'वेर्यातलाभमतिमनःशारदानाम्' ❀ ( ग० सू० १११ ) । ❀ 'समो मतिमनसोर्जवने'[1] ❀ ( ग० सू० ११२ ) । दृढादिः[2] ॥**

## २००९. गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२४ ॥ ( १७८८ )

**गुणमुक्तवन्तो गुणवचनाः । गुणवचनेभ्यो ब्राह्मणादिभ्यश्च तस्येति षष्ठीसमर्थेभ्यः कर्मण्यभिधेये ष्यञ्प्रत्ययो भवति । चकाराद् भावे च । कर्मन्शब्दः क्रियावचनः । जडस्य भावः कर्म वा जाड्यम् ।**

**न्यासः**

विशारदत्वम्, विशारदता, वैशारद्यम्, विशारदिमा । **समो मतिमनसोरिति** । सम उत्तरयोर्मतिमनसोः प्रत्ययो भवति । संमतिता, संमतित्वम्, संमतिमा, सांमत्यम् । संमनस्त्वम्, संमनस्ता, संमनिमा, सांमनस्यम् ॥ १२३ ॥

**गुणवचनब्राह्मणादिभ्यः कर्मणि च** ॥ 'तस्येदम्' इति शैषिकेषु प्राप्तेषु कर्मणि ष्यञ्विधानम्, चकाराद् भावे च । **कर्मशब्दः क्रियावचन इति** । साधनकर्मवचनशङ्कामपाकरोति । ये हि जडादिशब्दाः, गुणशब्दाः, गुणवचनाः, ब्राह्मणादयश्च तेषां साधनकर्मणा सम्बन्धो न सम्भवति; क्रियावाचकत्वाभावात् । तस्मात् क्रियाशब्द एव कर्मशब्दः । **ब्राह्मणादिराकृतिगण इति** । अवृत्कृतत्वात् । **आदिशब्दः प्रकार इति** । एवं प्रकारेभ्यः ष्यञ्

**पदमञ्जरी**

**गुणवचनब्राह्मणादिभ्यः कर्मणि च** ॥ **कर्मशब्दः क्रियावचन इति** । न साधनकर्मवचनः; क्रियाया हि साधनं सम्भवति । सत्त्वशब्दाश्च गुणवचनब्राह्मणादयः, अतस्तेषां नास्ति साधनकर्मणा सम्बन्धः । क्रिया त्वात्मलाभाय तैर्युज्यते । कथं तर्हि कवेः कर्म काव्यम्, न हि तत्र क्रियाभिधीयते, किं तर्हि, तत्कृतो ग्रन्थः ?

**भावबोधिनी**

[ दृढादिगण में पठित शब्द—] दृढ । परिवृढ । भृश । कृश । चक्र । आम्र । लवण । ताम्र । आम्ल । शीत । उष्ण । जड़ । बधिर । पण्डित । मधुर । मूर्ख । मूक । ❀ 'वि' के उत्तरवर्ती यात आदि से भावार्थक ष्यञ् आदि होते हैं । ❀ सम् के उत्तरवर्ती मति और मनस् से जवन अर्थ में ष्यञ् आदि होते हैं । ❀ ये दृढादि हैं ।

**विमर्श**—दृढादिगण में अनेक प्रचलित शब्दों का संग्रह है । लावण्य, शैत्य, जाड्य, पाण्डित्य, माधुर्य आदि शब्द इसी से ष्यञ् करने पर बनते हैं ।

इस गण में दो गणसूत्र हैं । प्रथम के अनुसार 'वि' शब्द के बाद 'यात' आदि हों अर्थात् उनका समास हो तो ये प्रत्यय होते हैं—वियातत्वम्, वियातता, वियातिमा, वैयात्यम् । विलाभत्वम्, विलाभता, वैलाभ्यम्, विलाभिमा । विमतित्वम्, विमतिता, वैमत्यम्, विमतिमा, इसका पाँचवाँ रूप होता है—"इगन्ताच्च लघुपूर्वात्" ( ५।१।१३१ ) से अण् करने पर—वैमतम् । विमनस्त्वम्, विमनस्ता, विमनिमा, वैमनस्यम् । विशारदत्वम्, विशारता, विशारदिमा, वैशारद्यम् ।

सम् के मति और मनस् रहने पर—सम्मतित्वम्, सम्मतिता, सम्मतिमा, साम्मत्यम्, अण् होने पर साम्मतम् । संमनस्त्वम्, संमनस्ता, संमतिमा, सांमनस्यम् ॥ १२३ ॥

गुण को कहने वाले—गुणवचन हैं । गुणवाचक और ब्राह्मणादि जो 'तस्य' ( उसका ) इस प्रकार के षष्ठी समर्थ हैं उनसे कर्म अभिधेय रहने पर ष्यञ् प्रत्यय होता है । 'च' के द्वारा भाव अर्थ में भी होता है । 'कर्मन्' शब्द क्रियावाचक है । [ कारकवाचक नहीं है । ] गुण से उदा०—जडस्य भावः कर्म वा—इस अर्थ में जाड्यम् । [ जड़ का

१. 'जवन' इति बहुषु पुस्तकेषु नास्ति ।
२. बाल, तरुण, मन्द, स्थिर, बहुल, दीर्घ, मूढ, आकृष्ट—अत्रैते शब्दा अधिकाः ।

**ब्राह्मणादिभ्यः खल्वपि**— ब्राह्मण्यम् । माणव्यम् ।

आ पादपरिसमाप्तेर्भावकर्माधिकारः । ब्राह्मणादिराकृतिगणः । आदिशब्दः प्रकारवचनः ।

**❀ चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम् ❀ ( म० भा० ५.१.१२४ वा० १ )** । चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैलोक्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । सौख्यम् ।

**न्यासः**

भवतीत्येवमर्थमादिशब्दः प्रकारवचनत्वं बोधयति । यद्येवम्, गुणवचनग्रहणं प्रातिपदिकेषु च ब्राह्मणादीनामनुक्रमणमनर्थकं स्यात् ? नानर्थकम्; प्रपञ्चार्थं हि तत्, स्वार्थे विधानार्थञ्च । तत्र ब्राह्मणशब्दात् 'प्राणभृज्जाति' इति जातिवचनत्वादञि प्राप्ते तद्बाधनार्थं ष्यञ्विधीयते । माणववाडवाभ्यां गोत्रलक्षणे वुञि ।

**अर्हतो नुम् चेति** । अस्य नुमर्थः पाठः—**आर्हन्त्यम्** । **चोरधूर्त्ताभ्यां** मनोज्ञादित्वाद्वुञि प्राप्ते । **आराधय, विराधय, अपराधय**—इत्येतेभ्योऽपत्यविवक्षायाम् 'जनपदशब्दात् क्षत्रियादञ्', तस्य 'कम्बोजाल्लुक्' इति लुक् । ततो गोत्रवुञि प्राप्ते पाठः । **एकभावादी**नामन्यभावपर्यन्तानां स्वार्थे विधानार्थम् । **अक्षेत्रज्ञ**शब्दस्य 'न नञ्पूर्वात्' इति प्रतिषेधे प्राप्ते । प्राग् बालिशशब्दात् **कुशलादीनां** युवादित्वादणि प्राप्ते । **बालिश**शब्दो वयोवचनः, तस्माद् वयोलक्षणेऽञि प्राप्ते । **अनीश्वर**शब्दस्य 'न नञ्पूर्वात्' इति प्रतिषेधे प्राप्ते । **अलस** इति बहुव्रीहिः ष्यञमुत्पादयति, तत्पुरुषात् तु 'न नञ्पूर्वात्' इति प्रतिषेधेन भवितव्यम्; तस्य प्रपञ्चार्थः पाठः । राजन्शब्दस्य पुरोहितादित्वाद् यकि प्राप्ते । **संवादिन्, संवेशिन्, बहुभाषिन्, शीर्षघातिन्, समस्थ, परमस्थ, दुष्पुरुष** - इत्येव-

**पदमञ्जरी**

अत्राहुः—क्रियाकर्मण्येव प्रत्ययविधानम्, औपचारिकस्तु तत्कृते प्रयोग इति । अपर आह—सूत्रे यः कर्मशब्दो यश्च **वृत्तौ** क्रियाशब्दः, तदुभयमपि कर्मसाधनं कर्म, क्रियाकार्यमित्यर्थः, तेन कृतिव्याप्ये साधनकर्मण्येव प्रत्यय इति । **ब्राह्मणादिराकृतिगण इति** । अवृत्कृतत्वात् । एतदेवोपपादयति—**आदिशब्दः प्रकारवचन इति** ।

किमर्थं तर्हि गुणवचनग्रहणम्, ब्राह्मणादीनां चानुक्रमणम् ? केषाञ्चित्प्रपञ्चार्थम्; केषाञ्चित्स्वार्थे प्रत्ययविधानार्थम्, केषाञ्चिद् बाधकबाधनार्थम् । तत्र ब्राह्मणशब्दात्प्राणभृज्जातिलक्षणेऽञि प्राप्ते, 'माणववाडवाभ्यां गोत्रलक्षणे' वुञि । 'अर्हतो नुम् च' ( ग० सू० ११३ ) इति नुमर्थः पाठः; 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः—आर्हन्त्यम् । चोरधूर्तयोर्मनोज्ञादित्वाद्वुञि प्राप्ते सोऽपि भवत्येव । आराधयादीनां चतुर्णां जनपदवाचित्वादञि कृते, तस्य च 'कम्बोजादिभ्यो लुग्ववचनम्' ( वा० ३९६ ) इति लुकि गोत्रवुञि प्राप्ते पाठः । एकभावादीनामन्यभावपर्यन्तानां स्वार्थे विधानार्थम् । तथा च वार्त्तिके प्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अक्षेत्रज्ञानीश्वरशब्दयोः 'न नञ्पूर्वात्' इति निषेधे प्राप्ते, कुशलादीनां युवादित्वादणि प्राप्ते, बालिशशब्दा-

**भावबोधिनी**

भाव अथवा कार्य । ] ब्रह्मणादि से प्रत्यय के उदा०—ब्राह्मण्यम् । [ ब्राह्मणस्य भावः कर्म वा । ] माणव्यम् । [ माणवस्य भावः कर्म वा । ]

इस प्रथम पाद की समाप्ति तक भाव और कर्म का अधिकार है । ब्राह्मणादिगण आकृतिगण है । [ अतः पठित शब्दों से भिन्न का भी ग्रहण होता है । ] 'आदि' शब्द प्रकारवाचक है । [अतः ब्राह्मणादि से भिन्न शब्द भी लिए जाते हैं । ]

❀ चातुर्वर्ण्य आदि में स्वार्थ में ष्यञ् का उपसंख्यान करना चाहिये । [ इनमें भाव या कर्म अर्थ नहीं होता है । ] ❀ उदा०—चत्वारः वर्णा एव—इस स्वार्थ में—चातुर्वर्ण्यम् । [ चतुर्वर्ण + ष्यञ् ] चातुराश्रम्यम् । [ चत्वार आश्रमा एव । ] त्रैलोक्यम् । [ त्रयः लोका एव । ] त्रैस्वर्यम् । [ त्रयः स्वरा एव । ] षाड्गुण्यम् । [ षड्गुणा एव । ] सैन्यम् । [ सेना एव । ] सान्निध्यम् । [ सन्निधिः एव । ] सामीप्यम् । [ समीप एव ] औपम्यम् । [ उपमा एव ] सौख्यम् । [ सुखम् एव । ] [ अतः उक्त शब्दों में ष्यञ् देख कर भाव या कर्म अर्थ समझना भूल है । ]

**ब्राह्मण । वाडव । माणव । चोर । मूक । आराधय । विराधय । अपराधय । उपराधय । एकभाव । द्विभाव । त्रिभाव । अन्यभाव । समस्थ । विषमस्थ । परमस्थ । मध्यमस्थ । अनीश्वर । कुशल । कपि । चपल । अक्षेत्रज्ञ । निपुण । ❀ अर्हतो नुम् च ❀ ( वा० २ ) ( ग० सू० ११३ ) आर्हन्त्यम् । संवादिन् । संवेशिन् । बहुभाषिन् । बालिश । दुष्पुरुष । कापुरुष । दायाद । विशसि [विशस्ति] । धूर्त्त । राजन् । सम्भाषिन् । शीर्षपातिन् । अधिपति । अलस । पिशाच । पिशुन । विशाल । गणपति । धनपति । नरपति । गडुल । निव । निधान । विष । ❀ सर्ववेदादिभ्यः स्वार्थे ❀ ( ग० सू० ११४ ) । ❀ चतुर्वेदस्योभयपदवृद्धिश्च ❀ । ( ग० सू० ११५ ) चातुर्वैद्यम्[1] । ब्राह्मणादिः ॥**

**न्यासः**

मादीनां नञ्पूर्वार्थः पाठः । **गणपति, अधिपति**—इत्येतयोः पत्यन्तलक्षणे यकि प्राप्ते । **गडुल, दायाद, विशस्ति**—इत्येतेषां त्वतलोर्निवृत्त्यर्थः । शेषाणां प्रपञ्चार्थः । गुणवचना एको राशिः, ब्राह्मणादयो द्वितीयः, ताभ्यां भावे कर्मणि यथासंख्यं प्राप्नोति, तत् कस्मान्न भवति ? ब्राह्मणादिशब्दस्याल्पाच्तरस्य परनिपातात् । स हि लक्षणे निरपेक्षतां निर्देशस्य ज्ञापयन् यथासंख्यलक्षणानपेक्षतामपि बोधयति, तेन यथासंख्यं न भवति ॥ १२४ ॥

**पदमञ्जरी**

द्वयोर्लक्षणेऽञि प्राप्ते, राजशब्दस्य पुरोहितादित्वाद्यकि प्राप्ते, गणपत्यधिपत्योः पत्यन्तलक्षणे यकि । शेषाणामलसादीनां पाठः प्रपञ्चार्थः ।

**सर्ववेदादिभ्यः स्वार्थे इति** । सर्वे वेदाः सर्ववेदाः, पूर्वकालेति समासः, सर्ववेदानधीत इत्यण, 'सर्वसादेर्द्विगोश्च लः' इति लुक्, सर्ववेद एव सार्ववेद्यः । **चतुर्वेदस्योभयपदवृद्धिश्चेति** । चतुरो वेदानधीते इति तद्धितार्थे द्विगुः, अणो लुक्, चतुर्वेद एव चातुर्वैद्यः । क्वचित्तु **चातुर्वैद्यस्येति** पाठः, तत्र सिद्धय इति शेषः, चतस्रो विद्या अधीत इत्यादि पूर्ववद् विद्यालक्षणकल्पसूत्रान्तादिति ठक्, पूर्ववल्लुक्, चतुर्विद्य एव चातुर्वैद्यः ॥ १२४ ॥

**भावबोधिनी**

[ ब्राह्मणादिगण में पठित शब्द ] ब्राह्मण । वाडव । माणव । चोर । मूक । आराधय । विराधय । अपराधय । उपराधय । [ इनके ग्रहण का अभिप्राय न्यास में देखें । ] एकभाव । द्विभाव । त्रिभाव । अन्यभाव । [ एकभाव से लेकर अन्य भाव तक स्वार्थ में प्रत्यय होते हैं । ] समस्थ । विषमस्थ । परमस्थ । मध्यमस्थ । अनीश्वर । कुशल । कपि । चपल । अक्षेत्रज्ञ । निपुण । ❀ अर्हत् से ष्यञ् प्रत्यय और नुम् आगम होता है । ❀ उदा०—आर्हन्त्यम् । [ अर्हत्+ष्यञ् = य, नुम् = न् आगम, आदिवृद्धि । ङीष् होने पर 'आर्हन्ती' बनता है । ] संवादिन् । संवेशिन् । बहुभाषिन् । बालिश । दुष्पुरुष । [ इनके पाठ का प्रयोजन भी न्यास में देखें । ] कापुरुष । दायाद । विशस्ति [ विशसि ] । धूर्त । राजन् । सम्भाषिन् । शीर्षपातिन् । अधिपति । अलस । पिशाच । पिशुन । विशाल । गणपति । जनपति । नरपति । गडुल । निव । निधान । विष । ❀ सर्ववेद आदि शब्दों से स्वार्थ में ष्यञ् होता है । ❀ [ सर्वे वेदाः - सर्ववेदाः तान् अधीते—इस अर्थ में प्रत्यय का लुक् हो जाने पर सर्ववेदः । सर्ववेदः एव सार्ववेद्यः = सभी वेदों को पढ़ने वाला । ] ❀ चतुर्वेद की उभयपद वृद्धि होती है । ❀ [ चतुरो वेदान् अधीते—इस अर्थ में चतुर्वेदः । चतुर्वेदः एव चातुर्वैद्यः । काशिका में नपुंसकलिंग का पाठ चिन्त्य है—] चातुर्वैद्यम् । ये ब्राह्मणादि हैं ॥ १२४ ॥

१. स्वभाव । निघातिन् । विघातिन् । राजपुरुष । विशस्ति । विशाय । विशात । विजात । नयात । सुहित । दीन । विदग्ध । उचित । समग्र । शील । तत्पर । इदम्पर । यथा । तथा । पुरस् । पुनःपुनर् । अभीक्ष्ण । तरतम । प्रकाम । यथाकाम । निष्कुल । स्वराज । युवराज । सम्राज् । अविदूर । अपिशुन । अनृशंस । अयथातथ । अयथापुर । स्वधर्म । अनुकूल । परिमण्डल । विश्वरूप । ऋत्विज् । उदासीन । ईश्वर । प्रतिभू । साक्षि । मानुष । आस्तिक । नास्तिक । युगपत् । पूर्वापर । उत्तराधर—एते शब्दा अत्र गणेऽधिकाः पुस्तकान्तरे ।

**२०१०. स्तेनाद्यन्नलोपश्च ॥ १२५ ॥ ( १७९० )**

**स्तेनशब्दात्षष्ठीसमर्थाद्भावकर्मणोर्यत्प्रत्ययो भवति, नशब्दस्य लोपश्च भवति। स्तेनस्य भावः कर्म वा स्तेयम्।**

**'स्तेनात्' इति केचिद् योगविभागं कुर्वन्ति। स्तेनात्ष्यञ् भवति—स्तैन्यम्। ततः 'यन्नलोपश्च'। स्तेनादित्येव—स्तेयम् ॥**

**२०११. सख्युर्यः ॥ १२६ ॥ ( १७९१ )**

**सखिशब्दाद् यः प्रत्ययो भवति भावकर्मणोरर्थयोः। सख्युर्भावः कर्म वा सख्यम्।**

**❀ दूतवणिग्भ्यां चेति वक्तव्यम् ❀ ( ? )। दूत्यम्। वणिज्यम्। कथं वाणिज्यम्? ब्राह्मणादित्वात् ॥**

**२०१२. कपिज्ञात्योर्ढक् ॥ १२७ ॥ ( १७९२ )**

**कपि, ज्ञाति—शब्दाभ्यां ढक् प्रत्ययो भवति भावकर्मणोरर्थयोः। कपेर्भावः कर्म वा कापेयम्। ज्ञातेयम्।**

**न्यासः**

**स्तेनाद्यन्नलोपश्च ॥ १२५ ॥ सख्युर्यः ॥ दूतवणिग्भ्याञ्चेत्यादि।** दूतवणिग्भ्यां यो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः—दूतवणिग्भ्याञ्चेत्यादि। दूतवणिग्भ्यामपि भवति ॥ १२६ ॥

**कपिज्ञात्योर्ढक् ॥** कपिशब्दात् 'इगन्ताच्च लघुपूर्वात्' इत्यणि प्राप्त इदं विधीयते। **यथासंख्यमित्यादि।** तत्र 'गुणवचनब्राह्मणादिभ्यः' इत्यत्र यथासंख्याभावः प्रतिपादितः, इहापि प्रतिपाद्यते। तत्रेदं प्रतिपादनम्—

**पदमञ्जरी**

**स्तेनाद्यन्नलोपश्च ॥** 'स्तेन चौर्ये' ( धा० पा० १८९७ ), पचाद्यच्, स्तेनः। **नशब्दस्येति।** एतेन सङ्घातस्येदं ग्रहणमिति दर्शयति। वर्णग्रहणे तु नकारलोपे कृतेऽकारस्य यस्येति लोपः। तस्य पूर्वविधौ स्थानिवद्भावादयादेशः प्राप्नोति। ननु सङ्घातग्रहणेऽपि 'अलोऽन्त्यस्य' इत्यन्त्यस्य प्राप्नोति? सिद्धोऽन्त्यलोपः 'यस्येति च' इति; तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति, 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारेषु' ( व्या० परि० ६२ ) इति च परिभाषां पठन्ति। **स्तेनादिति योगविभागं कुर्वन्तीति।** भाष्येऽनुक्तमपि स्तैन्यशब्दस्य प्रयोगबाहुल्यादिदमुक्तम् ॥ १२५ ॥ १२६ ॥

**कपिज्ञात्योर्ढक् ॥** इह कपिज्ञाती द्वौ, भावकर्मणी चार्थौ द्वावेवेति संख्यातानुदेशः प्राप्नोति, एवम्

**भावबोधिनी**

षष्ठीसमर्थ 'स्तेन' शब्द से 'भाव' और कर्म अर्थ में 'यत्' प्रत्यय होता है और 'न' का लोप होता है। उदा०—स्तेनस्य भावः कर्म वा—स्तेयम्। [ स्तेन + यत् न का लोप ]

कुछ विद्वान् 'स्तेनात्' यह योगविभाग करते हैं—'स्तेन शब्द से ष्यञ् होता है'—स्तैन्यम्। [ स्तेन + ष्यञ् = य, आदिवृद्धि भसंज्ञा, अलोप ] 'इसके बाद दूसरा योग है—'यन्नलोपश्च'। [ यत् प्रत्यय और न का लोप होता है। ] यह केवल स्तेन शब्द से ही होता है—स्तेयम्। [ इसके अनुसार दो रूप होते हैं। ] ॥ १२५ ॥

भाव और कर्म अर्थ में 'सखि' शब्द से 'य' प्रत्यय होता है। उदा०—सख्युः भावः कर्म वा—इस अर्थ में—सख्यम्। [ सखि + य, भसंज्ञा, इलोप। ]

❀ दूत और वणिक् शब्दों से भी 'य' प्रत्यय होता है। ❀ उदा०—दूत्यम्। वणिज्यम्। यदि य प्रत्यय होता है तब 'वाणिज्यम्' यह [ वृद्धियुक्त ] रूप कैसे होता है? ब्राह्मणादिगण में पाठ मान कर ष्यञ् करके बनाते हैं ॥ १२६ ॥

भाव तथा कर्म अर्थों में कपि और ज्ञाति शब्दों से 'ढक्' प्रत्यय होता है। उदा०—कपेर्भावः कर्म वा—इस में कापेयम् [ कपि + ढञ् = एय, आदिवृद्धि, भसंज्ञा, इलोप ] ज्ञातेयम्। [ ज्ञातेः भावः कर्म वा—यह विग्रह है। ज्ञाति =

यथासंख्यमर्थयोः सर्वत्रैवात्र प्रकरणे नेष्यते ॥

**२०१३. पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥ ( १७९३ )**

पत्यन्तात्प्रातिपदिकात्पुरोहितादिभ्यश्च यक् प्रत्ययो भवति भावकर्मणोरर्थयोः। सेनापतेर्भावः कर्म वा सैनापत्यम्। गार्हपत्यम्। प्राजापत्यम्। पौरोहित्यम्। राज्यम्।

पुरोहित। राजन्। ॐ राजाऽसे ॐ ( ग० सू० ११६ )। संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक। कृषिक। पूतिक। पत्रिक। प्रतिक। अजानिक। सलनिक। सूचिक। शाक्वर। सूचक। पक्षिक। सारथिक। जलिक। सूतिक। अञ्जलिक। सूचक[1]। पुरोहितादिः ॥

**न्यासः**

अत्र चकारोऽनुवर्त्तते, स चैकस्याः प्रकृतेर्भावे कर्मणि च ढग्विधिं समुच्चिनोति। तेन यथासंख्यं न भवति; अन्यथा हि समुच्चयो नोपपद्यते। अस्वरितत्वाद्वा यथासंख्यं न भविष्यति, प्रतिपादितं हि पूर्वम्—'स्वरितत्वेन यथासंख्यं भवति' इति। न चेह यथासंख्यार्थं स्वरितत्वं प्रतिज्ञायते ॥ १२७ ॥

**पत्यन्तपुरोहितादिभ्यो यक्** ॥ पत्यन्तात् पूर्ववदणि प्राप्ते, पुरोहितादिषु राजशब्दात् ब्राह्मणादिपाठात् ष्यञि, शेषेभ्यस्त्वतलोर्यग् विधीयते। **राजासे इति**। राजशब्दादसे = असमासे यग् भवति—राज्यमिति। समासे तु ब्राह्मणादित्वाद् ष्यञेव भवति—आधिराज्यमिति। ननु च केवलो राजशब्दो ब्राह्मणादिषु पठ्यते, तत् कथमधिराजशब्दात्? तदन्तविधिना; एतदेव ज्ञापकमसे इति वचने—अस्तीह प्रकरणे राजशब्देन तदन्तविधि-

**पदमञ्जरी**

'पत्यन्तपुरोहितादिभ्यो यक्', 'हायनान्तयुवादिभ्योऽण्' इत्यत्रेत्याशङ्क्याह—**यथासंख्यं सर्वत्रैवात्र प्रकरणे नेष्यत इति**। तदर्थस्य स्वरितत्वस्याप्रतिज्ञानादिति भावः ॥ १२७ ॥

**पत्यन्तपुरोहितादिभ्यो यक्** ॥ **राजास इति**। राजशब्दोऽसेऽसमासे यकमुत्पादयति—राज्ञो भावः कर्म वा राज्यम्। 'असे' इति किम्? आधिराज्यम्, ब्राह्मणादित्वात्ष्यञ्। यद्यपि तत्र राजशब्दः पठ्यते, तथाप्ययमेवास इति प्रतिषेधो ज्ञापयति—'अस्त्यत्र राजशब्दे तदन्तविधिः' इति। एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति।

**भावबोधिनी**

बन्धु-बान्धव। ]

[ भाव और कर्म दो अर्थ हैं। कपि और ज्ञाति ये दो शब्द हैं। इनमें यथासंख्य मानना चाहिये? ] इस पूरे प्रकरण में अर्थों का यथासंख्य इष्ट नहीं है ॥ १२७ ॥

जिन प्रातिपदिकों के अन्त में 'पति' शब्द है उनसे और पुरोहित आदि शब्दों से 'भाव' तथा 'कर्म' अर्थों में 'यक्' प्रत्यय होता है। उदा०—सेनापतेः भावः कर्म वा—इस विग्रह में 'सैनापत्यम्' [ सेनापति + यक् = य, 'किति च' सूत्र से आदिवृद्धि, भसंज्ञा, इलोप ] गार्हपत्यम्। [ गृहपतेः भावः कर्म वा—यह अर्थ है। ] प्राजापत्यम् [ प्रजापतेः भावः कर्म वा—यह विग्रह है। ] पौरोहित्यम्। [ पुरोहितस्य भावः कर्म वा—यह अर्थ है। ] राज्यम्। [ राज्ञः भावः कर्म वा—इस विग्रह में राजन् + यक्, भसंज्ञा, टिलोप। ]

[ पुरोहितादिगण में पठित शब्द—] पुरोहित। ॐ राजाऽसे ॐ ( राजन् शब्द से असे=असमास में यक् होता है ) संग्रामिक। एषिक। वर्मित। खण्डिक। दण्डिक। छत्रिक। मिलिक। पिण्डिक। बाल। मन्द। स्तनिक। चूडितिक।

१. शर्मिक। चर्मिक। कर्मिक। शीलिक। मूलिक। तिलिका। तिष्विक। अञ्जतिका। ऋषिक। पुत्रक। पथिका। प्रचिक। प्रविक। परिक्षक। पूजनिक। मूचिक। स्वारिक। चूडिक—एते शब्दा अत्र गणे पुस्तकान्तरेऽधिकाः।

## २०१४. प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥ ( १७९४ )

**प्राणभृज्जातिवाचिभ्यः प्रातिपदिकेभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् प्रत्ययो भवति भावकर्मणोरर्थयोः । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । वयोवचनेभ्यः—कौमारम् । कैशोरम् । उद्गात्रादिभ्यः—औद्गात्रम् । औन्नेत्रम् ।**

**उद्गातृ । उन्नेतृ । प्रतिहर्तृ । रथगणक । पक्षिगणक[1] । सुष्ठु । दुष्ठु । अध्वर्यु । वधू । ॐ सुभग मन्त्रे[2] ॐ ( ग० सू० ११७ ) । उद्गात्रादिः ॥**

**न्यासः**

रिति । इह पत्यन्तपुरोहितादी इति द्वौ राशी, अर्थावपि भावकर्मणी द्वावेवेति साम्याद्यथासंख्यं प्राप्नोति; तदस्वरितत्वात् पूर्ववन्न भवति ॥ १२८ ॥

**प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ॥ प्राणभृतः प्राणिन उच्यन्ते, तेषां जातिः प्राणभृज्जातिरित्यर्थः । तद्वाचिनो यथासम्भवं त्वतलादिष्वञ्विधीयते । प्राणभृद्ग्रहणात् तृणादिशब्देभ्यो न भवति—तृणत्वम्, तृणतेति । जातिग्रहणाद् देवदत्तादिशब्देभ्यो न भवति—देवदत्तत्वम्, देवदत्तता । यदिगन्तं लघुपूर्वं च तस्मात् परत्वादण् भवति । [3]**तैत्तिरमिति** । वयोवचनादपि यथायोगं त्वतलादिष्वेव प्राप्तेष्वञ्विधानम् ।

वचनग्रहणं स्वरूपविधिनिरासार्थम्; अन्यथा वयःशब्दादेव स्यात् । तत्रोद्गात्रादिषु **उद्गातृ**, उन्नेतृ, अध्वर्यु— इत्येतेषामृत्विग्वचनत्वाद् 'होत्राभ्यश्छः' इति च्छे प्राप्ते सत्यनर्थः पाठः । **सुष्ठु, दुष्ठु, वधू**—इत्येतेषां

**पदमञ्जरी**

अपर आह—'ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् ष्यञि सिद्धे राजशब्दस्य तत्र पाठो यका सह समावेशार्थः' इति, यथा चावेष्ट्यधिकरणे **शाबरभाष्ये** उक्तम्—'तस्य कर्मणि ष्यञ्' इति ॥ १२८ ॥

**प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ॥ प्राणभृतः = प्राणिनः, प्राणिग्रहणमेव न कृतं वैचित्र्यार्थम् । प्राणभृद्ग्रहणात्तृणत्वं तृणतेत्यादौ न भवति, जातिग्रहणाद्देवदत्तत्वमित्यादौ न भवति । यस्त्विहेगन्तं लघुपूर्वं तस्मात्परत्वादण् भवति—तैत्तिरम्[3] । उद्गात्रादिषु य ऋत्विग्वचनास्तेभ्यः 'होत्राभ्यश्छः' इति छे प्राप्तेऽञ् विधीयते । सुष्ठुदुष्ठुभ्यां गुणवचनलक्षणे ष्यञि, वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः । **सुभगं**

**भावबोधिनी**

सूचिक । शाक्वर । सूचक । पक्षिक । सारथिक । जलिक । अञ्जलिक । सूतिक ।

**विमर्श**—पुरोहितादिगण में पठित शब्दों पर विभिन्न पाठ मिलते हैं । उनमें संख्या की दृष्टि से बहुत भेद है । अतः प्रयोग में उपलब्ध शब्दों के अनुसार पाठ का निर्णय करना चाहिये । 'राजाऽसे' यह गणसूत्र केवल राजन् से यक् करता है—राज्यम् । अधिराज्यम् आदि को ब्राह्मणादिगण में मान कर ष्यञ् प्रत्यय करके बनाना चाहिये ॥ १२८ ॥

प्राणभृत् = प्राणी उनकी जाति के वाचक प्रातिपदिकों से, वयः = अवस्थावाचक प्रातिपदिकों से और उद्गात्र आदि शब्दों से भाव तथा कर्म अर्थों में 'अञ्' प्रत्यय होता है । उदा०—( १ ) अश्वस्य भावः कर्म वा—आश्वम् । उष्ट्रस्य भावः कर्म वा—औष्ट्रम् । [ अश्व और उष्ट्र प्राणिवाचक हैं । अञ् प्रत्यय, आदिवृद्धि, अलोप होता है । ] ( २ ) वयः वाचक—कौमारम् [ कुमारस्य भावः कर्म वा ] । कैशोरम् [ किशोरस्य भावः कर्म वा । ये दोनों वयोवाची हैं । ] ( ३ ) उद्गातृ आदि—औद्गात्रम् । [ उद्गातुः भावः कर्म वा इसमें उद्गातृ + अञ्, आदिवृद्धि, ऋका यण् र्—औद्गात्रम् । ]

उद्गातृ । उन्नेतृ । प्रतिहर्तृ । रथगणक । पक्षिगणक । सुष्ठ । अध्वर्यु । वधू । ॐ मन्त्र में सुभग शब्द ॐ । ये उद्गात्रादि है । [ इनमें पठित शब्दों से विभिन्न प्रत्ययों के प्राप्त रहते यह अञ् किया जा रहा है । मन्त्र में 'सौभगम्'

---

१. 'पत्रिगणक'—इति पाठा० । २. प्रशास्तृ, होतृ, पोतृ, कर्तृ—एतेऽत्र गणेऽधिकाः शब्दाः कुत्रचित् ।

३–३. तैत्तिरमिति मूले नोपलभ्यते ।

## २०१९. हायनान्तयुवादिभ्योऽण् ॥ १३० ॥ ( १७९५ )

हायनान्तेभ्यः प्रातिपदिकेभ्योः युवादिभ्यश्चाण् प्रत्ययो भवति भावकर्मणोरर्थयोः। द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम् [ त्रैहायणम्। ]। युवादिभ्यः—यौवनम्। स्थाविरम्।

❀ श्रोत्रियस्य यलोपश्च वाच्यः ❀ ( म० भा० ५.१.१३० वा० ) श्रोत्रियस्य भावः कर्म वा श्रौत्रम्।

युवन्। स्थविर। होतृ। यजमान। कमण्डलु। ❀ पुरुषासे ❀ ( ग० सू० ११८ )। सुहृत्। यातृ। श्रवण। कुस्त्री। सुस्त्री। सुहृदय। सुभ्रातृ। दुर्भ्रातृ। वृषल। ❀ हृदयासे ❀। क्षेत्रज्ञ। कृतक। परिव्राजक।

### न्यासः

लघुपूर्वलक्षणेऽणि प्राप्ते। **सुभग मन्त्र इति**। सुभगशब्दो मन्त्रविषयेऽञमुत्पादयति—महते सौभगाय ऋ०। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'हृद्भगसिन्ध्वन्त' इत्युत्तरपदवृद्धिर्न भवति। मन्त्र इति किम्? सौभाग्यम्, ब्राह्मणादित्वात् ष्यञ्। शेषाणामिह पाठस्त्वतलोः प्राप्तयोः ॥ १२९ ॥

**हायनान्तयुवादिभ्योऽण्** ॥ हायनान्तात् त्वतलोः प्राप्तयोरण्विधानम्। ननु च 'तस्येदम्' इत्यनेन हायनान्तादण् सिद्धः? न सिध्यति; परत्वात् त्वतलभ्यां बाध्यते—आषाढहायणस्य भावः कर्म वा आषाढहायण इति 'वृद्धाच्छः' प्रसज्येत। तस्माद् युक्तं हायनान्तादण्विधानम्। **यौवनमिति**। 'अन्' इति प्रकृतिभावः। युवादिषु युवशब्दस्य वयोलक्षणं बाधित्वा मनोज्ञादित्वाद् वुञि प्राप्ते पाठः। स्थविरशब्दस्य वयोलक्षणेऽञि होतृशब्दस्याप्युद्गात्रादित्वादञेव।

**पुरुषास इति**। पुरुषशब्दादसमासेऽण् भवति—पौरुषम्। अस इति किम्? राजपुरुषत्त्रम्। अस्य 'प्राणभृज्जाति' इत्यप्राप्ते पाठः। **कमण्डलु**शब्दस्येगन्तत्वादेवाणि सिद्धे त्वतलोर्बाधनार्थः पाठः। **हृदयास इति**।

### पदमञ्जरी

**मन्त्रे इति**। सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगेऽञमुत्पादयति—'महते सौभगाय' ऋ०, सर्वविधीनां छन्दसि विकल्पितत्वात् ( पुरु० परि० ३५ ) 'हृद्भगसिन्ध्वन्त' इत्युत्तरपदवृद्धिर्न भवति। अत एव मन्त्रे क्वचिदञ् न भवति—'सौभाग्यमस्यै दत्वाय ( ऋ० १०.८५.२३ ) ॥ १२९ ॥

**हायनान्तयुवादिभ्योऽण्** ॥ हायनान्तात्त्वतलोः प्राप्तयोरण्विधानम्। **यौवनमिति**। 'अन्' इति प्रकृतिभावः, मनोज्ञादित्वाद्वुञपि भवति। स्थविरशब्दस्य वयोलक्षणेऽञि प्राप्ते पाठः, होतृशब्दस्याप्युद्गात्रादित्वादञ्येव। **पुरुषास इति**। पुरुषशब्दोऽसमासेऽणमुत्पादयति, पौरुषम्, प्राणभृज्जातिवाचित्वादञ् प्राप्तः, मनुष्यजातिवचनो ह्यसौ न पुंस्शब्दपर्यायः पुंल्लिङ्गवचनः; स्त्रियामपि दर्शनात्—'तस्यामस्यां च पुरुषीश्च धेनुके दद्युरि'ति। अस इति किम्? राजपुरुषत्वम्। कमण्डलुशब्दस्येगन्तत्वादेवाणि सिद्धे त्वतल्निवृत्त्यर्थः पाठः। **हृदयास इति**।

### भावबोधिनी

( महते सौभगाय ) होता है। अन्यत्र 'सौभाग्यम्' होता है। इसे ब्राह्मणादिगण का मानकर ष्यञ् प्रत्यय "हृद्भग०" ( ७।३।१९ ) से उभयपद की वृद्धि होती है। ] ॥ १२९ ॥

'हायन' जिनके अन्त में है ऐसे प्रातिपदिकों से और युवन् आदि से भाव तथा कर्म अर्थों में अण् प्रत्यय होता है। उदा०—द्विहायनस्य भावः कर्म वा—इसमें द्वैहायनम्। त्रिहायनस्य भावः कर्म वा—इस त्रैहायणम्। [ संज्ञा होने पर णत्व सम्भव है। ] युवन् आदि के उदा०—यौवनम् [ यूनः भावः कर्म वा—युवन् + अण्, "अन्" (६।४।१६७) से प्रकृतिभाव होने से टिलोप नहीं होता है। ] स्थाविरम्। [ स्थविर + अण् यहाँ वयोवाची होने से प्राप्त अञ् का अपवाद अण् होता है। स्वर में भेद है। ]

❀ श्रोत्रिय के य का लोप भी कहना चाहिए। ❀ उदा०—श्रोत्रियस्य भावः कर्म वा—इस अर्थ में—श्रौत्रम्। [ श्रोत्रिय + अञ्, यलोप, अइलोप आदिवृद्धि। पदमंजरीकार घ=इय लोप मानते हैं। ]

कुशल । निपुण । पिशुन । सब्रह्मचारिन् । कुतूहल । अनृशंस । युवादिः[२] ॥

## २०१६. इगन्ताच्च लघुपूर्वात् ॥ १३१ ॥ ( १७९६ )

**इगन्ताच्च लघुपूर्वादण् प्रत्ययो भवति भावकर्मणोः । लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते ।**

### न्यासः

हृदयशब्दादसमासेऽण् भवति—हार्दम्, हृदयस्य 'हृल्लेखयदण्लासेषु' इति हृद्भावः । अस इति किम् ? परमहृदयत्वम् । कुशलादीनां क्षेत्रज्ञपर्यन्तानां ब्राह्मणादित्वात् ष्यञि प्राप्ते पाठः, शेषाणां तु त्वतलोः । ननु च ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात् समासादण्प्राप्तिरेव नास्ति, तदपार्थकः 'पुरुषासे', 'हृदयासे' इति च प्रतिषेधः ? नापार्थकः; एषा हि विषयसप्तमी—समासे चिकीर्षिते विषयभूत एव पुरुषशब्दहृदयशब्दाविति । यदि प्रतिषेधो नोच्यते, ततो नञ्समासस्य भावप्रत्ययस्य चाणो युगपत्प्रसङ्गे परत्वादणेव स्यात् । प्रतिषेधात्तु समास एव तावद्भवति । ततो यस्य भावप्रत्ययस्य निमित्तमस्ति स उत्पद्यते । कश्चासौ ? त्वतलौ—अपुरुषत्वम्, अपुरुषता; अहृदयत्वम्, अहृदयता । इह हायनान्त एकराशिः, युवादिर्द्वितीयः; अर्थावपि द्वावेव—भावकर्मणी, तेन सामर्थ्याद्यथासंख्यं प्राप्नोति; तदल्पाच्तरस्य युवादिशब्दस्य परनिपातलक्षणव्यभिचारचिह्नान्न भवति अस्वरितत्वाद्वा ॥ १३० ॥

**इगन्ताच्च लघुपूर्वात् ॥ इगन्तादिति** । इक् अन्तो यस्येति बहुव्रीहिः । प्रातिपदिकमन्यपदार्थः । **लघुपूर्वग्रहणेत्यादि** । अथेगेव कस्मान्न विशेष्यते ? तस्य बहुव्रीह्यर्थे गुणभूतत्वाद् विशेषणेन सम्बन्धस्य कर्त्त-

### पदमञ्जरी

हृदयशब्दोऽसमासेऽणमुत्पादयति—हृदयस्य भावो हार्दम्, 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावः । असे इति किम् ? अहृदयत्वम् । 'ग्रहणवता प्रातिपदिकेन' ( व्या० परि० ८९ ) तदन्तविधिप्रतिषेधादेव सिद्धे समासप्रतिषेधश्चिन्त्यप्रयोजनः । कुशलादीनां क्षेत्रज्ञान्तानां ब्राह्मणादित्वात्ष्यञपि भवति ।

**श्रोत्रियस्य घ[१]लोपश्चेति ॥** यदा 'श्रोत्रियँश्छन्दोधीते' इत्यत्र छन्दसः श्रोतृभावो घश्च प्रत्यय इति पक्षः, तदा घलोपः; यदा तु 'वाक्यार्थे पदवचनम्' इति पक्षः, तदा घशब्देन य इति रूपं लक्ष्यते । क्वचित्तु **यलोपश्चेति** पाठः; तत्र यलोपे सङ्घातग्रहणम्, वर्णग्रहणे त्वकारस्य यस्येतिलोपे सति इकारस्य यणादेशप्रसङ्गः, सङ्घातलोपे त्विकारस्य यस्येति लोपः— सर्वथा श्रोत्रियस्य भावः श्रौत्रमिति ॥ १३० ॥

**इगन्ताच्च लघुपूर्वात् ॥ लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यते इति** । यद्येवम्, पूर्वशब्दोऽवयव-

### भावबोधिनी

युवन् । स्थविर । होतृ । यजमान । कमण्डलु । ॐ पुरुष से असमास में ॐ [ अतः पुरुषस्य भावः, कर्म वा—पौरुषम् । परन्तु राजपुरुषस्य भावः कर्म वा—इसमें त्व तल् ही होते हैं—राजपुरुषत्वम् । ] सुहृत् । [ सुहृदः भावः कर्म वा—इसमें अण् करने पर 'हृद्-भग-सिन्ध्वन्ते च' ( ७।३।१९ ) से दोनों पदों के आदि अचों की वृद्धि होती है—सौहार्दम् । सुहृदयस्य भावः कर्म वा—इसमें भी हृदय का 'हृद्' आदेश हो जाने से 'सौहार्दम्' यही रूप बनता है । ] यातृ । श्रवण । कुस्त्री । सुस्त्री । सुहृदय । सुभ्रातृ । दुर्भ्रातृ । वृषल । ॐ हृदय शब्द से असमास में ही अण् होता है । ॐ [ अतः हृदयस्य भावः कर्म वा... हार्दम् । परमहृदयस्य भावः कर्म वा—में परमहृदयत्वम् ही होता है । ] क्षेत्रज्ञ । कृतक । परिव्राजक । कुशल । चपल । निपुण । पिशुन । सब्रह्मचारिन् । कुतूहल । अनृशंस । ये युवादि हैं । [ कौशलम्, चापलम्, नैपुणम्, पैशुनम्, कौतूहलम् आदि बनते हैं । कुशल, चपल, निपुण, पिशुन आदि शब्द ब्राह्मणादिगण में भी पठित हैं । अतः ष्यञ् भी होता है—कौशल्यम्, चापल्यम्, नैपुण्यम्, पैशुन्यम् आदि भी बनते हैं । ] ॥ १३० ॥

वे इगन्त जिनके पूर्व में लघु वर्ण है ऐसे प्रातिपदिकों से भाव और कर्म अर्थों में अण् प्रत्यय होता है । लघुपूर्व—( लघु है पूर्व में जिनके ऐसा ) ग्रहण होने से प्रातिपदिक-समुदाय विशेषित किया जाता है—लघुः पूर्वः अवयवः

---

१–१. 'घलोपः' इति पदमञ्जरीसम्मतः पाठः ।

२. भ्रातृ, कुतुक, कन्दुक, दुःस्त्री, दुर्हृदय, दुर्हृत, मिथुन, कुलली, महस्, कतक, कितव, पोत—एतेऽत्र गणेऽधिकाः शब्दाः पुस्तकान्तरे ।

**लघुः पूर्वोऽवयवोऽस्येति लघुपूर्वः। कुतः पुनरसौ लघुः पूर्वः? इक्सन्निधानादिक इति विज्ञायते। लघुपूर्वो यस्मादिकस्तदन्तात्प्रातिपदिकादित्ययमर्थो विवक्षितः।**

**अपरे तत्पुरुषकर्मधारयं वर्णयन्ति—इक्चासावन्तश्चेतीगन्तः। लघुपूर्वग्रहणेन स एव विशेष्यते, पश्चात्तेन प्रातिपदिकस्य तदन्तविधिरिति। अस्मिन्व्याख्याने—अन्तग्रहणमतिरिच्यते। 'लघुपूर्वादिकः' इत्येतावदेव वाच्यं स्यात्। शुचेर्भावः कर्म वा शौचम्। मौनम्। नागरम्। हारीतकम्। पाटवम्। लाघवम्।**

**इगन्तादिति किम्? घटत्वम्। पटत्वम्। लघुपूर्वादिति किम्? कण्डूत्वम्। पाण्डुत्वम्।**

**न्यासः**

मशक्यत्वात्। पूर्वशब्दोऽयं व्यवस्थाशब्दत्वादपरमपेक्षते। इह चापरस्यानिर्दिष्टत्वान् न ज्ञायते—कुतो लघुः पूर्वः? तत्परिज्ञानाय पृच्छति—**कुतः पुनरसौ लघुः पूर्व इति**। प्रत्यासत्तिन्यायमाश्रित्याह—**सन्निधानादित्यादि**। सन्निधानं त्विह सूत्रे इकः; श्रुतत्वात्।

**तेनेति**। अन्तभूतेन लघुपूर्वेणेकान्तग्रहणमतिरिच्यत इति; निष्फलत्वात्। यतो हि 'लघुपूर्वात्' इत्युक्ते च प्रातिपदिकस्य तदन्तविधौ सति सामर्थ्यादेव तस्यान्तत्वं लभ्यत इत्यपार्थकमन्तग्रहणमस्मिन् व्याख्याने। पूर्वके तु विधाने, अन्तग्रहणेऽसति 'लघुपूर्वेग्वतः' इत्येव विधिनिर्देशो विज्ञायते, ततश्चानन्तस्यापीको विधित्वं स्यात्। तदा, लशुन-लकुट-प्रभृतिभ्योऽपि प्रत्ययप्रसङ्ग इत्येवमर्थमन्तग्रहणम्।

**पदमञ्जरी**

वचनः, व्यवस्थावचनो वा, तत्राद्ये पक्षे यस्य सर्वपूर्वो वर्णो लघुस्तस्मादेवेष्वणुप्रभृतेः स्यात्, द्वितीये तु पाण्डुप्रभृतिभ्योऽपि स्यात्। यदा लघुः पूर्वो भवतीत्याशङ्क्यावयववचन एव पूर्वशब्दः, सोऽप्यवध्यपेक्ष एव प्रवर्त्तते, तत्र कस्यचिदनिर्देशे सर्वपूर्वः प्रतीयते, इह तु सन्निधानादिक एवेति? दर्शयति— **लघुः पूर्वो यस्येत्यादि**। **तेनेति**। लघुपूर्वेणेगन्तेन। अस्मिन्व्याख्याने, अन्तग्रहणमतिरिच्यत इति लघुपूर्वेणेका प्रातिपदिकस्य विशेषणात्तदन्तविधेः सिद्धत्वात्।

**भावबोधिनी**

अस्य—इस विग्रह में लघुपूर्वः बनता है। किससे पूर्व में यह लघु होता है? इक् का सन्निधान होने से 'इक् के पूर्व में लघु' ऐसा विज्ञापित हो जाता है। लघु पूर्व में है जिस इक् के, तदन्त ( इगन्त ) जो प्रातिपदिक उससे ( अण् होता है )—यह अर्थ विवक्षित है।

दूसरे व्याख्याकार [ इगन्त में ] तत्पुरुषकर्मधारय प्रतिपादित करते हैं—'इक् चासौ अन्तश्च—इस विग्रह में 'इगन्तः'। लघुपूर्वग्रहण से इसे ही विशेषित करते हैं--बाद में उससे प्रातिपदिक की तदन्तविधि होती है। इस व्याख्या में 'अन्त' का ग्रहण अतिरिक्त ( अधिक ) हो जाता है—'लघुपूर्वादिकः' ( इसी से निर्वाह संभव है। अतः ) इतना ही सूत्र कहना चाहिए। उदा०—शुचेः भावः कर्म वा—शौचम्। मौनम्। [ मुनेः भावः कर्म वा ] नागरम्। [ नगर्याः भावः कर्म वा—नगरी + अण्, आदिवृद्धि, ईलोप ] हारीतकम्। [ हरीतक्याः भावः कर्म वा—हरीतकी + अण, आदिवृद्धि, भसंज्ञा, ईलोप ] पाटवम्। [ पटु + अण्, आदिवृद्धि, उ का गुण, अव् आदेश ] लाघवम्। [ लघु + अण्, शेष पूर्ववत्। ]

इगन्त से—इसका क्या फल है—घटत्वम्, पटत्वम्। [ घट, पट इगन्त नहीं हैं। अतः अण् न होकर त्व, तल् ही होते हैं। ]

लघु पूर्व में है—इसका क्या प्रयोजन है? कण्डूत्वम्, पाण्डुत्वम्। [ संयोग से पूर्व गुरु होने से कण्डू भी लघुपूर्व नहीं है। ]

कथं काव्यमिति ? ब्राह्मणादिषु कविशब्दो द्रष्टव्यः ॥

**२०१७. योपधाद् गुरूपोत्तमाद् वुञ् ॥ १३२ ॥ ( १७९७ )**

त्रिप्रभृतीनामन्तस्य समीपमुपोत्तमम् । गुरुरुपोत्तमं यस्य तद् गुरूपोत्तमम् । यकारोपधाद् गुरूपोत्तमाद्वुञ् प्रत्ययो भवति भावकर्मणोः । रमणीयस्य भावः कर्म वा रामणीयकम् । वासनीयकम् ।

योपधादिति किम् ? विमानत्वम्[1] । गुरूपोत्तमादिति किम् ? क्षत्त्रियत्वम् ।

❀ सहायाद्वेति वक्तव्यम् ❀ ( ? ) । साहायकम् । साहाय्यम् ॥

**२०१८. द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥ ( १७९८ )**

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च वुञ् प्रत्ययो भवति भावकर्मणोः । गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका । शैष्योपाध्यायिका । कौत्सकुशिकिका । मनोज्ञादिभ्यः—मानोज्ञकम्, काल्याणकम् ।

**न्यासः**

**कथं काव्यमिति** । अन्यथा भवितव्यम्; कविशब्दस्य लघुपूर्वेगन्तत्वादित्यभिप्रायः ॥ १३१ ॥

**योपधाद् गुरूपोत्तमाद् वुञ्** ॥ त्वतलादिषु प्राप्तेषु वुञ् विधीयते । उत्तमशब्दोऽयमिहाव्युत्पन्नं प्रातिपदिकं गृह्यते, तत् स्वभावात् त्रिप्रभृतीनामन्त्यमाहेति मत्वाऽऽह—**त्रिप्रभृतीनामन्त्यमित्यादि** । तमप्रत्ययान्तस्य तु ग्रहणे सति 'अणिञोरनार्षयोः' इत्यादौ सूत्रे यो दोष उक्तः, स इहापि तदनुसारेण वेदितव्यः । उत्तमस्य समीपमुपोत्तमम्, 'अव्ययं विभक्तिसमीप' इत्यव्ययीभावः ॥ १३२ ॥

**द्वन्द्वमनोज्ञादिभ्यश्च** ॥ द्वन्द्वात् त्वतलादिषु प्राप्तेषु वुञ् विधीयते । मनोज्ञादिषु यो गुणवचनस्तस्मात् ष्यञि, चौर-धूर्त्तशब्दाभ्यामपि ब्राह्मणादित्वात् ष्यञ्येव, युवन्शब्दाद् युवादित्वादणि, शेषेभ्यस्त्वतलोः ।

**पदमञ्जरी**

**कथं काव्यमिति** । कावमिति भवितव्यमिति प्रश्नः ॥ १३१ ॥

**योपधाद् गुरूपोत्तमाद् वुञ्** ॥ **त्रिप्रभृतीनामित्यादि** । एतच्च 'अणिञोरनार्षयोः' इत्यत्र व्याख्यातम् । **सहायाद्वेति वक्तव्यमिति** । सूत्रेण नित्ये प्राप्ते विकल्पः ॥ १३२ ॥

**द्वन्द्वमनोज्ञादिभ्यश्च** ॥ यः पत्यन्तो द्वन्द्वस्तस्माद्यक् प्राप्तः, यस्तु हायनान्तस्तस्मादण् प्राप्तः, अन्यस्मात्त्वतलौ,

**भावबोधिनी**

'काव्यम्' यह कैसे बनता है ? [ क्योंकि कवेर्भावः कर्म वा—इस अर्थ में अण् होने पर 'कावम्' यही होना चाहिए ? ] ब्राह्मणादिगण में 'कवि' शब्द का पाठ मान कर ष्यञ् करने पर उक्त रूप बनता है । [ कवि + ष्यञ् = य, आदिवृद्धि, भसंज्ञा, इलोप—काव्‌य = काव्यम् । ] ॥ १३१ ॥

तीन आदि के अन्त का समीप उपोत्तम है । गुरु वर्ण है उपोत्तम जिसका वह—गुरूपोत्तम है । यकार जिसकी उपधा है, गुरु जिसका उपोत्तम है ऐसे प्रातिपदिक से भाव और कर्म में 'वुञ्' प्रत्यय होता है । उदा०—रमणीयस्य भावः कर्म वा—इस विग्रह में रामणीयकम् । [ रमणीय + वुञ् = अक, आदिवृद्धि, भसंज्ञा, अलोप—रामणीयकम् । रमणीयत्वम्, रमणीयता ] वासनीयकम् । [वासनीयस्य भावः कर्म वा—इस विग्रह में वसनीय + वुञ् = अक, आदिवृद्धि ।]

यकारोपध से—इसका क्या फल है ? विमानत्वम् । [ यहाँ उपधा यकार नहीं हैं । ] गुरुवर्ण उपोत्तम हो—इसका क्या फल है ? क्षत्त्रियत्वम् । [ यहाँ 'क्षत्त्रिय' में उपोत्तम इ' लघु है । ]

❀ सहाय शब्द से विकल्प से वुञ् होता है । ❀ साहायकम्, साहाय्यम् । [ वुञ् होने पर प्रथम रूप और ष्यञ् होने पर दूसरा—साहाय्यम् । त्व और तल् भी होते हैं—सहायत्वम्, सहायता । ] ॥ १३२ ॥

द्वन्द्वसमास वाले और मनोज्ञ आदि शब्दों से भाव तथा कर्म में 'वुञ्' प्रत्यय होता है । उदा० – 'गोपाल—पशुपालानां भावः कर्म वा—इस विग्रह में—गौपालपशुपालिका । [ गोपालपशुपाल + वुञ् = अक, टाप्, इत्व ] यहाँ

---

१, 'कुलीनत्वम्'—इति पाठा० ।

**मनोज्ञ । कल्याण । प्रियरूप । छान्दस । छात्त्र । मेधाविन् । अभिरूप । आढ्य । कुलपुत्र । श्रोत्रिय । चोर । धूर्त्त । वैश्वदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड । ग्रामकुमार । अमुष्यपुत्र । अमुष्यकुल । शतपुत्र । कुशल । मगोज्ञादिः[1] ।**

## २०१९. गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥ ( १७९९ )

**गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद् वुञ् प्रत्ययो भवति, प्रत्येकं भावकर्मणोरर्थयोः श्लाघादिषु विषयभूतेषु । तत्र श्लाघा = विकत्थनम् । अत्याकारः = पराधिक्षेपः, तदवेतः = तत्प्राप्त, तज्ज्ञो वा । तदिति**

**न्यासः**

**अमुष्यपुत्र इति ।** निपातनाद् विभक्तेरलुक् । इह द्वन्द्वमनोज्ञादी द्वौ राशी, प्रत्ययार्थावपि भावकर्मणी द्वावेव—इति यथासंख्यं प्राप्नोति, तत् पूर्ववदस्वरितत्वान्न भवति ।

अथ वा—चकारोऽत्र समुच्चयार्थः क्रियते । तस्य चान्यत्समुच्चेतव्यं नास्तीति वुञ्विधिमेव प्रत्येकं भावकर्मणोः समुच्चिनोति । तेनैकस्माद्राशेर्भावे कर्मणि च वुञ् भवति, न तु यथासंख्यम्; अन्यथा हि समुच्चयो नोपपद्यते ॥ १३३ ॥

**गोत्रचरणाच् श्लाघात्याकारतदवेतेषु ॥** अपत्यनिमित्ता समाख्या गोत्राख्या, सा च प्रवराध्याये पठ्यते । या च वेदाध्ययनप्रयुक्तान् पुरुषानाचष्टे सा चरणशब्दस्याख्या । 'गोत्रञ्च चरणैः सह' इति पारिभाषिकं गोत्र-चरणयोर्जातित्वमिति 'प्राणभृज्जाति' इत्यादिनाऽञि प्राप्ते वुञो विधानम् । इह गोत्रचरणवाचिनी द्वे प्रातिपदिके, अर्थावपि द्वावेव—तत्र यथासंख्यं प्राप्नोति, तत् पूर्वपदस्वरितत्वान्न भवति । अतएवाह—**प्रत्येकं भावकर्मणो-**

**पदमञ्जरी**

मनोज्ञादिष्वपि गुणवचनात् ष्यञ् प्राप्तः, चोरधूर्त्ताभ्यामपि ब्राह्मणादित्वात्ष्यञेव, युवशब्दाद्युवादित्वादण्, शेषेभ्यस्त्वतलौ । **अमुष्यपुत्रेति** । निपातनात्षष्ठ्या अलुक् ॥ १३३ ॥

**गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ गोत्रवाचिन इति ।** अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, अपत्यवाचिन इत्यर्थः । अपत्यप्रत्ययान्तादिति यावत् । अपर आह—प्रवराध्याये पठितानां गोत्राणामिह ग्रहणमिति । **चरणवाचिनश्चेति ।** चरणशब्दः शाखाध्यायिषु पुरुषेषु रूढः, अनयोश्च 'गोत्रं च चरणैः सहेति' ( म० भा० ४.१.६२ ) जातित्वात् 'प्राणभृज्जाति' इत्यञ्प्राप्तः । **प्रत्येकं भावकर्मणोरर्थयोरिति** । 'यथासंख्यं तु सर्वत्रैवात्र

**भावबोधिनी**

उनका भाव और कर्म अर्थ है। इसमें लोकव्यवहार से ही स्त्रीत्व है। ] शैष्योपाध्यायिका । [ शिष्योपाध्याय + वुञ् ] कौत्सकुशिकिका । [ ये तीन उदा०—द्वन्द्व के हैं। इनमें त्व तल् की प्राप्ति में बुञ् किया गया है। ] मनोज्ञ आदि से प्रत्यय के उदा०—मानोज्ञकम्, काल्याणकम् । [ मनोज्ञ + वुञ् = अक, आदिवृद्धि । ]

[ इस गण में पठित शब्द— ] मनोज्ञ । कल्याण । प्रियरूप । छान्दस । छात्र । मेधाविन् । अभिरूप । आढ्य । कुलपुत्र । श्रोत्रिय । चोर । धूर्त । बैश्वदेव । युवन् । ग्रामपुत्र । ग्रामखण्ड । ग्रामकुमार । अमुष्यपुत्र । अमुष्यकुल । शत-पुत्र । कुशल । ये मनोज्ञादि हैं। ॥ १३३ ॥

गोत्रवाचक और चरणवाचक प्रातिपदिक से 'वुञ्' प्रत्यय होता है, यह दोनों में प्रत्येक से भाव और कर्म इन दोनों अर्थों में श्लाघा आदि के विषय रहने पर होता है। [ यथासंख्य मानकर गोत्रवाचक से भाव में और चरणवाचक से कर्म में—ऐसा नहीं है। ] इनमें श्लाघा - विकत्थन, बड़ाई करना। अत्याकार = दूसरे का अधिक्षेप = अपमान । तदवेत—उसे प्राप्त अथवा उसे जानने वाला। तत् = इस सर्वनाम से गोत्र और चरण में भाव तथा कर्म का निर्देश किया जाता है। तत्प्राप्तः = उसे जान लेने वाला—'तदवेत' ऐसा कहा जाता है। | 'तदवेतः' का अर्थ है = 'ते गोत्रे चरणे च ये

१. बहुल' अवश्य, अह्वोपुरुष—एते शब्दा अत्र गणेऽधिकाः कुत्रचित् ।

